॥ श्रीः ॥

श्रीमदनुभूतिस्वरूपाचार्यप्रणीतं

# सारस्वतम् ।

[ पूर्वार्द्धम् ]

## चन्द्रकीर्ति-टीकासमेतम् ।



इय चद्रकीर्तिश्च नागपुरनगरस्यतपागच्छाऽधिराजभट्टारकश्री-
**चन्द्रकीर्ति**सूरिविरचिता सुबोधिकाऽपरपर्याया ।



तच्च

रोहतकमण्डलान्तर्गतमुहम्मदपुर-माजराग्रामनिवासि-
पण्डितनन्दलालशर्मंशास्त्रिणा परिशोध्य,




क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

( खेतवाडी ७ वी गली खम्बाटा लेन, )

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये

मुद्रयित्वा प्रकाशितम् ।

संवत् १९६९, शके १८३४.

# प्रस्तावना.

अस्तीदमतिरोहितमन्तर्वाणिभ्रजानाम्, यत्किल व्याकरण नाम शब्दानुशासनं प्रकृतिप्रत्ययादिना शब्दव्युत्पादनेनाऽखिलव्यवहारसाधन पाकशासन इव निखिलनिगमाङ्गेषु विराजतेतरामिति । अथ चास्माद्वर्णमूल शब्दज्ञानं, ततो पदज्ञान, ततो वाक्यज्ञान, ततश्चाखिलवाङ्मयबोधाद्ब्रह्मज्ञानद्वारामोक्षसिद्धिरिति परमनि.श्रेयससाधकत्वात्, " ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ध्येयो ज्ञेयश्च, प्रधानं च षडङ्गेषु व्याकरण, प्रधाने च कृतो यत्नः फलवान्भवति " इति महाभाष्योक्तेश्चावश्यमध्येयमिदमेतद्व्याकरणमिति तावत्सिद्धम् । उपदिदेश च कश्चिदात्मजमभिज्ञ.--

" यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥ " इति




तत्र " इन्द्रश्चन्द्रः काशकृत्स्नाऽऽपिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा इत्यष्टौ शाब्दिका मताः ॥ "

. इत्येभिरष्टाभिर्महावैयाकरणैः पृथक्पृथक्स्वतन्त्राणि स्वस्वतन्त्राणि प्रणीतानि, व्याख्यातानि च तानि भाष्य-वृत्ति टीकाभिर्महार्घैर्भिर्विद्वद्भिरिति नानुक्तान वैयाकरणकोविदकदम्बानामिति प्रकृत सरस्वती०व्याकरणमेवाश्रित्य किञ्चिदुच्यते ।

श्रीमानसुभूतिस्वरूपाचार्य. कदाचित्सदसि निजमुखनिर्गलदशुद्धिस्विद्धपदप्रयोगतिरस्कृतिविपण्णमातीर्विद्वज्जनान्विश्रम्भमथ रजन्यां वाग्देवतां स्तुतिभिः प्रसाद्य तल्लब्धवरादप्रतीनिरुद्धवाग्विलासः तदुक्तसूत्रसप्तशतीसम्पन्नव्याकरणान्तराचार्यपदसमधिष्ठितः परेद्यवि सदोगत. प्रदृष्टव्याकरणान्तरसूत्राविद्ध पूर्वेहि स्वमुखोद्गत "पुङ्क्षु" इति पद शुद्धमिति तैः स्वीकार्य प्रपूजितपादपीठ॰ प्रतिष्ठा लेभे । सरस्वतीदत्तसूत्रसप्तशतीसिद्धव्याकरणमविद्वो विज्ञापित. स सारस्वत नाम तद्व्याकरण सुकल्पितोदाहरणसहित सुवृत्तिसमेत परिकल्प्य सर्वजनाना सुखबोधाय प्रादुश्चकार ॥

तच्च सारस्वत बहुभिर्विद्वद्वरैर्नानाविधाष्टीका विरचय्य विशदीकृतम् । तच्चेद श्रीनागपुरस्थतपागच्छाधिराजभट्टारक-चन्द्रकीर्तिसूरिभिरनुकम्पया सकलविपठीर्जनाना सम्यग्व्युत्पत्तिविधित्सया सुबोधिका नाम टीकां पठितव्यपाठपाठनवत्सरला विधाय सम्यक्परिष्कृतम् ॥

एतच्च पुस्तक पूर्व मथुरानिवासिमाथुरपण्डितदत्तराम 'चौबे' इत्येतैर्मुद्रितमासीत् । तदेव पुस्तकमादितोन्तपर्यत नगरनिवासिपण्डितवर्यजिनविजयसूरिजैनयतिभ्य सकाशात् लिखितपुस्तकमुपलभ्य रावेरग्रामनिवासिगोविन्दशास्त्रिद्वारा टिप्पणीनिवेशनपुर.सर शोधयित्वा समुद्रय मया प्रकाशितमासीत् ।

आसीच्च कालमहिम्नाऽत्र बहूनि सूत्राणि वचनरूपतामापन्नानि, गतानि च बहूनि वृद्धिमनुवर्त्यमानसूत्रान्तरपदसमेलनत', क्वचिच्च सूत्रद्वयमेकसूत्रतामेक च सूत्रद्वयताम्, बहुत्र चाऽसम्बद्धपाठेत्यादिरव्यवस्था मूले, टीकायामप्यविषयसूत्रोपन्यासाऽयुक्तोदाहरणादयोऽवशिष्टाश्चुट्य आसन्नित्यस्याभ्यावृत्तौ पुनरपि मुहम्मदपुरमाजरग्रामनिवासिपण्डितनन्दलालशर्मशास्त्रिद्वारा सूत्रपाठ-सूत्रवृत्ति-लघुभाष्याद्यनेकग्रन्थपरिशीलनोत्थानुभवेनाऽऽचार्यपरम्परायातमदीयोनिश्चयेन च यथार्थ पाठनिवेदनपुरस्सरं शब्दस्यर्थावबोधकनिखिलसंस्कारविधानपूर्वक च संशोध्य मया मुनग्या स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् । तदेतद्ग्रहणपठनपाठनादिना कृतार्थयन्तु मामनुग्राहका ग्राहका वैयाकरणा विद्वांस इति भृशमर्थयते--

क्षेमराज-श्रीकृष्णदास-

"श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्षो मुम्बयी स्थ॰ ।

॥ श्रीः ॥

# अथ चन्द्रकीर्तिटीकोपेतसारस्वतविषयानुक्रमणिका ।



इति ।

॥ श्रीः ॥

# अथ चन्द्रकीर्तिटीकोपेतं सारस्वतं प्रारभ्यते ।

## अथ संज्ञाप्रक्रिया १.

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ॥
सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् ॥ १ ॥

नमोस्तु सर्वकल्याणपद्मकाननभास्वते । जगात्त्रितयनाथाय पराय परमात्मने ॥ १ ॥
नमः श्रीगुरवे चारुबुद्धये दत्तसिद्धये । मतिप्रदानशीलायै सरस्वत्यै नमोनमः ॥ २ ॥

अथ श्रीमत्परमहंसपरिव्राजकाचार्यः श्रीमदनुभूतिस्वरूपो निश्शेषविघ्नसंघात-शान्त्यर्थं सत्स्वपि देवेष्वपरेष्वैहिकामुष्मिकफलाभिप्सुस्तांश्च फलद्वयदानक्षमानपास्य भगवन्नमस्कृतिपूर्वकं सारस्वतीं प्रक्रियां चिकीर्षुः सरस्वतीदत्तवर आदावेव प्रस्तावना-श्लोकमाह-प्रणम्येत्यादि ॥ अथैतस्य सफलतापूर्वं व्याख्यालेशः प्रारभ्यते-णमू प्रह्वी-भावे । णमू ( आदेः ष्णः स्नः ) नम् प्रपूर्वः । ( समासे क्यप् ) इति क्यप्प्रत्ययः । स्वरहीनं परेण संयोज्यम् ( प्रादेश्च तथा तौ सुनमाम् ) इति नकारस्य णकारः । प्रथमैकवचनं सिः । ( अव्ययाद्विभक्तेर्लुक् ) इति सिलोपः । प्रणम्येति सिद्धम् । अग्रे-परमात्मानम् । परा प्रकृष्टा मा लक्ष्मीः कान्तिर्वा यस्य स परमः । यद्वा परे-

---

व्याख्या ॥ ( तत्रादौ ग्रंथहेतुरुच्यते ) । एवं किल श्रूयते, एकदाऽनुभूतिस्वरूपाचार्यो विद्वद्गोष्ठ्यां 'पुंक्षु' इत्युक्तवान्, तदा तैरशुद्धोयं प्रयोग इत्युपहसितः । अनेनोक्तं नैवम् । शुद्ध एव । तैरुक्तं यद्येवं तर्हि तत्साधनं दर्शय । अनेनोक्तं श्वो दर्शयिष्यामीति । इत्युक्त्वा स्वगृहमागत्य सरस्वत्युपासनं चक्रे । तदार्धरात्रे सा देवी प्रत्यक्षीभूयाऽनुभूतिस्वरूपाचार्यं वरं वृणीष्वेति जगाद । तदा सोऽयमपूर्वं व्याकरणं ववे । सा स्वहारात्सूत्रसप्तशतीं दत्त्वाऽन्तर्दधे । तां लब्ध्वा हर्षितः सन् तदैव तदाशयया ग्रंथं चकार । श्वस्तने दिने विद्वद्गोष्ठ्यां दर्शयामास । पुनरयमेव ग्रंथः स्वशिष्येभ्यो दर्शितः ग्रंथस्याऽ-व्यमल्पत्वं च दृष्ट्वा तैश्च स्वीकृतः-इति किंवदंती । ग्रंथकर्ताऽनुभूतिस्वरूपाचार्यः प्रारिप्सितस्य ग्रंथस्य निर्विघ्नपरिसमाप्तये शिष्टाचारपरिपालनाय च स्वेष्टदेवतनमस्कारलक्षणं मंगलमाचरन् सरस्वतीकृतप्रक्रि-याया ऋजुकरणं प्रतिजानीते । अहं सारस्वतीं प्रक्रियां ऋजुं कुर्वे इत्यन्वयः । कुर्वे इत्यनेनाहमिति कर्तृपदं लभ्यते 'अस्मद्युत्तमः' इत्युक्तेः । अहं कुर्वे इति वाक्येन कर्माकांक्ष्यते करोतेः सकर्मकत्वात् । प्रक्रियामिति कर्म, प्रक्रियते प्रकृतिप्रत्ययादिविभागेन व्युत्पाद्यन्ते शब्दा अनयेति प्रक्रिया तां प्रकृति-प्रत्ययविभागकर्त्रीमित्यर्थः । अहं प्रक्रियां कुर्वे एवमुक्तौ अस्याप्रामाण्यमायात इतकरणात् । तत्परि-हाराय प्रक्रियां विशिनष्टि । कथंभूतां प्रक्रियां, सारस्वतीम् । सरतीति सरः पूरः तद्विद्यते यस्याः सा सरस्वती । अथवा स्त्रियते प्राप्यते विवक्षितार्थोऽनेनेति सरः ज्ञानं तद्विद्यते यस्याः सा सरस्वती ज्ञानरूपिणी प्रसिद्धा । सरस्वत्या प्रणीतानि सारस्वतानि सूत्राणि एव सारस्वतानि विद्यन्ते यस्यां सा सारस्वती तां सारस्वतीम् । सरस्वतीप्रणीतसूत्रसंबंधिनीमित्यर्थः । अथवा सरस्वत्या प्रणीता सारस्वती

योगिभिर्मीयते ज्ञायते इति परमः । यद्वा परान् शत्रून् रागद्वेषादीन् मिनाति हिनस्तीति परमः । यद्वा मानं माः ज्ञानम् । परं प्रकृष्टं मा ज्ञानं यस्य स परमः । अत सातत्यगमने । अतति सातत्येन गच्छति तांस्तान् भावानिति आत्मा । मनिणप्रत्ययः । मनिणो णित्वात् (अत उपधायाः) इति वृद्धिः । परमश्चासावात्मा च परमात्मा ( हसेपस्सेल्लोपः । नाम्नो नो लोपशधौ ) २ तं परमात्मानम् ।२-१ । परमात्मन् अम् (नोपधायाः) इति दीर्घः । त्म इत्यस्य त्मा ।१-१ स्वरहीनं० (मोऽनुस्वारः) परमात्मानमिति सिद्धम् ॥ अग्रे-बालधीवृद्धिसिद्धिः । कल्पवल्ली कामधेनौ । बल-बलति दीव्यंति गृहेष्विति बालाः । यद्वा बलंति चलन्ति दुर्बोधार्थादिति बालाः ( ज्वलादेर्णः ) णप्रत्ययः ( अत उपधायाः ) इति वृद्धिः । व इत्यस्य वा । स्वरहीनं० । अग्रे-ध्यै चिंतायाम् । ध्यै-ध्यायते इति धीः ( क्विप् ) इति क्विप् प्रत्ययः । ध्यायतेः क्विपि संप्रसारणं ध्यै इत्यस्य धीः क्विपः सर्वापहारी लोपः इति क्विल्लोपः । धीः इति सिद्धम् । अग्रे-वृधु वर्द्धने । वर्द्धनं वृद्धिः । ( क्तिः ) इति क्तिप्रत्ययः । ति (तयोर्द्धः) इति तिस्थाने धिः ( झबे जबाः ) इति धस्य दः । स्वरहीनं परेण संयोज्यम् । अग्रे षिधू शास्त्रे मांगल्ये च । षिधू ( आदेः ष्णः स्नः ) सिधू सेधनं सिद्धिः । क्तिप्रत्ययादिकं प्राग्वत् । अत्र-शब्दापशब्दाऽनभिज्ञा बाला न तु स्तनंधयाः । यदि वा । अधीतान्यशास्त्रा अप्यनभ्यस्तशब्दशास्त्रा बालाः । सर्वशास्त्रेषु शब्दशास्त्रं प्रधानम् । यतः । "अनधीत्य शब्दशास्त्रं योऽन्यच्छास्त्रं समीहते मूढः॥सोऽहेः पदानि गणयति निशि तमसि जले चिरगतस्य॥१॥तथा च-"अङ्गीकृतं कोटिमितं च शास्त्रं नाङ्गीकृतं व्याकरणं च येन।न शोभते तस्य मुखारविन्दं सिन्दूरविन्दुर्विधवाललाटे"॥२॥इति वचनात्।धियो

---

नाम् । सरस्वतीकृतामित्यर्थः । गौरवलाघवयोर्मध्ये लाघवमिष्टमित्युक्ते । सुगम व्याख्यान प्रशस्त यद्यर्थांतर न सभवति । अर्थांतरेऽस्तु । ननु सरस्वतीकृता प्रक्रियास्ति चेत्तवात्र करणे क प्रयत्न इति चेत् तत्राह । ऋजुमिति । यत्र तत्र स्थितानां सूत्राणां प्रयोगार्थमेकत्र लेखनम् ऋजुकरणम् । प्रयोगानुकूलसूत्रक्रमाम् । एवं च सरलामित्यर्थः । अनेन सरस्वतीकृतप्रक्रियायाः दुर्बोधत्व सूचितम् । निर्विघ्नपरिसमाप्त्य मगलमाचरति । ग्रथादौ ग्रथमध्ये ग्रथान्ते मगलमाचरणीयमिति शिष्टाचारात् तत्र मगल किं नाम तदाह । "वन्दन गुरुदेवानां श्रद्धाविद्विजार्चनम् । शुभद्रव्यावलोकश्च मगल परिचक्षते" ॥ इति । किमर्थं मगल क्रियते कविना ? विघ्ननिवारणाय । शिष्टैर्विघ्ननिवारणाय मगल क्रियते इति सदाचारात् । तथोक्तम् । "नित्य पथ्याशिनां पुसां हितस्थाननिवासिनाम् । मगलाचरतां विघ्नैर्विनिपातो न विद्यत ॥" कादम्बर्यादौ मगले कृतेपि न तत्परिसमाप्ति र्बौद्धेन न कृत तत् तत्परिसमाप्तिश्च दृष्टा, अतो मगल न सदिति चेन्न । प्राक्तनसस्कार विना किमपि न सभवति । अतो बौद्धेन पूर्वजन्मनि मगल कृत तेनात्र मगलेऽकृतेपि विघ्नवारणमभवत् । प्राचीनसस्काराभावादपविघ्नत्वेनाचरितत्वात्कादंबर्यादीनां न सिद्धिर्जाता, अतो मगल सदेव । तदेवाह परमात्मान प्रणम्येति । पिपर्तीति पर माया लक्ष्म्या आत्मा जीवन मात्मा लक्ष्मीपतिरित्यर्थः । परश्चासौ मात्मा परमात्मा तम् । अथवा पर पूर्णं, निरपेक्ष एवभूतो मात्मा लक्ष्मीपतिस्तम् । अय भावः । कविभिर्विघ्ननिवारणकं मगलाचरणसूक्तयो निरयभिध्यन्ते । अतोयमपि परशब्देन पालकत्वसर्वशक्त्वोपदर्शितः

वृद्धिः धीवृद्धिः । तेषां बालानां या धीवृद्धिर्बुद्धिवृद्धिर्व्युत्पत्तिस्तस्याः सिद्धिः बालधीवृद्धिसिद्धिस्तस्यै बालधीवृद्धिसिद्धये । चतुर्थ्येकवचनम् । ङे ए (ङिति) द्धि इत्यस्य द्धे ( ए अय् ) स्वर० । बालधीवृद्धिसिद्धये । अग्रे-सरस्वती । सृ गतौ । सृ ( वचादेरस् ) गुणः । स्वरहीनं० । सरः प्रसरणं मुखेमुखे अस्त्यस्या इति ( मांतोपधाद्वत्विनौ ) इति अस्त्यर्थे वतुः । ( ङ्वितः ) ईप् । स्वरहीनं० । ततः सरस्वत्या प्रणीतानि सूत्राणि सारस्वतानि । ततः सारस्वतेभ्यः सूत्रेभ्यो जाता सारस्वती ( कारकात् क्रियायुक्ते ) अणप्रत्ययः । अ ( आदिस्वरस्य ञ्णिति वृद्धिः ) इति वृद्धिः । स इत्यस्य सा ( यस्य लोपः ) ईकारलोपः । स्वरहीनं० ( अण ईप् ) इति ईप्प्रत्ययः । स्वरहीनं० २-१ अम् ( अम्शसोरस्य ) अलोपः । सरस्वत्या प्रणीतानि यानि सूत्राणि इति युक्त्या ( वृद्धाच्छः ) ( यस्य लोपः ) इति पाणिनीयस्य छप्रत्ययस्य सम्भवः । छस्य ईयादेशः । तदा सारस्वतीया इति भवति । तेन सरस्वत्या प्रणीता या सा सारस्वती तां सारस्वतीम् ॥ अग्रे-ऋजु २-१ अम् ( अम्शसोरस्य ) इति अकारस्य लोपः ( मोऽनुस्वारः ) ऋजुम् । ( वोर्गुणात् ) इति विकल्पेन ईप् । तेन स्त्रीलिंगेपि ऋज्वी, ऋजुः इति रूपद्वयं स्यात् ॥ डुकृञ् करणे । कृ आत्मनेपदे वर्तमानोत्तमपुरुषैकवचनम् ए ( तनादेरुप् ) उप्रत्ययः, उ, गुणः, कर् । स्वरहीनं० । करु ( टित्यदुः ) क इत्यस्य कु: ( उ वम् । रहाद्यपो द्विः ) जलतुंविका० । स्वरहीनं० । कुर्वे इति सिद्धम् । अग्रे-प्रक्रियाम् । पुनः डुकृञ् करणे । कृ प्रपूर्वः प्रक्रियन्ते व्युत्पाद्यन्ते साध्यन्ते शब्दा अनयेति प्रक्रिया ( सद्योणादयः ) इति अप्रत्ययः ( अपकि ) कृ इत्यस्य क्रि ( नुवातोः ) इय्, क्रिय् । स्वरहीन० क्रिय ( आवतः स्त्रियाम् )( सवर्णे दीर्घः० ) तां प्रक्रियाम् (अम्श-,

---

त्मा परमात्मा परमात्मशब्दो भक्त्याच्छादनपूर्वकः स तथाभूतम् । अथवा । परा-अनुकम्पा मा येषां ते परमा ये विरक्तास्तेषामात्मा मनो यस्मिन्स परमात्मा तम् । परमेषु आत्मा यस्येति वा षष्ठीबहुव्रीहिणा परमपुरुषार्थत्वं सूचितम् । सप्तमीबहुव्रीहिणा कृपालुत्वं च । अथवा परैरुत्कृष्टैः सर्वतो विरक्तैर्योगिभिर्मीयते प्राप्यते इति परमः । "नाम्नि च" इति डः । अततीति आत्मा सर्वग इत्यर्थः । परमश्चासौ आत्मा च परमात्मा तं परमात्मानम् इति वा छेदः । आत्मानं प्रणम्य प्रकर्षेण नत्वा । कायवाङ्मनोभिर्नमनं प्रकर्षः मंगलवाचकः । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति कोशात् । एषु कतममात्मानं प्रणमसीति चेत्तत्राह । परमिति परं पूर्णं तथाभूतमात्मानं व्यापकमित्यर्थः । तथा च । वेदान्तसारे-"अखंडं सच्चिदानन्दमवाङ्मनसगोचरम् । आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये" इति । तथाभूतं ब्रह्मेत्यर्थः । ननु गुरुगणेशादीन् विहाय कथं परमात्मानं प्रणम्येत्युक्तम् । सत्यम् । परमात्मनि नमस्कृते सर्व एव नमस्कृताः स्युः सर्वान्तर्यामित्वात् । तथा चोक्तम् । भागवते चतुर्थस्कन्धे-'यथातरोर्मूल' इति । ननु "अधिकारी च संबन्धो विषयश्च प्रयोजनम् । अवश्यमेव वक्तव्यं शास्त्रादौ तु चतुष्टयम् ॥" इति ग्रन्थप्रामाण्याय चतुष्टयमपेक्षणीयम् । आचार्यैः तत्करणे किं प्रयोजनम् । "प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते" इति न्यायात् । तत्र चतुष्टयं वदन् स्वप्रयोजनमाह । बालधीवृद्धिसिद्धये इति बाला अनधीतव्याकरणाः

सोरस्य । मोऽनुस्वारः ) कृ ( स्त्रियां यजां भावे । कृञो वा रिङ् ) क्रिया कृत्या । अथवा क्रियादयः शान्ता निपात्याः । अथवा डुकृञ् करणे । कृ, ततः ( कृञः श च ) कृञो भावादौ शः स्यात् (क्यप् च) स्त्रियां शित्त्वात् भावे यक्, रिङादेशः, प्रपूर्वः, प्रक्रिया तां प्रक्रियाम् २-१ ( अम्शसो० । मोऽनुस्वारः ) ॥ ततः अग्रे-स्तृ विस्तारे । स्तृ विपूर्वः विस्तरतीति विस्तरः ( पचिनंदिग्रहादेरयुणि निः ) इति अप्रत्ययः । मतांतरे ( मदाम् ) इति अप्रत्ययः । गुणः, विस्तरः । ( स्वरहीनं० । अतिपूर्वः । अतिविस्तरः । निषेधार्थे नञ्पूर्वः । न विद्यते अतिविस्तरः शब्दबाहुल्यं यस्यां सा नातिविस्तरा तां नातिविस्तरामित्यत्र नाकादिवत् ( अन् स्वरे ) अनेन नञो अनादेशप्रतिषेधः । यद्वा केचित्तु बहुव्रीहौ नञो अनादेशमेव नेच्छन्ति अथवा न इति पृथगेव पदम् । ततः ( सवर्णे दीर्घः० ) ( आवतः स्त्रियाम् ) इति आप्प्रत्ययः ( सवर्णे० ) २-१ अम् ( अम्शसोरस्य । मोऽनुस्वारः ) इति प्रथमश्लोकस्य साधना ॥

अथ व्याख्या । प्रणम्य १ परमात्मानं २ बालधीवृद्धिसिद्धये ३ सारस्वतीं ४ ऋजुं ५ कुर्वे ६ प्रक्रियां ७ नातिविस्तराम् ८ एवम् अस्मिन् श्लोके अष्टौ पदानि सति । अथान्वयः—अहमनुभूतिस्वरूपाचार्यः सारस्वतीं प्रक्रियाम् ऋजुं सरलां कुर्वे विदधे । लोकप्रसिद्धशब्दव्युत्पादनार्थमीषद्रचयामीत्यर्थः । कुर्वे इत्यत्र पठनपाठनादुत्पन्नस्य पुण्यरूपफलस्य कर्तृगामित्वादात्मनेपदप्रयोगो युक्त एव । किंनामधेयां प्रक्रियाम् ? सारस्वतीं सरस्वतीप्रणीतसूत्रसंबंधिनीमित्यर्थः । ननु शास्त्रादौ मङ्गलाचरणं विना शास्त्रसमाप्तिर्न स्यादत आह । किं कृत्वा ? परमात्मानं परमेश्वरं प्रणम्य । प्रकर्षेण मनोवाक्कायैर्नत्वा परमात्मनि नमस्कृते सर्वेऽपि देवा नमस्कृताः स्युः । यथोक्तं भागवते—"यथा तरोर्मूलनिषेचनेन तृप्यंति तत्स्कंधभुजोपशाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या" इति । तथा च प्रशब्दस्य मांगलिकार्थत्वादादौ प्रयोगः । तथा च "प्रशब्दश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ" ॥१॥ ननु "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" अतोऽत्र प्रक्रियाऋजुकरणे किं प्रयोजनमित्यत आह । कस्यै

तेषामेव शब्दाऽपशब्दज्ञानाभावात् । न तु स्तनपाः । धियो वृद्धिः धीवृद्धिः बुद्धिवृद्धिः बालेभ्यो धीवृद्धिः बालधीवृद्धिरिति तादर्थ्ये चतुर्थीतत्पुरुषः । बालाना धीवृद्धिरिति न षष्ठीतत्पुरुषः कार्यः । बालनामज्ञानिनां धीर्बुद्धिः अज्ञानधीः तस्या वृद्धिरिति दूषणात्—बालधीवृद्धिश्चासौ सिद्धिश्च बालधीवृद्धिसिद्धिस्तस्यै । बालधीवृद्धेः सिद्धिरिति तत्पुरुषो न कार्यः । कुतः । तस्य क्रियाभिर्संबंधादुभयप्रधानो बलवानिति नियमात् । अत्र वृद्धिसिद्धिशब्दौ मंगलवाचकौ । अत एवायं ग्रंथः सिद्धिकरः । अत्र बाला अधिकारिणः । शब्दो विषयः । तस्य ज्ञानं प्रयोजनम् । सरस्वतीकृतत्वात्स एव संबंधः । अत एवाऽप्रामाण्यशंका—निरस्ता ॥ १ ॥

१ 'ॐकारश्चाथशब्दश्च'-इत्यन्यत्र पाठः । स एव साधुः बहुस्थलेषु तथैव दृष्टत्वात् ।

वालधीवृद्धिसिद्धये । सत्स्वपि महाभाष्यादिषु तेषां गहनत्वेन बालानां सम्यगप्रबोधात् । स्वल्पबुद्धीन् जनांस्तेषु चानादरान् संभाव्येमां प्रक्रियाम् । अवैयाकरणजनबुद्धिवर्द्धननिष्पत्त्यर्थं कुर्वे इत्यर्थः । चिकीर्षितायामपि प्रक्रियायां वक्रत्वकरणे भूयांसो जना निरादरा बोभूयंत तन्निरासार्थमाह । ऋजुमिति । सरलामित्यर्थः । सरस्वतीदत्तसूत्राणां क्रममुत्सृज्य प्रयोगसाधनार्थं यत्र तत्रास्थितानां सूत्राणामनुक्रममेलनेन ऋजुं सरलां कुर्वे इत्यर्थः । ननु भो ऋजुमित्येव कथं कृतम् ऋज्वीमिति कथं न स्यात् । तत्रोच्यते । ( वौर्गुणात् ) इत्यनेन सूत्रेण वा ईप्रत्ययः । द्वे रूपे ऋजुम् ऋज्वीमिति भवतः । परं छंदोभंगभिया नोच्चार्यते । ऋजुरपि प्रक्रिया विस्तरबाहुल्यादध्येतुमशक्या स्यात आह । नातिविस्तराम् । विस्तरः शब्दबाहुल्यं तेन रहितां स्वल्पग्रंथां प्रचुरार्थामित्यर्थः । एतावता सर्वाण्यपि सूत्राण्यादायोदाहरणसाधनार्थं बालव्युत्पत्त्यर्थं च दीपिकाकल्पामिमां प्रक्रियां कुर्वे इति भावः । अत्र बालधीवृद्धिः प्रयोजनम् १। शब्दा विषयाः २ । अधिकारिणो बालाः ३ । प्रतिपाद्यप्रतिपादकभावः संबंधः ४ । इति प्रथमश्लोकस्य व्याख्या ॥ १ ॥

ननु विस्तरः कथं निरस्तः इत्याशंकानिवारकं स्वगर्वापहारकं च द्वितीयश्लोकमाह।

इन्द्रादयोऽपि यस्यान्तं न ययुश्शब्दवारिधेः ॥
प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥

इन्द्रादयोऽपीति ॥ अथैतस्य साधना । इदि परमैश्वर्ये । इन्दति ईष्टे इतींद्रः(नमादेरः) इद् अग्रे रप्रत्ययः (इदितो०) इति नुमागमः । इ अग्रे न् ( नश्चापदान्ते झसे )नकारस्याऽनुस्वारः । स्वरहीनं० । अग्रे-डुदाञ् दाने । दा आङ्पूर्वः । आदीयत इत्यादि (नङ्की) इति किंप्रत्ययः । इ (आतोऽनपि) इत्याकारलोपः । स्वर० (सवर्णे०) इन्द्र आदिर्येषां ते इन्द्रादयः १–३ । जस् अस् ( ए ओ जसि ) दि इत्यस्य दे ( ए अय् ) स्वरहीनं० ( स्रोर्विं० ) इन्द्रादयः । (अतोऽत्युः) । उ ओ । ( एदोतोऽतः)अलोपः । अग्रे-अपि १–१ ( अव्ययात्० ) सिलोपः । यद् स्य ६–१ ( त्यदादेष्टेरः० )इति यद् इत्यस्य य (ङस्य) अग्रे-अन्त २–१अम् (अम्शसोरस्य) (मोनु०) अग्रे-न १–१ (अव्यया०) अग्रे-या प्रापणे । या परोक्षभूतप्रथमपुरुषबहुवचनम् । उस् ( द्विश्च ) द्वित्वं यया उस् इति स्थिते ( ह्रस्वः ) पूर्वयास्थाने य ( आतोनपि) इत्याकारलोपः । स्वर० (स्रोर्विं०) अग्रे-शप् आक्रोशे । शप् । शपति आक्रोशति जिह्वामिति शब्दः । उणादिषु दप्रत्ययः (चपा अबे जबाः) पस्य बः । स्वर० । अग्रे-डुधाञ् धारणपोषणयोः । धा वारिपूर्वः वारि धीयते यत्र स वारिधिः (नङ्की) इति किप्रत्ययः । इ (आतोनपि) इत्याकारलोपः। स्वर० । शब्दानां वारिधिः शब्दवारिधिः । यद्वा । शब्दा एव वारीणि धीयन्ते अस्मिन्निति शब्दवारिधिः ६–१ ( ङिति )धिस्थाने धे ( ङस्य ) इत्यकारलोपः (स्रोर्विं०) अग्रे-प्रक्रिया २–१ ( अम्शसोरस्य ) अग्रे-तद् ६–१ (त्यदादेष्टे० )–( ङस्य )

सोरस्य । मोऽनुस्वारः ) कृ ( स्त्रियां यजां भावे । कृञो वा रिङ् ) क्रिया कृत्या । अथवा क्रियादयः शान्ता निपात्याः । अथवा डुकृञ् करणे । कृ, ततः ( कृञः श च ) कृञो भावादौ शः स्यात् (क्यप् च) स्त्रियां शित्वात् भावे यक्, रिङादेशः, प्रपूर्वः, प्रक्रिया तां प्रक्रियाम् २-१ ( अम्शसो० । मोऽनुस्वारः ) ॥ ततः अग्रे- स्तृ विस्तारे । स्तृ विपूर्वः विस्तरतीति विस्तरः ( पचिनंदिग्रहादेर्युणि निः ) इति अप्रत्ययः । मतांतरे ( मदाम् ) इति अप्रत्ययः । गुणः, विस्तरः । ( स्वरहीनं० । अतिपूर्वः । अतिविस्तरः । निषेधार्थे नञ्पूर्वः । न विद्यते अतिविस्तरः शब्दबाहुल्यं यस्यां सा नातिविस्तरा तां नातिविस्तरामित्यत्र नाकादिवत् ( अन् स्वरे ) अनेन नञो अनादेशप्रतिषेधः । यद्वा केचित्तु बहुव्रीहौ नञो अनादेशमेव नेच्छन्ति अथवा न इति पृथगेव पदम् । ततः ( सवर्णे दीर्घः० ) ( आवतः स्त्रियाम् ) इति आप्प्रत्ययः ( सवर्णे० ) २-१ अम् ( अम्शसोरस्य । मोऽनुस्वारः ) इति प्रथमश्लोकस्य साधना ॥

अथ व्याख्या । प्रणम्य १ परमात्मानं २ बालधीवृद्धिसिद्धये३ सारस्वतीं४ऋजुं ५कुर्वे ६ प्रक्रियां ७ नातिविस्तराम्८एवम् अस्मिन् श्लोके अष्टौ पदानि सांति । अथान्वयः-अहमनुभूतिस्वरूपाचार्यः सारस्वतीं प्रक्रियाम् ऋजुं सरलां कुर्वे विदधे । लोकप्रसिद्धशब्दव्युत्पादनार्थमीषद्रचयामीत्यर्थः । कुर्वे इत्यत्र पठनपाठनादुत्पन्नस्य पुण्यरूपफलस्य कर्तृगामित्वादात्मनेपदप्रयोगो युक्त एव। किंनामधेयां प्रक्रियाम् ?सारस्वतीं सरस्वतीप्रणीतसूत्रसंबंधिनीमित्यर्थः । ननु शास्त्रादौ मङ्गलाचरणं विना शास्त्रसमाप्तिर्न स्यादत आह। किं कृत्वा?परमात्मानं परमेश्वरं प्रणम्य । प्रकर्षेण मनोवाक्कायैर्नत्वा परमात्मनि नमस्कृते सर्वेपि देवा नमस्कृताः स्युः । यथोक्तं भागवते-"यथा तरोर्मूलनिषेचनेन तृप्यंति तत्स्कंधभुजोपशाखाः।प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या" इति।तथा च प्रशब्दस्य मांगलिकार्थत्वादादौ प्रयोगः।तथाच"[1] प्रशब्दश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ"॥१॥ ननु"प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते"अतोत्र प्रक्रियाऋजुकरणे किं प्रयोजनमित्यत आह। कस्यै

तेषामेव शब्दाऽपशब्दज्ञानाभावात् । न तु स्तनपाः । धियो वृद्धिः धीवृद्धिः बुद्धिवृद्धिः बालेभ्यो धीवृद्धिः बालधीवृद्धिरिति तादर्थ्ये चतुर्थीतत्पुरुषः । बालानां धीवृद्धिरिति न षष्ठीतत्पुरुषः कार्यः । बालानामज्ञानिनां धीर्बुद्धिः अज्ञानधीः तस्या वृद्धिरिति दूषणात्-बालधीवृद्धिश्चासौ सिद्धिश्च बालधीवृद्धिसिद्धिस्तस्यै । बालधीवृद्धेः सिद्धिरिति तत्पुरुषो न कार्यः। कुतः । तस्य क्रियाभिसंबंधादुभयप्रधानो बलवानिति नियमात् । अत्र वृद्धिसिद्धिशब्दौ मंगलवाचकौ । अत एवायं ग्रंथः सिद्धिकरः । अत्र बाला अधिकारिणः । शब्दो विषयः । तस्य ज्ञानं प्रयोजनम् । सरस्वतीकृतत्वात्स एव संबंधः । अत-एवाऽप्रामाण्यशंका-निरस्ता ॥ १ ॥

[1] 'ॐ कारश्चाथशब्दश्च'-इत्यन्यत्र पाठः । स एव साधुः बहुस्थलेषु तथैव दृष्टत्वात् ।

बालधीवृद्धिसिद्धये । सत्स्वपि महाभाष्यादिषु तेषां गहनत्वेन बालानां सम्यगप्रबोधात् । स्वल्पबुद्धीन् जनांस्तेषु चानादरान् संभाव्येमां प्रक्रियाम् । अवैयाकरणजनबुद्धिवर्द्धननिष्पत्त्यर्थं कुर्वे इत्यर्थः। चिकीर्षितायामपि प्रक्रियायां वक्रत्वकरणे भूयांसो जना निरादरा बोभूयंत तन्निरासार्थमाह। ऋजुमिति। सरलामित्यर्थः। सरस्वतीदत्तसूत्राणां क्रममुत्सृज्य प्रयोगसाधनार्थं यत्र तत्रास्थितानां सूत्राणामनुक्रममेलनेन ऋजुं सरलां कुर्वे इत्यर्थः । ननु भो ऋजुमित्येव कथं कृतम् ऋज्वीमिति कथं न स्यात् । तत्रोच्यते । ( वोर्गुणात् ) इत्यनेन सूत्रेण वा ईप्प्रत्ययः । द्वे रूपे ऋजुम् ऋज्वीमिति भवतः। परं छंदोभंगभिया नोच्चार्यते। ऋजुरपि प्रक्रिया विस्तरबाहुल्यादध्येतुमशक्या अत आह । नातिविस्तराम् । विस्तरः शब्दबाहुल्यं तेन रहितां स्वल्पग्रंथां प्रचुरार्थामित्यर्थः। एतावता सर्वाण्यपि सूत्राण्यादायोदाहरणसाधनार्थं बालव्युत्पत्त्यर्थं च दीपिकाकल्पामिमां प्रक्रियां कुर्वे इति भावः । अत्र बालधीवृद्धिः प्रयोजनम् १। शब्दा विषयाः २ । अधिकारिणो बालाः ३ । प्रतिपाद्यप्रतिपादकभावः संबंधः ४ । इति प्रथमश्लोकस्य व्याख्या ॥ १ ॥

ननु विस्तरः कथं निरस्तः इत्याशंकानिवारकं स्वगर्वापहारकं च द्वितीयश्लोकमाह।

इन्द्रादयोऽपि यस्यान्तं न ययुश्शब्दवारिधेः ॥
प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥

इन्द्रादयोऽपीति॥ अथैतस्य साधना। इदि परमैश्वर्ये। इन्दति ईष्टे इतींद्रः(नमादेरः) इद् अग्रे रप्रत्ययः (इदितो०) इति नुमागमः। इ अग्रे न् ( नश्चापदान्ते झसे ) नकारस्याऽनुस्वारः। स्वरहीनं०।अग्रे-डुदाञ् दाने। दा आङ्पूर्वः। आदीयत इत्यादि (नङ्गी) इति किंप्रत्ययः। इ (आतोऽनपि) इत्याकारलोपः। स्वर० (सवर्णे०) इन्द्र आदिर्येषां ते इन्द्रादयः १–३ । जस् अस् ( ए ओ जसि ) दि इत्यस्य दे ( ए अय ) स्वरहीनं० ( स्रोर्विं० ) इन्द्रादयः। (अतोऽत्युः)। उ ओ। ( एदोतोऽतः)अलोपः । अग्रे-अपि १–१ ( अव्ययात्० ) सिलोपः । यद् स्य ६–१ ( त्यदादेष्टेरः० )इति यद्इत्यस्य य (ङस्य) अग्रे-अन्त २–१अम् (अम्शसोरस्य) (मोनु०) अग्रे-न १–१ (अव्यया०) अग्रे-या प्रापणे। या परोक्षभूतप्रथमपुरुषबहुवचनम्। उस ( द्विश्च ) द्वित्वं यया उस इति स्थिते ( ह्रस्वः ) पूर्वयास्थाने य ( आतोनपि) इत्याकारलोपः । स्वर० (स्रोर्विं०) अग्रे-शप् आक्रोशे । शप् । शपति आक्रोशति जिह्वामिति शब्दः। उणादिषु दप्रत्ययः (चपा अबे जबाः) पस्य बः। स्वर० । अग्रे-डुधाञ् धारणपोषणयोः। धा वारिपूर्वः वारि धीयते यत्र स वारिधिः (नङ्गी) इति किप्रत्ययः। इ (आतोनपि) इत्याकारलोपः। स्वर० । शब्दानां वारिधिः शब्दवारिधिः। यद्वा । शब्दा एव वारीणि धीयन्ते अस्मिन्निति शब्दवारिधिः ६–१ ( ङिति )घिस्थाने धे ( ङस्य ) इत्यकारलोपः स्रोर्विं०) अग्रे-प्रक्रिया २–१ ( अम्शसोरस्य ) अग्रे-तद् ६–१ ( त्यदादेष्टे० )-( ङस्य )

अग्रे-कृत्स्न ६-१ (ङस्य) अग्रे-क्षम् सामर्थ्ये । क्षम् । क्षमते इति क्षमः (पचिनंदि० ) इति अप्रत्ययः । स्वर० । १-१ । ( स्रोर्वि० ) अग्रे-वच परिभाषणे । वच् ( तुम् तदर्थायां भविष्यति ) इति तुमुप्रत्ययः (चोः कुः) स्वर० १-१ ( अव्य० ) अग्रे-नृ विक्षेपे । नृ । त्रियते विक्षिप्यते कामादिभिरिति नरः । स्वरादेः अप्रत्ययः । गुणः । नरः। स्वर० । १-१ । (स्रोर्वि०) अग्रे-किं ३-१ (टाना०) आ । (तत्रादिर्गणो विभक्त्यर्थे निपात्यते ) इति विभक्तिसहितस्य किम् इत्यस्य कथं निपातः । इति द्वितीयश्लोकसाधनिका ॥

अथ व्याख्या । इन्द्रादयोपीति । अस्मिञ्श्लोके चतुर्दश पदानि सन्ति तान्याह । इन्द्रादयः १ अपि २ यस्य ३ अन्तम् ४ न ५ ययुः ६ शब्दवारिधे ७ प्रक्रियाम् ८ तस्य ९ कृत्स्नस्य १० क्षमः ११ वक्तुम् १२ नरः १३ कथम् १४ । अथान्वयः-इन्द्रादयो देवाः । अपिशब्दात् व्यासवाल्मीक्यादय ऋषयोपि । अथवा इन्द्रादयोष्टौ महाव्याकरणकर्त्तारोपि यस्य शब्दवारिधेः शब्दसमुद्रस्य व्याकरणस्य अन्तं पारं न ययुः न प्रापुः । तस्य कृत्स्नस्य समग्रस्य शब्दवारिधेः प्रक्रियां शब्दव्युत्पादनविधां वक्तुं नरः मल्लक्षणो मनुष्यः कथं क्षमः कथं समर्थो भवति अपि तु न समर्थो भवति । अतः कारणात्संक्षेपतः कथयामीत्यर्थः । इन्द्र आदिर्येषां ते इन्द्रादयः । यतः । "इन्द्र १ श्चन्द्रः २ काशकृत्स्नाऽ ३ पिशली ४ शाकटायनः ५ । पाणिन्य ६ मर ७ जैनेन्द्रा ८ जयन्त्यष्टौ हि शाब्दिकाः" ॥ २ ॥ इति ॥

## तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते ॥

अथ प्रथमं संज्ञाप्रक्रियायां विवक्षितायां संज्ञाव्याख्यानसूचिकां फक्किकामाह । तत्र तावत्संज्ञेति ॥ तत्र तस्यां सारस्वतीप्रक्रियायां तावदादौ प्रथममेव समानस्वरादीनां संज्ञा नाम मया संगृह्यते । कस्मै प्रयोजनाय संव्यवहाराय सम्यक्शास्त्रव्यवहाराय । शास्त्रे हि संज्ञां विना न सम्यगवबुध्यते । यथा किल लोकेऽपि श्रूयते । अयं राजा, अयममात्यः, अयं देवदत्तः, अयं यज्ञदत्तः इत्यादि । तथात्रापि समानादिसंज्ञा शास्त्रव्यवहाराय संगृह्यते इति भावः ॥

## अइउऋऌ समानाः ॥ अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते तेषां समानसंज्ञा च विधीयते ॥

तत्र मातृकायां प्रथमं पठितत्वात् प्रथमं स्वराणामेव संज्ञामाह । सूत्रम् । (अइउऋऌ समानाः) अश्च इश्च उश्च ऋश्च ऌश्च अइउऋऌ १-३ साङ्केतिकत्वाज्जसलोपः । यतः-" सूत्रे विभक्तिर्नैवास्ति वृत्तौ यत्रोपलभ्यते । एकद्वित्वबहुत्वादि तरसाकेतिकमुच्यते ॥१॥" समानाः । समानं तुल्यं मानं परिमाणं येषां ते समानाः । १-३

१ अ इ उ ऋ ऌ समाना इति षट्पद संज्ञासूत्रम् । तथाहि-"संज्ञा च परिभाषा च विधिर्नियम एव च । प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम्" ।

(सवर्णे०।स्रोर्वि०)यद्वा । अ इ उ ऋ ऌ इति प्रत्येकं प्रथमैकवचनान्तानि सांकेतिकानि पञ्चैव भिन्नानि पदानि । समाना इति प्रथमाबहुवचनान्तम् । एवं षट्पदमिदं सूत्रम् । षट्पदत्वमेव युक्तम्।यतः।"संहितैकपदे नित्या नित्या धातूपसर्गयोः।नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥" इति । यद्यपि ' अइकौ च मत्वर्थे'इत्यादौ समासेऽपि संधिर्न, तथाप्यसार्वत्रिकोऽयं विधिरिति। कचित्तु। एकाविति संधिरेव दृश्यते एतत्सूत्रं कार्यद्वयविधायकं वर्णपरिगणनानिरूपकं समानसंज्ञानिरूपकं चेत्यर्थः । तदेवाह । अनेनेति ।अनेन उक्तवक्ष्यमाणसूत्रसमुच्चयेन प्रत्याहारग्रहणाय वर्णाः अक्षराणि परि सामस्त्येन भण्यन्ते संख्याक्रियन्ते परिपाट्या प्रकाश्यते।च पुनस्तेषां पूर्वोक्तानाम् अइउऋऌ अक्षराणां समानसंज्ञा समान इति,नाम विधीयते क्रियते।अथवा । अभिधीयते कथ्यते । ननु पंचानामकारादीनां न्यासवैसादृश्ये कथं समानसंज्ञा संजाघटीत्यत्रोच्यते । एकमात्रत्वेन समानत्वमेतेषाम् ॥

नैतेषु सूत्रेषु सन्धिरनुसन्धेयोऽविवक्षितत्वात् ।
"विवक्षितस्तु संधिर्भवतीति नियमात् ॥ "

ननु अइउऋऌ इत्यादिषु सूत्रेषु संधिः कथं न कृतस्तत्राह । नैतेष्विति ॥ एतेषु उक्तवक्ष्यमाणेषु सूत्रेषु संधिर्नानुसन्धेयः।न कर्तव्यः।कस्मात् अविवक्षितत्वात् । वक्तुमिष्टो विवक्षितः।यद्वा वक्तुमिच्छा विवक्षा विवक्षा जाता अस्येति विवक्षितः न विवक्षितः अविवक्षितः तस्य भावोऽविवक्षितत्वं तस्मादविवक्षितत्वात् वक्तुमवांछितत्वात् । हेत्वन्तरमाह । विवक्षितस्तु । तु पुनः विवक्षित एव संधिर्भवति न अविवक्षित इति नियमात् । गुर्वाम्नायनिश्चयात् । यत्र संधौ कृते कार्यभ्रंशो भवति सोऽविवक्षितः संधिर्यथा । अइउऋऌ इत्यस्य य्वृल्ं इति स्यात्। यत्र च संधौ कृते कार्यसिद्धिर्भवति स विवक्षितः संधिः । यथा–ईच ऊच एच ये । इत्यादिषु न निषेधः ॥

लौकिकप्रयोगनिष्पत्तये समयमात्रत्वाच्च ॥

हेतुमाह । लौकिक इति । लोक्यन्ते विलोक्यन्ते शब्दाऽपशब्दा अनेनेति लोको व्याकरणम् । लोके भवा लौकिकाः अनादिसिद्धास्ते च ते प्रयोगाश्च लौकिकप्रयोगास्तेषां निष्पत्तिः सिद्धिः लौकिकप्रयोगनिष्पत्तिस्तस्यै लौकिकप्रयोगनिष्पत्तये । समयमात्रत्वात् सूचनामात्रकृतत्वात् विभक्त्यादिसंकेतरूपत्वाच्छास्त्रस्येति संधिर्न कृतः । च–शब्दो हेत्वंतरसूचकः । अत्र केप्याहुः । लोके भवाः लौकिका बालास्तेषां प्रयोगनिष्पत्तिस्तस्यै सूचनमेवोक्तमत्रास्तीति भावः । अस्य व्याकरणस्य संकेतरूपत्वात्। विभक्त्यनुपलंभेपि यथानुसारेण सांकेतिकं पदं व्यवहर्त्तव्यम् । कृते हि संधिकार्य्ये अय्वृल्ं इति पदं भवति, तत्पाठे मन्दबुद्ध्यो जनाः सायासाः संजायन्ते यकारादीनां च स्वरसंज्ञाप्रसक्तिर्भवति अतोत्र संधिर्न कृतः ॥

## ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥

### एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते ॥

अथैतानेव भिन्नतया विवृण्वन्नाह । ह्रस्वेति । ह्रसति हीयते दीर्घापेक्षया इति ह्रस्वः । दिदृणाति विदारयत्युच्चार्यमाणो मुखमिति दीर्घः । प्लवते लंघते ह्रस्वदीर्घाविति प्लुतः । ततो ह्रस्वाश्च दीर्घाश्च प्लुताश्च ह्रस्वदीर्घप्लुतास्ते च ते भेदाश्च ह्रस्वदीर्घप्लुतभेदाः १-३ सदृशाः वर्णाः सवर्णाः । ( स्रोर्वि० । सवर्णे० ) एतेषां समानानां ह्रस्वदीर्घप्लुतभेदाः परस्परमन्योन्यं स्वजातीयेन सवर्णाः भण्यन्ते कथ्यन्ते । यथा-अ १ ह्रस्वः । आ २ दीर्घः । आ ३ प्लुतः । इ १ ह्रस्वः । ई २ दीर्घः। ई ३ प्लुतः । उ १ ह्रस्वः । ऊ २ दीर्घः । ऊ ३ प्लुतः । ऋ १ ह्रस्वः । ॠ २ दीर्घः । ॠ ३ प्लुतः। ऌ १ ह्रस्वः। ऌ ३ प्लुतः । एतेषां समानामेव सवर्णत्वं न तु सन्ध्यक्षराणाम् । तेन हरे अत्रे-ए इत्यत्र ( सवर्णे० ) इति न भवति ॥

### लोकाच्छेपस्य सिद्धिः ॥ इति वक्ष्यति ॥

ननु सरस्वतीदत्तसूत्रेष्वनुक्तं ह्रस्वादीनां लक्षणं कुतो ज्ञायते इत्यत आह । सूत्रम्। (लोकाच्छेपस्य सिद्धिः ) त्रिपदमिदं सूत्रम् ।लोकात् ५-१, शेषस्य ६-१ सिद्धिः १-१ ॥ शेषस्य इह व्याकरणेऽनुक्तस्य सिद्धिर्निष्पत्तिर्लोकादन्यव्याकरणात् ज्ञेया । लोकाद्गुरुपारंपर्याद्वा अवगन्तव्येति शेषः । अस्य ग्रन्थस्यान्ते इति पदं वक्ष्यति कथयिष्यति ॥

### ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्या ॥ एकमात्रो ह्रस्वः द्विमात्रो दीर्घः त्रिमात्रः प्लुतः व्यञ्जनं चार्द्धमात्रकम् ॥

ततस्तस्मात्कारणाल्लोकतोऽन्यव्याकरणादेव ह्रस्वादिसंज्ञा ज्ञातव्या । तथाहि तदेव लोकोक्तमेव ह्रस्वादीनां लक्षणमाह । एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः । एकमात्रेति। एकमात्रा उच्चारणकालो यस्य स एकमात्रो ह्रस्व उच्यते । "मात्रा कालविशेषः स्यात्" । अक्षिस्पन्दनप्रमाणः कालो मात्रा । द्वि मात्रे उच्चारणकालो यस्य स द्विमात्रो दीर्घः । तिस्रो मात्रा उच्चारणकालो यस्य स त्रिमात्रः प्लुतः । अर्द्धमात्राया भवम् अर्द्धमात्रक व्यंजनमुच्यते । केचित्तु व्यञ्जनं चार्द्धमात्रकमिति वोचरंति । व्यंजनस्य मात्राऽनधिकारित्वात् ॥ यतः-"चाषो वदत्येकमात्रं द्विमात्रं वायसो वदेत् ॥ त्रिमात्रं च शिखी ब्रूयान्नकुलश्चार्द्धमात्रकमिति ॥"

### एषामन्येप्युदात्तादिभेदाः सन्ति । उच्चैरुपलभ्यमान उदात्तः । नीचैरनुदात्तः । समवृत्त्या स्वरितः । साऽनुनासिको निरनुनासिकश्च ॥

किमेतावन्त एव भेदा इत्याशंक्याह ।एषामित्यादि॥एषां समानानां ह्रस्वादिभेदा॰

भिन्नानामप्यन्येऽपि लोकगम्या उदात्तादिभेदाः। उदात्तः १,अनुदात्तः २, स्वरितः३ इति त्रयो भेदास्सन्ति । उदात्तादीनां लक्षणमाह । उच्चैरित्यादि ॥ वेदपाठकरणन्यासे उच्चैः स्थाने उपलभ्यमानः प्राप्यमाण उच्चार्यमाणो वा उदात्तः प्रोच्यते। नीचैः स्थाने उच्चार्यमाणोऽनुदात्तः । नोच्चैर्न नीचैरिति समवृत्त्या स्वरेण उच्चार्यमाणो वर्णः स्वरितः । उदात्तादीनां तु प्रयोजनं वेदेष्वेव । अत्र तु प्रसङ्गवशादुक्तम्। मुखनासिकाभ्यां कृत्वा उच्चार्यमाणो वर्णः सानुनासिकः।तद्विपरीतो निरनुनासिकः। निर्गता नासिका उच्चारणकाले यस्मात्स निरनुनासिकः । किन्तु केवलं मुखेनैवोच्चार्यमाणो वर्ण इत्यर्थः । सानुनासिको निरनुनासिकश्चेति पदं क्वचिन्न दृश्यतेऽपि । अनयोरत्र लक्षणस्यानुक्तत्वात् । अथ समाहृत्याह । यथा । पंच समानाः । ह्रस्वदीर्घप्लुतभेदात् पञ्चदश १५ । तेष्युदात्तानुदात्तस्वरितभेदात् पंचचत्वारिंशत् ४५ भवंति । ते च सानुनासिकनिरनुनासिकभेदान्नवति ९० भेदाः समानानाम् ॥

## एऐओऔ संध्यक्षराणि॥एषां ह्रस्वा न सन्ति ॥ उभये स्वराः॥ अकारादयः पंच चत्वार एकारादयश्च उभये स्वरा उच्यन्ते ॥

सूत्रम् ( एऐओऔ सन्ध्यक्षराणि ) द्विपदमिदं सूत्रम् । एऐओऔ १–३ सांकेतिकत्वात् जस्लोपः । यद्वा ए १–१ ऐ १–१ ओ १–१ औ १–१ सांकेतिकानि चत्वारि पदानि । एवं पंचपदम् । संधावक्षराणि सन्ध्यक्षराणि। यथा समानानामेव संधिना कृत्वा एषां निष्पत्तिः । यथा–आकारेकारयोगे एकारः । अकारैकारयोगे ऐकारः । अकारोकारयोगे ओकारः । अकारौकारयोगे औकारः । यद्वा समानानां व्यञ्जनानां संधौ मध्ये वर्त्तत इति संध्यक्षराणि । इति संध्यक्षरसिद्धिः । संध्यक्षर १–३ ( जस्शसोः शिः ) इ ( नुमयमः ) इकारात्पूर्वं नुमागमः ( नोपधायाः ) रस्थाने रा ( पुन्नों णो० ) स्वर० । ए,ऐ,ओ,औ, एतानि चत्वार्यक्षराणि संध्यक्षरसंज्ञकानि भवंति । ततश्च एषां संध्यक्षराणां ह्रस्वभेदा न भवंति एकमात्रकाभावात् । दीर्घप्लुता भवंति । परसवर्णत्वं न । एतेषां सन्ध्यक्षराणामष्टचत्वारिंशद्भेदा भवंति । यथा–चतुर्णां संध्यक्षराणां दीर्घप्लुतभेदात् अष्ट । तेषां चाष्टानां प्रत्येकम् उदात्ता १-ऽनुदात्त २ स्वरित ३ भेदाच्चतुर्विंशतिः २४ । तेषां च सानुनासिकनिरनुनासिकभेदादष्टचत्वारिंशदिति ४८ ॥

अथ समानसंध्यक्षराणामिति मिलितानां संज्ञामाह । सूत्रम् । ( उभये स्वराः ) द्विपदमिदं सूत्रम् । उभौ प्रकारौ अवयवौ येषां ते उभये। उभय १–३ ( जसी । अ इ ए) स्वराः स्वयमनाश्रितत्वेन राजन्ते शोभन्ते इति स्वराः १–३ (सवर्णे०। सोर्वि० ) अकारादयः पञ्च अ इ उ ऋ लृ । चत्वार एकारादयश्च ए ऐ ओ औ । एते उभये मिलिताः नवसंख्याः स्वरा उच्यन्ते कथ्यन्ते । चकाराद् समानानां ह्रस्वदीर्घभेदमिलनेन चतुर्दश स्वरा भवन्ति । यथा–अआ इई उऊ ऋॠ लृॡ

एऐ ओऔ । केचित्तु अकारादयः पंच । उभये उभयप्रकाराः ह्रस्वदीर्घा इति, चत्वार एकारादयश्च स्वरा उच्यन्ते इति व्याकुर्वंति । परं तत्सूत्राऽनुसारतः । यदा उभये इत्यनेन अकारादय एव उभयप्रकारा गृह्यन्ते तदा चत्वार एकारादय इति सूत्रे कुतः प्राप्यते ॥

अवर्जा नामिनः ॥ अवर्णवर्ज्जाः स्वरा नामिन उच्यन्ते ॥

अथैष्वेव विशेषमाह । सूत्रम्(अवर्जा०) द्विपदं सूत्रम् । अम् अवर्णं वर्ज्जयन्तीत्यवर्जाः १-३ ( सवर्णे० । स्रो० ) नामिन् १-३ स्वर० (स्रोर्वि०) अवर्णवर्ज्जाः अकाराकाररहिताः स्वराः इई उऊ ऋॠ ऌॡ एऐ ओऔ एते नामिन उच्यन्ते । नमनं नामः सोस्त्येष्विति नामिनः । अवर्णो नामी नोच्यते । लिपिन्यासे तस्य सरलत्वात्॥

अनुक्रान्तास्तावत्स्वराः ।अथ प्रत्याहारजिग्राहयिषया व्यञ्जनान्यनुक्रामति ॥

अथ स्वरोपसंहारमाह । अनुक्रान्ता इत्यादि ॥ तावदादौ स्वरा अनुक्रान्ताः अनुक्रमेण कथिताः ॥ अथ व्यञ्जनान्याह । व्यज्यन्ते प्रकटीक्रियन्ते अर्थाः प्रत्याहारा वा एभिरिति व्यंजनानि । कथा । ग्राहयितुमिच्छा जिग्राहयिषा प्रति कार्य्यं-कार्य्यमाह्रियन्ते आनीयन्ते इति प्रत्याहाराः अचादयस्तेषां प्रत्याहाराणां जिग्राहयिषा प्रत्याहारजिग्राहयिषा तया प्रत्याहारजिग्राहयिषया कृत्वा व्यञ्जनान्यनुक्रामति अनुक्रमेण कथयति ॥

हयवरल ॥ ञणनङम ॥झढधघभ॥ जडदगब ॥ खफछठथ ॥ चटतकप ॥ शषस ॥ आद्यंताभ्याम् ॥ प्रत्याहारं जिघृक्षता आद्यन्ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोन्त्येन सह गृह्यमाणस्तन्नामा प्रत्याहारः । तथाहि । अकारो बकारेण सह गृह्यमाणोऽबप्रत्याहारः ॥

कानि तानि व्यञ्जनानि । सूत्रम् । हश्च यश्च वश्च यावत्सश्च इति द्वंद्वः १-३ सांकेतिकम् । ह य यावदाद्यंताभ्यां द्विपदम् । आदिश्च अन्तश्च अद्यंतौ ताभ्याम् ३-२ ( आद्गि ) अथवा ५-२ । यद्वा हयवरलेति त्रयस्त्रिंशदपि प्रथमैकवचनान्तानि सांकेतिकानि पदानि । आद्यन्ताभ्यां तृतीयाद्विवचनान्तम् । एवं चतुस्त्रिंशत्पदं सूत्रम् । केचित्तु आद्यन्ताभ्यामित्येकपद सूत्रं पृथक् मन्यन्ते । क ख ग घ ङ इति क्रमं विहाय हयवरलेति क्रमः प्रत्याहारग्रहणार्थं कृतः । प्रतिकार्यमाह्रियते इति प्रत्याहारस्तं प्रत्याहारं जिघृक्षता ग्रहीतुमिच्छता छात्रेण पुरुषेण वा आद्यन्ताभ्यां कृत्वा आद्यन्तवर्णाभ्यां सह एते हकारादयः सकारपर्य्यन्ता वर्णास्त्रयस्त्रिंशद्सा ग्राह्याः ॥ प्रत्याहारं व्यञ्जयन्नाह । आदिवर्णः आदौ वर्णः आदिवर्णः सोऽयमन्तःस्थेन वर्णेन अक्षरेण

सह गृह्यमाणः उच्चार्य्यमाणो वा अवप्रत्याहारादिस्तन्नामा प्रत्याहार उच्यते । तदेव आद्यंतकं, वर्णात्मकमेव नाम यस्य स तन्नामा अकार इत्यादि सुगमं न वरम् ॥

स च अइउऋऌएऐओऔहयवरलञमङणनझभघढधजबगडदखफछठथचटतकपशषसह इत्येतावत्संख्याकः संपद्यते । चटतकप इति चपप्रत्याहारः । जडदगब इति जबप्रत्याहारः । झढधघभ इति झभप्रत्याहारः ॥

स च अवप्रत्याहारः । इत्येतावत्संख्याक इति । इत्यमुना प्रकारेण एतावता एकोनत्रिंशद्वर्णप्रमाणा संख्या यावत्संपद्यते भवति । आकारादिसवर्णग्रहणात्तु चतुस्त्रिंशद्वर्णप्रमाणसंख्या यस्य सः । एवं चटतकप इति पञ्चभिरक्षरैः चपप्रत्याहारो भवति । आद्यन्तयोश्चकारपकारग्रहणेन चपः । एवं जडदगब इत्यत्र जकारबकारयोर्ग्रहणेन जबः । एवं झढधघभ इत्याद्यन्तयोर्झकारभकारयोर्ग्रहणेन झभः ॥

एवं यत्रयत्र येनयेन प्रत्याहारेण कृत्यं सस तत्रतत्र ग्राह्यः ॥
[ संख्यानियमस्तु नास्ति ] ॥

एवममुना प्रकारेण यत्रयत्रोदाहरणे येनयेन प्रत्याहारेण सह कृत्यं कार्य्यं भवति सस प्रत्याहारस्तत्रतत्रोदाहरणे ग्राह्यः॥संख्यानियमस्तु नास्ति। प्रत्याहाराणां संख्यानियमो नास्ति । यतः इयंत एव प्रत्याहाराः सन्तीति केप्याहुः । अनियमं व्यावर्त्तयितुमाह । संख्येति । अयमर्थः । न नियमः अनियमः संख्याया अनियमः संख्यानियमः।प्रत्याहाराणां संख्यायाःअनियमो नास्ति । किं तर्हि नियम एव । कथम् । आह-यतः । "हसो १ झवो २ जब ३ श्चैव चप ४ श्चाव ५ इल ६ श्चपः ७॥ ञमो ८ झभः ९ खसः १० प्रोक्तो झस ११ श्च छत १२ ईरितः ॥१॥ यमो १३ इवः १४ खप १५ श्चोक्तो ङवश्च १६ ढम १७ इष्यते ॥ रसो १८ वसः १९ शसः २० ख्यातो झप २१ श्चाव २२ उदाहृतः ॥ २ ॥ ऊ २३ उच्यते ततः प्राज्ञैः प्रत्याहारा उदीरिताः ॥ सौत्रा एते स्फुटं ज्ञेयास्तथा चान्ये यथामति ॥३॥"यद्वा "भ व ल त एकैकस्माद्द्वाभ्यां मः स्यात्पवौ चतुर्भ्यः स्तः ॥ सः षड्भ्यः स्यादित्थं प्रत्याहारास्तु विंशतिर्ज्ञेयाः" ॥ झभ १ अव २ इल ३ छत ४ यम ५ ञम ६ यप ७ झप ८ खप ९ चप १० अव ११ हव १२ जव १३ झव १४ हस १५ वस १६ रस १७ झस १८ खस १९ शस २० एवमेते विंशतिः प्रत्याहाराः ॥

हसा व्यञ्जनानि॥ हकारादयस्सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति । स्वरहीनं व्यञ्जनम् । तेष्वकारः सुखोच्चारणार्थत्वादित्संज्ञकः ॥

अथ हसानां संज्ञामाह । सूत्रम् ( हसा व्यञ्जनानि ) हस१–३ ( सवर्णे०।स्रोः०) व्यंज्यन्ते प्रकटीक्रियन्ते अर्था यैस्तानि व्यञ्जनानि । अथवा। विगतमञ्जनं स्वरलक्षणं येभ्यस्तानि १–३ जस् ( जसूशसोः शिः । नुमयमः । नोपधायाः ) स्वर० । हकार मकाराभ्यां सकार यावत्त्रयस्त्रिंशदक्षराणि हसाः हससंज्ञानि प्रोच्यंते । द्वितीयनाम्नि व्यञ्जनानि प्रोच्यन्ते । व्यंजनलक्षणमाह । स्वरहीनं व्यंजनं यत्स्वरहीनं तद्व्यंजनं यत्स्वरेभ्यो हीनं रहितम् । यद्वा स्वरेभ्यो हीनं व्यतिरिक्तम् । यद्वा । स्वरत्वहीनमपरं यदक्षरं तत् व्यञ्जनसंज्ञं कथ्यते । ननु हकारादयः सस्वराः वर्णाः कथं व्यञ्जनसंज्ञाः इत्याह । तेषु व्यञ्जनेषु अकारः सुखोच्चारणार्थत्वात्, सुखेनोच्चारणमेव अर्थः प्रयोजनं यस्य सः सुखोच्चारणार्थस्तस्य भावः सुखोच्चारणार्थत्वं तस्मात् इत्संज्ञकः ॥

**कार्यायेत् ॥ प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्य्यायोच्चार्य्यमाणो वर्ण इत्संज्ञो भवति ॥ यस्येत्संज्ञा तस्य लोपः । वर्णादर्शनं लोपः । वर्णविरोधो लोपश् ॥**

इल्लक्षणमाह । (कार्यायेत्) द्विपदं सूत्रम् । कार्याय ४–१ ( ङे अक । ए अय् । सवर्णे० ) स्वर० । इत् एति गच्छति इत् १–१ ( हसेपः० ) पदद्वयेन संधिः ( अ इ ए )॥प्रत्ययादीति॥आदिशब्दात्प्रत्ययागमोपदेशादेशेभ्यः अतिरिक्तोऽधिकः, प्रत्ययादतिरिक्तः अप्रत्ययादिः, आगमातिरिक्तो नुडागमादिः, उपदेशः शिष्याख्यारूपः हयवरलेत्यादिः, आदेशः 'पुंसोऽसुङ्' इत्यादिरूपः, एषु कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञकोऽनुबंधसंज्ञो भवति इति ॥ कृत्यमाह । यस्येत्संज्ञा तस्य लोपः क्रियते । उच्चरितप्रध्वंसिनो ह्यनुबंधा इति ॥ लोपलक्षणमाह । वर्णानामक्षराणामदर्शनमविलोकनं प्रध्वंसाभावो लोप उच्यते । वर्णानां विरोधः संधिकार्यवर्ज्जनं यस्मिन्स लोप एव लोपश् कथ्यते । एकं वर्णं विनाशयति अन्यस्योत्पत्तिं प्रतिबध्नातीति लोपश् । तत्कार्यम् लोपशि पुनर्न संधिः । यथा । ते आगता इत्यादि ॥

**मित्रवदागमः । शत्रुवदादेशः ॥ स्वरानन्तरिता हसाः संयोगः॥ कुचुटुतुपु वर्ग्गाः ॥ उकारः पञ्चवर्णपरिग्रहणार्थः ॥**

आगच्छतीति आगमः । आगमो मित्रवत् । यथा मित्रं मित्रस्य समीपे आगत्योपविशति तथागमोऽप्यायाति । यथा ' नः सक् छते ' सगादिः ॥ आदेशः शत्रुवत् । यथा शत्रुः शत्रुं विनाश्य तत्स्थाने तिष्ठति तथा आदेशोपि आदेशिनं विनाश्य तस्य स्थाने भवति । शसः । सकारस्य नकारादेशवत् ॥ अथ संयोगसंज्ञामाह । 'स्वरानन्तरिताः' इति ॥ 'स्वरानंत०' त्रिपदमिदं सूत्रम् । अन्तरं जातं येषांते अन्तरिताः न अन्तरिताः अनन्तरिताः स्वरैरनंतरिताः स्वरानन्तरिताः ईदृशा हसा व्यञ्जनवर्णाः संयोगसंज्ञा उच्यंते । अत्र बहुवचन जात्यभि-

प्रायेण । तेन द्वयोरपि हसयोः संयोगः संयोगसंज्ञा स्यात् । यद्वा हसौ च हसाश्च हसा एकशेषः समासः । संयोगकार्यं तु ( संयोगान्तस्य लोपः ) इत्यादि ॥ वर्गसंज्ञामाह । कुचुटुतुपु इति 'कुचु०' द्विपदमिदं सूत्रम् । कुश्च चुश्च टुश्च तुश्च पुश्च कुचुटुतुपु १–३ सांकेतिकम् । वर्गाः १–३ ( सवर्णे० । स्रोर्वि० ) एते पञ्च वर्गसंज्ञका भवन्ति । तत्कार्यम् ( स्तोः श्चुभिः श्चुः । ष्टुभिः ष्टुः । कुप्वोः ᳲक ᳲपौ वा ) इत्यादि। उकारे हेतुमाह । उकार इति ॥ स्वरेषु पञ्चमी मात्रा उकारः तेन 'कु' इत्युक्ते कखगघङ । 'चु' इत्युक्ते चछजझञ । 'टु' इत्युक्ते टठडढण । 'तु' इत्युक्ते तथदधन । 'पु' इत्युक्ते पफबभम । इत्येतानि पञ्चपञ्चाक्षराणि गृह्यन्ते ॥

**अरेदो नामिनो गुणः ॥** नामिनः स्थानिका अर् एत् ओत् एते गुणसंज्ञका भवन्ति ॥ **आरैऔ वृद्धिः ॥** आ आर् ऐ औ एते वृद्धिसंज्ञका भवन्ति ॥

अथ गुणसंज्ञामाह । अरेदो०इत्यादि॥अर च एच्च ओश्च एषां समाहारः अरेदो१-३ साङ्केतिकम् । अत्र तपरकरणमसंदेहार्थम् । नामिनः ६–१ स्वर० ( स्रो० । हवे । ऊ ओ ) गुणः १–१ ( स्रो० ) यथा अर् १–१ एत् १–१ ओ १–१ नामिनः ६–१ गुणः १–१ इति पञ्चपदं वा सूत्रम् । नामिस्थानिका नामिनां स्थाने जाताः ऋकारस्य ॠकारस्य च अर् । इकारस्य ईकारस्य च ए । उकारस्य ऊकारस्य च ओ । एते च त्रयो गुणसंज्ञका भवन्ति । लृकारस्तु सावर्ण्याद्ग्राह्यः, तेन लृकारस्य अल् गुणः । तत्कार्याणि ( गुणः। उपधाया लघोः ) इत्यादीनि ॥ अथ वृद्धिसंज्ञामाह । ( आरैऔ० ) इति ॥ आश्च आर च ऐश्च औश्च एषां समाहारः आरैऔ १–३ साङ्केतिकत्वाद्विभक्तिलोपः । वृद्धिः १–१ ( स्रोर्वि० ) अथवा । आ १–१ आर् १–१ ऐ १–१ औ १–१ वृद्धिः१–१ एवं पञ्चपदं सूत्रम् । अकारस्य आ वृद्धिः । ऋवर्णस्य आर् वृद्धिः । इवर्णस्य एकारस्य च ऐ वृद्धिः । उवर्णस्य ओकारस्य च औ वृद्धिः । एते चत्वारो वृद्धिसंज्ञका उच्यन्ते । ऋकारलृकारयोः सावर्ण्यादेव लृकारस्याल् वृद्धिः । तत्कार्याणि ( आदिस्वरस्य ञ्णिति वृद्धिः । धातोर्नामिनः । अत उपधायाः ) इत्यादीनि ॥

**अन्त्यस्वरादिष्टिः ॥** अन्त्यो यः स्वरस्तदादिवर्णष्टिसंज्ञको भवति ॥ **अन्त्यात्पूर्व उपधा ॥** अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञको भवति ॥

अथ टिसंज्ञामाह । अन्त्यस्वरादिः १–१ टिः १–१ द्विपदम् । अन्ते भवः अन्त्यः अन्त्यो योऽसौ स्वरः अन्त्यस्वरः स आदौ यस्य सोन्त्यस्वरादिः १–१ ( स्रो० ) टि- १–१ ( स्रो० ) मध्ये ( विसर्जनीयस्य सः । ष्टुभिः ष्टुः ) स्वर० । अन्त्यो यः स्वरस्तदादिवर्णः स अन्त्यस्वर एव आदौ यस्य सोऽन्त्यस्वरादिस्तेन सदैव अन्त्यस्वरा॰

दारभ्य वर्णष्टिसंज्ञो भवति । अथवा । अन्त्यः स्वरस्तदादिवर्णश्च सोन्त्यस्वर एव आदौ यस्य सोऽपि वर्णष्टिसंज्ञको भवति । स्वरान्तशब्दस्य अन्तिमः स्वर एव टिसंज्ञः । हसान्तशब्दस्य अन्त्यो हसस्तत्पाश्चात्यः स्वरश्च द्वावपि टिसंज्ञकौ इत्यर्थः । तत्कार्यं तु ( डिति टेः ) इत्यादि । यथा अचिंत्यमहिमा हरौ सखा । अथोपधासंज्ञामाह । सूत्रम् । अन्त्य ५–१ ( डसिरत् । सवर्णो० ) पूर्व १–१ ( स्रोाव० ) उपधा १–१ ( आपः ) त्रिपदम् । अन्त्याद्वर्णमात्रात् केवलादन्त्यादक्षरात्पूर्वो यो वर्णः स उपधासंज्ञको भवति । तत्कार्याणि । ( नोपधायाः । अत उपधायाः ) इत्यादीनि राजन्शब्दवत् ॥

असंयोगादिपरो ह्रस्वो लघुः । विसर्गाऽनुस्वारसंयोगपरो दीर्घश्चगुरुः॥

अथ लघुसंज्ञामाह । असंयोगादीति । असंयोगादयः संयोगविसर्गाऽनुस्वाराः परे अग्रस्था यस्मात्स संयोगादिपरः न संयोगादिपरः असंयोगादिपरः एवंभूतो ह्रस्वो वर्णो लघुरुच्यते । तथा चोक्तं प्राकृतच्छन्दोग्रंथे–"पिछुडी लहु अंकुडउ, केवल वन्न उ जोय । ए तीनउ लघु जानिये, अवर सबे गुरु होय" ॥ १ ॥ यथा । क कि कु तथा अ इ उ ऋ ऌ एतेषामग्रे विसर्गानुस्वारसंयोगा न भवन्ति तदा एतेषां लघुसंज्ञा । अथ गुरुसंज्ञामाह । विसर्गानुस्वार इति । विसर्गानुस्वारसंयोगाः परे अग्रे वर्तमाना यस्मात्स विसर्गाऽनुस्वारसंयोगपरः । विसर्गपरो यथा अः । अनुस्वारपरः अम् । संयोगपरो यथा अस्य । एवंभूतो ह्रस्वोऽपि गुरुः पुनर्दीर्घश्च । आ ई ऊ का की कू रूपः स्वभावादेव गुरुरुच्यते ॥

वर्णग्रहणे सवर्णग्रहणं कारग्रहणे केवलग्रहणम् । तपरकरणं तावन्मात्रार्थम् ॥ मुखनासिकावचनोऽनुनासिकः ॥ मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः ॥

इति संज्ञाप्रक्रिया ।

मुखनासिकाभ्यामिति रूढिपदम् अन्यथा द्विवचनान्तं न संभवति । यथोक्तं प्रक्रियाकौमुद्याम् । द्वंद्वश्च प्राणितूर्य्यसेनाङ्गानाम् । एषां द्वंद्व एकवत्स्याद्यः । एकवचनान्तो भवतीत्यर्थः । प्राण्यङ्गे दन्तौष्ठम्, मुखनासिकम् । तूर्याङ्गे मार्दङ्गिकपाणविकम् । सेनाङ्गे–रथिकाश्वारोहम् इति वचनात् मुखनासिकाभ्यां द्वाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकसंज्ञ उच्यते । ञमङणनम अनुनासिका इति।मुखादनु पश्चात् नासिकां स्पृशन्तीत्यनुनासिकाः चतुर्दश स्वराः १४, त्रयस्त्रिंशद्व्यञ्जनानि३३,अनुस्वारः १, विसर्गः १, जिह्वामूलीयः१, उपध्मानीयः १, प्लुतश्च १ एवं द्विपञ्चाशदक्षराणि ५२ । एतेषामष्टौ स्थानानि संति तान्याह।अकुहविसर्जनीयानां कण्ठः१। इचुयशानां तालु २ । ऋटुरषाणां मूर्द्धा ३ । ऌतुलसानां दन्ताः ४ । उपूपध्मानीयानामोष्ठौ ५ । जिह्वामूलीयस्य

जिह्वामूलम् ६ । अनुस्वारस्य नासिका ७ । एदैतोः कण्ठतालु ८ । ओदौतोः कण्ठोष्ठम् ९ । वकारस्य दन्तोष्ठम् १० । आ ई ऊ ॠ ॡ प्लुताश्च एते एतेषां सवर्णग्रहणेनैव गृह्यन्ते । यवरलैर्ञणनङमैश्च संयुक्तस्य हस्योरः स्थानम् । यतः— "अष्टौस्थानानि वर्णानामुरः १ कण्ठः २ शिर ३ स्तथा ॥ जिह्वामूलं च ४ दन्ताश्च ५ नासिको ६ ष्ठौ ७ च तालु ८ च" ॥ इति संज्ञाप्रक्रिया संज्ञाधिकारः ॥ "प्रक्रिया त्वधिकारोऽथ" इति हेमसूरिः।अथवा—"प्रक्रियानुत्पादने स्यादधिकारप्रकारयोः"॥

## अथ स्वरसन्धिः २.

अधुना स्वरसन्धिरभिधीयते ।

अधुनेति संज्ञाकथनानन्तरं स्वरसंधिरभिधीयते कथ्यते । अक्षराणामन्योन्यं संधानं मेलनं संधिः । तत्राप्यादौ स्वरसंधिः स्वराणां सन्धिः स्वरसंधिः । ननु सति अकारे इकारसंधिः आदावेव कथं प्रतिपादितः । तत्रोच्यते । इकारः सावित्रीरूपः शक्तिरूपः । सा च सर्वजगत्सृष्टिकर्त्री तस्मात्पूर्वं प्रतिपादितः ॥

**इ यं स्वरे ॥** इवर्णो यत्वमापद्यते स्वरे परे ॥ दधि आनय इति स्थिते । दध् य् आनय इति तावद्भवति ॥

सूत्रम् । ( इ यं० ) इ १–१सांकेतिकम् यं २–१ (अम्शसो० । मोनु०) स्वरे ७–१ ( अ इ ए ) सिद्धम् । यद्वा इश्च ईश्च इ १–१ ( नपुंसकस्य ) इति ह्रस्वः ( नपुंसकात्स्यमोर्लुक् ) वर्णग्रहणे सवर्णग्रहणमिति वचनात् इवर्ण इकार-ईकाररूपो यत्वं यकारमापद्यते प्राप्नोति स्वरे परे । ह्रस्वदीर्घप्लुतभेदा इति अकारस्य स्वरत्वे आकारस्यापि स्वरत्वं सिद्धमेव । दधि अग्रे आनय ( इ यं स्वरे ) अनेन सूत्रेण इकारस्य यकारः । दध्य् आनय इति जातम् । ननु दधि आनयेत्यत्र ( नामिनः स्वरे ) इति नुमागमः कथं न क्रियते तत्राह । ( नामिनः स्वरे ) इति तु स्यादिविभक्तिसप्तकस्वरे परे भवति न त्वन्यत्र । तर्हि ( यस्य लोपः ) कथं न क्रियते तत्राह ( यस्य लोपः ) इति तु ईपि तद्धिते कृत्ये स्वरे यकारे च परे सति भवति न त्वन्यत्र । दध् य् आनयेत्यत्र ( संयोगान्तस्य लोपः ) इत्यस्य प्राप्तौ ( असिद्धं बहिरंगमन्तरंगे ) इति यलोपनिषेधः । यद्वा ( संयोगान्तस्य लोपः ) इति स्वाभाविकसंयोगान्तविषयः । प्रक्रियायां तु ( संयोगान्तस्य० ) इति लोपे प्राप्ते ( यणः प्रतिषेधो वाच्यः ) ॥

**हसेऽर्हे हसः ॥** स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति ॥ इति धकारस्य द्वित्वम् ।

कृत्यान्तरमाह । सूत्रम् ( हसे० ) त्रिपदम् । हसे ७–१ ( अ इ ए ) र् च ह् च ऋ् न ह् यत्र स अर्ह् १–१ ( हसेपः० ) हस १–१ स् ( सो० ) हसे अर्हे ( एदो-

तोतः ) अकारलोपः । स्वरहीनं० । सिद्धम् ॥ स्वरात् ह्रस्वस्वरात्परोऽग्रे वर्तमानो रेफहकारवर्जितोऽन्यो हसो हसप्रत्याहारसंबंधी वर्णो हसे परे सति द्विर्भवति । द्वयोर्भावो द्वित्वम् । एकस्य द्वौ भवत इत्यर्थः । इति धकारस्य द्वित्वम् । द्वित्वे कृते पुनर्द्वित्वं न भवति अनवस्थादोषप्रसंगात् । द्वित्वविधानाद्द्वावेव शिष्येते इति दध्, ध्य् आनय इति जातम् ॥

झबे जबाः॥ झसानां झब परे जबा भवन्ति ॥ इति पूर्वधकारस्य दकारः ॥ वर्ग्यो वर्ग्येण सवर्ण इति वचनात [ यथासंख्यं वा वक्तव्यम् ] ( स्वरहीनं परेण संयोज्यम्) दद्ध्यानय इति सिद्धम् ॥

सूत्रम् ( झबे० ) ७-१ ( अ इ ए ) जबाः १-३ ( सवर्णो० । स्रोर्वि० ) वृत्तिः सुगमा ॥ अत्र सूत्रे झसानामिति पदम् ( खसे चपा झसानाम् ) इति सूत्रादनुवर्त्तते । अन्यत्राप्यनुवृत्तिः सरस्वतीदत्तसूत्रपाठक्रमादवगन्तव्या ।अत्र तु मया न कथयिष्यते । अनेन सूत्रेण पूर्वधकारस्य दकारः । ननु झसास्त्रयोविंशतिः जबाः पञ्चैव तेन यथासंख्यमिति धकारस्य दकार एव कथं क्रियते तत्राह । सवर्णत्वात् धकारस्य दकारो भवति । ननु धकारदकारयोः सावर्ण्य कथमित्याह । वर्ग्यो वर्ग्येण सवर्ण इति । वर्गे भवो वर्ग्यो वर्णः वर्ग्येण स्ववर्गान्तर्वर्तिना अक्षरेण सह सवर्णो भवति इति सवर्णत्वात् धस्य दः । यद्वा यथासंख्य झढध जडदेत्यनेनापि धस्य दः. । अत्र तु सवर्णत्वात् यथासंख्यमित्युभयत्रापि धस्य दकारो भवति । परम् अग्निमथ् म्यामित्यत्र. सवर्णत्वादेव थकारस्य दकारो भवति न तु यथासंख्यम् । स्वरेण हीनं रहितं यदक्षरं तत्परेण अग्रस्थितेन स्वरेण वर्णेन सह संयोज्यम् । दद्ध्यानय इति सिद्धम् । एवं स्वरित अस्तु-स्वरत्यस्तु । हरि अनुभवः-हर्य्यनुभवः ॥

गौरी अत्र गौर्य्यत्र । अहं-इतिविशेषणान्न रेफस्य द्वित्वं किंतु । रहाद्यपो द्विः ॥ स्वरपूर्वाद्रेफाद्धकाराच्च परो यपो द्विर्भवति ॥ ( जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् ) स्वर इत्यनुवर्त्तते ॥

इकारोदाहरणमाख्याय ईकारोदाहरणमाह । गौरी अग्रे अत्र ( इयं स्वरे ) गौर्य् अत्र इति जातम् । ततः अहं इति सूत्रोक्तविशेषणात् रेफहकारयोर्द्वित्ववर्जनादत्र रेफस्य द्वित्व न भवति । ततः किं कर्त्तव्यमित्याह । सूत्रम् ( रहाद्य० ) रश्च हश्च अनयोः समाहारः रह तस्मात् रह ५-१ ( ङसिरत् । सवर्णो० ) यप१-१ स् ( स्रो० ) द्वित्रिभ्यां सुच् । सो० ) द्विस् १-१ ( अव्ययाद्विभक्तेर्लुक् ) इति लोपः ( चपा अबे जबाः ) साधिः । यपः अग्रे द्विः । अत्र ( हवे । उ ओ ) सिद्धम् । स्वरः पूर्व आदौ यस्य स स्वरपूर्वः तस्मात् स्वरात्परस्माद्रेफात् हकाराच्चपरोऽग्रस्थो यपो द्विर्भवति । इति यकारस्य द्वित्वम् । ( जलतु० ) यथा तुम्बी० जलस्योपरि

तिष्ठति तथा रेफोपि वर्णस्योपरि गच्छति नत्ववः । स्वर० । गौर्य्यत्र इति सिद्धम् । केचित्तु (न दीर्घादाचार्याणाम्) इति दीर्घस्वरस्यादेफात्परस्य यवस्य द्वित्वं नेच्छन्ति तन्मते गोर्यत्र इति सिध्यति । एवं नदी एषा नद्येषा । इतोऽग्रे स्वरसंधि यावत्सर्वेष्वपि सूत्रेषु 'स्वरे' इति पदमनुवर्त्तते अन्वागच्छति । अनुक्तमपि ज्ञेयमित्यर्थः । यथा (इ यं स्वरे) इत्यत्र स्वरे इति पदं तथा (उ वम्) इत्यादिष्वपि प्राग्वत् ज्ञेयम् ॥

एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रांतरात्पदांतरानुवृत्तिर्ज्ञातव्या । ग्रंथभूयस्त्वभयान्नास्माभिर्लिख्यते ॥

एवममुना प्रकारेण अन्यप्रयोगेष्वपि यत्र केवलसूत्राक्षरैः कार्यसिद्धिर्न भवति तत्र प्रयोगे सूत्रांतरादन्यसूत्रात्पदांतरस्य अन्यपदस्यानुवृत्तिर्ज्ञेया । ग्रंथस्य शास्त्रस्य भूयस्त्वभयात् भूयसो भावो भूयस्त्वं ग्रंथस्य भूयस्त्वं तदेव भयं ग्रंथभूयस्त्वभयं तस्मात् ग्रंथभूयस्त्वभयात् प्राचुर्य्यभयात् सूत्रेसूत्रे तत्तत्पदमस्माभिर्न लिख्यते । केचित्तु आभिः सरस्वतीभिर्न लिख्यते स्म इति व्याकुर्वंति । शेषं सुगमम् ॥

उ वम् ॥ उवर्णो वत्वमापद्यते स्वरे परे । ( हसेऽर्हं हसः । झभे जबाः ) मधु अत्र मद्ध्वत्र ॥

सूत्रम् । ( उ० ) उ १-१ । सांके० । यद्वा । उश्च ऊश्च उ १-१ । ( नपुंसकस्य० ) इति ह्रस्वः ( नपुंसका० ) वम् २-१ ( अम्शसो० ) तपरकरणं विना कारग्रहणं च विना वर्ण एव गृह्यते तेन न इत्युक्ते उवर्णः उकारो ( ऊ ) काररूपो वत्वं वकारं प्राप्नोति स्वरे परे । मधु अग्रे अत्र । अत्र ( उ वम् ) इति उकारस्य ऊकारस्य च वकारः ( हसेऽर्हं हसः ) इति धकारस्य द्वित्वम् । ( झभे जबाः ) इति पूर्वधकारस्य दकारः । स्वर० । मद्ध्वत्र इति सिद्धम् । मधु क्षौद्रमत्र वर्त्तते । एवं वधू आसनम् वध्वासनम् ॥

ऋ रम् ॥ ऋवर्णो रत्वमापद्यते स्वरे परे । पितृ अर्थः पित्र्यर्थः ।

ऌ लम् ॥ ऌवर्णो लत्वमापद्यते स्वरे परे । ऌ अनुबंधः लनुबन्धः ।

ए अय् ॥ एकारोऽ(अ) य् भवति स्वरे परे । ने अनम् नयनम् ।

ओ अव् ॥ ओकारोऽ ( अ ) व् भवति स्वरे परे । भो अति भवति ॥

सूत्रम् । ऋ १-१ स् सांकेतिकत्वात् सलोपः । रम् २-१ (अम्शसो०) ऋवर्णस्य रकारो भवति स्वरे परे । पितृ अग्रे अर्थः ( ऋ रम् । हसेऽर्हं हसः ) स्वर० । पित्र्यर्थः । सूत्रम् । ऌ १-१ सांकेतिकम् । लम् २-१ ( अम्शसोः० ) ऌवर्णस्य लकारो भवति स्वरे परे । ऌ अग्रे अनुबंधः ( ऌ लम् ) स्वर० । लनुबंधः । ऌ लकारो-

ऽनुबंधः इत्संज्ञो यस्य धातोः स लनुबंध उच्यते । एवम् लृ अग्रे आकृतिः लाकृतिः । लृ इत् लित् । सूत्रम् । ए १-१ । सांके० । अय् १-१ ( हसेपः० ) एकारस्य अय् भवति स्वरे परे । णीञ् प्रापणे । णी ( आदेः ष्णः स्नः ) नी ( भावे युट् । युवोरनाकौ ) इति युस्थाने अनः । गुणः । ने अन ( ए अय् ) अनेन एकारस्य अय् भवति । स्वर० । ( अतोऽम् । अम्श० ) नयनम् इति सिद्धम् । सूत्रम् । ओ १-१ । सांके० । अव् १-१ ( हसेपः० ) व्याख्या सुगमा । भो अग्रे अति ( ओ अव् ) स्वर० । भवति । इति सिद्धम् ॥

[ गवादेरवर्णागमोऽक्षादौ वक्तव्यः ] गो अक्षः गवाक्षः । गो इंद्रः गवेंद्रः । गो अजिनम् गवाजिनम् । प्र ऊढः प्रौढः । प्र ऊढिः प्रौढिः । स्व ईरम् स्वैरम् । स्व ईरिणी स्वैरिणी । अक्ष ऊहिनी अक्षौहिणी सेना ॥

गो आदिर्यस्य स गवादिस्तस्य गवादेः ६-१ ( ङिति । ङस्य । स्रोर्विसर्गः ) गवादेः अवर्णस्य आगमः अवर्णागमः १-१ ( स्रो० ) अक्ष आदिर्यस्य सः अक्षादिस्तस्मिन् अक्षादौ ७-१ ( ङेरौ डित् ) डित्वाट्टिलोपः । स्वर० । वक्तव्यः १-१ ( स्रो० ) सिद्धम् । अत्र अकारागमे एव रूपसिद्धिः । वर्णग्रहणं तु चिंत्यम् । यद्वा । अश्चासौ वर्णश्च अवर्णः । अकारवर्ण एव इत्यर्थः । गो अक्षः । अवर्णागमः ( ओ अव् ) स्वर० ( सवर्णे० ) गवाक्षः । गो इंद्रः । अवर्णागमः ( ओ ) स्वर० ( अ इ ए ) गोः पृथ्व्या इन्द्रः गवेन्द्रः । गो अजिनम् ( गवादेरवर्णागमः० ) ( ओ अव् ) स्वर० ( सवर्णे० ) गवाजिनं गोचर्म । प्र अग्रे ऊढः । अवर्णागमस्य वैयर्थ्यात् न ( सवर्णे दीर्घः सह ) इति । किंतु ( उ ओ ) ( ओ औ औ ) प्रौढः । एवं प्र ऊढिः प्रौढिः । स्व अग्रे ईरम् । अवर्णागमः ( अ इ ए । ए ऐ ऐ ) स्वैरम् । एवं स्व ईरिणी स्वैरिणी । अक्ष अग्रे ऊहिनी अवर्णागमः ( उ ओ । ओ औ औ ) अक्षौहिणी । सेनाविशेषः । "सा सेनाक्षौहिणी नाम खागाष्टैकाद्रिकैः २१८७० गजैः । रथै २१८७०श्चै भिर्हयैस्त्रिघ्नैः ६५६१० पंचघ्नैश्च पदातिभिः ३२८०५०" इति ॥

[ क्वचित्स्वरवद्यकारः ] यथाऽध्वपरिमाणे । गो यूतिः गव्यूतिः । अन्यत्र गवां मिश्रीभावे गोयूतिः ॥

सूत्रम् । क्वचित्प्रयोगान्तरे यकारः स्वरवदवसेयः । स्वरेण तुल्यः स्वरवत् । स्वरे परे सति यत्कार्यं भवति तत् यकारे परेपि भवतीत्यर्थः । यथा अध्वपरिमाणे मार्गप्रमाणे

१ वृत्तिः इति पाठः । २ "अयुत च नागानित्रिगुणा रथाश्च लक्षैकयोधा दशलक्षवाजिनः । पदातिख्याः षट्त्रिंशकोट्यश्चाक्षौहिणीं तां मुनयो वदन्ति" इति ग्रन्थत्राक्षौहिणीलक्षणं दृश्यते ॥

वाच्ये साति गो अग्रे यूतिः अत्र यकारस्य स्वरवत्त्वात् ( ओ अव् ) स्वर० । गव्यूतिः क्रोशद्वयम् । अन्यत्र तु मार्गप्रमाणाभावे गवां मिश्रीभावः एकीभावः समूहीभवनम् । गोयूतिरित्येव तिष्ठति । सिद्धम् । ' एवं पितृ अग्रे यम् पित्र्य-मित्यपि ज्ञेयम् ॥

ऐ आय् ॥ ऐकार आय् भवति स्वरे परे । नै अकः नायकः ॥

औ आव् ॥ औकार आव् भवति स्वरे परे । तौ इह ताविह ॥

सूत्रम् । ऐ १-१। सांके० । आय् १-१ । ( इसेपः० ) ऐकारः आय् भवति स्वरे परे । नै अग्रे अकः । ( ऐ आय् ) स्वर० । नायकः । सूत्रम् । औ १-१ । सांके० । आव् १-१ ( इसे० ) औकारः आव् भवति स्वरे परे । तौ अग्रे इह । ( औ आव् ) स्वर० । ताविहेति सिद्धम् ॥

य्वोर्लोपश् वा पदांते ॥ पदांते स्थितानामयादीनां यकारवकार-योर्लोपश् वा भवति । ते आगताः त आगताः तयागताः । तस्मै एतत् तस्मा एतत् तस्मायेतत् । पटो इह पट इह पटविह ॥ तौ इमौ ता इमौ ताविमौ ।

( य्वोर्लोपश् वा पदांते ) इति सूत्रम् । य् च व् च य्वौ तयोः य्वोः ६-२ । स्वर० । ( स्रो० ) लोपश्१-१ । ( इसेपः० ) वा ३-१ ( अव्यया० ) पदांते७-१ ( अ इ ए ) सिद्धम् । पदांते । आदिशब्दात् ( ए अय् । ऐ आय् । ओ अव् । औ आव् ) एभिः सूत्रैर्जातानामयादीनां सम्बन्धिनोर्यकारवकारयोर्वा लोपश् भवति । ते अग्रे आगताः । उभयत्रापि ( ए अय् ) एकत्र यकारलोपः । अन्यत्र । स्वर० ते आगताः तयागताः त आगताः । पटो इह पटविह पट इह । ( ओ अव् ) शेषं प्राग्वत् । एवं तस्मै आसनम् तस्मायासनं तस्मा आसनम् । तस्मै इदम् तस्मायिदम् तस्मा इदम् । असौ इंदुः असाविंदुः असा इंदुः । तौ इमौ ताविमौ ता इमौ ॥

लोपशि पुनर्न संधिः। छंदसि तु भवति । हेसरे इति हेसरव इति हेसरेति॥

ननु त आगताः अत्र ( सवर्णे० ) । तथा पटइहेत्यत्र ( अ इ ए ) इति संधिः कथं न क्रियते तत्राह । लोपशीति । लोपशि कृते पुनः पूर्वापरवर्णयोर्मिथयोगरूप-स्वरूपः संधिः कार्यांतरसंधानं च न भवति । यथा त आगताः । राजभ्याम् अत्र ( आङ्ग ) इति आ न भवति । नह्युक्तमनित्यमिति क्वापि लोपशि कृतेपि संधि-र्भवति । यद्वा । छंदसि तु भवतीति तुशब्दात् कुत्रचित् लौकिकोदाहरणेपि लोपशि कृते संधिर्भवति । यथा दामोदरः राजाश्वः पंचाग्निः दंडिषु इत्यादिषु धर्मान्तरसं-

१ 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः । २ पटो इह पट इह पटविह इ० पा० ॥

लांगल ईषा लांगलीषा । अद्य अग्रे ओम् अद्योम् । शक अंधुः शकंधुः । कुल अटा कुलटा । सीमन् अंतः सीमंतः । पतत् अंजलिः पतंजलिः । सार अंगः सारंगः । इत्यादयोपि तथैव ज्ञेयाः । सूत्रम् ( उ ओ ) उ १–१ साके० । ओ ७–१ साके० । वृत्तिः कंठ्या । तव उदकम् तवोदकम् । गंगा उदकम् गंगोदकम् । सूत्रम् ( ऋ अर् ) ऋ ७–१ । साके० । अर् १–१ । ( हसेपः० ) अर्थो वृत्तितो ज्ञेय. । तव अग्रे ऋद्धिः ( ऋ अर् ) [ जलतुंबिकान्यायेन रेफस्योर्ध्वगमनम् ] तवर्द्धिः इति सिद्धम् ॥

[ क्वचिदार् ] अवर्ण ऋवर्णे परे सह क्वचिदार् भवति । ऋण ऋणम् । ऋणार्णम् । प्र ऋणम् प्रार्णम् । वसन ऋणम् । वसनार्णम् । वत्स ऋणम् वत्सार्णम् । वत्सतर ऋणम् वत्सतरार्णम् । कंबल ऋणम् कंबलार्णम् । दश ऋणम् दशार्णम् ॥ [ ऋते च तृतीया समासेऽपि] शीतेन ऋतः शीतार्त्त. । दुःखेन ऋतः दुःखार्त्तः । तृतीयेति किम् । परम ऋतः परमर्त्तः ॥

क्वचित् ७–१ ( अव्यया० ) आर् १–१ ( हसेपः० । चपा अबे० ) वृत्तेरर्थो ज्ञेयः । क्वचित् प्रयोगांतरे अवर्ण ऋवर्णे परे सति सह उभयोर्योगेन आर् भवति । ऋण ऋणम् ( क्वचिदार् । रहाद्यपो द्विः ) स्वर० । जलतुंबिका० । ऋणार्णम् । एवं ऋतशब्दे परे तृतीयासमासेऽपि आर् स्यात् । शीतार्तः । दुःखार्तः । वसनार्णम् कंबलार्णम् । दशार्णम् । वत्सतरार्णम् । प्रार्णम् ॥

ऌ अल् ॥ अवर्ण ऌवर्णे परे सह अल् भवति । तव ऌकारः । तवल्कारः ॥ [ ऋऌवर्णयोर्मिथः सावर्ण्य वा वक्तव्यम् । ] [रलयोः सावर्ण्य वा वक्तव्यम् ।] होतृ ऌकारः होतृकारः होतॢकारः । परि अंकः पर्य्यंकः पल्यंकः ॥

( ऌ अल् ) ऌ ७–१ । सांके० । अल् १–१ ( हसेपः० ) वृत्तेरर्थो ज्ञेयः । तव अग्रे ऌकारः । (ऌ अल् । रहाद्य०) । स्वर०।तवल्कारः । नन्वत्र लकारोस्ति रकारो नास्ति (रहाद्यपो द्विः) इति कथं लगति तत्राह । रलयोरिति । रकारलकारयोः सावर्ण्य सदृशत्वं वर्त्तव्यम् । तेन (रहाद्यपो द्वि.) इति ककारस्य द्वित्वे तवल्कार इति सिद्धम् । रकारलकारयो. उपचारात् वाग्रहणाद्वा । वेदे ऋकारऌकारयोरपि सावर्ण्य वक्तव्यम् ।

१ इचो इ० पाठ । २ इचो इ० पा० । ३ वा शेषम् इ० पा० ॥

होत्लृकारः। ( सवर्णे० ) होतॄकारः। अत्र ऋलृवर्णयोरसवर्णत्वेनापि रलयोरित्यनेन सावर्ण्यम्[१]। "ऋलृवर्णस्यानिनोः प्रायः सावर्ण्यं रलयोर्भवेत्। तथा वेदे सवर्णत्वं स्याद्दकारलृकारयोः" ॥ परि अग्रे अंकः पर्य्यंकः। एवम् पलि अग्रे अंकः पल्यंकः। उभयत्रापि ( इ यं स्वरे। रुहायपो द्विः ) स्वर०। सिद्धम् ॥

**ए ऐ ऐ॥** अवर्णे एकारे ऐकारे च परे सह ऐकारो भवति। तव एषा तवैषा। तव ऐश्वर्य्यम् तवैश्वर्य्यम् ॥ **ओ औ औ ॥** अवर्ण ओकारे औकारे च परे सह औकारो भवति । तव ओदनम् तवौदनम्। तव औन्नत्यम् तवौन्नत्यम् ॥

सूत्रम्। ( ए ऐ ऐ ) ए ७–१। सांके०। ऐ ७–१। सांके०। ऐ १–१। सांके०। वृत्तिः कंठ्या। उदाहरणम्। तव अग्रे एषा। ( ए ऐ ऐ ) तवैषा। तव अग्रे ऐश्वर्यम् ( ए ऐ ऐ ) तवैश्वर्य्यम्। इति सिद्धम्। सूत्रम्। ओ ७–१। सांके०। औ ७–१। औ १–१ सांके०। वृत्तिः कंठ्या। उदारणम्। तव ओदनम् ( ओ औ औ ) तवौदनम्। तव अग्रे औन्नत्यम् तवौन्नत्यम्। गंगा अग्रे ओघः गंगौघः ॥

**[ ओष्ठोत्वोर्वा समासे ]** अवर्णस्य ओष्ठोत्वोः परयोर्वा सह ओ भवति समासे सति। बिंब ओष्ठः बिंबोष्ठः बिंबौष्ठः । स्थूल ओतुः स्थूलोतुः स्थूलौतुः। समासे इति किम्। तवौष्ठः ॥

इति स्वरसंधिः।

ओष्ठश्च ओतुश्च ओष्ठोतू तयोः ओष्ठोत्वोः ७–२ ( उवम् ) स्वर० । वा ३–१ ( अव्य० ) ओ १–१। सांके० ( ओ औ औ ) समासे ७–१। अवर्णस्य ओष्ठोत्वोः शब्दयोः परयोः ओष्ठोत्वोः ओकारेण सह वा अकारस्य ओकारो भवति समासे सति। पक्षे ( ओ औ औ ) यद्वा ( ओष्ठोत्वोर्वा ) इति तदा ओष्ठोत्वोः परयोः अवर्णस्य वा लोपो भवतीति व्याख्या। बिंब अग्रे ओष्ठः । बिंबाकारावोष्ठौ यस्य स बिंबोष्ठः बिंबौष्ठः। स्त्री चेत् बिंबोष्ठी बिंबौष्ठी वा। अनेन एकत्र अकारलोपः। स्वर०। द्वितीये ( ओ औ औ ) तथैव स्थूलश्चासावोतुश्च स्थूलोतुः स्थूलौतुर्वा। स्थूलमार्जार इत्यर्थः। समास इति किम्। हे छात्र ओष्ठ पश्य छात्रौष्ठं पश्येत्येकमेव रूपम्। एवं तवौष्ठः ॥

इति स्वरसंधिः।

---

१ पक्षे होतृकारः होतृ्लृकारः वर्णविश्लेषं कृत्वा होत्ऋलृकार इति जातम् ( ऋलोर्मिथः सावर्ण्यं वा वक्तव्यम् ) ऋस्थाने लृः ( वोर्लिलः ) तस्य स्थाने लः। ऋलोर्मिथः सावर्ण्यं वाच्यम्। लृस्थाने ऋ ( सव० ) स्वरहीनं०। होत्लृकारः। इति सिद्धम् ॥ "रलयोर्डलयोश्चैव शषयोर्बवयोस्तथा । वदन्त्येषां च सावर्ण्यमलङ्कारविदो जनाः ॥"

# अथ प्रकृतिभावः ३.

**अथ प्रकृतिभाव उच्यते । नामी ॥ आदसोऽमी शब्दः संधिं न प्राप्नोति । अमी आदित्याः । अमी अश्वाः । अदस इति किम् । अमी रोगस्तद्वान् अमी असौ अम्यसौ ॥**

अथ स्वरसंधिकथनादनंतरं प्रकृतिभाव उच्यते । प्रकृतेर्भावः भवनं सत्ता इति, प्रकृतिर्यथावस्थितस्वरूपस्य भावो अवस्थितिर्वा प्रकृतिभावः । संधियोग्या अपि स्वराः केचित्प्रकृतिस्था एव तिष्ठंति तस्मात्प्रकृतिभाव उच्यते । संधिसंभवेऽपि प्रकृतिस्था एव ये तिष्ठंति ते प्रगृह्या उच्यंते । तत्रादिमं सूत्रम् ( नामी ) न १–१ ( अव्य० ) अदस् १–३ ( त्यदादेः० ) सकारलोपः ( जसी । दस्य मः । अ इ ए । परी बहुत्वे ) एकारस्य इकारः । अमी १–१ । सांके० । ( सवर्णे० ) नामीति सिद्धम् । अदस्शब्दस्य जसि योऽमीशब्दो निष्पन्नः सः संधिं न प्राप्नोति । अमीशब्देन रोगवानपि उच्यते तन्निरासार्थमदस् इति पद प्रयुक्तम् । तत्र संधिः । अमी आदित्याः ( इ यं स्वरे ) इति सूत्रप्राप्तावपि संधिप्रतिषेधः । एवम् अमी ओष्ठाः । सन्धिप्रतिषेधः । एवममी एङकाः सिद्धा एव गृह्यंते । पर द्विवचने द्विवचनम् । अमी अश्वाः । अदस इति किम् । अमी असौ अम्यसौ ॥

**य्वे द्वित्वे ॥ ई च ऊ च ए च य्वे । ईकारांत ऊकारांत एकारांतश्च शब्दो द्वित्वे वर्त्तमानः संधिं न प्राप्नोति । [ मणीवादिवर्ज्जम् ] अग्नी अत्र । पटू अत्र । माले आनय । मणीवादौ तु संधिर्भवति । मणी इव मणीव । दंपती इव दंपतीव । जंपती इव जंपतीव । रोदसी इव रोदसीव ॥**

सूत्रम् । (य्वे० )ई च ऊ च ए च य्वे १–१। सांके०। द्वित्वे ७–१ (अ इ ए) इति ( य्वे द्वित्वे ) सिद्धम् । ईकार ऊकार एकाराः त्रयः सिद्धा एव गृह्यंते । परं द्विवचने द्विवचनांतः सन् ईकारांत-ऊकारान्त-एकारान्तश्च शब्दः संधिं न प्राप्नोति इत्यर्थः । मणीवादयो न निषिद्धाः । मणी इव इत्यादीन् शब्दान् वर्जयित्वा । मण्यादीनां तु द्विवचने ईकारांतत्वेऽपि संधिर्भवति । अग्नी १–२ । ( औ यू ।सवर्णे०) अग्नी अत्र। द्वित्वात्तु ( इ यं स्वरे ) इति यत्वनिषेधः । एवं पटू अत्र वत्वनिषेधः । माला २–२ ( औरी ) इति ईकारः ( अ इ ए ) माले अत्र आनय।अत्र(ए अय्)

१ तत्र अस्मिञ्छब्दे अमी इति रूपे ( इ य स्वरे ) इत्यनेन साधारित्यर्थः । २ व्याकरणान्तरे मणी इव इत्यादिरूपा स्थितिरेव नास्ति । किन्तु इवशब्दसदृशरूपार्थको वशब्दस्तत्रतत्र बोध्यः । तेन मणीव इत्येव स्थितिः । अस्या स्थितौ च संधेः प्राप्तिरेव नास्ति । तत. मणीवादिवर्ज्जम् । इति वार्तिक त्वनावश्यकम् ॥

निषेधः । एवं हरी एतौ । विष्णू इमौ । गंगे अमू । कुले अमू इत्यादि । मणीवादिवर्जमिति किम् । मणी इव, दंपती इव, रोदसी इव, इति सर्वत्र सवर्णे द्वित्वेऽपि मणीवादिनिषिद्धत्वात्संधिः कार्यः ॥

**ओ निपातः ॥ आकार–ओकारनिपातः एकस्वरश्च संधिं न प्राप्नोति॥**

सूत्रम् ( ओ निपातः ) आ १–१ । सांके० ( अव्य० ) ओ १–१ । सांके० ( अव्य० ) निपात्यते सिद्ध एव इति निपातः १–१ । ( स्रो० ) ननु एकस्वरश्चेति पदं सूत्रे नास्ति वृत्तौ कुतो लभ्यते तदर्थमाकारादारभ्य ओकारं यावत् ओ इति प्रत्याहारमंगीकुर्वंतीति केचित् । ओ १–१ । सांके० । आकार–ओकार–एकस्वरा अत्र निपाता एव गृह्यते, आङ्–उपसर्गवर्जिताः । वाक्ये स्मरणे च यो निपातरूप आ इत्यक्षरं स संधिं न प्राप्नोति ॥

"ओत्तमैरेक्ष्यसे न त्वमामृतादेन्द्रतोखिलैः ।
आ एवं सर्ववेदार्थो आ एवं सद्वचो हरेः ॥ १ ॥
ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥ २ ॥"

**आ एवं किल मन्यसे।नो अत्र स्थातव्यम्।अ अपेहि।इ इंद्रं पश्य । उ उत्तिष्ठ॥**

तथा । ओकारः "आहो अहो उताहो च नो हो हंहो अथो अमी । भोभोयुक्ताश्च ओदंता निपाताश्चाष्टधा स्मृताः" ॥ भोभो इत्यादिषु निपातरूपः ओकारः सोपि संधिं न प्राप्नोति । नो अत्र । अहो ईशाः । अथो एवम् । हे हे इत्येतयोरपि प्रगृह्यत्वमिति केचित् । हे अंब। हे ईश । तथा एकस्वरः एक एव स्वरः एकस्वरः । यद्वा केवलः स्वरमात्र एव न [illegible] हसयुक्तो यथा मादात् इत्यादिवत् । यद्वा एकस्वरः । सदृशस्वरः अकार–इकार–उकाराणां निपातरूपाणां यः कश्चिदादौ भवति तादृश एव स्वरः अग्रेपि भवति तदा संधिं न प्राप्नोति । यथा । अ अपेहि । इ इंद्रं पश्य । उ उत्तिष्ठ । अ इति निर्भर्त्सने । अपेहि दूरीकुरु । इ इति संबोधने विस्मये वा । इ इंद्रं पश्य । उ इति संबोधने रोषोक्तौ वा । उ उत्तिष्ठ । आग्रहणादाङ्–उपसर्गेण सह संधिर्भवति । उदाहरणं कंठचम् । "अत्राकारनिपातस्तु ङिदङिद्भेदतो द्विधा । तत्र यः स्याद् ङित्स एव संधिं प्राप्नोति न त्वङित्" ॥ "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" ॥ आ ईषत् उत्तमाः ओत्तमाः तैः इतीषदर्थे आङा सह संधिः । आ ईक्ष्यसे एक्ष्यसे । आ इहि एहीत्यादौ क्रियायोगे आङा सह संधिः । आ अमृतात् आमृतात् अमृतं मोक्षं मर्यादीकृत्य इति मर्यादायाम् । आ इंद्रतः ऐंद्रतः । इंद्रमभिव्याप्य इति अभिविधौ च अङा सह संधिः । मर्यादा सीमा,अभिविधिः अभिव्याप्तिः,मर्यादा च अभिविधिश्च मर्यादाभिविधिः तस्मिन्सर्वोपि द्वंद्वो विभाषयैकवचनांतः स्यात्। ( एकत्वे

द्विगुद्वंद्वौ । इति नपुंसकत्वम् । अनित्यमागमानुशासनम् । इति ( नामिनः स्वरे ) इति नुमागमो न । किंतु ( ङेरौ ङित् ) तथा आ इति आक्षेपे । आ एवं किल मन्यसे । आ इति वाक्ये । आ एवमीश्वरवचनमिति स्मरणे । स्मरणीयमित्यर्थः । अनाङ् आकारः संधिं न प्राप्नोति ॥

प्लुतः ॥ प्लुतः संधिं न प्राप्नोति । देवदत्त ३ एहि । दूरादाह्वाने टेः प्लुतः ॥ दूरादाह्वाने गाने रोदने विचारे च गम्यमाने टेः प्लुतो भवति ॥

इति प्रकृतिभावः ।

सूत्रम् ( प्लुतः ) १-१ ( स्रो० ) यत्र प्लुतस्तत्र संधिर्न भवति । भो देवदत्त ३ एहि "का एषा प्रस्तुतागी प्रचलितनयना हसलीला व्रजन्ती द्वौ पादौ कुंकुमार्द्रौ कनकविरचितौ नूपुरौ शब्दयन्ती । इत्थं मार्गे गता सा बहुकुसुमलताबद्धवेणी स्वनंती ताबूलं वामहस्ते मदननिवसिता गुह्यशाला विवेश ॥ १ ॥" अत्र विचारे टेः प्लुतत्व तेन सधिर्न । क्वचित्तु संधिः । क्वचित्तु ( प्लुतोनितौ ) इति सूत्रं पठंति तेन प्लुतोपि इति शब्दे परे संधिं न प्राप्नोति । यथा हा तात इति हा तातेति । देवदत्ते-त्यादौ संधिर्भवति । प्लुतलक्षणमाह । सूत्रम् । ( दूरादाह्वाने० ) दूरात् ५-१ । ( ङसिरत् । सवर्णे० ) आह्वाने ७-१ ( अ इ ए ) टि ६-१ ( ङिति । ङस्य ) इत्यकारलापः । ( स्रो० ) प्लुतः १-१ ( स्रो० ) वृत्तिः कठ्या । प्लुतस्तु उच्चारणमात्र एव नतु लिखनरूपः । इति प्लुतलक्षणम् ।

इति प्रकृतिभावः ॥

## अथ व्यञ्जनसंधिः ४.

अथ व्यञ्जनकार्यमुच्यते । चपा अबे जबाः ॥ पदांते वर्त्त-मानाश्चपा जबा भवत्यबे परे । पट् अत्र पडत्र । वाक् यथा वाग्यथा । अच् अताः अजताः । तत् एतत् वदेतत् । ककुप् ऐंद्री ककुबैंद्री ॥

अथ प्रकृतिभावकथनानतर व्यंजनकार्यमुच्यते व्यंजनाना सधिः कथ्यते इत्यर्थः । सूत्रम् ( चपा अबे जबाः ) चकारपकाराभ्या गृह्यमाणाः वर्णाश्चपाः । चप १-३ ( सवर्ण० । स्रो० ) अकारबकाराभ्या गृह्यमाणः प्रत्याहारः अबस्तस्मिन् अबे ७-१ ( अ इ ए ) जकारबकाराभ्या गृह्यमाणा वर्णा जबाः । जब १-३ ( स्रो० । सवर्णे० ) सिद्धम् । चपा जबा अबे, इति वक्तव्ये चपा अबे जबा इत्युक्तं तेन क्वचित्पदांतं विनापि जबा भवति यथा सद्गुरुर्भवदीयः इत्यादि । तथा क्वचिन्न भवति । यथा वैवस्वतः । सरस्वान् । मरुत्वान् । ताडित्वान् । वाचालः वाचाटः । इत्यादौ न । अथवा असमासे साक्षादेव पदाते समासादौ त्वंतर्वर्तिनी विभ-

१ प्लुतश्च इति पाठ । २ का एषा इत्यत्र कपोत सधिप्राप्तौ प्लुतत्वान्न सधिरित्यर्थ ॥

त्तिमाश्रित्य पदांते इति वाच्यम् । पदांते स्थिताः चपा जवा भवंति । चटतकपानां क्रमेण ज १ ड २ द ३ ग ४ वा ५ भवंति अवे परे । पट् अग्रे अत्र । वाक् अग्रे यथा । उभयत्रापि । ( चपा अवे जवाः ) इत्यनेन डकारगकारौ भवतः । यथा । टस्य डः । कस्य गः । स्वर० । पडत्र । वाग्यथा । एवम् अच् अंताः अजंताः । हरित् अश्वः हरिदश्वः । ककुप् एषा ककुवेषा । इति सिद्धम् । दिश् अंबरः । दिश् अंतः । अत्र पदांतताश्रयणात् ( दिशाम् ) इति कः । पश्चात् ( चपा अवे जवाः ) दिगंबरः । दिगंतः । वाच् ईशः । अत्रापि पदांतताश्रयणात् ( चोः कुः ) पश्चात् ( चपा अवे जवाः ) वागीशः । अवे परे इति किम् । वाक्पूतः । पट्कुर्वंति ॥

ञमे ञमा वा ॥ पदांते वर्तमानाश्चपा ञमे परे ञमा वा भवंति । वाक् मात्रम् वाङ्मात्रम् वाग्मात्रम् । पट् मम पण्मम पड्मम । [ मयटि नित्यं वाच्यम् ] चित् मयम् चिन्मयम् । वाक् मयम् वाङ्मयम् । चपाच्छः शः ॥ चपादुत्तरस्य शकारस्य छो वा भवति अवे परे । वाक् शूरः वाक्छूरः । वाक्शूरः ॥

सूत्रम् । ( ञमे ञमा वा ) ञकारमकाराभ्यां गृह्यमाणः प्रत्याहारो ञमस्तस्मिन् ञमे ७–१ ( अ इ ए ) ञकारमकाराभ्यां गृह्यमाणा वर्णाः ञमाः । ञम १–३ ( सवर्णे० । स्रो० ) वा ३–१ ( अव्य० ) ( आद्वे लोपश्च चपानां ञमप्रत्याहारे परे वा विकल्पेन ञमा भवंति । च १ ट २ त ३ क ४ पा ५ नां क्रमेण ञ १ ण २ न ३ ङ ४ मा ५ भवंति । वाग्रहणात्पक्षे जवा अपि भवंति । वाङ्मात्रम् वाग्मात्रम् । एकत्र ङः । अन्यत्र गः । स्वर० । पट् अग्रे मम । एकत्र णः । अन्यत्र डः । पण्मम पड्मम । स्वर० । तत् नयनम् तन्नयनम् तद्नयनम् । अप् मयः अम्मयः मयटि प्रत्यये परे तु नित्यमेव ञमाः स्युः । यथा चिन्मयम्, वाङ्मयम् । अत्र न विकल्पः । तथा च वाग्रहणादेव क्वचिज्जवस्यापि ञमाः स्युः । यथा मृद्मयः । मृन्मयः । सूत्रम् ( चपाच्छः शः ) चप ५–१ ( ङसिरत् । सवर्णे० ) चपात् अग्रे छः ( स्तोः श्चुभिः श्चुः ) इति तकारस्य चः । स्वर० । छ १–१ । ( स्रो० । विसर्जनीयस्य सः । स्तोः श्चुभिः श्चुः ) स्वर० । श ६–१ । स्वर० ( स्रो० ) सिद्धम् । चपादुत्तरस्य शकारस्य छः छकारो भवति वा विकल्पेन । वाक् अग्रे शूरः । अनेन शकारस्य छकारः । स्वर० । वाक्छूरः पक्षे वाक्शूरः । इति सिद्धम् । छः शः इति विपरीतग्रहणात् वाक् श्च्योततीत्यादौ छत्वं न स्यात् ॥

हो झभाः ॥ चपादुत्तरस्य हकारस्य झभा वा भवंति । यद्वर्गगश्चपरतद्वर्गगश्चतुर्थो भवति । वाक् हरिः वाग्घरिः वाग्हरिः । तत् हविः तद्धविः तद्हविः ॥

सूत्रम् । ( हो झभाः ) ह ६-१ । स्वर० ( स्त्रो० ) झभ १-३ ( सवर्णे० । स्त्रो० ) यस्य वर्गस्य सबंधी चपो हकारात्पूर्वं भवति तस्य वर्गस्य चतुर्थाक्षरं हकारस्थाने भवति । यथा ककारात्परस्य हस्य घः । चकारात्परस्य हस्य झः । टकारात्परस्य हस्य ढः । तकारात्परस्य हस्य धः । पकारात्परस्य हस्य भः "यद्वर्गस्य चपः पूर्वं हकारात्किल दृश्यते । हस्य स्थाने भवेद्वर्णस्तद्वर्गस्य चतुर्थकः" ॥ १ ॥ वर्गचतुर्थो हस्य सवर्ण इति । चाग्रहणात्क्वचिन्न चपादनुत्तरस्यापि हस्य झभा भवंति । यथा समिध् होमः समिद्धोमः । हकारस्य धः ( झबे जबाः ) इति सिद्धम् । यद्वा क्वचि-दनवसानेऽप्यवसानता ग्राह्या । तेन ( वावसाने ) इति धकारस्य तकारः । पश्चात् ( हो झभाः ) इत्यादि । एवं तत् हितः तद्धितः । तत् अग्रे हविः । ( हो झभाः ) इति हकारस्य धकारः । पश्चात् ( चपा अबे जबाः ) तस्य दः ( स्वर० ) तद्धविः । तत् घृतम् इत्यर्थः । वाक् अग्रे हरिः । हस्य घः पूर्ववत् ( चपा अबे जबाः ) इति कस्य गः । वाग्घरिः । वाचा कृत्वा हरिः सिंहः इति सिद्धम् । अच् अग्रे हलौ अज्झलौ । षट् अग्रे हलानि षड्ढलानि । ककुप् अग्रे हासः ककुब्भासः ॥

स्तोः श्चुभिः श्चुः ॥ स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः । सकारस्य शकारः तवर्गस्य चवर्गः । कस् चरति कश्चरति । कस् शूरः कश्शूरः । तत् चित्रम् तच्चित्रम् । तत् शास्त्रम् तच्छास्त्रम् ॥

सूत्रम् । ( स्तोः श्चुभिः श्चुः ) स च तुश्च स्तुः तस्य स्तोः ६-१ । ( ङिति । ङस्य ) इत्यकारलोपः । ( स्त्रो० ) श्च चवश्च श्चवस्तैः श्चुभिः ३-३ । ( स्त्रो० ) श् च चुश्च श्चुः १-१ ( स्त्रो० ) अत्र ( एकत्वे द्विगुद्वंद्वौ ) इति नपुंसकलिंगं युज्यते । परं छंदोवत् सूत्राणीति छांदसत्वात् पुंल्लिंगत्वम् । श्चुभिरित्यत्र बहुवचनमय-थासंख्येन योगज्ञापकं तेन सकारस्य शकारचवर्गयोगे पूर्वतः परतः उभयत्रापि सबंधे सति शकारः स्यात् । तवर्गस्य शकारचवर्गयोगे चवर्गः स्यात् । कस् चरति । कस् अग्रे शूरः । उभयत्रापि शकारः । स्वर० । कश्चरति । कश्शूरः । तत् चित्रम् । तस्य चः । स्वर० । तच्चित्रम् । तत् श्रवणम् । तत् शास्त्रम् । उभयत्रापि तस्य चः । ( चपाच्छः शः ) कस् छादयति कश्छादयति । अत्र सकारस्य शकारः । स्वर० । सत् अग्रे झंझा ( स्तोःश्चुभिः श्चुः ) इति तस्य चः ( चपा अबे जबाः ) चस्य जः । स्वर० । सज्झंझा ॥

न शात् ॥ शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । प्रश् नः प्रश्नः । विश् नः विश्नः ॥ ष्टुभिः ष्टुः ॥ स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां

॥ उभयत्रापीत्यपि पाठः ॥

योगे ष्टुर्भवति । सकारस्य षकारः तवर्गस्य टवर्गः । कस् षष्ठः कष्षष्ठः । कस् टीकते कष्टीकते । तत् टीकते तट्टीकते ॥

सूत्रम् । ( न शात् ) न १–१ । ( अव्य० ) श ५–१ ङसिरत् ( सवर्णे० ) शकारादुत्तरस्य तवर्गस्य चुत्वं चवर्गो न भवति । प्रश् अग्रे नः । विश अग्रे नः । रूपद्वयेपि चवर्गस्य निषेधः । किंतु । स्वर० । प्रश्नः । पृच्छनं प्रश्नः । विश्नः विशतीति विश्नः । विच्छ गतौ विच्छनं विश्नः । सूत्रम् ( ष्टुभिः ष्टुः ) षु च टुश्च ष्टवस्तैः ष्टुभिः ३–३ । षु च टुश्च ष्टुः १–१ ( स्रो० ) ष्टुभिरित्यत्रापि बहुवचनमयथासंख्ययोगसूचकम् । स्तोः सकारतवर्गयोः षकारटवर्गयोगे षकारटवर्गौ यथासंख्यं भवत इत्यर्थः । सकारस्य षकारः । तवर्गस्य टवर्गः । कस् अग्रे षष्ठः, कस् अग्रे टीकते, उभयत्रापि सस्य षः । स्वर० । कष्षष्ठः । कष्टीकते । कः समर्थो भवतीत्यर्थः । टीकृ गतौ सामर्थ्ये च । तत् अग्रे टीकते अनेन तस्य टः । स्वर० । तट्टीकते । विड् अग्रे ठलः । पूर्वं ( खसे चपा० ) तठः ( ष्टुभिः० ) विट्ठलः ॥

तोर्लि लः ॥ तवर्गस्य लकारे परे लकारो भवति । तत् लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति ॥ [ अन्तस्था द्विप्रभेदाः ] रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव नकारस्य लकारो भवति ॥

सूत्रम् । ( तोर्लि लः ) तु ६–१ ( ङिति ) तु इत्यस्य तो ( ङस्य । स्रो० ) तोः अग्रे ल ७–१ । स्वर० । ( नामिनो रः ) जलतुम्बि० । लि । ल १–१ ( स्रो० ) तवर्गस्य उदाहरणम् । तत् अग्रे लुनाति । अनेन तस्य लकारः । स्वर० । तल्लुनाति । भवान् अग्रे लिखति । ( तोर्लि लः ) । इति नस्य लत्वे कृते । अन्तस्था द्विप्रभेदाः । उच्चारणकाले जिह्वाया अन्ते तिष्ठंतीति अन्तस्थाः । अथवा वर्गाणामंते तिष्ठंतीति अन्तस्थाः । ते के यरलवाः ते च द्विप्रकाराः । कथंभूताः । रेफेण रकारेण वर्जिताः शेषा यवला इत्यर्थः । कथं द्विप्रभेदा इत्याह । सानुनासिका निरनुनासिकाश्च । तत्र तवर्गाणां स्थाने लकारो निरनुनासिको भवति नकारस्य सानुनासिकत्वान्नकारस्थाने लकारोपि सानुनासिक एव भवति । तेन पूर्ववर्णस्योपरि अर्द्धानुस्वारो भवति । स्वर० । भवाँल्लिखतीति सिद्धम् ॥

न पि ॥ पकारे परे तवर्गस्य टुत्वं न भवति । भवान् षष्ठः भवान्षष्ठः ॥ टोरंत्यात् ॥पदांते वर्त्तमानाट्टवर्गात्परस्य स्तोष्टुर्न भवति । षट् नरः षड्नरः षण्नरः । षट् सीदंति षट्सीदंति ॥

सूत्रम् । ( न षि ) न १-१ ( अव्य० ) । षु ७-१ । स्वर० । षकारे परे तवर्गस्य टवर्गो न भवति । भवान् षष्ठः । अत्रानेन ( ष्टुभिः ष्टुः ) इति प्राप्तस्य टवर्गस्य निषेधः । किन्तु स्वर० । प्रकृतिभाव एव । सूत्रम् ( टोरंत्यात् ) टु ५-१ ( ङिति ) टु इत्यस्य टो । ( ङस्य ) इत्यकारलोपः ( स्रो० ) टोः अग्रे अंत्य ( नामिनो रः ) स्वर० । अन्त्य ५-१ ( ङसिरत् । सवर्णे दीर्घः० ) पदांते वर्तमानो यः टवर्गस्तस्मादुत्तरयोः परयोः सकारतवर्गयोः षकारटवर्गौ न भवतः । परम् । नाम्नवतिनगरीवर्जम् । उदाहरणम् । षट् अग्रे नरः । अत्र टुत्वनिषेधः । ततः ( ञमे ञमा वा ) च-ट ञ-ण । स्वर० । षण्नरः । पक्षे षड्नरः । ना नरौ नरः इति बहुवचनम् । षट् अग्रे सीदंति । अत्र षत्वनिषेधः । नाम्नवतिनगरीवर्जनात् । षण्णाम् । षण्णवतिः । षण्णगर्यः । अत्र ( टोरंत्यात् ) इति सूत्रं न लगति । किन्तु ( ष्टुभिः ष्टुः ) इति भवति । स्वर० ॥

नः सक् छते ॥ नांतस्य पदस्य छते परे सगागमो भवति । [टित्कितावाद्यन्तयोर्वक्तव्यौ ] टित्वादादौ कित्वादंते । राजन् चित्रम् राजंश्चित्रम् । भवान् तनोति भवांस्तनोति ॥

सूत्रम् । न् ६-१ । स्वर० । ( स्रो० ) सक् १-१ । ( हसेपः० ) छत ७-१ । ( अ इ ए ) त्रिपदम् । नांतस्य नकारांतस्य पदस्य छते छठथचटतत्वलक्षणे प्रत्याहारे सक् इत्यागमो भवति । ककारः स्थाननियमार्थः । तमेवाह ( टित्कितौ० ) । ट् इत् यस्यासौ टित् क् इत् यस्यासौ कित् टिच्च किच्च टित्कितौ टित्किताबागमौ क्रमेण आद्यंतयोर्विषये भवतः । टित् आदौ कित् अंते इत्यर्थः । अत्र कित्वात् अन्ते । राजन् अग्रे चित्रम् । भवान् अग्रे तनोति । उभयत्रापि सगागमः । अकार उच्चारणार्थः । एकत्र ( स्तोः श्चुभिः० ) इति सस्य शः । उभयत्रापि । स्वर० । 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेनैव गृह्यंते' इति आगमांतं पदमित्यपदांतत्वान्नकारस्य ( नश्चापदांते झसे ) इत्यनुस्वारः ॥

शे चक् वा ॥ नांतस्य पदस्य शे परे वा चगागमो भवति । भवाञ्शूरः भवाञ्च्छूरःभवाञ्च्शूरः भवाञ्शूरः॥ङ्णनो ह्रस्वाद्विः स्वरे॥ ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे पदांते । प्रत्यङ् इदम् प्रत्यङ्ङिदम् । सुगण् इह सुगण्णिह । राजन् इह राजन्निह ॥

सूत्रम् । ( शे चग्वा ) श ७-१ । ( अ इ ए ) चक् १-१ । ( हसे० ) वा १-१ । अव्य० । नांतस्य इति । नकारांतस्य पदस्य शे शकारे परे वा विकल्पेन चक्-आगमः स्यात् । भवान् अग्रे शूरः ३ । अत्र ( चपाच्छः शः ) इति सूत्रस्य

विकल्पेन प्राप्त्यर्थं रूपद्वये चगागमः । च पदत्रयेऽपि ( स्तोः श्चुभिः श्चुः ) नस्य ञः । प्रथमरूपे ( चपाच्छः शः ) शस्य छः सर्वत्र । स्वर० । भवाञ्च्छूरः-भवाञ्च्छूरः-भवाञ्शूरः । तृतीयरूपे चगागमाभावे भवाञ्शूरः । सूत्रम् ( ङ्णनो ह्र० ) ङ् च ण् च न् च ङ्णन् १-३ । स्वर० ( स्रो० ) अग्रेह्रस्वात् ५-१ । पूर्वम् ( इवे । उ ओ ) द्विः १-१ ।( अव्य० । चपा अवे जवाः ) स्वर० । ७-१ ( अ इ ए ) सिद्धम् । ह्रस्वादुत्तराः परा ये ङकारणकारनकारास्ते द्विर्भावमापद्यंते द्वौ भवत इत्यर्थः स्वरे परे पदांते विषये । अत्र पुनः स्वरग्रहणं विभक्तिस्वरनिषेधार्थम् । प्रत्यङ् अग्रे इदम् । गण संख्याने सुपूर्वः । सुष्ठु गणयतीति सुगण् क्विबन्तः । सुगण् अग्रे इह । राजन् अग्रे इह । सर्वत्रापि द्वित्वम् । स्वर० । प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह ॥

छः ॥ ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥ खसे चपा झसानाम् ॥ झसानां खसे परे चपा भवंति । तव छत्रम् तवच्छत्रम् । [ क्वचिद्दीर्घादपि वक्तव्यः ] ह्री छः ह्रीच्छः । म्ले छः म्लेच्छः ॥

सूत्रम् । छ १-१ ( स्रो० ) एकपदम् । वृत्तिः कंठचा । उदाहरणम् । तव अग्रे छत्रम् । अनेन छस्य द्वित्वम् । तव छ छत्रमिति स्थिते । सूत्रम् ( खसे चपा झसानाम् ) खस ७-१ ( अ इ ए ) चप १-३ ( सवर्ण० । स्रो० ) झस ६-३ ( नुडामः । नामी ) इति दीर्घः स्वरः । सिद्धम् । झसानां चपाः भवंति खसे परे । अत्र यथासंख्यगणनात् छस्य तकारः संभवति । परं वर्ग्यो वर्ग्येण सवर्ण इति वचनात् चकार एव क्रियते । स्वर० । तव च्छत्रमिति सिद्धम् । पक्षांतरमाह । दीर्घादित्यादि । क्वचित् कस्मिंश्चित्स्थाने दीर्घादुत्तरोऽपि छकारो द्विर्भवति । यथा म्ले अग्रे छः । ह्री अग्रे छः । रूपद्वयेप्यनेन द्वित्वे विहिते प्राग्वत् । ( खसे च० ) स्वर० । म्लेच्छः । म्लेच्छ अव्यक्ते शब्दे । म्लेच्छयतीति म्लेच्छः । अथवा म्लै गात्रविनामे । म्लायते इति म्लेच्छः । ह्रीच्छः । ह्रीच्छ लज्जायाम् । ह्रीच्छतीति ह्रीच्छः । एवम् आच्छादयति । ह्रीच्छति । ऐच्छत् । माच्छिदत् । स्वच्छाया । इत्यादौ दीर्घात्परस्य छस्य द्वित्वम् ॥

मोऽनुस्वारः ॥ मकारस्यानुस्वारो भवति हसे परे पदांते । तम् हसति तं हसति । पटुम् वृथा पटुं वृथा ॥

सूत्रम् ( मोऽनु० ) म् ६-१ । स्वर० । ( स्रो० ) मः । अग्रे अनुस्वारः १-१ । ( स्रो० ) मध्ये ( अतोऽत्युः । उ ओ । एदोतोऽतः ) मकारस्य हसे परे पदांते सत्यनुस्वारो भवति । उदाहरणम् । तम् अग्रे हसति । पटुम् अग्रे वृथा । उभयत्राप्यनुस्वारः । तं हसति । पटुं वृथा । पदांते इति किम् । गम्यते इत्यादौ अनुस्वारो न ॥

नश्चापदांते झसे ॥ नकारस्य मकारस्य चापदांते वर्तमानस्यानुस्वारो भवति झसे परे । यशान् सि यशांसि । पुम् भ्याम् पुंभ्याम् ॥

सूत्रम् । ( नश्चापदां० ) न ६-१ । स्वर० । ( स्रो० ) अग्रे । च १-१ । ( अव्य० । विसर्जनीय० । स्तोः श्चु० ) सस्य शः । स्वर० । अग्रे अपदांते ७-१ ( अ इ ए । सवर्णे० ) झस ७-१ । ( अ इ ए ) सिद्धम् । चकारः पूर्वोक्तस्य ( मोऽनुस्वारः ) इत्यतो म इत्यस्यानुकर्षणार्थः । तेन उभयोरप्यपदांते पदमध्ये वर्तमानयोर्नकारमकारयोर्झसे परे अनुस्वारो भवति । यशस् १-३ ( जश्शसोः शिः । नुमयमः ) मिदंत्यात्स्वरात्परो० । ( न्संम्महतो० ) ततो यशान् अग्रे सि । पुम् अग्रे भ्याम् । उभयत्राप्यनुस्वारः । यशांसि । पुंभ्याम् । एवं पयान् अग्रे सि पयांसि ॥

यमा यपेऽस्य ॥ अपदान्ते वर्तमानस्याऽनुस्वारस्य यमा भवंति यपे परे । अस्य यपस्य सवर्णाः । अं कितः अङ्कितः । अं जनम् अञ्जनम् । मंडनम् मण्डनम् ॥ वा॑ ॥ पदान्ते वर्तमानस्याऽनुस्वारस्य ञमा वा भवन्ति यपे परे । तं करोति तङ्करोति । तं तनोति तन्तनोति [ यवलपरे यवला वा ] अनुस्वारस्य यवलपरे तु सानुनासिका एव यवला वा भवंति । सं यन्ता सय्ँयन्ता । यं लोकं यल्ँलोकम् । सं वत्सरः सव्ँवत्सरः ॥ "स्वरे मः ॥ अनुस्वारस्य मकारादेशो भवति स्वरे परे । अस्माकं इह अस्माकमिह । शं अस्ति शमस्ति । सुखं एति सुखमेति ।" [ ँ छंदसि । ] छंदस्यनुस्वारो ँकारमापद्यते शषसहरेफेषु परतः । हं सः हँसः ॥

इति व्यंजनसंधिः ।

सूत्रम् ( यमा यपे० ) यम १-३ ( सवर्णे० । स्रो० ) यमाः । अग्रे यपे ७-१ ( अ इ ए ) प्राक् ( आदेवे० ) विसर्गलोपः । अग्रे इदम् ६-१ ( त्यद् देष्टरः स्यादौ । दस्य मः । ङस्य । स्म्यः ) इदमः स्थाने अ ( एदोतोतः ) अपदांते अनुस्वारस्य यमा भवंति यपप्रत्याहारे परे । सूत्रम् ( वा ) ३-१ ( अव्य० ) पदान्ते अनुस्वारस्य यमा भवंति यपप्रत्याहारे परे । कथमित्याह । अस्य अग्रे वर्तमानस्य यपस्य सवर्णा एव यमा भवंति । अनुस्वारस्य सानुनासिक्यात् ये सानुनासिका यमाः त एव भवंति । वर्गो वर्ग्येण सवर्ण इति वचनात् । वर्ग्ये अक्षरे परे तद्वर्गस्य पंचमाक्षरं भवति । अन्यत्र यादृशो यपोऽग्रे भवति तादृश एव

१ (नोपधाया ०)-इति पाठ पुस्तकान्तरे दृश्यते-परं सात्र 'यशन् स इ' इत्यस्मिन्नुदाहरणे दीर्घं विधातुमप्राप्तेरतस्य सूत्रस्याप्रायोजनिकं एव 'यशन् स' इत्यस्य सकारात् तत्प्रयुक्तोऽयमत्र 'न्सम्महतो धौ दीर्घं श्रौ च' इति पाठ इति सुधियो विदाकुर्वन्तु । २ पदान्तविषयमिदं भिन्नं सूत्रम् । ३ अपदान्तविषयमिदमेतावन्मात्रं सूत्रम् ।

क्रियते । यथा कवर्गे परे ङकारः । चवर्गे परे ञः । टवर्गे परे णः । तवर्गे परे नः । पवर्गे परे मः । यवलेषु परेषु यवला एव स्युः । उदाहरणानि । अं कितः अङ्कितः । इत्यादि । तं अग्रे करोति । तं अग्रे तनोति । ककारे परे अनुस्वारस्य ङः । तकारे परे अनुस्वारस्य नः । स्वर० । तङ्करोति । तन्तनोति । सं अग्रे यंता । अत्रानुस्वारस्य यः अग्रे च ( अंतस्था द्विप्रभेदाः ) इति सानुनासिकत्वात् तस्य उपरि अर्द्धचन्द्राकारो विंदुः । सय्ँयंता । एवं सं वत्सरः सव्ँवत्सरः । पुं लिंगः । पुँल्लिंगः । अत्र केचित् ( स्वरे मः ) अनुस्वारस्य मकारो भवति स्वरे परे । इति सूत्रं पठन्ति । परं स्वरे परे पूर्वम् ( मोऽनुस्वारः ) एव न भवति । किंतु स्वरहीनमेव स्यात् । कृष्णो माम् अवतु कृष्णो मामवतु । जिनम् ईडे जिनमीडे । शम् अस्ति शमस्ति । अस्माकम् इह अस्माकमिह । ( ङ्णोः कक् टक् वा ) ङकारणकारयोः शषसेषु परेषु क्रमेण कक् टक् आगमौ वा स्तः । प्राङ् षष्ठः । प्राङ्क्षष्ठः । लिङ् सु लिङ्क्षु । सुगण् षष्ठः सुगण्ट्षष्ठः ( ँ छंदसि ) अनुस्वारः ँकारमापद्यते शषसहरेफेषु परतः छंदसि वेदे । हं सः हँसः । सुचीं षत् सुचीँषत् । वयं साम वयँसाम । सं हिता सँहिता । तं रविः तँरविः । इति चतुर्थसंध्यनुसारेण व्यंजनसंधिरेषावचूरिलेशतो लिखितः ॥

इति व्यंजनसंधिः ॥

## अथ विसर्गसन्धिः ।

अथ विसर्गसंधिर्निगद्यते । विसर्जनीयस्य सः ॥ विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति ॥ [ शसे वा ] विसर्जनीयस्य शसे परे शषसा वा भवंति । कः शेते कश्शेते । कः षष्ठः कष्षष्ठः । कः साधुः कस्साधुः ॥

अथेति । व्यंजनकार्यकथनानंतरं विसर्गाणां संधिर्निगद्यते कथ्यते । द्वौ विंदू विसर्गः । सूत्रम् ( विसर्जनीयस्य सः ) विसर्जनीय ६–१ । ( टस्स्य ) अग्रे । स १–१ । ( सो० ) सिद्धम् । विसर्जनीयस्य सकाररकारोत्पन्नस्य कृष्णसर्पचक्षुराकारविंदुद्वयरूपस्य खसे परे सकारो भवति । श्लोको यथा–"शृंगवद्बालवत्सस्य कुमारीस्तनयुग्मवत् । नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः" ॥ उदाहरणम् ।

---

१ कस्मिंश्चित्पुस्तके 'यवलेषु' इति पाठः । २ कस्मिंश्चित्पुस्तके 'पुँल्लिंगः' इत्यस्योत्तरं 'शंरमते शँरन्ते' इति पाठो दृश्यते । परन्तु रेफे परेऽनुनासिकविधानं वैदिकप्रयोगेष्वेव बाहुल्येन दृश्यते न तु लौकिकेषु । अतएव अग्रे ( ँछदसि ) इति सूत्रस्य तं रविः तँरविः । इत्युदाहरणं संगच्छेत । ३ पुस्तकान्तरे बाहुलकभेदव्याख्यानानंतरं वैदिकप्रयोगव्याख्यानावसरे ( शषसहरेफेषु छन्दसि अनुस्वारस्य ँकारो वा वक्तव्यः ) इति वार्तिकमुक्त्वा हँसः हंसः इत्युदाहरणद्वयमुक्तमपरं दृश्यते । ४ अत्र ग्रन्थस्याहारस्य ग्रहणं समस्तम् ।

कः अग्रे तनोति । अनेन विसर्गस्य सकारः । स्वर० । कस्तनोति [ शसे वा ] द्विपदमिदम् । विसर्जनीयस्य शसेषु परेषु शषसा एव वा भवंति । पक्षे विसर्जनीय एव तिष्ठति । कः शेते कश्शेते । कः षंढः कष्षढः । कः साधुः कस्साधुः ॥

**कुप्वोः ≍ क ≍ पौ वा ॥** विसर्जनीयस्य कवर्गपवर्गसंबंधिनि खसे परे ≍ क≍पौ वा भवतः । कपावुच्चारणार्थौ । कः करोति क ≍ करोति । कः खनति क≍खनति । कः पचति क≍ पचति । कः फलति क≍ फलति ॥ [ वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः । ] वाचस्पतिः । बृहस्पतिः । कारस्करः । पारस्करः । राजंस्तुदम् । हारिः चन्द्रः हरिश्चंद्रः । [ तद्बृहतोः करपत्योश्चौरदेवतयोः सुट्तलोपश्च । ] तत् करः तस्करः । बृहत् पतिः बृहस्पतिः ॥

पुनर्विशेषमाह । सूत्रम् । ( कुप्वोः ≍क≍पौ वा ) कुश्च पुश्च कुपू तयोः कुप्वोः ६-२ । ( उ वम् ) स्वर० । ( स्रो० ) अग्रे ≍कश्च≍ पश्च≍ क≍ पौ १-२ ( ओ औ औ ) वा ३-१ ( अव्य० ) विर्जनीयस्य कवर्गपवर्गसंबंधिनि कखपफरूपे खसे परे≍ क≍ पौ जिह्वामूलीयोपध्मानीयसंज्ञौ यथासंख्यं वा भवतः । पक्षे विसर्जनीय एव तिष्ठति । अयमर्थः । कखयोः परयोः≍कः । पफयोः परयोः≍ पः । कपौ ककारपकारावुच्चारणार्थौ अन्यथोच्चारितुमशक्यत्वात् । अतो वज्राकारगजकुंभाकारौ तिष्ठतः । कः अग्रे करोति । अत्र विसर्गः । क≍ करोति । कः अग्रे पचति क≍ पचति । एवं क≍ खनति । क≍ फलति । वाचस्पत्यादयः संज्ञाशब्दाः संज्ञावाचकाः कस्यापि नामप्रतिपादकाः शब्दाः तेऽपि निपातनात्साधवः निपातासिद्धा एव ज्ञेयाः । यथा । वाचस्पतिः । अत्र ( कुप्वोः ≍क≍ पौ वा ) इत्यस्य प्राप्तावपि विसर्जनीयस्य सकार एव निपात्यते । एवं भास्करः । श्रेयस्करः । श्रेयस्कामः । अयस्कांतः । अयस्कुंभः । अयस्पात्रम् । तमस्कांडः । दिवस्पतिः । नमस्कारः । अहस्कारः । बृहस्पतिः । तस्करः । शास्त्रांतरे त्वित्थं दृश्यते प्रक्रियाकौमुद्याम् । तद्बृहतोः करपत्योश्चौरदेवतयोः सुडागमस्तलोपश्च । तत् अग्रे करः । अनेन सुडागमः । तलोपः । तस्करः । बृहत् अग्रे पतिः । सकारागमः । तलोपः । बृहस्पतिः । चकारात् हरिश्चंद्रः । मस्करः । मस्करी । परिव्राजकवेण्वोः । कांस्कान् । कस्कः । कस्कादयः । एवमश्वत्यकपित्थदधित्यादिषु स्याधातोः सस्य तः । इत्यादयः साधवः सिद्धा एव ज्ञेयाः । यल्लक्षणेनोपपन्नं तत्सर्वं निपातात्सिद्धमेवेति लक्षणसूत्रमंतरेण लोकप्रसिद्धरूपोच्चारणं निपातनम् ॥

रोऽरात्रिषु ॥ अह्नो विसर्ज्जनीयस्य पदांते रो भवति रात्र्यादिवर्ज्जितेषु परतः । अहः पतिः अहर्पतिः । अहः गणः अहर्गणः । अरात्रिष्विति विशेषणात् । अहः रात्रः अहोरात्रः । अहः रूपम् अहोरूपम् । अहः रथंतरम् अहोरथंतरम् ॥

सूत्रम् । ( रोऽरात्रिषु ) र १–१ ( स्रो० ) मध्ये । ( हवे । उ ओ । स्रो० ) र अग्रे अरात्रि । ( अतोऽत्युः । उ ओ । एदोऽतोतः ) न रात्रयः अरात्रयस्तेषु अरात्रिषु ७–३ । ( क्लिलात्यः सः० ) अहन्शब्दसंबंधिनो विसर्जनीयस्य पदांते रो भवति रात्र्यादिवर्जितेषु रात्र्यादिभिन्नेषु शब्देषु परेषु सत्सु । रकारादिरात्रिरूपरथंतराद्विवर्जितेष्वित्यर्थः । उदाहरणम् । अहन् अग्रे पतिः । अहन् अग्रे गणः ( अह्नः ) इति सूत्रेण उभयत्रापि नस्य सः । ( स्रो० ) अनेन सूत्रेण विसर्गस्य रः । ( रहाघपो द्विः ) जलतुम्बि० । अह्नो दिवसस्य पतिः अहर्प्पतिः । अह्नां गणः अहर्गणः॥ अत्रांतर्वर्तिनीं विभक्तिमाश्रित्य पदांतत्वं ग्राह्यम् । अरात्रिष्विति विशेषणात् । रात्र्यादिवर्जनात्किम् । अहन् अग्रे रात्रः ( अह्नः ) इति नस्य सः । अरात्रिष्विति कथनात् रनिषेधः । ततो ( हवे । उ ओ ) अहोरात्रः । एवम् । अहोरूपम् । प्रशस्तम् अहः अहोरूपम् । "अहोरथंतरं साम श्रेष्ठं साम रथंतरम्" । अहोरथंतरम् । पदांत इति किम् । अहोभ्याम् ॥

अतोऽत्युः ॥ अकारात्परस्य विसर्जनीयस्य उकारो भवत्यति परतः । कः अर्थः कोऽर्थः ॥ हवे ॥ अकारात परस्य विसर्जनीयस्य उकारो भवति हवे परे । कः गतः को गतः । देवः याति देवो याति । मनः रथः मनोरथः ॥

सूत्रम् ( अतोऽत्युः ) अत् ५–१ । स्वर० ( स्रो० ) अतः । अग्रे अत् ७–१ स्वर० । मध्ये ( अतोऽत्युः । उ ओ । एदोतोऽतः ) अग्रे उ १–१ ( स्रो० ) पश्चात् ( इ यं स्वरे ) स्वर० । सिद्धिः । वृत्तिः कण्ठ्या । अति परतः अकार एव परे इत्यर्थः। तपरकरणं तावन्मात्रग्रहणार्थमुभयत्रापि सवर्णनिषेधार्थम् । उदाहरणम् । कः अग्रे अर्थः । अनेन उकारः । ( उ ओ । एदोतोऽतः ) कोऽर्थः । सूत्रम् ( हवे ) ७–१ ( अ इ ए ) वृत्तिः सुगमा । उदाहरणम् । कः गतः । अत्र अकारात्परस्य विसर्जनीयस्य हवे परे उकारः । ततः ( उ ओ ) को गतः । देवः याति ( हवे । उ ओ ) देवो याति । मनः रथः ( हवे । उ ओ ) मनोरथः ॥

---

१ अह्न इति सूत्रादत्र 'अहः' इत्यस्याऽनुवृत्तिः क्रियते ।

२ प्रसिद्धा इति पाठोऽन्यत्र पुस्तके

**आदवे लोपश् ॥** अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे । देवाः अत्र देवा अत्र । वाताः वाताः वाता वाताः ॥

सूत्रम् ( आदवे० ) अ ५-१ ( ङसिरत् । सवर्णे० ) आत् । अव ७-१( अ इ ए ) मध्ये ( चपा अवे जबाः ) लोपश १-१ ( हसे० ) यदि वा अश्च आ च आ ५-१ ङसि ( नपुंसकस्य ) इति ह्रस्वः ( ङसिरत् ) अवर्णात् अकार-आकाररूपादुत्तरस्य विसर्जनीयस्य लोपश भवति अवे परे । उदा० । देवाः अग्रे अत्र । वाताः अग्रे वाताः । उभयत्रापि विसर्गलोपः । देवा अत्र । वाता वाताः । एवं कः इह । क इह ॥

**स्वरे यत्वं वा ॥** अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति । देवाः अत्र देवायत्र देवा अत्र ॥

पुनर्विशेषमाह । सूत्रम् ( स्वरे यत्वं वा ) स्वरे ७-१ ( अ इ ए ) यत्वं १-१ । ( अतोऽम् । अम्शसो० । मोनु० ) वा ३-१ ( अव्य० ) वृत्तिः कंठ्या । वाग्रहणात्पक्षे ( आदवे लोपश् ) देवाः अग्रे अत्र । एकत्र यत्वम् । स्वर० । देवायत्र । अन्यत्र लोपश् । देवा अत्र ॥

**भोसः ॥** भोस् भगोस् अघोस् इत्येतस्य विसर्जनीयस्य लोपश् भवत्यवे परे । भोः एहि भो एहि । भगोः नमस्ते भगो नमस्ते । अघोः याहि अघो याहि ॥

सूत्रम् ( भोसः ) भोस् ६-१ । स्वर० ( स्रो० ) जातीयग्रहणेन तज्जातीयग्रहणम् । यद्वा भोस् इत्यत्र आद्यंतग्रहणेन प्रत्याहारः सूचितस्तेन भोः भगोः अघो इत्येतत्पदत्रयसंबंधिनः विसर्जनीयस्यावे परे लोपश् भवति । उदा० । भोः अग्रे एहि-आगच्छ । भगोः अग्रे नमस्ते-हे भगवन् ते तुभ्यं नमः । अघोः अग्रे याहि-हे अघोः हे पाप याहि गच्छ । सर्वत्र ( भोसः ) इति सूत्रेण विसर्गलोपश् यो वा स्वरे । भो एहि । भोयेहि ॥

**नामिनो रः ॥** नामिनः परस्य विसर्जनीयस्य रेफो भवत्यवे परे । अग्निः अत्र अग्निरत्र । बटुः यजते बटुर्यजते । [ **रेफप्रकृतिकस्य खपे वा ॥** ] रेफाज्जातस्य विसर्जनीयस्य रेफो वा भवति खपे परे । गीः पतिः गीर्पतिः गी‿पतिः । धूः पतिः धूर्पतिः धू‿पतिः ॥

सूत्रम् ( नामिनो रः ) नामिन् ५-१ । स्वर० । ( स्रो० ) अग्रे १-१ ( स्रो० ।

---

१ वाताः वांति वाता वांति इत्यन्यस्मिन्पुस्तके । २ भोस इति षष्ठी न तु पञ्चमी ततः परस्य विसर्गस्याऽभावात् । ३ यदि वेत्यपि पाठः । ४ पटुः यजते पटुयजते । इत्यपि पाठः ॥

इंवे । उ ओ ।) नामिनः अवर्णवर्जस्वरात् परस्य विसर्जनीयस्य अवे परे रेफो भवति । उदा० । अग्निः अग्रे अत्र । अनेन सूत्रेण रेफः । स्वर० । अग्निरत्र । वटुः अग्रे यजते ( नामिनो रः ) इति रेफः ( रहाद्यपो द्विः ) जलतुं० । वटुर्यजते । वटुर्ब्राह्मणो यजते यज्ञं करोति । एवं वटुरत्र वर्तते । सूत्रम् ( रेफ० ) रेफप्रकृत्या उत्पन्नो वा रेफ एव प्रकृतिर्मूलकारणं यस्य रेफप्रकृतिकस्तस्य ६–१ ( ङस्य ) खपे ७–१ ( अ इ ए ) वा ३–१ । ( अव्य० ) रेफप्रकृतिकस्य विसर्जनीयस्य वा रेफो भवति खपे परे। उदा० । गिर् अग्रे पतिः ( य्वोर्वि हसे ) गि इत्यस्य गी । ( सो० ) गीः ( रेफप्र० ) अनेन एकत्र रेफः ( रहाद्य० ) जल० । अन्यत्र ( कुप्वोः ⨯ क ⨯ पौ वा ) गीर्प्पतिः गी⨯ पतिः गीः पतिः । एवं रूपत्रयम् । एवं धूर्पतिः धू⨯ पतिः धूः पतिः । इत्यादि ॥

रः ॥ रेफसंबंधिनो विसर्जनीयस्य रेफो भवत्यवे परे । प्रातः अत्र प्रातरत्र । अंतः गतः अंतर्गतः ॥ रि लोपो दीर्घश्च ॥ रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते पुना रमते । शुक्तिः रूप्यात्मना भाति शुक्ती रूप्यात्मना भाति ॥

सूत्रम् ( रः ) र ६–१ । स्वर० ( सो० ) रेफसंबंधिनो रेफाज्जातस्य विसर्जनीयस्य रेफो भवति अवप्रत्याहारे परे । उदा० । प्रातर् अग्रे अत्र । अंतर् अग्रे गतः । उभयत्रापि ( सो० ) ततः ( रः ) इत्यनेन पुनरपि रेफः । स्वर० । प्रातरत्रागंतव्यम् । अंतर्गतः । एवं स्वः गतः स्वर्गतः । पुनः आगतः पुनरागतः । सूत्रम् ( रि० ) र् ७–१ । स्वर० । लोपः १–१ । ( सो० ) अग्रे दीर्घः । पूर्व ( ह्रवे । उ ओ ) दीर्घ १–१ ( सो० ) दीर्घः । अग्रे च १–१ ( अव्य० ) प्राक् ( विसर्जनीयस्य सः । स्तोः श्चुभिः श्चुः ) सिद्धम् । सूत्रं चतुष्पदम् । रेफेति वृत्तिः सुगमा । पुनः अग्रे रमते ( रः ) इति रेफः ( रि लोपो० ) इति र्लोपः । पूर्वस्य च दीर्घः । न इत्यस्य ना । शुक्तिः अग्रे रूप्यात्मना भाति । ( नामिनो रः । रि लोपो० ) पूर्वस्य च दीर्घः । शुक्ती रूप्यात्मना भाति । शुक्तिः रजताकारेण भासते इत्यर्थः । एवं हरी गजते । शंभू रमते ॥

सैषाद्धसे ॥ सशब्दादेषशब्दाच परस्य विसर्जनीयस्य लोपश् भवति हसे परे । सः चरति स चरति । एषः हसति एष हसति ॥

सूत्रम् ( सैषा० ) स च एष च सैषं तस्मात्सैषात् ५–१ । ( ङसिरत् । सवर्णे० ) हसे ७–१ । ( अ इ ए ) मध्ये ( हो झभाः । चपा अवे० ) अत्र समासे कृते सद्देतदोर्हसे इति संभवेऽपि ( सैषाद्धसे ) इति यत् सूत्रं कृतं ततः तैः एवः सकः एषकः । न सः असः इत्यादौ हसे परे विसर्गलोपप्राप्तिनिवारणार्थमित्यर्थः । केचित्पुनराहुः ।

१ सैषात्कहसे इत्यन्यत्र पाठः ।

॥ इति पृथक्पदं पंचम्येकवचनांतं साकेतिकम् । एपात्पंचम्येकवचनम् । हसे सप्तम्यतम् । स एपात् इत्यत्र ( आदवे लोपश् ) इति विसर्गलोपशं विधाय पश्चात् ( ए ऐ ऐ )॥

सैपादिति संहिता–

सैष दाशरथी रामः सैष राजा युधिष्ठिरः ॥
सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ १ ॥
इत्यादौ पादपूरणे संध्यर्था ज्ञेया ।
यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् ॥
सेमां भूम्याददे सोपामित्यादीनामदुष्टता ॥ २ ॥

नन्वत्र लोपशि कृते पुनः संधिः कथं कृतः इत्यग्रे वक्ष्यति । सैषादिति संहितेत्यादिना । तद् एतद् उभयत्रापि । १–१ ( त्यदादेष्टेरः स्यादौ ) इति दलोपः । ( तः ) इत्युभयत्रापि तस्य सः । एस इत्यत्र ( किलात्पः सः० । स्रो० ) तदेतदोर्निष्पन्नाभ्यां स–एपशब्दाभ्याम् इत्यर्थः । शेपं कंठ्यम् । उदा० । सः अग्रे चरति । एपः अग्रे हसति । उभयत्रापि ( सैपाद्धसे ) इति विसर्गलोपश् ( सेपाद्धसे ) इति सूत्रे ऋजुतया कर्त्तव्ये सैपादिति सूत्रमध्ये या अघटमाना अकारैकारयोः ( ए ऐ ऐ ) इति संहिता संधिर्दर्शिता सा स–एपशब्दयोः 'सैप दाशरथी रामः' इत्यादि अष्टाक्षरात्मकपादपूरणार्थम् । लोपशि कृतेपि यः ( ए ऐ ऐ ) इति संधिर्भवति तज्ज्ञापनार्थमित्यर्थः । श्लोकः । 'सैप०' । स अग्रे एपः ( आदवे लोपश । ए ऐ ऐ ) इति संधिर्भवति । एवमपरपादत्रयेऽपि । स एपः दाशरथिः । दशरथस्यापत्यं दाशरथिः दशरथपुत्रो रामो वर्त्तते । स एप युधिष्ठिरो राजा युधि संग्रामे स्थिरः युधिष्ठिरः ( किलात्पः सः कृतस्य ) इति पत्वम् ( ष्टुभिः ष्टुः ) स एप कर्णः राजा महात्यागी महादानी वर्त्तते । स एप भीमो भीमपाडवः महाबली अतिबलिष्ठो वर्त्तते इत्यादि । अर्थः सुगमः ॥ ॥ १ ॥ इत्यादौ पादपूरणे संध्यर्था । पादपूरणे यः संधिः स एव अर्थः प्रयोजनं यस्याः सा । पुनः वैदिकप्रयोगविशेषमाह । यदुक्तम्० । यत्सूत्रमिहास्मिन् शास्त्रे लौकिकाय प्रयोगाय व्याकरणप्रसिद्धोदाहरणसाधनायोक्तं सूत्रादि तद्वेदे छंदसि बहुलमन्यथा भवति अनिश्चितं विभजनतया भवेत् । क्वचिद्भवति क्वचिन्न भवतीत्यर्थः । उदाहरणम् । सः अग्रे इमाम् । ( आदवे लोपश् । अ इ ए ) भूमिः अग्रे आददे छादसत्वात्कैश्चिन्नामिनोप्यवे विसर्गलोपश् । तत. ( इयं स्वरे ) भूम्याददे । सः अग्रे उपाम् ( आदवे लोपश् । उ ओ ) इत्यादीनामार्षप्रयोगाणां वैदिकप्रयोगाणामदुष्टता न दोष इत्यर्थः । स इमां भूमिमपुनात् भूमेश्च रसमाददे ततः स उषां गामानयामास ॥ २ ॥

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ॥

---

१ ( नाम्निनः रुपः ) नामिन परस्य विसर्जनीयस्य लोपो भवति क्वचिद्वे परे । भूमि आदद बीजम् भूम्याददे बीजम् इ० पा० ।

विधेर्विधानं वहुधा समीक्ष्य चतुर्विधं वाहुलकं वदंति ॥ ३ ॥

वाहुलकं कतिधेत्याह । क्वचिदिति। क्वचित्प्रयोगे अनुक्तस्यापि प्रवृत्तिः अप्र'तस्य असंभवतः सूत्रस्य प्रापणं प्रवृत्तिः प्राप्तिः । यथा लोपशि पुनर्न संधिरिति निषिद्धत्वेपि ( अ इ ए ) इति संधेः प्राप्तिः । क्वचित्प्रयोगान्तरे उक्तस्याप्यप्रवृत्तिः । कथितस्यापि सूत्रस्य निषेधः । यथा भूमिः अग्रे-आददे इत्यत्र ( नामिनो रः ) इत्यस्य अप्राप्तिः । क्वचिद्विभाषा विकल्पः । यथा वेदे । देवैः देवेभिः । गवेशः-गवांशः । क्वचित् अन्यदेवोक्तम् अन्यदेव भवति । एवमनुना प्रकारेण विधेर्व्याकरणसूत्रस्य विधानं करणं वहुधा वहुप्रकारं समीक्ष्य दृष्ट्वा वाहुलकं वैदिकप्रयोगं चतुर्विधं वदंति कथयंति । बुधा इत्यध्याहारः । वैदिकं चतुर्वोक्तम् ॥ ३ ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तम् ॥ ४ ॥

अथ लौकिकप्रयोगः कतिधा भवतीत्याह । 'वर्णा०' । एको वर्णागमः । च पुनर्वर्णविपर्ययः । पूर्वोच्चारितस्य स्थाने परवर्णोच्चारणम् परवर्णस्य स्थाने पूर्ववर्णोच्चारणं वर्णविपर्ययः । पुनर्द्वावपरौ भेदौ, कौ तौ वर्णविकारवर्णनाशौ पूर्वावस्थापरित्यागेन अवस्थांतरापादनं विकारः । सर्वथा लोपो नाशः । वर्णानामक्षराणां विकारनाशौ वर्णविकारनाशौ । पंचमश्च भेदः धातोः ताभ्यां वर्णविकारवर्णनाशाभ्यां कृत्वा पुनर्धातोरर्थातिशयेन च कृत्वा धातोर्योऽर्थातिशयः अधिकता कश्चिद्विशेषो यः अर्थातिशयस्तेन च यो भवति स योग इति नाम्ना पञ्चमो भेदः । तत्तस्मान्निरुक्तं निश्चयेन उक्तोऽर्थो यस्य तन्निरुक्तं व्याकरणोदाहरणम् ॥ ४ ॥

वर्णागमो गवेंद्रादौ सिंहे वर्णविपर्य्ययः ।
षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ ५ ॥

पंचविधमुच्यते तानेव पंच व्यंजयति । अथ लौकिकः प्रयोगः कति ा भवतीत्याह । 'वर्णा०' । गवेन्द्रादौ वर्णागमः । गवादेरवर्णागमोऽक्षादाविति । एवं हन् हिंसागत्योः । हन् अ प्रत्ययः सकारागमः । हिंस इति सिंहे वर्णविपर्ययो भवति । यथा हिंसि हिंसायाम् । ( मूर्त्तौ घनः ) इति अप्रत्ययः । हिंस इति हियते हिनस्तीति विग्रहे ततः हिंस इति शब्दे हस्य स्थाने सः सस्य स्थाने हः एवं वर्णविपर्य्ययः । सिंह इति सिद्धम् । षोडशादौ यथा । षट् च दश च इति विग्रहे षष् दश अत्र ( षष उदौ डः ) षस्य उः दस्य ड इति वर्णविकारः । ततः ( उ ओ ) षोडश इति विकारोदाहरणम् । गूढः अग्रे आत्मा । वंधुमनः अग्रे आजुगाव । कुरुवः अग्रे आत्महितम् इत्यादिषु वर्णविकारम् आकारस्य अकारं विधाय ( एतोत्युः । उ ओ । एदोतोऽतः) गूढोऽत्मा। वंधुजनोऽजुहाव कुरवोऽत्महितम् । पृषोदरे वर्णनाशः । यथा पृषत् अग्रे-उदरः । तकारस्य नाशो लोपः ( उ ओ )

१ कथं-इति पुस्तकान्तरे ।

पृषोदरः। पृषंति बिंदवः उदरे यस्य स पृषोदरः मृगः । अथवा पृषन्मृगस्तस्यो-दरमिव उदरं यस्य स पृषोदरः ॥ ५ ॥

वर्णनाशविकाराभ्यां धातोरतिशयेन यः ॥ योगः स उच्यते प्राज्ञैर्म-यूरभ्रमरादिषु ॥ ६ ॥ इति विसर्गसंधिः समाप्तः ॥

'वर्णनाशेति ।' वर्णस्य अक्षरस्य नाशविकाराभ्यां कृत्वा धातोः अतिशयेन अर्थविशेषण कृत्वा यः उत्पद्यते सः प्राज्ञैः पंडितैर्योग इत्युच्यते । क्व मयूरभ्रमरादिषु । मयूरः भ्रमरः इत्याद्युदाहरणेष्वित्यर्थः । यथा 'रु शब्दे' रुरु एकत्र महीपूर्वः अन्यत्र भ्रमन्पूर्वः । मह्यामतिशयेन रौति जल्पतीति मयूरः । भ्रमन् सन् अतिशयेन रौतीति भ्रमरः । ( नाम्नि च ) इति डः प्रत्ययः । डित्वाट्टिलोपः । स्वर० । एकत्र विकारः हीस्थाने यू । अन्यत्र वर्णनाशः नकारस्य नाशः लोपः । मयूरः । भ्रमरः । इति सिद्धम् । अन्येषां मते तु एते पंचापि पृषोदरादिभेदा एव ॥ ६ ॥

इति विसर्गसंधिः ।

## अथ स्वरान्ताः पुँल्लिगाः ६ ।

अथ विभक्तिर्विभाव्यते । सा द्विधा स्यादिस्त्यादिश्च । विभक्त्यंतं पदम् ॥ तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते ॥ अविभक्ति नाम ॥ विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते । कृतद्धितसमासाश्च प्रातिपदिकसंज्ञका इति केचित् ॥

अथेति पंचसंधिकथनानंतरं विभक्तिर्विभाव्यते कथ्यते । विभज्यंते पृथक् क्रियंते कर्तृकर्मादयो यया सा विभक्तिः। सा विभक्तिर्द्विधा द्विप्रकारा । एका स्यादिः। सि औ जस् इत्यादिका । अपरा त्यादिः । तिप् तस् अंति इत्यादिका । विभक्तेः प्रयोजनमाह । सूत्रम् ( विभक्त्यंतं पदम् ) विभक्तिरंते यस्य तत् विभक्त्यंतम् । यस्यान्ते विभक्तिस्तत्पदमुच्यते । तत्र विभक्तिद्वयमध्ये स्यादिर्विभक्तिर्नाम्नोऽग्रे योज्यते स्थाप्यते दीयते । त्यादिर्विभक्तिर्धातोरग्रे योज्यते स्थाप्यते। नामलक्षणमाह । सूत्रम् ( अविभक्ति नाम ) नास्ति विभक्तिर्यस्य तत् अविभक्ति १-१ । (नपुंसका० ) सेर्लोपः । नामन् १-१ । ( नपुंसका० । नाम्नो नो० ) नस्य लोपः सिद्धम् । द्विपदम् । विभक्त्या रहितं धातोः भ्वादेः पृथग्भूतम् अर्थयुक्तं शब्दरूपमकारादिवर्णरूपं तन्नाम उच्यते । शब्दरूपं नामेत्युक्ते पदस्यापि नामसंज्ञा स्यात्तन्निवारणार्थम् अविभक्ति इति । तथा सति धातावतिव्याप्तिस्तन्निवारणार्थं धातुवर्ज्जमिति । तथा सति निरर्थकस्य टस इत्यादिघनेनामत्वं तन्निवारणार्थम् अर्थवदिति । ईदृग्लक्षणं नामोच्यते । च पुनः कृत्तद्धितसमासाः सविभक्तिका अपि नामसंज्ञकाः स्युः । केचिदित्याहुः । कृतः

१ अग्रे-इति पाठः । २ एका इति पाठः पुस्तकान्तरे ।

तृतीयवृत्तिप्रत्ययाः । तदंताः शब्दाः धातवः तद्धितांताः समासाश्च नामसंज्ञका भवंति इति । केचिदिति पाणिन्याचार्या इति वदंति । एते सर्वेपि प्रातिपदिकसंज्ञकाः नामसंज्ञका उच्यंते तन्मते प्रातिपदिकम् इति नामपर्यायः ॥

तस्मात् ॥ सि औ जस् । अम् औ शस् । टा भ्यां भिस् । ङे भ्यां भ्यस् । ङसि भ्यां भ्यस् । ङस् ओस् आम् । ङि ओस् सुप् ॥ तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवंति ॥ तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचनम् । सि । देव सि इति स्थिते । इकार उच्चारणार्थः । स्रोर्विसर्गः ॥ सकाररेफयोर्विसर्जनीयादेशो भवत्यधातो रसे पदांते च । देवः । द्वित्वविवक्षायाम् औ (ओ औ औ) देवौ । बहुत्वविवक्षायां प्रथमाबहुवचने जस् । जकारस्येत्संज्ञा । इत्संज्ञायां तस्य लोपः । प्रयोजनं च जसीति विशेषणार्थः । देव अस् इति स्थिते । दीर्घविसर्गौ । देवाः ॥

सूत्रम् ( तस्माद्यावत्सुप् ) । तद् ५–१ । ( त्यदादेष्टेरः० ) दलोपः ( टासिरत् । अतः ) इति ( स्मडागमः । सवर्णे० ) सिश्च औश्च जस् च यावत्सुप् च १–३ । सकि०। यद्वा तस्मादिति पंचम्येकवचनांतम अग्रे सि औ जस् इत्येकविंशतिरपि सांकेतिकप्रथमैकवचनांतानि पदानि । एवं द्वाविंशतिपदं सूत्रम् । अष्टपदमित्यपि केचित् । सुप् इत्यत्र पकारः । पाणिनीयानां सु औ जस् इति प्रथमैकवचनस्यापि सु इति संज्ञा तस्मात्तद्ज्ञापनार्थः सुप्प्रत्याहारार्थश्च । अत्र तु सुखोच्चारणार्थं एव तस्मात्पूर्वोक्तान्नाम्नः पराः एताःपूर्वोक्ताः स्यादयः सप्त विभक्तयो भवन्ति । तत्र सि औ जस् प्रथमा १। अम् औ शस् द्वितीया २ । टा भ्यां भिस् तृतीया ३ । ङे भ्यां भ्यस् चतुर्थी ४ । ङसि भ्यां भ्यस् पंचमी ५ । ङस् ओस् आम् षष्ठी ६। ङि ओस् सुप् सप्तमी ७॥ एकैकस्या विभक्तेस्त्रीणित्रीणि वचनानि एकवचनद्विवचनबहुवचनसंज्ञानि भवंति । तत्रापि नाम्नि सप्तसु विभक्तिषु वा अर्थमात्रस्यैकत्वविवक्षायाम् अर्थमात्रस्य घटपटादेरेकस्य वक्तुमिच्छा क्रियते यत्र तत्र प्रथमैकवचनं सि दीयते । तत्र प्रथमं देव–शब्दः । दिवु क्रीडायाम् । दीव्यतीति देवः । (पचिनं दिग्रहादेः०) इति अप्रत्ययः । गुणः । देव इति जातम् । ततः देव सि इति स्थिते सति इकार उच्चारणार्थः । ( सेडधिः । सेरा ) इति सूत्रे विशेषणार्थश्च इत्संज्ञत्वात् इकारलोपः । देव स् इति स्थिते सूत्रम ( स्रो० ) स् च र् च स्रौ तयोः स्रोः ६–२ । स्वर० । विसर्गः १–१ ( स्रो० ) द्विपदं सूत्रम् ( नामिनो० ) सकारस्य रेफस्य च विसर्गो भवति अधातोः नाम्नः शब्दस्य

१ बहुवचनंतद् ६० पा० । २ विशेषणमित्येतत्र । विशेषणार्थमित्यन्यत्र ।

रसे परे चकारात्पदांते तु धातुनाम्नोः उभयोरपि नाम्नः सकाररेफयो रसे परे पदांते च विसर्गादेशः। चकारात्पदांते धातोरपि सकाररेफयोर्विसर्गादेशः।यथा अचकाःअविभः। रसे परे धातोर्न । यथा आस्ते बिभर्ति इत्यादौ । अनेन विसर्गः । देवः इति सिद्धम्। द्वित्वविवक्षायाम् । औ । द्वयोर्वक्तुमिच्छा यत्र क्रियते तत्र द्विवचनम् । यथा देवश्च देवश्चेत्येकशेषे । सरूपाणामेकशेष एकविभक्तौ । इति देव औ इति स्थिते । ( ओ औ औ ) देवौ । एवं देवश्च देवश्च देवश्चेति बहूनामुक्तौ प्रथमाबहुवचनम् १-३ । जस् । जकारो जसीति सूत्रविशेषणार्थः । अन्यथा असीत्युच्यमाने शस् ङस्संबंधिनोऽप्यस इकारः स्यात् । जकारः इत्संज्ञकः । देव अस् ( सवर्णे० । सो०)देवाः ॥

[ अकाराज्जसोऽसुक्कचिद्वक्तव्यः ] देवासः । ब्राह्मणासः ॥ द्वितीयैकवचने देव अम् इति स्थिते । अम्शसोरस्य॥ समानादुत्तरयोरम्शसोरकारस्य लोपो भवति अधातोः । देवम् । देवौ । बहुवचने देव शस् इति स्थिते । शकारः शसीति विशेषणार्थः ॥

विशेषमाह ( अकाराज्जसोऽसुक् कचिद्वक्तव्यः ) कचित्प्रयोगांतरे अकारात्परस्य जसः असुक् आगमो भवति छंदसि वेदविषये । देव जस् । अनेन असुक् आगमः । कित्वादंते । स्वर० ( सो० । सवर्णे० ) देवासः । कर्मकत्वविवक्षायां द्वितीयैकवचने देव अम् । सूत्रम् ।(अम्श०)अम् च शस् च अम्शसौ तयोः अम्शसोःअम्शस्६-२। स्वर० ( सो० ) अ६-१ (ङस्य । नामिनो रः )सिद्धम् । द्विपदम् । समानात्परस्य अम्शस्संबंधिनः अकारस्य लोपो भवति अधातोः अक्रियंतात् शब्दादित्यर्थः । अनेन अकारलोपः।देवम् ।देवौ पूर्ववत् । द्वितीयाबहुवचने शस् शकारः शसीति विशेषणार्थः इत्संज्ञकः उच्चारणमात्रः अस् लिख्यते । अम्शसोरित्यकारलोपः ॥

सो नः पुंसः ॥ पुंलिंगात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति ॥ शसि ॥ शसि परे पूर्वस्य स्वरस्य दीर्घो भवति।यदादेशस्तद्वद्भवति नतु वर्णमात्रविधौ । देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोनुबंधष्टेनेति विशेषणार्थः ॥

सूत्रम् (सो०) स ६-१।स्वर०(स्रो०)न१-१।(स्रो०)पुंस् ५-१स्व०(स्रो०)पुंलिंगे वर्तमानात्समानादुत्तरस्याग्रनः शसः सकारस्य नकारादेशो भवति । सूत्रम् ।

१ द्वन्द्वयो -द० पा० । २ यदा इ० पा० । ३ कार्यार्थ -इत्यन्यस्मिन्पुस्तके पाठः ॥

( शसि ) शस् ७-१ स्वर० । सिद्धमेकपदम् । पूर्वह्रस्वस्य दीर्घो भवति शसि परे । यदादेशस्तद्वद्भवति । ननु वर्णमात्रविधाविति न्यायात् । पूर्वस्य दीर्घः । देवान् । कर्तृकरणयोः एकत्वविवक्षायां तृतीयैकवचने देव टा इति स्थिते सति टकारोऽनुबंधः। उच्चारितमध्वंसिनो ह्यनुबंधा इति टकारस्य लोपः । टेन इति सूत्रार्थश्च । आ इति स्थिते ॥

टेन ॥ अकारात्परष्टा इन भवति । देवेन ॥ अद्भि ॥ अकारस्य आकारादेशो भवति भकारे परे । देवाभ्याम् । देव भिस् इति स्थिते। भ्यः ॥ अकारात्परस्य भिसो भकारस्य अकारादेशो भवति ( अ इ ए ) देव एस् इति स्थिते ( ए ऐ ऐ ) वृद्धिविसर्जनीयौ । देवैः । [ अकारः भिसि छंदस्येकारो वा वक्तव्यः ] देवेभिः । कर्णेभिः ॥

सूत्रम् ( टेन ) टा १-१ । सांके० । इन १-१ । सांके० । अकारांतशब्दात्परतः टाविभक्तेः इनादेशो भवति सस्वर एव भवतीति ( अ इ ए ) देवेन । देव भ्याम् । सूत्रम् ( अद्भि ) अद् १-१ ( हसेपः० ) भ् ७-१ स्वर० । ( चपा अबे जबाः । वाऽऽसु ) इति सूत्रादाकारस्यानुवृत्तिः । केचित्तु ( आद्भि ) इति पठंति तन्मते आ अत् भि इति त्रीणि पदानि । अकारस्य स्यादिविभक्तिसंबंधिभकारे परे आकारो भवति । देवाभ्यामिति सिद्धम्। तृतीयाबहुवचने देव भिस् इति स्थिते। सूत्रम् ( भ्यः ) अथवा ( भ्यः ) भ् भि अः । त्रिपदम् । भ् ६-१ । सांके० । भि ६-१ । सांके० । अः १-१ ( स्रो० । झबे जबाः ) इति । भस्य बः ( इ यं स्वरे ) स्वर० । इति सूत्रसाधना । वृत्तिः कंठ्या । देशैकग्रहणेन देशिग्रहणम् । तेन भि इत्युक्ते भिसो ग्रहणं पूर्वं भकारेकारौ विश्लेष्य वियोज्य इकारात्पूर्वं भकारं विधाय पश्चात् भस्य अः ( अ इ ए । ए ऐ ऐ । स्रो० ) देवैरिति सिद्धम् । अत्र तु भिस् एस् इत्येवं सूत्रकरणं युक्तम् । अकारस्य भिसि परे छंदसि वैदिकोदाहरणविषये एकारो वा वक्तव्यः । देवेभिः कर्णेभिरिति वैदिकप्रयोगः ॥

चतुर्थ्येकवचने देव ङे इति स्थिते । ङकारो ङित्कार्यार्थः सर्वत्र । ङे अक्[१] ॥ अकारात्परस्य ङे इत्येतस्य अगागमो भवति । कित्त्वादंते ( ए अय् ) दीर्घः । देवाय । देवाभ्याम् पूर्ववत् । चतुर्थीबहुवचने देव भ्यस् इति स्थिते । एस्भि बहुत्वे ॥ अकारस्य एत्वं भवति सकारे

---

१ 'ङे अक्' इत्याकारकमेव सूत्रं समतम्।

अकारे च परे बहुत्वे सति । देवेभ्यः । पंचम्येकवचने देव ङसि इति स्थिते ॥ ङसिरत् ॥ अकारात्परो ङसिरद्भवति दीर्घः । देवात् । देवाभ्याम् । देवेभ्यः । षष्ठ्येकवचने देव ङस् इति स्थिते । ङस् स्य ॥ अकारत्परो ङस् स्यो भवति । देवस्य ॥

संप्रदानैकत्वविवक्षायां चतुर्थ्येकवचने देव ङे इति स्थिते । ङकारो ङित्कार्यार्थं इत्संज्ञकश्च । सर्वत्र ङेङसिङस्ङिषु इत्यर्थः । सूत्रम् ( ङे अक् ) ङे ६–१ सांकेतिकम् । (ङस्य) इत्यकारलोपः । ( स्रो० ) अक् १–१ ( हसेपः० ) सिद्धम् । अकारात्परस्य ङे इत्येतस्य अगागमो भवति । कित्त्वादंते । ( ए अय् । सवर्णे० ) स्वर० । देवाय । ४–२ ( अद्भि ) देवाभ्याम् । ४–३ देव भ्यस् इति स्थिते । सूत्रम् । ( ए स्भि बहुत्वे ) ए १–१ । सांके० स् च भ् च स्भ् तस्मिन् स्भि ७–१ । स्वर० । बहुत्वे ७–१ ( अ इ ए ) अकारस्य एत्वम् एकारो भवति बहुवचने सति सकारभकारादौ विभक्तावित्यर्थः देवेभ्यः । अपादानैकत्वविवक्षायां पंचम्येकवचने देव अस् इति स्थिते । सूत्रम् ( ङसिरत् ) ङसि १ –१ । ( स्रो० ) अत् १–१ । (हसेपः० । नामिनो० ) सिद्धम् । अकारात् उत्तरो यो ङसिः सः अत् भवति ( सवर्णे० ) देवात् । पंचमीद्विवचने ( अद्भि ) देवाभ्याम् । बहुवचने देवेभ्यः ( ए स्भि बहुत्वे । स्रो० ) संबंधैकत्वविवक्षायाम् ६–१ देव अस् । सूत्रम् (ङस्स्य ) ङस् १–१ ( हसे० ) स्य १–१ । सां० । अकारादित्यादिवृत्तिः कंठ्या । देवस्य । ६–२ देव ओस् इति सति ॥

ओसि ॥ अकारस्य ओसि परे एत्वं भवति ( ए अय् ) देवयोः । नुडामः ॥ समानात्परस्यामो नुडागमो भवति । टित्वादादौ । उकार उच्चारणार्थः ॥ नामि ॥ नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते ( अ इ ए ) देवे । ( ओसि ) देवयोः पूर्ववत् । सप्तमीबहुवचने देव सुप् इति स्थिते पकारस्येत्संज्ञायां लोपः ( ए स्भि बहुत्वे ) इत्येकारः । ( किलात्षः सः कृतस्य ) कवर्गादिलाच प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । देवेषु ॥

सूत्रम् ( ओसि ) ओस् ७–१ । स्वर० । अकारस्य ओसि परे एत्वम् एकारो भवति । ( ए अय् ) स्वर० । ( स्रो० ) देवयोः । ६–३ देव आम् । सूत्रम् । ( नुड्० ) नुट् १–१ ( हसेपः० ) आम् ६–१ । स्वर० ( स्रो० । चपा अबे० ) सिद्धम् । पुंसि समानात् ह्रस्वात

समानात् दीर्घात् आवतु ईकारांतेषु नित्यस्त्रीलिंगे वर्त्तमानेष्विति व्याख्येयम् । समानात् परस्य आमः षष्ठीवहुवचनस्येति व्याख्येयम् । अन्यथा ( आम्ङेः ) इत्याम् ( स्त्रियां य्वोः) इत्याम् (आमौ) इत्यप्याम् (किमोव्ययात्०) इत्याम् (कासादिप्रत्ययांतात्० ) इत्याम् वर्तते तत्रातिव्याप्तिः स्यात्तेन षष्ठीवहुवचनस्यामो नुडागमो भवति । अधातोरेवेत्यनुवर्तितव्यम् । तेन अधातोः अकिंवंवाच्छब्दात् । टित्वादादौ । उकार उच्चारणार्थः । इति न् इत्यागमः । आमो नुट् इति कर्त्तव्ये नुडाम इति विपरीतकरणं नुटो नित्यत्वसूचकम् । तेन स्त्रीणां वारीणामित्यत्र ( नुडामः ) इत्येव स्यात् ( नामिनः स्वरे ) इति न भवति । सूत्रम् ( नामि ) नुट्सहितः आम् नाम् तस्मिन् नामि ७–१ । स्वर० । सिद्धम् । नुडागमसहिते आमि परे पूर्वस्य दीर्घो भवति इति दीर्घः । स्वर० । देवानाम् । आधारैकत्वविवक्षायाम् ७–१ देव ङि ( अ इ ए ) देवे । ७–२ षष्ठीद्विवचनवत् । देवं देव देवेत्येकशेषे ७–३ देव सु इति स्थिते ए स्मि वहुत्वे ) ततः । सूत्रम् ( किलात्पः सः कृतस्य ) कुश्च इलश्च किलं तस्मात् (५–१ ( ङसिरत् । सवर्णे० ) प १–१ स ( स्रो० ) स ६–१ । स्वर० ( स्रो० ) कृत ६–१ ( ङस् स्य ) चतुष्पदं सूत्रं सिद्धम् । वृत्तिः कंठ्या । न वरम् । केनचित्सूत्रेण कृतस्यैव सकारस्य षकारो भवति न त्वकृतस्य स्वाभाविकस्य अंते स्थितस्यापि सस्य षत्वं न भवति । यथा हरिस्तत्रेत्यादौ न षत्वम् । तथा नुम्विसर्गांतरेपि षत्वम् यथा हवींषि । हविःषु । इत्यादि । पूर्वं हविसि–शब्दोस्ति इत्यर्थः । अत्र सः षः इति कर्त्तव्ये षत्वः सः इति विपरीतत्वेन कृतं तत् क्वचित् किलं विनापि सस्य षत्वज्ञापनार्थम् । यथा अवष्टंभः । अंषः । अभ्यषुणोत् इत्यादि । देवेष्विति सिद्धम् ॥

**आमंत्रणे सिर्धिः ॥** आमंत्रणमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति ॥

संवोधनमाह । ( आमंत्रणे० ) आमंत्र्यते आहूयते पुरुषोऽनेनेत्यामंत्रणं तस्मिन् ७–१ ( अ इ ए ) सि १–१ । ( स्रो० ) धि १–१ । (स्रो०)। ( रहायपो द्विः ) पूर्वम् ( नामिनो रः ) जलतुंबि० । त्रिपदं सूत्रमिदं सिद्धम् । आमंत्रणमिति कोऽर्थः । आभिमुखीकरणम् । अनभिमुखः आसमन्तात्प्रकारेण अभिमुखः क्रियते अनेनेति आभिमुखीकरणम् । तस्मिन्नर्थे विहितः कृतो यः सिः प्रथमैकवचनरूपः स धिसंज्ञो भवति । उदाहरणम् । देव १–१ स् ॥

---

१ मरणम् इति पुस्तकान्तरे पाठो दृश्यते। २ देवे च देवे च देवे च–इत्येकस्वेत्यादन्यस्मिन्पुस्तके । ३ किलः इत्यपि पाठः ।

**समानाद्धेर्लोपोऽधातोः ॥ समानादुत्तरस्य धेर्लोपो भवत्यधातोः ॥**

धिसंज्ञायां किं कार्यं तदाह । सूत्रम् ( समाना० ) समान ५-१ । ( ङसिरत् । सवर्णे० ) धि ६-१ ( ङिति । ङस्य ) इत्यकारलोपः ( झबे जबाः ) तस्य दः । स्वर० । लोपः १-१ ( स्रो० । नामिनो रः ) जलतुं० । अधातोः न धातुरधातु स्तस्मात् । अधातु ५-१ । ङिति । ङस्य ) इत्यकारलोपः । ( अतोऽत्युः । उ ओ । एदोतोऽतः ) चतुष्पदं सिद्धम् । समानादुत्तरस्य धेर्लोपो भवति । अत्र समानादिति ह्रस्वसमानात्परस्येति व्याख्येयम् । अन्यथा । हे हाहाः । हे हूहूः । हे वातप्रमीः । इत्यादौ विरुध्यति । अधातोः अक्विबंतात् शब्दात् । अक्विबंतोऽधातुरुच्यते क्विबंतश्च शब्दो धातुरित्यभिप्रायः । अनेन धिलोपः ॥

**[ आभिमुख्याभिव्यक्तये हे शब्दस्य प्राक् प्रयोगः ] हे देव । हे देवौ । हे देवाः । एवं घटपटस्तंभकुंभादयोऽप्यकारांताः पुँल्लिङ्गाः ॥**

पूर्वं हेशब्दः एतद्धेतुः । अभिमुखस्य भावः आभिमुख्यं संमुखत्वं तस्याभिव्यक्तये प्रकटीकरणाय हेशब्दः प्राक् आदौ प्रयुज्यते इत्यर्थः । हे देव । द्विवचने ( ओ औ औ ) हे देवौ । बहुवचने देव अग्रे जस् इति स्थिते जकारस्येत्संज्ञायां लोपः । देव अस् । ( सवर्णे० । स्रो० ) हे देवाः । अन्यानपि शब्दानाह ( एवं घटपटादयः ) एवं कंठचम् । अत्र काव्येन विभक्त्यर्थं दर्शयति । "वृक्षास्तिष्ठाति कानने कुसुमिते वृक्षं लता संश्रिता वृक्षेणाभिहतो गजो निपतितो वृक्षाय देयं जलम् । वृक्षादानय मंजरीं कुसुमितां वृक्षस्य शाखोन्नता वृक्षे नीडमिदं कृतं शकुनिना हे वृक्ष किं पश्यसि ॥ १ ॥ वीरः सर्वसुरासुरेंद्रमहितो वीरं बुधाः संश्रिता वीरेणाभिहतः स्वकर्मनिचयो वीराय नित्यं नमः । वीरात्तीर्थमिदं प्रवृत्तमतुलं वीरस्य घोरं तपो. वीरे श्रीधृतिकीर्तिकांतिनिचयः श्रीवीर भद्रं दिश ॥ २ ॥ शिष्यः कुरुते पृच्छां बहुना विनयेन तत्त्वबोधाय । आगत्य निजस्थानाद्धर्माचार्यस्य पादांते" ॥ ३ ॥ इत्यादि ॥

**अकारांतानामपि सर्वादीनां तु विशेषः । सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम कतर कतम सम**

---

१ एवम् "रामो राजमणिः सदा विजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू रामाय तस्मै नमः । रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदा भवतु मे भो राम मां पालय" ॥ १ ॥ इत्यादयः श्लोका बहवः सर्वविभक्तिसूचकाः सन्ति ।

सिम नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अंतर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् त्वत भवतु युष्मद् अस्मद् । एते सर्वादयस्त्रिलिंगाः ॥

पुनर्विशेषमाह । अकारान्तानामिति । यद्यपि सर्वादयोऽकारांतास्तथापि सर्वादीनां विशेषो देवशब्दात्कश्चिद्भेदोस्ति के ते सर्वादय इत्याह । सर्व विश्व यावदस्मद्। विश्वशब्दस्य सकलार्थवाचकत्वे सर्वादित्वं, न तु जगद्वाचकत्वे । जगद्वाचकत्वे तु कुलशब्दवत् । समः अतुल्यार्थः किंतु सर्वार्थवाचकः । तुल्यार्थत्वे तु राज्ञः समाय इत्यत्र न सर्वादित्वम् । सिमः समग्रार्थवाचकः । नेमः खंडवाचकः । पूर्वादीनां तु व्यवस्थायामेव सर्वादित्वम् । स्वाभिधेयापेक्षावधिनियमो व्यवस्थेति विकल्पः । स्वस्याभिधेयो यो दिग्देशकालस्वभावस्तमपेक्षते तेनैवापेक्ष्यते इति स्वाभिधेयापेक्षः ईदृशो योऽवधेर्मर्यादाया नियमोऽवश्यंभावोऽवधिभावादभ्रंशो व्यवस्था उच्यते । दक्षिणशब्दस्य प्रावीण्ये शृंगारनायकवाचकत्वेन सर्वादिकार्यम् । अन्यत्र दक्षिणदिग्देशवाच्यत्वे सर्वादित्वम् । उत्तरशब्दस्य उत्तरदिग्देशवाच्यत्वे सर्वादित्वं प्रतिवाक्ये तु न सर्वादिकार्यम् । अधरस्य हीनार्थत्वे सर्वादित्वं न त्वोष्ठवाचकत्वे । स्वशब्दस्य ज्ञातिधनान्यवाचित्वे ज्ञातिधनार्थवर्जम् । किंतु आत्माऽऽत्मीयार्थे वाच्ये सर्वादित्वम्।"ज्ञातावात्मनि चात्मीये धने स्वाख्या प्रवर्तते" इति स्वा ज्ञातयः स्वानि द्रव्याणि इत्यत्र सर्वादित्वं न अन्यत्र तु स्वस्मै रोचते स्वे पुत्राः स्वस्मै पुत्राय देहि। अत्र सर्वशब्दवत्। अंतरशब्दस्य वहिर्योगे उपसंव्याने च सर्वादित्वं नान्यत्र यतः"मध्ये छिद्रे विशेषे च व्यवधाने बहिर्युजि । उपसंव्यानके प्राज्ञाः षडर्थमंतरं विदुः"॥ १ ॥अंतरस्मै गृह य। नगरबाह्याय चांडालादिगृहायेत्यर्थः । पुरि तु न भवति । अंतराये पुरे कुप्यति। चांडालादिबाह्यपुर्यै इत्यर्थः । वस्त्रांतरेणापिहितं वस्त्रमुपसंव्यानम् । " अंतरीयं निवसनमुपसंव्यानमित्यपि" तत्रार्थे अंतरे अंतरा वा शाटकाः अंतरस्मै शाटकाय वस्त्रांतरेण वृताय शाटकायेत्यर्थः । यतः । "सर्वादिः सर्वनामाख्यो न चेद्गौणोऽप्यथाभिधा। पूर्वादिश्च व्यवस्थायां समोऽतुल्येंऽतरोऽपुरि ॥ परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि" ॥ उभशब्दस्य त्वच्छब्दस्य भवच्छब्दस्य द्विशब्दस्य च तृतीयासमासे तथा हेत्वर्थे सर्वादेः सर्वा विभक्तयो भवंति । तदर्थम् ( अव्ययात्सर्वनाम्नष्टेः प्रागकच् ) इति अकचमत्यर्थं च सर्वादिमध्ये ग्रहणम् । यथा उभौ हेतू । उभाभ्यां हेतुभ्याम् ।उभयोः हेत्वोः। त्वत् हेतुः । त्वतं हेतुम् । त्वता हेतुना । त्वते हेतवे । द्वौ हेतू । द्वाभ्यां हेतुभ्याम् । द्वयोर्हेत्वोः । भवान् हेतुः । भवंत हेतुम् । भवता हेतुना । इत्यादि । तथा अज्ञातौ उभौ उभका । एवं द्वकौ । भवकन् । भवकन्तौ । भवकन्तः । त्वकत् इत्यादि । त्यच्छब्दः

प्रायश्छंदस्येव । एते सर्वादय उच्यंते कथ्यंते । त्रिलिंगाः लिंगत्रयधारिणः पुँल्लिंगस्त्रीलिंगनपुंसकलिंगाः ॥

तत्र पुँल्लिंगत्वे रूपं नेयम् । सर्वः। सर्वौ । सर्व जस् इति स्थिते । जसी॥ सर्वादेरकारांतात्परो जस् ईर्भवति । ( अ इ ए ) सर्वे । सर्वम् । सर्वौ । सर्वान् । ( अम्शसोरस्य । सो नः पुंसः । शसि ) पूर्वस्य दीर्घः । तृतीयैकवचने सर्व इन इति स्थिते । पुर्नो णोऽनंते ॥ पकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति अंते स्थितस्य न भवति सर्वानित्यादौ । अवकुप्वंतरेपि ॥ अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन। सर्वेण। सर्वाभ्याम् । ( अद्भि ) इत्यात्वम् । सर्वैः ॥

तत्र पुँल्लिंगे रूपमाह । सर्व। सृ गतौ । वप्रत्ययः। सरति प्रसरतीति सर्व १-१ ( स्रो० ) सर्वः। सर्व १-२ । ( औ औ औ ) सर्वौ । बहुत्वे विशेषकृत्यमाह। सूत्रम् ( जसी ) जस् १-१ । साके० । ई १-१ । सा० । वृत्तिः सुबोधा । ( गुरुः शिक्ष सर्वस्य ) इति गुरुत्वात् सर्वस्य जसः ईः भवति । प्रक्रियाया तु ( जसः शी ) शित्वात्सर्वस्य । न वरम् । अकारातग्रहणं भवच्छब्दनिषेधसूचकम् । अनेन ई ( अ इ ए) सर्वे । द्वितीयाया देववत् । तृतीयैकवचने सर्व आ ( टेन ) इति इनादेशे कृते ( अ इ ए ) ततः । सूत्रम् ( पुर्नो णोऽनंते ) प् च र् च ऋश्च प्रृ तस्मात् प्रृः५-१। ( ऋतो ङ उः ) स च ङित ङित्त्वाट्टिलोप । स्वर० । न् १-१ ( स्रो०।नामिनो रः) जल० । ण १-१ ( स्रो० । इवे । उ ओ ) अनंतः न अंतो अनंतस्तस्मिन् अनते ७-१ ( अ इ ए । अतोऽत्यु० । उ ओ । एदो० ) सिद्धम्। पाठसिद्धा वृत्ति० । अंते पदाते स्थितस्य व्यंजनस्य नकारस्य णकारो न भवतीत्यर्थः । नन्वत्र रेफस्याग्रे नकारो नास्ति किंतु मध्ये वकारेकारौ स्तः तत्कथं नकारस्य णकारः स्यादित्याह। सूत्रम्।(अवकुप्वत० ) अवश्च कुश्च पुश्च अवकुपवः तैरंतरमवकुप्वन्तरं तस्मिन् ७-१ ( अ इ ए ) अपि १-१ ( अप्य० । एदो०)सिद्धम्। अवप्रत्याहारस्यातरे कवर्गस्यातरे पवर्गस्यातरे अपिशब्दात् जिह्वामूलीयोपध्मानीयानुस्वारनुमविसर्गाणामपि व्यवधाने अंतरे णत्वं वक्तव्यम् । सर्वेण । सर्वाभ्याम् ( अद्भि ) सर्वैः ( भ्यः । अ इ ए । ए ऐ ऐ।स्रो०)॥

चतुर्थ्येकवचने सर्व ए इति स्थिते । सर्वादेः स्मट् ॥ सर्वादेरकारांतात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । टकारः

१ ईमन्-इति पाठ ।

स्थाननियमार्थः ( ए ऐ ऐ ) सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः । पञ्चम्येकवचने सर्व अत इति स्थिते । अतः ॥ सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । षष्ठ्येकवचने सर्व अस् इति स्थिते ( ङस् स्य ) सर्वस्य । सर्व ओस् इति स्थिते ( ओसि । ए अय् ) सर्वयोः । षष्ठीबहुवचने सर्व आम् इति स्थिते । सुडामः॥सर्वादेरवर्णान्तात् परस्यामः सुडागमो भवति (ए स्भि बहुत्वे ) अकारस्य एत्वं भवति । ( किलात्पः सः कृतस्य ) सस्य षत्वम् । सर्वेषाम् । सप्तम्येकवचने सर्व ङि इति स्थिते । ङि स्मिन् ॥ सर्वादेरकारांतात्परो ङि स्मिन्भवति । सर्वस्मिन् । ( ओसि ) अकारस्य एत्वम् ( ए अय् ) सर्वयोः । सप्तमीबहुवचने सर्व सु इति स्थिते । ( ए स्भि बहुत्वे ) अकारस्य एत्वम् । ( किलात्पः सः कृतस्य ) इति षत्वम् । सर्वेषु । ( आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः ) हे सर्व । हे सर्वौ । हे सर्वे ॥

चतुर्थ्येकवचने सर्व अग्रे ए । सूत्रम् ( सर्वादेः० ) सर्वः आदिर्यस्य सः सर्वादिस्तस्मात्सर्वादेः पंचम्येकवचनम् ५–१ ( ङिति । टस्य ) अग्रे स्मट् १–१ । ( हसे० ) सिद्धम् । अनेन स्मट्–आगमः सस्वर एव । टित्वादादौ । ( ए ऐ ऐ ) सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः । सर्व ५–१ । सर्व अस ( डांमरत्) ततः सर्व अत् इति स्थिते । सूत्रम् । अत् ६–१ । स्वर० । ( स्रो० ) अकारांतात्सर्वादेः शब्दात्परस्य ङसिस्थाने जातस्य अत् इत्यस्य स्मडागमो भवति । इत्यनेन स्मडागमः• ( सवर्णे० ) सर्वस्मात् । द्वित्वे बहुत्वे च देववत् । ६-१ ( ङस्स्य ) सर्वस्य । ६–२ सर्व ओस् ( ओसि । ए अय् ) स्व० । ( स्रो० ) सर्वयोः । ६–३ सर्व आम् इति स्थिते । सूत्रम् । ( सुडामः ) सुट् १–१ । ( हसे० ) आम् ६–१ । स्वर० ( धा० । चपा अवे० ) सर्वादेः परस्यामः सुडागमो भवति । इति सुट् । टित्वादादौ । उकार उच्चारणार्थः । ततः ( ए स्भि० । किलात्पः सः० ) स्वर० । ( मोऽनुस्वारः ) सर्वेषाम् । ७–१ सर्व ङि इति स्थिते । सूत्रम् ( ङि स्मिन् ) ङि १–१ । नांके० । स्मिन् १–१ । ( हसे० ) सर्वादेरिति अनेन ङि स्मिन्–आदेशः । सर्वस्मिन् इति सिद्धम् । ७–२ ( ओसि । ए अय् ) स्व० । ( स्रो० ) सर्वयोः । ~

( ए स्मि० । किला० ) सर्वेषु । पदद्वयप्रक्रिया देववत् । सम्बोधने ( समानोद्धर्लोपोऽधातोः ) हे सर्व । हे सर्वौ । हे सर्वे । प्रथमावत् ॥

एवं विश्वादीनामेकशब्दपर्यंतानां रूपं ज्ञेयम् । डतरडतमौ प्रत्ययौ ततस्तदंताः शब्दा ग्राह्याः । पूर्वः । पूर्वौ । पूर्व जस् इति स्थिते [ पूर्वादीनां तु नवानां जस ईकारो वा वक्तव्यः ] पूर्वे—पूर्वाः । इत्यादि । [ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ] पूर्वस्मात—पूर्वात । पूर्वाभ्याम् । पूर्वेभ्यः । ( ङस्स्य ) पूर्वस्य( ओसि ) पूर्वयोः ( सुडामः ) पूर्वेषाम् ( ङि स्मिन् ) पूर्वस्मिन्—पूर्वे । पूर्वयोः । पूर्वेषु । हे पूर्व । हे पूर्वौ । हे पूर्वाः—हे पूर्वे । परः । परौ ( जसी ) परे—पराः । परम् । परौ । परान् । परेण । पराभ्याम् । परैः । परस्मै—पराय । पराभ्याम् । परेभ्यः । परस्मात—परात् । पराभ्याम् । परेभ्यः । परस्य । परयोः । परेषाम् । परस्मिन्-परे । परयोः । परेषु । हे पर । हे परौ । हे परे—हे पराः ॥

एवं सर्वशब्दरीत्या विश्वादीनामेकशब्दपर्यंतानां शब्दानां रूपमवसेयम् । डतरडतमौ, यतः प्रत्ययौ तद्धितोद्भवौ अतस्तदंताः कतरकतमादिशब्दा ग्राह्याः । अन्यतरस्य पृथग्ग्रहणेन अन्यतमस्य प्रतिषेधः । अन्यतत्सर्ववत् । विशेषमाह । तु पुनः पूर्वादीनां नवानां शब्दानां जस ईकारो वा वक्तव्यः । वा सर्ववज्जसीत्यर्थः । अन्यत्र पक्षे देववत् । पूर्वे—पूर्वाः । परे—पराः । इत्यादि । पुनः पूर्वादीनां नवानां ङसिश्च ङिश्च ङसिङी तयोः ङसिङ्योर्विषय स्मात्स्मिनौ आदेशौ वा वक्तव्यौ । पंचम्या एकवचने एकत्र सर्ववत् एकत्र देववत् । पूर्वस्मात्—पूर्वात् । पूर्वस्मिन्—पूर्वे । अन्यत्र सर्ववत् । पूर्वः । पूर्वौ । पूर्वे—पूर्वाः । पूर्वम् । पूर्वौ । पूर्वान् । पूर्वेण । पूर्वाभ्याम् । पूर्वैः । पूर्वस्मै—पूर्वाय । पूर्वाभ्याम् । पूर्वेभ्यः । पूर्वस्मात्— पूर्वात् । पूर्वाभ्याम् । पूर्वेभ्यः । पूर्वस्य । पूर्वयोः । पूर्वेषाम् । पूर्वस्मिन्—पूर्वे । पूर्वयोः । पूर्वेषु । हे पूर्व । हे पूर्वौ । हे पूर्वे—हे पूर्वाः । एवं परादयो बोध्याः ॥

प्रथमः । प्रथमौ । प्रथम जस् इति स्थिते [ [1]प्रथमचरमतयड-

१ ( प्रथमचरमतयाल्पार्धक ति.पयनेमानां जसीकारो वा वक्तव्यः ) इत्यन्यत्र यथापाठो दृश्यते ।

यडल्पार्द्धकतिपयनेमानां जसी वा ] प्रथमे-प्रथमाः । चरमे-चरमाः । शेषं देववत् । नेमे-नेमाः । शेषं सर्ववत् । तयायडौ प्रत्ययौ ततस्तदंताः शब्दा ग्राह्याः [ तीयस्य सर्ववद्रूपं ङित्सु वा वक्तव्यम् ] द्वितीयस्मै-द्वितीयाय । द्वितीयाभ्याम् । द्वितीयेभ्यः । द्वितीयस्मात्-द्वितीयात् । द्वितीयस्मिन्-द्वितीये । द्वितीययोः । द्वितीयेषु । हे द्वितीय । हे द्वितीयौ । हे द्वितीयाः । एवं तृतीयः ॥

प्रथमचरमेति सुकरम् । प्रथमचरमाल्पार्द्धकतिपयानां केवलं जसि विकल्पः । शेषं देववत् । तयट्अयट्प्रत्ययान्तानां द्वयद्वितयादीनां जसि रूपद्वयम् । शेषं देववत् । नेमशब्दस्य जसि विकल्पः । शेषं सर्ववत् । नेमानामिति रूपं यत् दृश्यते तत् 'द्वंद्वे सर्वादित्वं वा' इति न्यायात् सिध्यति । जसि प्रथमे-प्रथमाः । चरमे-चरमाः । शेषं देववत् । तयायडौ प्रत्ययौ ततस्तदंताः शब्दा ग्राह्याः । द्वितये-द्वितयाः । द्वये-द्वयाः । शेषं देवशब्दवत् । उभयशब्दस्य अयट्प्रत्ययांतत्वेपि सर्वादिपाठाज्जसि न विकल्पः । किंतु सर्ववत् तीयस्येति तीयप्रत्ययांतस्य द्वितीयतृतीयशब्दयुग्मस्य असर्वादित्वेपि ङित्सु वचनेषु विकल्पेन सर्ववद्रूपम् । ङित्सु ङेङसिङस्ङिषु वा सर्ववत्त्वमित्यर्थः । द्वितीयस्मै-द्वितीयाय । द्वितीयस्मात्-द्वितीयात् । द्वितीयस्मिन्-द्वितीये । शेषं देववत् । एवं तृतीयः ॥

उभशब्दो नित्यं द्विवचनांतः । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः । उभयोः । हे उभौ ॥ उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः । इत्यादि ॥

उभशब्दो द्विसंख्यावाचकत्वान्नित्यं द्विवचनांतः । १-२ । २-२ ( औ औ औ ) ३-२ । ४-२ । ५-२ ( अद्रि ) ६-२ । ७-२ ( ओसि । ए अय् ) स्वर० । ( स्रो० ) सिद्धम् । उभयशब्दस्य द्विवचनाभावः । द्विवचनांतप्रयोगदर्शनाभावात् इति केचित् । "सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाभिधा । पूर्वादिश्च व्यवस्थायां समोऽतुल्योन्तरोऽपुरि ॥ परिधाने वहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि" । यथा-उभयः । उभये । इत्यादि । इति सर्वादयः ॥

१ उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति हरदत्तः । इति भट्टोजिदीक्षितविरचितसिद्धान्तकौमुद्याम् ।

अकारांतः पुंल्लिंगो मासशब्दः [ मासस्याल्लोपो वा ] मासशब्दस्याकारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः॥ माः-मासः । मासौ-मासौ । मासः-मासाः । मासम्-मासम् । मासौ-मासौ । मासः-मासान् । मासा-मासेन । माभ्याम्-मासाभ्याम् । माभिः-मासैः । मासे-मासाय । माभ्याम्-मासाभ्याम् । माभ्यः-मासेभ्यः । मासः-मासात् । माभ्याम्-मासाभ्याम् । माभ्यः-मासेभ्यः । मासः-मासस्य । मासोः-मासयोः । मासाम्-मासानाम् । मासि-मासे । मासोः-मासयोः । मास्सु-मासेषु ॥

मासशब्दे विशेषमाह । ( मास० ) मास ६-१ ( ङस्स्य ) अतः अकारस्य लोपः । अल्लोपः १-१ ( स्रो० । सवर्णे० ) वा ३-१ । ( अव्य० । हवे । उक्तौ ) त्रिपदम् । मासशब्दस्याकारस्य लोपो भवति वा विकल्पेन शसादौ स्वरे परे । सर्वविभक्तिषु परत इत्येके । एतदेव संमतम् । यतः अदूषितं परमतं स्वमतमेवेति । अनेन सप्तस्वपि विभक्तिष्वकारलोपः । सौ चालोपे कृते ( हसे० । स्रो० ) स्वरादौ तु । स्वर० । भकारादौ ( स्रो० । आदवे लोपश् ) ७-३ सुपि ( स्रो० । विसर्ज० ) स्वर० । एवं हसान्तसाधनम् । स्वरान्तप्रक्रिया देवशब्दवत् । माः । मासौ । मासः । मासम् । मासौ । मासः । मासा । माभ्याम् । माभिः । मासे । माभ्याम् । माभ्यः । मासः । माभ्याम् । माभ्यः । मासः । मासाः । मासाम् । मासि । मासोः । मास्सु । हे माः । हे मासौ । हे मासः । लृतुलसानां दंता इति स्थानसवर्णत्वात् ( झने जबाः ) इति सकारस्य दकारः स्यात् । माद्भ्याम् । माद्भिः । माद्सु । इत्यपि केचित् । एवमकारलोपपक्षे साधनम् । पक्षे देवशब्दवत् । मासः । मासौ । मासाः । इत्यादि । निर्जरशब्दस्य स्वरादौ विकल्पेन जरस् आदेशः । निर्जरः । निर्जरसौ-निर्जरौ । निर्जरसः-निर्जराः । निर्जरसम्-निर्जरम् । इत्यादि । एवम्-अकारांतप्रक्रिया ॥

आकारांतः पुंल्लिंगः सोमपाशब्दः । सोमपाः । सोमपौ । सोमपाः । अवावोरिति विशेषणाद्देर्लोपो नास्ति । हे सोमपाः हे । सोमपौ । हे सोमपाः । सोमपाम् । सोमपौ । सोमपा शस् इति स्थिते । आतो धातोर्लोपः ॥ धातुसंबंधिन आकारस्य लोपो भवति शसादौ स्वरे । सोमपः । सोमपा । सोमपाभ्याम् । सोमपाभिः । सोमपे । सोमपा-

---

१ माभ्यब्दस्य इत्यन्यत्र पाठः ।

भ्याम् । सोमपाभ्यः । सोमपः । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपोः । सोमपाम् । सोमपि । सोमपोः । सोमपासु । एवं कीलालपाशंखध्माप्रभृतयः ॥

अथ आकारांतप्रक्रियामाह । तत्र आकारांतः पुँल्लिंगः पुमेव पुमानेव लिंगं विवक्षितं यस्य सः पुँल्लिंगः सोमपाशब्दः । पा पाने । पा सोमपूर्वः (क्विप्) इति क्विप् प्रत्ययः। क्विपः सर्वापहारी लोपः । नामत्वात्स्याद्यः । क्विंतत्वाद्धातुत्वं न जहाति शब्दत्वं च प्रतिपद्यते १–१ ।( स्रो० ) १–२ । ( ओ औ औ ) १–३ । ( सवर्णे० । स्रो० ) सोमपाः । धौ धातुत्वाद्धेर्लोपो न । किंतु ( स्रो० ) हे सोमपाः । हे सोमपौ।हे सोमपाः। २–१ । ( सवर्णे दीर्घः सह ) सोमपाम् । २–२ (ओ औ औ) सोमपौ । द्वितीया-बहुवचने । सोमपा अस् इति स्थिते । सूत्रम्(आतो०)आत् ६–१।स्वर०(स्रो०) धातु ६–१ ( ङिति । ङस्य । स्रो० । हवे० । उ ओ ) लोपः १–१ । ( स्रो० । नाम्नो रः ) जल० । सूत्रं सिद्धम् । वृत्तिः सुकरा । अनेन शसादौ स्वरादौ अकारलोपः । ( स्रो० ) सकारस्य विसर्गः। सोमपः । आमि । स्वर० ( मोनु० ) हसादावविशेषः। सोमपासु । अत्र क्विलाभावात् ( क्विलात्पः सः० ) इति न भवति । एवं कीलालपा-शंखध्मा–विश्वपा–प्रभृतयो ज्ञेयाः।कीलालं रुधिरं पिबतीति कीलालपाः राक्षसः। आकारांतो हाहाशब्दस्तस्य च अक्विंतत्वाद्धातुसंज्ञा न अतस्तस्य साधना भिन्नैव । हाहा। १–१ (स्रो०) हाहौ१–२।(ओ औ औ)हाहाः १–३ ।२–१(अम्शo)हाहौ २–२। हाहान्२–३ । आकारांतत्वाच्छसो नत्वाभावः इत्येके । हाहाः।हाहा ३–१(सवर्णे०)। हाहाभ्याम् ३–२ । हाहाभिः ३–३ । हाहे ४–१ ( ए ऐ ऐ ) । हाहाभ्याम् ४–२ । हाहाभ्यः ४–३ । हाहाः५–१(सवर्णे० । स्रो०)। हाहाभ्याम् ५–२ । हाहाभ्यः ५–३। हाहाः ६–१ । हाहौः ६–२ । ( ओ औ औ । स्रो० ) । हाहाम् ६–३ पुँल्लिंगस्य दीर्घसमानत्वान्नुडागमो न किंतु ( सवर्णे०)७–१ ( अ इ ए ) हाहे । हाहौः ७–२ । हाहासु ७–३ । संबोधनं प्रथमावत् ॥

इकरांतः पुँल्लिंगो हरिशब्दः । प्रथमैकवचने हरिः ।औ यू।।इकारातादुकारांताच्चार औकारो यू आपद्यते ईऊ भवतः। हरी । ए ओ जसि।।इकारांतस्य उकारांतस्य च जसि परे एकार ओकारश्च भवति। हरयः । धौ ॥ इकारान्तस्योकारांतस्य च धिविषये एकार ओका-रश्च भवति॥ (समानाद्धेर्लोपोऽधातोः) हे हरे । हे हरी । हे हरयः। हरिम् । हरी । हरीन् ॥

---

१ क्विबन्ताश्च विजन्ताश्च विडन्ताश्च तथैव ये । ते धातुत्वं न जहति नामत्वं प्राप्नुवंति च ॥

इकारांतसाधनमाह । इकारांतो हरिशब्दः दशार्थवाचकः । यतः । "अर्कमर्कटमंडूकविष्णुवासववायवः।तुरंगसिंहशीतांशुयमाश्च हरयो दश॥"हृञ् हरणे हृ(इखखि)इति इप्रत्ययः । ( गुणः ) स्वर० । १–१ हरि स् ( स्रो० ) । सूत्रम् ( औ यू ) औ१–१ सांके० । यू इश्च उश्च यू २–२ । सांके० । इकारांतात्परस्य औ इत्यस्य ई उकारांतात्परस्य च ऊ इत्यर्थः । अनेन औस्थाने ई । ( सवर्णे० ) सूत्रम् ( ए ओ जसि ) ए १–१ । सांके० । ओ १–१ । सांके० । जस् ७–१ । स्वर० । सिद्धम् । इकारस्य जसि परे एकारः उकारस्य च ओकारः । अनेन ए ( ए अय् ) स्वर० । ( स्रो० ) संबोधने । सूत्रम् ( धौ ) धि ७–१ ( ङेरौ ङित् ) ङित्वाट्टिलोपः । एकपदम् । धौ धिविषये इकारस्य एकारः उकारस्य ओकारः ( समानाद्धेर्लोपोऽधातोः ) इति धेर्लोपे कृते धौ इति एकारः "सर्पे नष्टे सर्पवृष्टिर्न याति" इति न्यायाद्धिलोपेऽपि धिविषयो न याति । हे हरे । हे हरी । ( औ यू )हे हरयः ( ए ओ जसि । ए अय् ) स्वर० । ( स्रो० ) २–१ ( अम्शसो० ) अकारस्य लोपः । २–२ ( औ यू । सवर्णे० ) २–३ ( अम्शसो० । सो नः पुंसः । शसि ) इति दीर्घः । हरीन् ॥

टा नाऽस्त्रियाम् ॥इकारांतादुकारांताच्च परष्टा ना भवति अस्त्रियाम् । हरिणा । हरिभ्याम् । हरिभिः । हरि ङे इति स्थिते।ङिति॥ इकारोकारांतस्य च ङिति परे एकार ओकारश्च भवति । हरये । हरिभ्याम् । हरिभ्यः । हरि ङसि इति स्थिते । ङस्य[1] ॥ एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः । हरिभ्याम् । हरिभ्यः । हरेः। हर्योः।हरीणाम् । हरि ङि इति स्थिते।ङेरौ ङित्॥ इदुद्भ्यामुत्तरस्य ङेरौ भवति स च ङित्।ङिति टेः॥ ङिति परे टेर्लोपो भवति।हरौ।हर्योः।हरिषु।एवमग्निगिरिरविकविप्रभृतयः पुँल्लिंगाः॥

३–१ सूत्रम् ( टानाऽस्त्रियाम् ) टा १–१सांके० । ना १–१ । सांके० । न स्त्री अस्त्री तस्याम् ७–१ । ( स्त्रियां योः ) इति टेः आम् ( स्त्रीभ्रुवोः )स्वर० । (सवर्णे०) सिद्धं त्रिपदम् । इकारांतात् उकारांताच्च शब्दात्परो यष्टा इति विभक्तिवचन-

---

१ ङसिङसोरस्य इति क्वचित्कः पाठो दृश्यते । परन्तु स पाठ एतट्टीकाकारेण चन्द्रकीर्तिना केषांचिन्मताभिप्रायेणाभिमतः । सर्वत्र सूत्रस्य पञ्चम्यन्तषष्ठ्यन्तैकारान्तौकारान्तशब्दानां च साधनार्थं 'ङस्य' इति पाठस्यैव उपन्यासः कृतो दृश्यते । क्वचित्पुस्तकान्तरे 'ङसिङसोरस्य' इति सूत्रोपन्यासो दृश्यते स क्वचिन्मताभिप्रायेणेति बोद्धव्यम् । प्रसादटीकाकारभट्टवासुदेवस्यापि 'ङस्य' इत्येव सूत्रपाठोऽभिप्रेतः इति ज्ञेयम् ।

रूपस्तस्य स्थाने ना इति भवति पुँल्लिंगे नपुंसकलिंगे च । स्त्रीलिंगे तु न भवति । अनेन टा इत्यस्य ना ( ष्णों० ) हसादावविशेषः । सूत्रम् ( ङिति ) ङ् इत् अनुबन्धो यस्य स ङित् तस्मिन् ङिति ७–१ । स्वर० । एकपदम् । इकारांतस्य ङेङसिङस्ङिष्वेकारः उकारस्य ओकारः अनेन ४–१ रि इत्यस्य रे । ( ए अय् )स्वर० । हरये । ५–१ । ६–१ ( ङिति ) इत्यनेन एकारे कृते । सूत्रम् । ( ङस्य ) ङकारेण उपलक्षितः अः ङः तस्य केचित्तु ( टसिङसोरस्य ) एवं सूत्रं पठंति तच्चिन्त्यम् । एकारौकाराभ्यां परस्य पंचमीषष्ठ्येकवचनसंबंधिनोऽकारस्य लोपो भवति । अनेन अकारलोपः ( स्रो० ) ६–२ ( इ यं स्वरे । रहाद्यपा० ) जल० । स्वर० । ६–३ ( नुडामः । नामि । ष्णों० ) स्वर० । ७–१सूत्रम् ( ङौ डित् ) ङि ६–१ (ङिति । ङस्य । स्रो० ) औ १–१ । सांके० । ( नामिनो रः ) डित् १–१ ( हसे० ) सिद्धं त्रिपदम् । इकारोकाराभ्यां परस्य सप्तम्येकवचनस्य ङि इत्यस्य औ भवति स च डित्संज्ञकः । डित्प्रयोजनमाह । सूत्रम् । ( डिति टेः ) ड् इत् यस्य स डित् । तस्मिन् ७–१ । स्वर० । टि ६ १ ( ङिति । ङस्य । स्रो० ) वृत्तिः कंठ्या । डकार इत् याति यस्य तस्मिन् आदेशे तस्यां विभक्तौ प्रत्यये च परे टेर्लोपो भवति । इति डित्त्वाट्टिलोपः । स्वर० । केचित् ( ङिति ) इत्येकारे कृते यदादेशस्तद्वद्भवतीति न्यायात् ङेरौकारमिच्छंति । हरौ । इति सिद्धम् । द्विवचने पूर्ववत् । ७–३ ( । क्रशा० ) एवं हरिशब्दवत् अग्न्यादयोपि शब्दा ज्ञेयाः । अग्नि–रवि–कवि–कपि–गिरि–मुनि–सूरि–कलि–आधि–निधि–संधि–विधि–ग्रंथि–अंजलि–ध्वनि–दुंदुभि–प्रभृतयः ॥

उकारांताश्च विष्णुवायुभानुप्रभृतयः पुँलिंगा एतैरेव सूत्रैः सिद्ध्यंति ।

उकारांतः पुँल्लिंगो भानुशब्दः तस्य हरिवत्प्रक्रिया । भानुः । भानू । भानवः । भानुम् । भानू । भानून् । भानुना । भानुभ्याम् । भानुभिः । भानवे । भानुभ्याम् । भानुभ्यः । भानोः । भानुभ्याम् । भानुभ्यः । भानोः । भान्वोः । भानूनाम् । भानौ । भान्वोः । भानुषु । हे भानो । हे भानू । हे भानवः ॥

उकारान्ताश्च वेणुविष्णुवायुभान्वादयोप्येतैरेव सूत्रैः सिध्यंति । भानुशब्दस्य ( औ यू ) इत्यनेन औ इत्यस्य ऊ ( सवर्णे० ) भानू । भानु जस् ( ए ओ जसि । ओ अव् ) भानवः । घौ च ( समानाद्धेर्लोपो० ) इति उकारस्य ओकारः । ३–१ ( टा नाऽस्त्रियाम् ) ङिन्सु ४–१ ( ङिति ) इति उकारस्यौकारः ( ओ अव् ) । ५–१ । ६–१ ( ङिति ) इत्येकारे कृते ( ङस्य ) इत्यकारलोपः । ७–१ ङौ ( ङौ डित् ) ओसि ( उ वम् ) सुपि ( किला० ) उकारांतः पुँल्लिंगः तितउशब्दः चालनीवाचकः ।

तितउः । तितऊ । तितवः । ( ए ओ जसि । ओ अव् । ) तितउम् । तितऊ । तितउन् । तितउना । तितउभ्याम् । तितउभिः । तितवे । तितउभ्याम् । तितउभ्यः । तितोः । तितउभ्याम् । तितउभ्यः । तितोः । तितवोः । तितऊनाम् । तितौ । तितवोः तितउषु । हे तितो । हे तितऊ । हे तितवः ॥

सखिशब्दस्य भेदः । सेर्डाऽधेः ॥ सखिशब्दात्परस्य सेरधेर्डा भवति स च डित् । डित्वाट्टिलोपः । सखा । अधेरिति विशेषणादेकारो धिविषये । हे सखे । हे सखायौ । हे सखायः । ऐ सख्युः ॥ सखिशब्दस्यैकारादेशो भवति पंचसु परेषु । षष्ठीनिर्दिष्टस्यादेशस्तदंतस्य ज्ञेयः । आयादेशः । सखायौ । [ द्विवचनस्यावा वा छंदसि ] सखाया । सखायः । सखायम् । सखायौ । सखीन् ॥

इकारांतस्यापि सखिशब्दस्य हरिशब्दापेक्षया भेदो विशेषोस्ति तमाह । षण दाने । सनोति ददातीति सखा सनेर्डखिप्रत्ययः । डित्वाट्टिलोपः । सखि इति जातम् । अग्रे सि । सूत्रम् ( सेर्डाधेः ) सि ६–१ ( डिति । डस्य । स्रो० ) डा १–१ सांके० ( नाम्यिना गः ) जल० । न धिः अधिस्तस्य अधेः ६–१ ( डिति । डस्य । स्रो० । सवर्णे० ).त्रपदम् । सखिशब्दसंबंधिना धिवर्जितस्य सेर्डा भवति । अनेन सेः आ डित्वाट्टिलोपः । (डिति टेः) स्वरे० । सेर्डाधेरिति सूत्रमध्ये अधेरिति पदग्रहणात् धिविषये डा आदेशो न भवति ऐकारादेशश्च न भवति किंतु ( समानाद्धेर्लोपोऽधातोः ) इति धिलोपं विधाय पश्चात् ( धौ ) इति सूत्रेण एकार एव भवति । हे सखे इति सिद्धम् । १–२ सूत्रम् ( ऐ सख्युः ) ऐ १–१ सांके० । सखि ६–१ ( ऋङ् ङे । इ यं स्वरे ) स्वर० । ( ऋतो ङ उः ) टिलोप० । स्वर० ( स्रो० ) द्विपदम् ( सेर्डाधेः ) इति सूत्रादधेरिति पदम् ( ऐ सख्युः ) इत्यत्राप्याकर्षणीयम् । तेन सखिशब्दस्य धिवर्जितेषु पंचसु स्यादिषु वचनेषु परेषु एकारादेशो भवति । शत्रुवदादेश इति वचनात् सर्वस्यापि न कथमैकारः । तत्रोच्यते । ( षष्ठी० ) षष्ठ्या विभक्त्या निर्दिष्टः कथित उच्चारितः सूत्रमध्ये यः शब्दस्तस्य प्राप्त आदेशः तस्य शब्दस्यांतस्य भवति । न तु सर्वस्य । यथा ( ऐ सख्युः ) इत्यत्र सखिशब्दस्य षष्ठीनिर्दिष्टत्वात्सखिशब्दस्य प्राप्त ऐकारादेशः सखिशब्दस्यांतो यः इकारस्तस्य भवति । ननु पंचस्विति ग्रहणात् सौ परेप्यैकारादेशः कथं न क्रियते तत्राह । सौ परे [1] ऐकारादेशे कृतेऽप्यकृतेऽपि डादेशस्य नित्यत्वात् डा–आदेश एव स्यात् न त्वैकारः ॥ अथवा ( ऐ सख्युः ) इति सूत्रे विपरीतकरणात्सौ परे ऐकारो न क्वचित् औकारादिषु चतुर्षु परेषु इत्येवास्ति । स्थानत्वाच्छून्यत्वात्पंचस्विति पदम् । आदे-

१ षष्ठ निर्दिष्टस्य–इत्यपरत्र पाठः । २ षष्ठ्या० इति–क्वचित्पाठः ।

शस्तु चतुर्थ्वेव । अनेन इकारस्य ऐकारः । ( ऐ आय् ) स्वर० एवम् । १-३ । २-१ । २-२ । एतेष्वपि ज्ञेयम् । ( द्विवचनस्य औ आ वा छंदसि ) द्विवचनस्य प्रथमाद्विवचनस्य औ इत्यस्य छन्दसि वेदे वा आ भवति । सखाया । सखायः । सखायम् । सखायौ । सखीन् ॥

सखि टा इति स्थिते । सखिपत्योरीक् ॥ सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः । दीर्घत्वान्ना न भवति । सख्या । आगमजमनित्यमिति न्यायात् । सखिना । पतिना । सखिभ्याम् । सखिभिः । सख्ये । सखिभ्याम् । सखिभ्यः । सखि ङसि इति स्थिते । ऋङ् ङे ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोरकारे परे । सख्यृ अस् इति स्थिते । ऋतो ङ उः ॥ ऋकारांतात्परस्य ङसिङसोरकारस्य उकारो भवति स च डित् । ( डिति टेः ) ॥ सख्युः । सखिभ्याम् । सखिभ्यः । सख्युः । सख्योः । सखीनाम् । सप्तम्येकवचने ( ङेरौ डित् ) इत्यौकारे कृते ( सखिपत्योरीक् ) इति ईगागमः । सख्यौ । सख्योः । ( किलात्पः सः कृतस्य ) इति षत्वम् । सखिषु ॥

तृतीयादौ विशेषमाह । सूत्रम् ( सखिपत्योरीक् ) सखिश्च पतिश्च सखिपती तयोः सखिपत्योः ६-२ ( इ य स्वरे ) स्वर० ( स्रो० ) ईक् १-१ ( हस० । नामिनो० ) द्विपदम् । सखिपतिशब्दयोः टाङेङिषु ईगागमो भवति । कित्त्वादंते । दीर्घत्वान्ना न भवति । ततो दीर्घः । ईकारांतत्वात् ( टा नाऽस्त्रियाम् ) इति सूत्रेण टास्थाने ना न भवति किंतु ( सवर्णे० । इ यं० ) सख्या पत्या इति सिद्धम् । पुनरागमजमनित्यम् । आगमाज्जातम् आगमजं कार्यमनित्यं क्वचिन्न भवतीति न्यायात् क्वचिदीकारागमो न भवति तेन छन्दसि सखिना पतिना इति रूपं भवति । तत्र ( टानाऽस्त्रियाम् ) ४-१ ईगागमः ( सवर्णे० । इ यं० ) स्वर० । सख्ये । ५-१ । ६-१ । विशेषमाह । सूत्रम् ( ऋङ्के ) ऋक् १-१ ( हसे० ) ङकारेण उपलक्षिता अः ङः तस्मिन् ङे ७-१ ( अ इ ए ) अथवा ( अमे अमा वा ) ( ऋङ्ङ ) सिद्धम् सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोर्ङकारे परे ( इ यं० ) सख्यृ अस् इति स्थिते सति सूत्रम् ( ऋतो ङ उः ) ऋतः ५-१ । स्वर० ( स्रो० ) ङकारेण उप-

१ सखिना वानरेन्द्रेण दग्धा लंका महापुरी । प्रमदा शीलसंपन्ना वृद्धेन पतिना यथा ॥ इत्यादिषु छान्दसप्रयोगेषु ईगागमाभावो बोद्धव्यः ।

लक्षितो अः ङः तस्य ६-१ । सांके० । उः १-१ (स्रो० ) त्रिपदं सूत्रं सिद्धम् । ऋकारां० । वृत्तिः कंठ्या । अनेनोभयत्राप्यकारस्योकारः स च उकारो ङित्संज्ञकः कल्प्यः। ङित्वाट्टिलोपः (ङिति टेः ) स्व० ( स्रो० ) ६-२ ( इयं स्व० । स्रो० )६-३ नुडागमः ( नामि ) स्व० । ७-१ (ङेरौ ङित् ) इत्यौकारे कृते ङित्वाट्टिलोपे च कृते यदादेशस्तद्वद्भवतीति न्यायात् एकदेशविकृतमनन्यवद्भवतीति न्यायाच्च॥( सखिपत्योरीङ् ) इति ईंगागमः ( इ यं० ) शेषं हरिवत् । एवं सखिशब्दसाधनम् ॥

पतिशब्दस्य प्रथमाद्वितीययोः हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पतिः ( औयू ) पती । ( ए ओ जसि ) पतयः । पतिम् । पती । पतीन् ( सो नः पुंसः ) ( सखिपत्योरीङ्) पत्या । पतिभ्याम् । पतिभिः । पत्ये । पतिभ्याम् । पतिभ्यः। ( ऋङ् ङे । ऋतो ङ उः ) स च ङित् । पत्युः । पतिभ्याम् । पतिभ्यः । [ पतिरसमास एव सखिशब्दवद्वक्तव्यः ] ततः समासांतस्य नादयो भवंति । प्रजापतिना । प्रजापतये इत्यादि ॥

पतिशब्दस्य साधनमाह । पा रक्षणे । ( पातेः किव् ) इति डतिः ( आतोनपि) पातीति पतिः । पतिशब्दस्य प्रथमाद्वितीययोः प्रक्रिया साधना हरिशब्दवत् । तृतीयादौ तु सामान्येन सखिशब्दवत् । पत्या । पत्ये । पत्युः । पत्यौ । तत्रापि विशेषमाह । असमासः समासरहित एव पतिः शब्दः सखिशब्दवत् साध्यः टादौ स्वरे । समासांतस्य च पतिशब्दस्य नादयो भवंति ( टा नाऽस्त्रियाम् । ( ङिति । ङस्य । ङेरौ ङित् ) इत्यादिसूत्राणि भवंति । यथा प्रजानां पतिः प्रजापतिः इति तत्पुरुषसमासे कृते द्वितीयां यावदविशेषः । तृतीयादौ तु ( टा नाऽस्त्रियाम् ) इत्यादिसूत्रसमुच्चयेन हरिशब्दवत्साधनेत्यर्थः । प्रजापतिना । प्रजापतिभ्याम् । प्रजापतिभिः । प्रजापतये । प्रजापतेः । प्रजापतेः । प्रजापतौ इनि । धौ । हे प्रजापते ( समानाद्धेर्लोपोऽधातोः ) हे प्रजापती ( औ यू ) हे प्रजापतयः ( ए ओ जसि ) सिद्धम् ॥

द्विशब्दो नित्यं द्विवचनांतः । द्वि औ इति स्थिते । त्यदादेष्टेरः स्यादौ ॥ त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । त्यदादीनां धेरभावः ॥

द्विशब्दो द्विसंख्यावाचकत्वात् नित्यं द्विवचनांत एव । द्विवचनम् अंते यस्य स

१ स्यादौन पाठोऽन्यत्र ।

द्विवचनांतः । द्वि-१-२ । २-२ । ३-२।४-२ । ५-२ । ६-२ । ७-२।सूत्रम् ( त्यदादेष्टेरः० ) त्यद् आदिर्यस्य स त्यदादिस्तस्य त्यदादेः ६-१।(डिति।ङसूस्य। स्रो० ) टि६-१ प्राग्वत् ( विसर्जनी० । धुभिः घुः ) स्वर० । अ १-१(स्रो० । नामिनो० ) स्व० । स्यादि ७-१ ( डेरौ डित् ) डित्त्वाट्टिलोपः । स्वर० । चतुष्पदम्। त्यद् तद् यद् एतद् अदस् इदम् द्वि किम् युष्मद् अस्मद्-एते त्यदादयः । त्यदादेः शब्दस्य टः ( अंत्यस्वरादिष्टिः ) इति संज्ञाप्रक्रियोक्तलक्षणायाः टेः स्यादौ विभक्तौ परतः अकारो भवति । अनेन द्वि इत्यस्य द्व सर्वत्र, रूपद्वये १-२ । २-२ ( ओ औ औ ) ततो रूपत्रये ३-२ । ४-२ । ५-२ । ( आद्वि ) ६-२ । ७-२ ओसि ( ए अय् ) स्वर० । ( स्रो० ) त्यदादीनां संबोधनाभावः । सिद्धोऽयं द्विशब्दः ॥

त्रिशब्दो नित्यं बहुवचनांतः । त्रि जस् इति स्थिते ( ए ओ जसि ) इकारे कृते अयादेशः[1] । त्रयः ( सो नः पुंसः ) त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः । त्रि आम् इति स्थिते । त्रेस्त्रयम् ॥ त्रिशब्दस्य अयङ् आदेशो भवति नामि परे [ ङिदंतस्य वक्तव्यः ] त्रयाणाम् । ( क्विलात्पः सः कृतस्य ) इति षत्वम् । त्रिषु ॥

इकारान्तः त्रिशब्दस्त्रिसंख्यावाचकत्वान्नित्यं बहुवचनान्तः । बहुवचनमेव अंते यस्य सः । १-३ त्रि अस् इति स्थिते ( ए ओ जसि । ए अय् ) स्वर० ( स्रो० ) त्रयः इति सिद्धम् । शसि ( अस्शसो० । सो नः पुंसः ) त्रीन् । त्रिभिः । त्रिभ्यः।आमि विशेषः । पूर्वम् ( नुडामः ) ततः । सूत्रम् ( त्रेर० ) त्रि ६-१ । ङिति । टस्य । स्रो० ) अयङ् १-१( इमेपः० । नामिनो रः ) सिद्धम् । बहुवचनान्तस्यैकवचनस्थापनार्थम् । त्रिशब्दस्येति । त्रिशब्दस्य अयङ् इत्यादेशो भवति । नुडागमादिति आमि परे ङित् टकारेत आदेशः अंतस्य भवतीति वचनात् । इकारस्येत्यर्थः । नन्वत्र षष्ठ्या निर्दिष्टस्येत्यनेन अंतस्यादेशप्राप्तौ पुनर्ङिदंतस्येति किमर्थमुक्तं तत्राह । ( गुरुः शिच्च सर्वस्य ) इत्यनेन षष्ठीनिर्दिष्टस्येत्यस्य बाधः । अयङ् इति । बह्वक्षरत्वेन गुर्वादेशत्वेन सर्वस्यैव भवति तन्निवारणार्थं ङिदंतस्येति । ङित् टकारेत् यः आदेशः सः गुरुरपि अंतस्यैव भवति । इकारस्य अय् इत्यादेशः(नामि )इति दीर्घः (पुर्नां णो०) स्वर० । त्रिशब्दस्य बहुवचनांतत्वेऽपि त्रेरित्येकवचनं शब्दनिर्देशात् । अथवा त्रेरित्येकवचननिर्देशात् असमासांत एव अयम् आदेशः । समासांतत्वे तु न । यथा प्रियास्त्रयो येषां ते प्रियत्रयः । तेषां प्रियत्रीणाम् । एवम् । अतिक्रांतास्त्रीनिति अतिक्रान्तास्त्रयो यस्ते इति वा अतित्रयस्तेषाम् अतित्रीणाम् इत्यादौ न अयङ्-आदेशः । ७-३ ( क्विलात्पः सः० ) इ त्रयः ॥

---

१ अयादेशः-इति पाठः ।

कति शब्दो नित्यं बहुवचनांतस्त्रिपु लिङ्गेपु सरूपः । कति जस् इति स्थिते ।डतेः॥ संख्यार्थडत्यन्तान्नाम्नः परयोर्जश्शसोर्लुक् भवति ।
कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः।कतीनाम् । कतिपु ॥

का संख्या येषां ते कति । किम्शब्दात् डतिप्रत्ययः । ( शेषा निपात्याः कत्यादयः इति सिद्धस्य कतिशब्दस्य बहुवचनांतस्यापि जश्शसोर्विशेषमाह । सूत्रम् ( डतेः ) ५–१ संख्यावाचकात् डत्यन्तान्नाम्नः परयोर्जश्शसोर्लुक् भवति । अनेन जश्शसोर्लोपः कर्त्तव्यः । ( लुकि न तन्निमित्तम् ) इति लुकि कृते सति यस्य लुक् क्रियते स एव निमित्तं कारणं यस्य ईदृशं यत्कार्यं तन्न भवति । तेन ( ए ओ जसि । शसि ) इति दीर्घत्वं न भवति । शेषं सुगमम् । कतिशब्दस्य संबोधनाभावः । एवं कतिसाहचर्यात् यतिततिशब्दाभ्यां परयोर्जश्शसोर्लुग्वक्तव्यः 'यति ते नाग शीर्षाणि तति ते नाग वेदनाः' । इत्युदाहरणम् । कतिशब्दस्य त्रिष्वपि लिंगेषु सदृशरूपाणि । इकारांता उक्ताः ॥

ईकारांतः पुँल्लिंगः सुश्रीशब्दः।सुश्रीः।सुश्री औ इति स्थिते।य्वोर्धातोरियुवौ स्वरे॥धातोरीकारोकारयोरियुवौ भवतः स्वरे परे ।सुश्रियौ।
सुश्रियः । हे सुश्रीः।हे सुश्रियौ । हे सुश्रियः । सुश्रियम्।सुश्रियौ ।
सुश्रियः । सुश्रिया । सुश्रीभ्याम् । सुश्रीभिः । सुश्रिये।सुश्रीभ्याम्।
सुश्रीभ्यः । सुश्रियः । सुश्रीभ्याम् । सुश्रीभ्यः । सुश्रियः ।सुश्रियोः।
सुश्रियाम् । सुश्रियि । सुश्रियोः । सुश्रीपु ॥

ईकारांतानाह । ईकारांतः पुँल्लिगः सुश्रीशब्दः । श्रिञ् सेवायाम् । सुपूर्वः । क्विप्प्रत्ययः । ( प्रच्छादेर्दीर्घता ) इति दीर्घः । क्विपः सर्वापहारी लोपः । सुष्ठु श्रयत्येनमिति सुश्रीः । क्विंतत्वाद्धातुत्वं न जहाति शब्दत्वं च प्रतिपद्यते इति स्यादयः । १–१ । ( स्रो० ) द्विवचने । सूत्रम् ( य्वोर्धातोः० ) इति । ई च ऊ च य्वौ तयोः । ६–२ । ( इ यं० । उ वम्० ) स्वर० ( स्रोर्वि ) । धातु ६–१ ( ङिति। ङस्या।स्रो०। इयुव् १–२ । स्वर० ( नामिनो रः ) स्वर ७–१ ( अ इ ए )चतुष्पदम् । धातोरीकारस्य स्वरे परे इय् ऊकारस्य स्वरे परे उव् ( इ यं स्वरे) इति सूत्रात् स्वरेइत्यनुवृत्तौ सत्यां पुनः स्वरग्रहणं स्वरकार्यांतरव्यावृत्त्यर्थम् । ( अम्शसोरस्य । नुडामः)इति निषेधार्थं विभक्तिर्वाजतस्वरनिषधार्थं च । ततोऽत्र विभक्तिस्वर एव ग्राह्यः । तेन श्री अर्थम् श्र्यर्थमित्यादौ न इय् किंतु ( इ यं स्वरे ) इति यत्वम् । अनेन स्वरादौ इय् । स्वर० । हसादावविशेषः । सुपि ( क्विलात्पः०) संबोधने धातुत्वाद्दिलोपो न किं । ( स्रो० ) हे सुश्रीः । हे सुश्रियौ । हे सुश्रियः ॥

तथैव सुधीशब्दः । सुष्ठु ध्यायतीति सुधीः । ( य्वोर्धातोरियुवौ स्वरे ) सुधियौ । सुधियः । हे सुधीः । सुधियम् । सुधियौ । सुधियः । सुधिया । सुधीभ्याम् । सुधीभिः । सुधिये । सुधीभ्याम् । सुधीभ्यः । सुधियः । सुधीभ्याम् । सुधीभ्यः । सुधियः । सुधियोः । सुधियाम् । सुधियि । सुधियोः । सुधीषु ॥ एवमूकारांतः पुँल्लिंगः स्वयंभूशब्दः । स्वयं भवतीति स्वयंभूः । स्वयंभुवौ । स्वयंभुवः । हे स्वयंभूः । स्वयंभुवम् । स्वयंभुवौ । स्वयंभुवः । स्वयंभुवा । स्वयंभूभ्याम् । स्वयंभूभिः । स्वयंभुवे । स्वयंभूभ्याम् । स्वयंभूभ्यः । स्वयंभुवः । स्वयंभूभ्याम् । स्वयंभूभ्यः । स्वयंभुवः । स्वयंभुवोः । स्वयंभुवाम् । स्वयंभुवि । स्वयंभुवोः । स्वयंभूषु ॥

एवं सुधीशब्दः॥ऊकारांतः स्वयंभूशब्दोऽप्येवमेव ।एवमूकारांतो लूशब्दः। लूञ् छेदने इत्यस्माद्धातोः । लूः । लुवौ । लुवः इत्यादि ॥

सेनानीशब्दस्याविशेषो हसादौ स्वरादौ तु विशेषः । सेनां नयति इति सेनानीः । सेनानी औ इति स्थिते । य्वौ वा॥ धातोरवयवसंयोगः पूर्वो यस्मादीकारादूकाराच्च नास्ति तदंतस्यानेकस्वरस्येकारस्योकारस्य च यकारवकारौ भवतः स्वरे परे । वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा । वाग्रहणादियं विवक्षा । सेनान्यौ । सेनान्यः । हे सेनानीः । हे सेनान्यौ । हे सेनान्यः । सेनान्यम् । सेनान्यौ । सेनान्यः । इत्यादि [सेनान्यादीनां वामो नुड् वक्तव्यः] सेनानीनाम्–सेनान्याम् । सेनानी ङि इति स्थिते । आम्ङेः ॥ नीशब्दादुत्तरस्य ङेरामादेशो भवति । सेनान्याम् । सेनान्योः । सेनानीषु । एवं ग्रामणीप्रभृतयः ऊकारांताश्च यवलूप्रभृतयः ॥

णीञ् प्रापणे ( आदेः ष्णः स्नः ) नी सेनापूर्वः । सेनां नयति इति सेनानीः क्विप्प्रत्ययांतः । सेनानीशब्दस्येकारांतधातोरपि हसादौ अविशेषः । स्वरादौ तु

विशेषस्तमेव सूत्रद्वारेण व्याख्याति ( य्वोर्धातोरियुवौ स्वरे ) अनेन ( इ यं स्वरे । उ वम् ) इत्येतयोर्बाधो जातः । सेनानीशब्दस्येकारांतत्वे ( य्वोर्धातो:० ) इत्यस्य बाधनार्थं ( य्वौ वा ) इति सूत्रं पठ्यते । य च व् च य्वौ १-२ । वा ३-१ ( अव्य० ) यस्मात् ईकारात् ऊकाराच्च पूर्वः आदौ वर्तमानो धातोः अवयवसंयोगः सुश्रीयवक्रीवत् द्व्यक्षरादिसंयोगो नास्ति तदंतस्य स एव धात्ववयवसंयोगपूर्वकत्वरहितः ईकार ऊकारो वा अंते यस्य स तदंतस्तस्य पुनः अनेकस्वरस्य द्वित्रिस्वरसहितस्य शब्दस्य संबंधिनः ईकारस्य यकारः ऊकारस्य च वकारः । ननु णीञ् प्रापणे अयं धातुः एकस्वरः कथमनेकस्वरत्वम् । उच्यते । कारकपूर्वस्यापि क्विबंतग्रहणेन ग्रहणादनेकस्वरत्वम् । अत्र वाशब्दो व्यवस्थावाचको न तु विकल्पार्थस्तेन वर्षाभूपुनर्भूदृन्भूदृग्भूकारभूकाराभूकरभूएभ्योऽतिरिक्तो अन्यो यो भूशब्दः स्वयंभूकमलभूनाभिभूअंगभूशरभूआत्मभूमनोभूमतिभूप्रभृतिकस्तस्य संभवे सत्यपि ( य्वौ वा ) इति न भवति । किंतु ( य्वोर्धातोरियुवौ स्वरे ) इति भवति । यथा सुधीशब्दस्यापि संभवे सत्यपि ( य्वौ वा ) इति न भवति किं तु ( य्वोर्धातोरियुवौ स्वरे ) इत्येव भवति । अत एतौ वर्जयित्वा अपर ईकारोकारयोः पूर्वोक्तलक्षणयोर्यकारवकारौ भवतः । वाग्रहणादियं विवक्षा ज्ञेया । कुतः । निपातानामनेकार्थत्वात् । धातोः संयोगपूर्वकत्वे सुश्रियौ यवक्रियौ कटप्रुवौ इत्यादौ न यकारवकारौ किंतु इयुवावेव । एकस्वरे तु नीः । नियौ । धीः । धियौ । लूः । लुवौ । भूः । भुवौ । भुवः । इत्यादौ न यकारवकारौ । बहुव्रीहिसमासे अनेकस्वरस्यापि इयुवौ भवतः । यथा । सुधीः । सुधियौ । सुधियः । कुधीः । कुधियौ । परमधियौ इत्यादि । धात्ववयवसंयोगपूर्वकत्वे एव यकारवकारौ न भवतः । तेन उन्नीः उन्न्यौ । उन्न्यः । इत्यादौ स्वभाविकधात्ववयवसंयोगपूर्वकत्वाभावात् यत्वं भवति । वर्षाभूपुनर्भूदृन्भूदृग्भूकारभूकाराभूकरभूइत्यत्र भूशब्दस्य च वत्वम् । अन्यत्र उवेव वाशब्दस्य व्यवस्थावाचकत्वात् इयं विवक्षा लभ्यते । अनेन स्वरादौ सर्वत्र यकारः । स्वर० । आमि विशेषः । सेनान्यादीनां शब्दानामामः षष्ठीबहुवचनस्य वा नुडागमो वक्तव्यः । अनेन एकत्र ( नुडामः ) स्वर० । अन्यत्र ( य्वौ वा ) इति यकारः । स्वर० । ७-१ सूत्रम् । ( आम्ङेः ) आम् १-१ ( ह्से०) ङि ६-१ ( ङिति । ङस्य । म्रो० ) केचित्तु आम्ङेर्नियश्चेत्यं सूत्रं पठंति तन्मतमसाधीयः । नीशब्दाच्चोत्तरस्य ङेः सप्तम्येकवचनस्याम् भवति अनेनामि कृते ( य्वौ वा ) इति यकारः ( स्वर० ) धातुत्वाद्देर्लोपो न । शेषं सुकरम् ॥

एवं ग्रामणी-अग्रणी-मर्या-शब्दप्रभृतयोऽपीकारांता धातुशब्दाः ज्ञेयाः ।

---

१ सुश्रेणयेवत्र । यवक्रीरेयन्यत्र ।

ऊकारांताश्च यवलूखलपूहन्भूहग्भूकाराभूकारभूकरभूवर्षाभूपुनर्भूप्रभृतयोऽप्येवम् । परं सप्तम्येकवचने नीशब्दाभावात् ङेराम् न भवति तेन यवल्वि पुनर्भ्वि वर्षाभ्वि इति रूपम् । वर्षासु भवतीति वर्षाभूः मण्डूकः । यवान् लुनातीति यवलूः । खलं पुनातीति खलपूः । पुनर्भवतीति पुनर्भूः ब्रह्मा । हेक् स्त्री । दृशा भवतीति दृग्भूः सर्प्पः । यद्वा । दृशः भवतीति दृग्भूः मयूरः । हन् हिंसन् भवतीति हन्भूः कीटः । कारायां भवतीति काराभूः । कारे कारेण वा भवतीति कारभूः—राजदेयो भागः । एते क्विप्-प्रत्ययांताः । ईकारान्तो वातप्रमीशब्दः—मृगविशेषः । वातप्रमी १—१ ( स्रो० ) वातप्रमीः । वातप्रम्यौ । धातुत्वाभावात् ( य्वौ वा ) इति न । किंतु ( इ यं स्वरे ) वातप्रम्यः । वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । वातप्रमीभिः । वातप्रम्ये । वातप्रम्यः । वातप्रम्यः । वातप्रम्याम् । ७—१(सवर्णे० ) वातप्रमी । वातप्रम्योः । वातप्रमीषु । हे वातप्रमीः । "अमि वातप्रमीं रूपं शसि वातप्रमीनिति । ङौ तु वातप्रमी रूपमेवं देवयजीरपि" ॥ १ ॥ एवम् अतिलक्ष्मीः । पीयः पपीः । एवम् ऊकारान्तो हूहूशब्दः । हूहूः । हूह्वौ । हूह्वः । स्वरे परे सर्वत्र ( उ वम् ) । अमि—हूहूम् । हूह्वौ । शसि—हूहून् । आमि—हूह्वाम् । ङौ । हूह्वि ॥

ऋकारांतः पुँल्लिंगः पितृशब्दः । सेरा ॥ ऋकारांतात्परस्य सेरा भवति स च डित । डित्त्वाट्टिलोपः । पिता । पंचसु ॥ ऋकारोऽर् भवति पंचसु स्यादिषु परेषु । पितरौ । पितरः । धेरर् ॥ ऋकारांतात्परस्य धेरर् भवति । स च डित । डित्त्वाट्टिलोपः । हे पितः । हे पितरा । हे पितरः । पितरम् । पितरौ । पितॄन् । पित्रा । पितृभ्याम् । पितृभिः । पित्रे । पितृभ्याम् । पितृभ्यः । (ऋतो ङ उः ) पितुः । पितृभ्याम् । पितृभ्यः । पितुः । पित्रोः । पितॄणाम् । ङौ ॥ ऋकारस्यार् भवति ङौ परे । पितरि । पित्रोः । पितृषु । एवं जामातृभ्रात्रादयः ॥

ऋकारांतानाह । ऋकारांतः पितृशब्दः । पा रक्षणे । उणादिकः प्रत्ययः । अकारस्य चेकारः । पाति रक्षतीति पिता । पितृशब्दो निपातासिद्धो न तृप्रत्ययांतः । यतः । "पिता माता ननांदा ना सव्येष्ठृभ्रातृयातरः । जामाता दुहिता देवृनप्तृनेता

---

१ दवा—इति पाठः एकत्र । धृती—इति चान्यत्र । दवि—इति परत्र । अत्र आशयो ज्ञायते । २ पयः पपीः—इति पाठः । ३ अत्र ( ऋ अर् ) इति पूर्वसूत्रात् ( अर् ) इत्यनुवर्तते—सूत्रं त्विदमेकपदमेव ।

इमे दश" ॥ १ ॥ पितृ १-१ । सूत्रम् ( सेरा ) सेः ६-१ ( ङिति । टस्य । स्रो० ) आ १-१ । सांके० ( नामिनो रः ) ऋकारान्ता इति । ऋकारान्तात्परस्य सः आ इत्यादेशः स च आ ङित्संज्ञकः । ङित्त्वाट्टिलोपः । स्वर० । पिता । सूत्रम् (पंचसु) । पंचन् ७-३(नाम्नो नो०) एकपदम् । स्यादिषु पंचसु वचनेषु परेषु ऋकारोऽर् भवति । स्थानशून्याय सेरपि ग्रहणम् । सिविषये तु ( सेरा ) इत्याकारप्राप्तौ ( पंचसु ) इत्यरप्राप्तौ च विशेषत्वान्नित्यत्वाच्च (सेरा ) एव भवति । केचित्तु प्रथमम् ( पंचसु ) इत्यरं विधाय ततो यदादेशस्तद्वद्भवति इति न्यायात् ( सेरा ) इति सः आ कुर्वंति ततष्टिलोपः । स्वर० । पिता । पितृ १-२ । १-३ अनेन अर् । स्वर० ( स्रो० ) शेषं सुगमम् । धौ कृत्यमाह । सूत्रम् । ( धेरर ) धि ६-१ ( ङिति । ङस्य । स्रो० ) अर् १-१ ( हनेपः० ) मध्ये ( नामिनो रः ) ऋकारा० इति धेः अर् आदेशो भवति । स च ङित् । ङित्त्वाट्टिलोपः । स्वर० । शेषं सुगमम् । हे पितः । २-३ ( अस्मा० । सा नः पुंसः । शसि ) तृतीयायां चतुर्थ्यां चकत्वे ( ऋ रम् ) ( हसहे हसः ) स्वर० । हसादावविशेषः ५-१ ।६-१ ( ऋतो ड उः । ङिति टेः ) इति टेर्लोपः । स्व० ( स्रो० ) ६-२ । ७-२ ( ऋ रम् ) स्वर० । ६-३ ( नुडामः । नामि । ष्णर्नो० ) ७-१ । सूत्रम्(टौ)ङि ७-१ ( टेरा० ) टिलोपः । स्वर० । एकपदम् । तेनं अर् । ( स्वर० ) ७-३ ( षिला० ) एवं जामातृभ्रात्रादयः शब्दाः साध्याः । जमाता । जामातरौ । जामातरः । भ्राता । भ्रातरौ । भ्रातरः । देवा । देवरौ । देवरः । इत्यादि । सव्येष्ठा । सव्येष्ठरौ । सव्येष्ठरः । "सव्यष्ठा सूतसारथी" ॥

एवं नृशब्दः । ( सेरा ) ना । नरौ । नरः । हे नः । हे नरौ । हे नरः । नरम् । नरौ । नॄन् । त्रा । नृभ्याम् । नृभिः । त्रे । नृभ्याम् । नृभ्यः । नुः । नृभ्याम् । नृभ्यः । नुः । त्रोः । [नुर्वा नामि दीर्घः]नृशब्दस्य नामि वा दीर्घो भवति।नृणाम्-नृणाम्।नरि। त्रोः । नृषु । कर्तृशब्दस्य पंचसु विशेषः । स्तुरार् ॥ सकारतृप्रत्ययसम्बंधिन ऋकारस्यार् भवति पञ्चसु परेषु । कर्तार् सि इति स्थिते ( यदादेशस्तद्वद्भवति ) (सेरा) ङित्त्वाट्टिलोपः कर्त्ता । कर्त्तारौ । कर्त्तारः । हे कर्त्तः । कर्त्तारम् । कर्त्तारौ । कर्तॄन् । पूर्ववत्प्रक्रिया । एवं :नप्तृहोतृप्रशास्तृपोतृउद्गातृप्रभृतयः ॥

नृशब्दोऽपि पितृशब्दवत् ।:ना । नरौ ।नरः । हे नः । हेनरौ । हे नरः । नरम् । नरौ । नॄन । त्रा । नृभ्याम । नृभिः । त्रे । नृभ्याम् । नृभ्यः । नुः । नृभ्याम् ।

१ अने -८० ग० ।

नृभ्यः । नुः । त्रोः । आमि विशेषमाह । ( नुर्वा० ) इति । नृ ६–१ ( ऋतो ङ उः ) वा ३–१ ( अव्यया० ) मध्ये ( नामिनो रः ) नाम् ७–१ स्वर० । दीर्घ १–१ ( स्रो० ) सिद्धम् । नृशब्दस्य नामि परे दीर्घो वा भवति । नृणाम्–नॄणाम् । नरि । त्रोः । नृषु । इति सिद्धम् । माता ननांदा याता दुहिता स्त्रीलिंगे ज्ञेयाः । डुकृञ् करणे ( तृवुणौ ) इति तृप्रत्यये गुणः । ( रहाद्य० ) स्वर० । कर्तृ । करोतीति कर्ता । कर्तृशब्दस्य पंचसु विशेषस्तमेवाह । सूत्रम् ( स्तुरार् ) स् च तृश्च स्तृ तस्य स्तुः ६–१ ( ऋतो ङ उः ) टिलोपः (स्रो०) आर् १–१(हसे० । नामिनो रः ) सिद्धम् । सकारसंबंधिनः सिसहितस्य ऋकारस्य सकारोपलक्षितस्य ऋकारस्येत्यर्थः । तृप्रत्ययसंबंधिनः इति ( तृवुणौ ) इत्यादिकृत्सूत्रोत्पन्नतृप्रत्ययस्य च ऋकारस्य स्यादिषु पंचसु परेषु आर् भवति । सकारसंबंधी ऋकारः । स्वसृशब्दोऽप्येवम् । तेन प्रियतिसृशब्दादौ आर् न स्यात् । प्रियतिसा । प्रियतिस्रौ प्रियतिस्रः । इत्यादि । अनेन द्वितीयाद्विवचनान्तं यावत् आर् । तत्र प्रथमैकवचने कर्त्तार् स् इति स्थिते । ऋकारासंभवे कथं सेराकारस्तत्राह ( यदा० ) यो यस्यादेशः स तद्वदेव भवतीत्यर्थः । ऋकारस्य आर् आदेशः स ऋकारवत् ज्ञेयः । ततः ( सेरा ) टेर्लोपः सर्वत्र । ( स्वर० ) संबोधने ( स्तुरार् ) ततः ( घेरर ) टिलोपः । स्वर० । ( स्रो० ) हे कर्त्तः । शेषं सुकरम् । शसि ( अम्शसोरस्य । सो नः पुंसः ) शसि ( तृतीयादौ पितृशब्दवत् ) यथा ३–१ ( ऋ रम् ) स्वर० । कर्त्रा । कर्तृभ्याम् । कर्तृभिः । ४–१ (ऋ रम् ) स्वर० । कर्त्रे । कर्तृभ्याम् । कर्तृभ्यः । ५–१ ( ऋतो ङ उः ) स च डित् डित्वाट्टिलोपः । स्वर० । कर्तुः । कर्तृभ्याम् । कर्तृभ्यः । कर्तुः । कर्त्रोः ( ऋ रम् ) स्वर० । कर्तॄणाम् ( नुडामः । नामि ) ७–१ ( ङां ) । स्वर० । कर्तरि । कर्त्रोः ( ऋ रम् ) कर्तृषु ( क्लिा० ) एवं नप्तृनेष्टृत्वष्टृक्षत्तृहोतृप्रशास्तृपोतृप्रभृतयोपि तथा अन्येपि तृप्रत्ययान्ता अवसेयाः । तृप्रत्ययस्यार्थवतो ग्रहणेन नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां ग्रहणं न भवत्यतस्तेषां पृथगुपादानम् । अर्थवतो ग्रहणेनानर्थकस्येति ज्ञापकात् । व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम् । सिद्धे सत्यारंभो नियमायेति ॥

उकारांतस्यापि क्रोष्टुशब्दस्य विशेषः । [ उकारांतस्यापि क्रोष्टुशब्दस्य पंचस्वधिषु तृप्रत्ययांतस्येव रूपं वक्तव्यम् ] क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । अविप्विति विशेषणात् । हे क्रोष्टो । हे क्रोष्टारौ । हे क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । शसि परे तृप्रत्ययान्तवद्भावाभावात् । क्रोष्टून् । [ तृतीयादौ स्वरादौ तृप्रत्ययांतता वा वक्तव्या ] क्रोष्ट्रा-क्रोष्टुना । क्रोष्टुभ्याम् । क्रोष्टुभिः । क्रोष्ट्रे–क्रोष्टवे । क्रोष्टुभ्याम् ।

क्रोष्टुभ्यः । क्रोष्टुः-क्रोष्टोः।क्रोष्ट्वोः। क्रोष्टूनाम् । क्रोष्टरि-क्रोष्टौ। क्रोष्ट्वोः- क्रोष्टोः । [ कृताकृतप्रसंगी यो विधिः स नित्यः ] [ नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् ] इति प्रथमं नुडागमे कृते हसादित्वात्तृवद्भावो नास्ति। क्रोष्टूनाम् । क्रोष्टरि-क्रोष्टौ । क्रोष्ट्वोः- क्रोष्टोः । क्रोष्टुषु ॥

क्रुश् आह्वाने । तुन्प्रत्ययः गुणः(छशषराजादेः षः।ष्टुभिः ष्टुः) क्रोष्टु इति जातम्। उका० । यद्यपि क्रोष्टुशब्द उकारांतस्तथापि तस्य अधिषु धिवर्जितेषु पंचसु वचनेषु तृप्रत्ययांतस्येव रूपं तृप्रत्ययांतत्वं कर्तव्यम् । ततः (स्तुरार्) इति आरादिकमित्यर्थः । ततः पंचसु कर्तृवत् । सौ ( स्तुरार् । सेरा ) धौ तु भानुवत् । द्वित्वबहुत्वयोः कर्तृवत् ( स्तुरार् ) स्वर०।शसि विषये तृप्रत्ययः विद्यतेऽस्येति स तृप्रत्ययवान् तस्य भावः। यद्वा । तृप्रत्ययेन तुल्यं तृप्रत्ययंवत् तस्य भावः तृप्रत्ययवद्भावस्तस्य अभावस्तृप्रत्ययवद्भावाभावस्तस्मात् । क्रोष्टून् । इति भानुवत्साध्यः । तृतीया आदिर्यस्य स तृतीयादिः तस्मिंस्तृतीयादौ किंविशिष्टे तृतीयादौ स्वरादौ तृप्रत्ययांतो वा विकल्पेन भवति । एकत्र पक्षे कर्तृवत् । द्वितीये पक्षे भानुवत् साध्यः । तु तृतीयादौ हसादौ त्वविशेषः । स्वरादौ च तृप्रत्ययांतता । उकारस्य वा ऋकार इत्यर्थः । ऋत्वे कर्तृवत् । उत्वे भानुवत् आमि तु विशेषः । क्रोष्टु आम् इत्यत्र ( नुडामः ) इति नुडागमप्राप्तौ ( तृतीयादौ स्वरादौ वा ) इति तृप्रत्ययांतवद्भावस्य च प्राप्तौ नुडागम एव स्यादित्याह । आमि [illegible] नुडागमे कृते हसादित्वात्तृवद्भावस्तृप्रत्ययांतत्वं नास्ति न भवति । अत्राह परः । ननु यथा उकारांतत्वे क्रोष्टूनामिति रूपस्य सिद्धिर्भवति तथा पूर्वं तृप्रत्ययभावं विधाय पश्चान्नुडागमः क्रियताम् । तत्रोच्यते ( कृता० ) कार्यान्तरे कृतेऽपि अकृतेऽपि प्रसंगः प्रयोगप्राप्तिरस्यास्तीति कृताकृतप्रसंगी एवंभूतो यो विधिः स नित्यः । नित्यानित्ययोर्नित्यो विधिः बलवानिति । एवमभिप्रायः तृप्रत्ययाभावे कृतेऽप्यकृतेऽपि नुडागमो नित्यः स्यादेव तदागमे च हसादित्वं सिद्धमेव । अतः स्वरांतत्वाभावाद्वा तृप्रत्ययांतत्वं न, किंतु क्रोष्टूनामित्येकमेव रूपम् ( नुडामः । नामि ) सप्तम्येकवचने ( तृतीयादौ स्वरादौ वा ) इत्येकत्र तृप्रत्यये कृते ( ङौ ) इत्यर् । ( स्वर० ) क्रोष्टरि । द्वितीयपक्षे उकारांतत्वात् । ( ङेरौ डित् ) टिलोपः । स्वर० । क्रोष्टौ । शेषं सुकरम् । संबोधने अधिष्विति विशेषणात् । ( समानाद्धेर्लोपो० ) धौ हे क्रोष्टो । हे क्रोष्टारौ । हे क्रोष्टारः ॥

१ नित्यश्च अनित्यश्च नित्यानित्यौ तयोः नित्यानित्ययोर्मध्ये यो नित्यो विधिः [illegible] बलवान् । कृताकृतप्रसंगी विधिः कृतेऽपि भवति अकृतेऽपि भवति स नित्यः अतः कारणात् क्रोष्टूनां भवति । २ पञ्चम्-इति पाठः ।

ॠकारान्ता ऌवर्णांता एकारांताश्चाप्रसिद्धाः । ऐकारान्तः पुँल्लिंगः सुरैशब्दः । रै स्भि ॥ रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः । सुराः । स्वरादौ सर्वत्रायादेशः । सुरायौ । सुरायः । हे सुराः । हे सुरायौ । हे सुरायः । सुरायम् । सुरायौ । सुरायः । सुराया । सुराभ्याम् । सुराभिः इत्यादि । एवं रै शब्दः ॥

ॠकारांतानुक्त्वा अन्यानाह । ॠकारांता ऌवर्णांता एकारांताश्च शब्दा अप्रसिद्धा अप्रतीताः क्वचित् प्रयोगे न दृश्यन्ते क्वचित्प्रयोगे दृश्यन्ते(ङे अक्) इत्यादौ। ऐकारांतः सुरैशब्दः। सूत्रम् (रै स्भि) रै ६–१ । सांके० । स् च भ् च स्भ तस्मिन् स्भि । ७–१ । स्वर० । रैशब्दस्य विभक्तिसंबंधिनि सकारे भकारे च परे आकारो भवति। षष्ठीनिर्दिष्टस्येति अंतस्य ।१–१(स्रो०)सुष्ठु शोभनो राः द्रव्यं यस्येति सुराः। स्वरादौ तु ( ऐ आय् ) स्वर०। समानाभावात् ( अम्शसोरस्य । सो नः पुंसः ) नुडागमश्च भवति ॥

ओकारांतः पुँल्लिंगो गोशब्दः । ओरौ ॥ ओकारस्यौकारादेशो भवति पंचसु परेषु । गौः । गावौ । गावः । हे गौः । हे गावौ । हे गावः । आम्शसि ॥ ओकारस्यात्वं भवति अमि शसि च परे । गाम् । गावौ । गाः । गवा । गोभ्याम् । गोभिः । गवे गोभ्याम्। गोभ्यः । (ङस्य)इत्यकारलोपः । गोः। गोभ्याम् । गोभ्यः । गोः । गवोः । गवाम् ।[ श्रुतौ गोरामः ] श्रुतौ गोशब्दात्परस्यामो नुडागमो भवति । गोनाम् । गवि । गवोः । गोषु । एवं सुद्योशब्दः । औकारांतः पुँल्लिंगो ग्लौशब्दस्यस्य हलादावविशेषः स्वरादावावादेशः । ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । ग्लावा । ग्लौभ्यामित्यादि ॥ ॥ इति स्वरान्ताः पुँल्लिंगाः ॥

ओकारांतः पुँल्लिंगो गोशब्दः दशार्थवाचकः । यतः "दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशधा मतः" ॥ १ ॥ दशस्वर्थेषु गोशब्दः पुंस्त्रीलिंगे ज्ञेय इति हेमाचार्या आहुः। व्याडिरप्येवमेवाह । गौडस्तु "स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान् । स्त्री सौरभेय्यां दिग्बाणदृग्वाग्भूम्यप्सु भूम्नि"

१ ( गोर्नुट् छन्दसि ) इति केषांचिन्मते सूत्रम्।

च ॥" इति विशेषमाह । गम्लृ गतौ । गम् । गच्छतीति गौः वृषभः । गमेर्डो-प्रत्ययः। डित्वाट्टिलोपः। स्वर०।गो इति जातम्। गोशब्दस्य पंचसु विशेषः।सूत्रम्। (ओरौ) ओ ६-१ (ङस्य) इत्यकारलोपः (स्लो०) औ १-१ । सांके० । (नामिनो रः) ओकारांतशब्दसंबंधिनि ओकारस्य औकारादेशो भवति पंचसु परेषु । अम् विषये तु (आम्शसि) इति विशेषकथनात् अम्वर्जितेषु पंचसु द्वितीयाद्वित्वं याव-दौकारः १-१ (स्लो०)१-२(औ आव्) स्वर० । आमि तु विशेषः।सूत्रम्(आम्शा०) आ १-१ । सांके० । अम् च शस् च अम्शस् तस्मिन् ७-१ स्वर० । (सवर्णे०) ओकारस्यामि शसि च परे आकारो भवति (सवर्णे०) द्वित्वे (औ आव्) बहुत्वे आकारे कृते । (सवर्णे० । स्लो०)यदादेशस्तद्वद्भवतीति ओकारस्यासमानत्वान्न (सो नः पुंसः) इति शसो नकारः । टादौ स्वरादौ (ओ अव्) हसादावविशेषः । पंच-मीषष्ठ्येकवचने (ङस्य) इति सूत्रेण अकारलोपः (स्लो०) केचित्तु आमि (ऋगन्ते गोराम्) इति सूत्रान्तरेण नुडागममप्याहुः । छंदसि । गोनाम् । गवाम् । शेषं सुग-मम् । एवं द्योशब्दः। स्त्रीलिंगे तु गौणत्वे सुद्योशब्दः सुष्ठु शोभना द्यौः स्वर्गो यस्य स सुद्यौः इन्द्रः (ओरौ) सुद्यौः । सुद्यावौ । सुद्यावः । सुद्याम् । सुद्यावौ । सुद्याः । सुद्यवा । सुद्युभ्याम् । सुद्युभिरित्यादि । हे सुद्यौः । इत्यादि । औकारांतः पुंल्लिंगो ग्लौशब्दः चंद्रार्थः । ग्लै हर्षक्षये । ग्लायति कृष्णपक्षे इति ग्लौः । औणादिको डौ प्रत्ययः (डिति टेः) स्वर० । ग्लौ इति जातम् । तस्य हसादौ अविशेषः । स्वरादौ तु सर्वत्र (औ आव्) ग्लौः । ग्लावौ । ग्लावः ॥

इति स्वरांतपुँल्लिंगसाधनम् ॥

## अथ स्वरान्ताः स्त्रीलिंगाः ७.

अथ स्वरांताः स्त्रीलिंगाः प्रदर्श्यन्ते । तत्र आकारांतो गंगाशब्दः । **आवतः स्त्रियाम्** ॥अकारान्तात्स्त्रियां वर्तमानादाप्प्रत्ययो भवति। तस्य नामसंज्ञायां स्यादयः । प्रथमैकवचने सि । **आपः** ॥ आवं-तात्परस्य सेर्लोपो भवति । गंगा ।**औरी** ॥ आवन्तात्पर औ ईकार-मापद्यते । गंगे । गंगाः । **धिरे**॥आवंतात्परोधिरेर्भवति । हे गंगे। हे गंगे । हे गंगाः । [ अंबादीनां धौ ह्रस्वः ] आवंतानां अंबा-दीनां धौ परे ह्रस्वो भवति । हे अंब ।हे अक्क ।हे अल्ल ॥[असंयुक्ता-नां डलकवतीनां प्रतिषेधो वाच्यः ] हे अंबाले । हे अंबाडे ।

१ द्वितीयाद्विवचनम्-इति पाठः । २ तत्राबन्त इति पाठः । अग्रेऽत्र "आवतः स्त्रियाम्" इति सूत्र पूर्वमेव इत्य दृश्यते । ३ ईकारो भवति इति पाठः ।

हे अंबिके । इत्यादौ ह्रस्वो न भवति । गंगाम् । गंगे । गंगाः । पुंस इति विशेषणात्स्त्रियां शसि सकारस्य नकारो न भवति । टौसोरे ॥ आबंतस्य टौसोः परयोरेत्वं भवति । अयादेशः । गंगया । गंगाभ्याम् । गंगाभिः । ङितां यट् ॥ आबंतात्परेषां ङे ङसि ङस् ङि इत्येतेषां यडागमो भवति । टकारः स्थाननियमार्थः । गंगायै । गंगाभ्याम् । गंगाभ्यः । गंगायाः । गंगाभ्याम् । गंगाभ्यः । गंगायाः। गंगयोः । [आबन्तादीबन्तादामो नुड्वक्तव्यः] गंगानाम् । आम्ङेः ॥ आबन्तात्परस्य ङेरामादेशो भवति । इत्याम् । गंगायाम् । गंगयोः । गंगासु । एवं श्रद्धाखट्वामेधामालामहिलाशालादोलाप्रभृतयः ॥

अथ स्वरांतस्त्रीलिंगसाधनमुच्यते ॥ अकारांतः शब्दः स्त्रीलिंगे नास्ति । तत्राऽऽबंतो गंगाशब्दः । १–१ सूत्रम् । ( आपः ) आप् ५–१ । स्वर० (स्त्रो०) (आबतः स्त्रियाम् ) इति सूत्रेण यः आप्प्रत्ययः कृतस्तदंताच्छब्दात्परस्य सेर्लोपो भवति । अनेन सिलोपः द्वित्वे । सूत्रम् । (औरी) औ१–१।ई१–१सांकेतिकम् । आबंतादिति वृत्तिः कण्ठ्या न वरम् । औकार ईत्वम् आपद्यते प्राप्नोति । अनेन औस्थाने ई ( अ इ ए ) बहुत्वे ( सवर्णे० । स्त्रो० ) धौ तु । सूत्रम् ( धिरी ) धि १–१ ( स्त्रो० ) ई १–१ ( स्त्रो० । नामिनो० ) ( धिरी ) इति दीर्घमीकारं पठंति तत्नमीचीनम् । यतः ( औ ) इत्यस्मिन्सूत्रे दीर्घकारानुवृत्तिं गृह्णंति । ततो जरसीति रूपं साधयंति। आबंता० । अनेन धिस्थाने इः ( अ इ ए ) अंबादीनां धिविषये विशेषमाह । अंबादीनां धौ ह्रस्वो भवति । ततः(समानाद्धेर्लो०) हे अंब । हे अंबे । हे अंबाः।एवम् । हे अक्क । हे अल्ल । हे अत्त । एते त्रयः एकार्थाः । गृहमध्यस्थवृद्धस्त्रीवाचकाः । अंबादीनां शब्दानां द्विस्वराणामेव धौ ह्रस्वता । अत एव ( असंयुक्तानां डलकवतीनां प्रतिषेधो वाच्यः ) इति वार्तिकम् । तेन हे अंबाडे । हे अंबाले । हे अंबिके । इत्यादौ न ह्रस्वः । द्वितीयैकवचने ( अम्शा० ) द्वित्वे प्रथमावत् । शसि ( अम्शा० । स्त्रो० ) पुँल्लिगाभावात् । ( सो नः पुंसः ) इति न भवति । ३–१ सूत्रम् । (टौसोरे) टा च ओस् च टौसौ तयोः टौसोः ७–२ । स्व० ( स्त्रो० ) ए १–१ । सांके० ( नामिनो० ) सिद्धं द्विपदं सूत्रम् । आप्प्रत्ययांतस्य टा इति तृतीयैकवचने ओस् इति षष्ठीसप्तमीद्विवचने परे ए भवति । षष्ठीनिर्दिष्टस्येति अंतस्य । अनेन ( ए अय्) स्वर० । हसादौ तु अविशेषः ४–१ सूत्रम् ( ङितां य० ) ङ् इत् येषां ते ङितः तेषां ङिताम् ६–३ । स्वर० ( मोनु० ) यट् १–१ । ( हसे० ) द्विपदम् । आबं० ।

आप्प्रत्ययांताच्छब्दात् परेषाम् अग्रे वर्तमानानां ङितां ङे ङसि ङस् ङि इत्येतेषां वचनानां यट् आगमो भवति सस्वर एव । टित्वादादौ । अनेन यडागमः सस्वर एवेति । टित्वात् यट् आदौ ( ए ऐ ऐ ) पंचमीषष्ठ्येकवचने यडागमे कृते ( सवर्णे० । स्रो० ) ६-२ ( टौसोरे । ए अय् ) स्वर० ( स्रो० ) बहुत्वे नुडागमः ( स्वर० ) ७-१ ( आम्ङेः ) ततो यदादेशस्तद्वद्भवतीति न्यायात् यडागमः । स्व० । शेषं सुकरम् । एवं श्रद्धादयोपि ज्ञेयाः ॥

आबन्तः सर्वाशब्दः । सर्वा । सर्वे । सर्वाः । हे सर्वे । हे सर्वे । हे सर्वाः । सर्वाम् । सर्वे । सर्वाः । सर्वया । सर्वाभ्याम् । सर्वाभिः । सर्वादीनां तु ङित्सु विशेषः । **यटोऽच्च** ॥ आबंतात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारो भवति । सर्वस्यै । सर्वाभ्याम् । सर्वाभ्यः । सर्वस्याः । सर्वाभ्याम् । सर्वाभ्यः । सर्वस्याः । सर्वयोः । सर्वासाम् । सर्वस्याम् । सर्वयोः । सर्वासु ॥

आबंतः सर्वाशब्दः । तस्य तृतीयां यावत् गंगाशब्दवत् । सर्वा । सर्वे । सर्वाः । सर्वाम् । सर्वे । सर्वाः । सर्वया । सर्वाभ्याम् । सर्वाभिः । ङित्सु द्विवचनेषु विशेषः ( ङितां यट् ) इति यडागमे कृते । सूत्रम् । ( यटो० ) यट् ६-१ । स्वर० ( स्रो० ) अत् १-१ ( हसे० । अतोऽत्युः । उ ओ । एदोतोऽतः ) च १-१ ( अव्य० । स्तोः श्चु० ) त्रिपदम् । आबंतात् अनेन यटः सुडागमः । टित्वादादौ । पूर्वस्य चापः आप्प्रत्ययाकारस्य अकारो भवति ।४-१ । स्वर० ( ए ऐ ऐ ) सर्वस्यै ।५-१ । ६-१ ( ङितां० ) ( यटोच्च ) आकारस्य अकारः । स्वर० ( सवर्णे० । स्रो० ) ७-१ ( आम्ङे. ) आमि कृते ( ङितां यट् । यटोच्च ) स्वर० ( सवर्णे० ) ६-२ । ७-२ ओसि ( टौसोरे । ए अय् ) स्वर० । ( स्रो० ) ६-३ ( सुडामः ) स्वर० । संबोधने तु गंगावत् । एवमाबंताः सर्वादयोऽन्येपि विश्वादयः । विश्वा अन्या अन्यतरा इतरा कतरा कतमा समा सिमा नेमा एका पूर्वा परा दक्षिणा उत्तरा अपरा अधरा स्वा अंतरा । उभयशब्दस्य तु ईप्रत्ययः । उभयी । उभय्यौ । उभय्यः । नदीशब्दवत् । द्वितीयातृतीयाशब्दयोर्ङित्सु वा सर्वादित्वम् ४-१ । द्वितीयस्यै-द्वितीयायै । ५-१ । ६-१ द्वितीयस्याः-द्वितीयायाः । ७-१ द्वितीयस्याम्-द्वितीयायाम । द्विशब्दस्य तु त्यदादेष्टेरित्यकारे कृते ( आबन्तः स्त्रियाम् ) ततो गंगाशब्दद्विवचनवत्साध्यः । द्वे । द्वे । द्वाभ्याम । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । एवम् । उभे । उभे ॥

आकारांतो जराशब्दः । [ जरायाः स्वरादौ जरस् वा वक्तव्यः ]

जरा । जरसौ-जरे । जरसः-जराः।हे जरे।हे जरसौ-हे जरे।हे जरसः-हे जराः। जरसम्-जराम्। जरसौ—जरे। जरसः- जराः। जरसा—जरया जराभ्याम् । जराभिः । जरसे-जरायै । जराभ्याम् । जराभ्यः । जरसः-जरायाः। जराभ्याम्। जराभ्यः। जरसः-जरायाः। जरसोः-जरयोः।जरसाम्-जराणाम्।जरसि-जरायाम्।जरसोः-जरयोः। जरासु ॥

आवंतस्यापि जराशब्दस्य विशेषः । [ जरायाः० ] इति । जराशब्दस्य स्वरादौ विभक्तौ जरस् वा वक्तव्यः। स्वरे परे विकल्पेन जरस् आदेशः कर्तव्यः। (गुरुः ङिच्च सर्वस्य वक्तव्यः ) साधनम् । स्वरादौ एकस्मिन्पक्षे गंगावत्। द्वितियपक्षे जरसआदेशे कृते । स्वर० । शेषं सुगमम् । जरा । जरसौ-जरे । जरसः—जराः । इत्यादि । सोमपाक्षीरपादयस्तु आप्प्रत्ययांता न किंतु आकारांताः क्विबंताः। अतस्तेषां साधना रूपाणि च पुंल्लिंगवत् ॥

इकारान्तस्य स्त्रीलिंगस्य बुद्धिशब्दस्य प्रथमाद्वितीययोर्हरिवत्प्रक्रिया । बुद्धिः । बुद्धी । बुद्धयः । हे बुद्धे । हे बुद्धी। हे बुद्धयः।बुद्धिम्। बुद्धी।बुद्धीः। स्त्रीत्वाच्छसो नत्वाभावः। बुद्ध्या।बुद्धिभ्याम्।बुद्धिभिः। इदुद्भ्याम्॥ स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वा अडागमो भवति। बुद्ध्यै—बुद्धये। बुद्धिभ्याम्। बुद्धिभ्यः । बुद्ध्याः। बुद्धेः । बुद्धिभ्याम् । बुद्धिभ्यः । बुद्ध्याः-बुद्धेः। बुद्ध्योः। बुद्धीनाम् । स्त्रियां योः ॥ इश्च उश्च युः-तस्मादिवर्णांतादुवर्णांताच्च स्त्रियां वर्त्तमानात्परस्य ङेराम् भवति । बुद्ध्याम् । अडागमाभावे आमोऽप्यभावः । बुद्धौ। बुद्ध्योः । बुद्धिषु । एवं मतिभूतिधृतिरुचिकृतिसिद्धिशांतिभ्रांतिआलिशक्ति—प्रभृतयः ॥

इकारांतो बुद्धिशब्दस्तस्य द्वितियाद्विवचनं यावत् हरिशब्दवत्प्रक्रिया ( औ यू । ए ओ जसि ) इत्यादि । शसि ( अम्शः० । शसि ) इति दीर्घः । ( स्नो० ) स्त्रीलिंगत्वान्नत्वाभावः ( सो नः पुंसः ) इति सूत्रेण नकारो न । तृतीयैकवचने अस्त्रियामिति कथनात् ( टा नाऽस्त्रियाम् )इत्यस्य प्रतिषेधः । किन्तु ( इ यं स्वरे ) स्वर० ।

१ वचनादिति पाठः ।

ङित्सु रूपद्वयम् । एकत्र हरिवत् ( ङिति । ङस्य । ङेरौ ङित् ) इत्यादिसूत्राणि । अन्यत्र सूत्रम् ( इदुद्भ्याम् ) इच्च उच्च इदुतौ ताभ्याम् इदुद्भ्याम् ५–२ । सिद्धमेकपदम् । स्त्रियाम् । अत्र नित्य स्त्रिया वर्तमानाभ्यामिकाराकाराभ्यामिति व्याख्येयम् । तेन शुचिशब्दोऽनियतलिंगोऽतो हरिवत् ज्ञेयः न तु विकल्पः । अनेन ४–१ । ५–१ । ६–१ । ७–१ । वा अडागम. । टित्वादादौ ( इ यं० ) ४–१ ( ए ऐ ऐ ) ५–१ । ६–१ । ( इ यं० ) स्वर० (सवर्णं०) (स्रो०) पक्षे हरिवत् । ७–१ सूत्रम् । ( स्त्रिया यो. ) स्त्रो ७–१ ( स्त्रिया यो. । स्त्रीभ्रुवो. ) स्वर० । इश्च उश्च युस्तस्मात् यो. ५–१(ङिति । टस्य । स्रोः० ) द्विपदम् । स्त्रीलिंगे वर्तमानात् इवर्णांतात् उवर्णांताच्च शब्दात्परस्य ट. आम् आदेशो भवति। वाग्रहणान्नदीवधूजंब्वादीनामपि ङेराम् । अदसादइचर्यात् यस्मिन्पक्षे अडागमस्तत्रैव ङेः आम् भवति । अत एवाग्रे वक्ष्यति अडागमाभावे आमोऽप्यभाव. इति। अनेन ङे. आम् ( इदुद्भ्याम् ) इति वा अडागम. ( इ य० ) स्वर० ( सवर्णं० ) ७–३ ( विला० ) शेषं सुगमम् । सबोधने हरिवत् ( समानाद्देर्लोपोऽधातो. । धौ ) एव मतिभूतिधृतिरुचिऋद्धिवृद्धिसिद्धिख्यातिज्ञातिक्षातिनाभिप्रभृतयोऽपि इकारांता शब्दा एतैरेव सूत्रै. सिध्यति ॥

एवं धेनुरज्जुप्रभृतयोऽप्युकारांता एतैरेव सूत्रैः सिध्यति । धेनुः । धेनू । धेनवः । हे धेनो । धेनुम् । धेनू । धेनूः । धेन्वा । धेनुभ्याम् । धेनुभि । धेन्वै धेनवे । धेनुभ्याम् । धेनुभ्यः । धेन्वाः—धेनोः । धेनुभ्याम् । धेनुभ्यः । धेन्वाः—धेनोः । धेन्वोः । धेनूनाम् । धेन्वाम्—धेनौ । धेन्वोः । धेनुषु ॥

एवमुकारांता धेनुरज्जुतनुचंचुप्रभृतयोऽपि ज्ञेया ॥

ईकारांतः स्त्रीलिंगो नदीशब्दः । हमेपः सेर्लोपः॥हमांतादीमंताच्च परस्य सेर्लोपो भवति । नदी । नद्यौ । नद्यः । धौ ह्रस्वः ॥ ईवर्णोवर्णयोरधातोः स्त्रियां धौ परे ह्रस्वो भवति । हे नदि । हे नद्यौ । हे नद्यः । नदीम् । नद्यौ । नदीः । नद्या । नदीभ्याम् । नदीभिः । टिनामट् ॥स्त्रियामीकारांतादूकारांताच्च ङितां वचनानामडागमो भवति । नद्यै । नदीभ्याम् । नदीभ्यः । नद्याः ।

१ ना... [illegible] पाठ ।

नदीभ्याम् । नदीभ्यः । नद्याः । नद्योः । नदीनाम् । नद्याम् ।नद्योः।
नदीषु । एवं गौरीसरस्वतीब्रह्माणीकुमारीकिशोरीकलभीप्रभृतयः ॥

ईकारांतो नदीशब्दः। सूत्रम् । (हसेपः०) हसश्च ईप् च हसेप् तस्मात् हसेपः ५–१। स्वर० । (स्रो०) सि ६–१ (ङिति । ङस्य । स्रो०) लोपः १–१ (स्रो० । नामिनो०) जल्तुं० । त्रिपदम् । हसांतात् व्यंजनांताच्छब्दात्परस्य ईप्प्रत्ययांताच्च शब्दात्परस्य सेर्लोपो भवति । हसांतात्तु अग्रे हसांतपुंल्लिंगे भविष्यति । अत्र तु ईबंतात् । नदी १–१ ( सि ) अनेन सिलोपः । द्वित्वबहुत्वयोः ( इ यं स्वरे ) स्वर० । धौ तु । सूत्रम् । (धौ ह्र०) धि ७–१ । (टौ डित्) टेर्लोपः । स्वर० । ह्रस्वः १–१ (स्रो०) द्विपदम् । इवर्णोवर्णयोः । अधातोरिति धातुरज्ञशब्दस्य अकिंचनस्येत्यर्थः । अत्र धानियुवंताः ईकारोकारांता नित्यस्त्रीलिंगाः शब्दाः स्त्रीशब्दश्च एतत्संबंधिनोरेव इवर्णोवर्णयोरिति व्याख्येयम् । आनयुरता । इति किम् । हे श्रीः । हे भ्रूः । हे भूः । शेषं कंठ्यम् । अत्र वर्णग्रहण ह्रस्वे कृते ( धौ ) इति सूत्रस्य प्राप्तिनिषेधार्थम् । अनेन ह्रस्वः ( समानाद्वेर्लोपः० ) हे नदि । हे नद्यौ । हे नद्यः । २–१ अमि (अम्शसो०) नदीम् । २–२ ( इ यं० ) स्वर० ।नद्यौ । २–३ शसि ( अम्श० । स्रो० ) नदीः । ३–१ टा ( इ यं० ) स्वर० । ४–१ सूत्रम् ( ङितामट् ) ङ इत् येषां ते ङितस्तेषां ङिताम् । ६–३ ।स्वर० । अट् । १–१ (हसे०) द्विपदम् । स्त्रियामिति नित्यं स्त्रीलिंगे वर्तमानाभ्याम् ईकारोकाराभ्यां परेषां ङितां ङे ङसि ङस् ङि इत्येतेषाम् अडागमो भवति । अनेन अडागमः (इ यं स्वरे। ए ऐ ऐ) ५–१। ६–१ । अडागमः (इ यं स्वरे) स्वर० । (सवर्णे० । स्रो०) ६–२ । ७–२ ( इ यं स्वरे ) स्वर०। ६–३ ( नुडामः । ) स्वर० । ६–१ ( त्रिषां योः । ङितामट् । इ यं० ) ७–३ ( ङिरामः सः० ) एवं नदीशब्दवत् गौरीसरस्वतीब्रह्माणीकुमारीनारीशार्ङ्गीभृंगीप्रभृतयः एतैरेव सूत्रैः साध्याः ॥

लक्ष्मीशब्दस्य ईबंतत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः । लक्ष्म्यौ । लक्ष्म्यः । हे लक्ष्मि । शेषं नदीवत् । स्त्रीशब्दस्य ईबंतत्वात्सिलोपो अस्ति । स्त्री । स्त्रीभ्रुवोः ॥ स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः । स्त्रियौ । स्त्रियः । हे स्त्रि । वाम्शसि ॥ स्त्रीशब्दस्य अमि शसि च परे वा इय् भवति । स्त्रियम्–स्त्रीम् । स्त्रियौ । स्त्रियः–स्त्रीः । स्त्रिया । स्त्रीभ्याम् । स्त्रीभिः । स्त्रियै । स्त्रीभ्याम् । स्त्रीभ्यः । स्त्रियाः । स्त्रीभ्याम् । स्त्रीभ्यः। स्त्रियाः । स्त्रियोः। स्त्रीणाम्। स्त्रियाम् । स्त्रियोः । स्त्रीषु ॥[1]

---

[1] [illegible]

ईकारांतो लक्ष्मीशब्दस्तस्य ईवंतत्वाभावात् ईप्रत्ययांतत्वाभावात (हसेपः सेर्लोपः) इति सेर्लोपो नास्ति न भवति । यतः ( लक्षेरी मुट् च ) इति सूत्रेण ईकारांतत्वात् । ततः १-१ ( स्रो० ) लक्ष्मीः । लक्ष्म्यौ । लक्ष्म्यः ।( इ यं स्वरे) स्वर०(स्रोर्वि० )। संबोधने हे लक्ष्मि । ( धौ ह्रस्वः । समानाद्धे०) चतुर्थ्यादौ ( ङिताम‍ट् ) सप्तम्याम् । ( स्त्रियां योः ) इत्यादि । शेषं नदीतुल्यम् । यतः । " अवीलक्ष्मीतरीतंत्रीतंद्रीधीह्री- श्रियां पुरः। भीशब्दाच्च न सेर्लोपः स्त्रीलिंगे स्यात्कदाचन " ॥ अवीः ऋतुमती स्त्री। लक्ष्मीः प्रसिद्धा । तरीर्नौः । तंत्रीः वीणा । तंद्रीः निद्रा । धीः बुद्धिः । ह्रीः लज्जा। श्रीः लक्ष्मीः। भीर्भयम्। स्त्रीशब्दस्य ईवंतत्वात् ईप्रत्ययांतत्वात् सेर्लोपोऽस्ति हसेपः सेर्लोपो भवति । ष्ट्यै धातुः स्त्यै धातुश्च शब्दसंघातयोः ( स्त्यायतेः स्त्रीत्वे ड्रट् ) इति रप्रत्ययः । डित्त्वाट्टिलोपः ( संयोगांतस्य ) इति यकारलोपः । स्वर० । ततः टित्वात् ( ट्रितः ) इतीप् १-१( हसेपः०) द्वित्वे । स्त्रीशब्दस्य भ्रूशब्दस्य च अकिं- वंतत्वेन अधातुत्वात् (य्वोर्धातोः०) इति इय् न स्यात्। तेन सूत्रांतरमाह (स्त्रीभ्रुवोः) स्त्री च भ्रूश्च स्त्रीभ्रुवौ तयोः स्त्रीभ्रुवोः ६-२ । स्वर० । स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः । स्त्रीशब्दस्य इय् भ्रूशब्दस्य उव् । अनेन इय् । षष्ठीनिर्दिष्टस्येत्यं- तस्य इय् । स्वर० । बहुत्वेऽप्येवम् २-१ । सूत्रम् ( वाम्शसि ) वा ३-१ ( अव्य०) अम् च शस् च अम्शस् तस्मिन् अम्शसि ७-१ । स्वर० ( सवर्णे० ) द्विपदम् । आमि शसि च परे वा विकल्पेन इयुवौ भवतः । अत्र स्त्रीशब्द एव संभाव्यते भ्रूश- ब्दस्य भ्रू इति रूपस्यादृश्यमानत्वात् । उवग्रहणं तु संबंधैक्यात्। अनेन एकत्र इय् । स्वर० । अन्यत्र ( अम्शसोरस्य ) स्त्रियम्-स्त्रीम् । द्वित्वे प्रथमाद्वित्ववत् । स्त्रियौ । शसि परे ( वाम्शसि ) स्वर० ।( स्रो० ) अन्यत्र (अम्शसो०) स्त्रियः-स्त्रीः । ३-१ ( स्त्रीभ्रुवोः ) स्वर० । स्त्रिया । स्त्रीभ्याम्। स्त्रीभिः। शेषं चतुर्थ्यादौ नदीवत्। अस्या- यमर्थः । ङेङसिङस्ङिषु ङिताम‍ट् कृत्वा इय् कर्तव्य इत्यर्थः। स्त्री ४-१ ङे (ङिता- मट् । स्त्रीभ्रुवोः ) स्वर० ( ए ऐ ऐ ) स्त्रियै । स्त्रीभ्याम् । स्त्रीभ्यः । स्त्री ५-१ ङसि ( ङिताम‍ट् । स्त्रीभ्रुवोः ) स्वर०( सवर्णे०। स्रो० ) स्त्रियाः । स्त्रीभ्याम्। स्त्रीभ्यः। स्त्री ६-१ ङस् ( ङिताम‍ट् स्त्रीभ्रुवोः )स्वर० (सवर्णे० । स्रो०)स्त्रियाः । स्त्री ६-२ ओस् (स्त्रीभ्रुवोः ) स्वर० (स्रो०) स्त्रियोः ।स्त्री ६-३ आम्( नुडामः । ष्रुर्णो०) स्वर० । स्त्रीणाम् । स्त्रीणाम् अत्र (स्त्रीभ्रुवोः । नुडामः) इत्युभयोः प्राप्तौ विशेषत्वात् ( नुडामः ) इति नुडागम एव भवति । स्त्री ७-१ ङि ( ङिताम‍ट् । स्त्रियां योः ) इत्याम् ( स्त्रीभ्रुवोः ) स्वर० ( सवर्णे० ) स्त्रियाम् । स्त्री ७-२ । ओस् ( स्त्रीभ्रुवोः ) स्वर० ( स्त्रियां योः ) स्त्रियोः । स्त्री ७-३ सुप् ( किलात्पः० ) स्त्रीषु । हे स्त्रि । ( धौ ह्रस्वः । समानाद्धे० ) हे स्त्रियौ । हे स्त्रियः ॥

श्रीशब्दस्य भेदः । ईकारान्तः श्रीशब्दः।श्रयन्ते जना यामिति श्रीः। श्रीः।श्रियौ।श्रियः।श्रियम् । श्रियौ । श्रियः।श्रिया । श्रीभ्याम्। श्रीभिः।

वेयुवः ॥ इयुवंतात् स्त्रियां वर्तमानाद्वा ङितां वचनानामडागमो भवति । स्त्रियास्तु नित्यम् । श्रियै-श्रिये । श्रीभ्याम् । श्रीभ्यः । श्रियाः--श्रियः । श्रीभ्याम् । श्रीभ्यः । श्रियाः-श्रियः । श्रियोः । [ श्र्यादीनां वामो नुट् वक्तव्यः ] श्रियाम्-श्रीणाम् । श्रियाम्-श्रियि । ङौ परे अडागमाभावे आमोऽप्यभावः । श्रियोः । श्रीषु । एवं ह्रीधीप्रभृतयोऽप्यनीवंताः । एवं भ्रूशब्दो भूशब्दश्च । वधूकरभो-रूकुरूकच्छूकंडूजंब्वादीनां तु नदीशब्दवद्रूपं ज्ञेयम् । वधूः । वध्वौ । वध्वः । हे वधु । इत्यादि ॥

अथ श्रीशब्दः । श्री १०१ सु ( स्तो० ) श्रीः । श्री १-२ औ ( य्वोर्धातोः० ) स्वर० । श्रियौ । श्रियः । २-१ अम् ( य्वोर्धातोः० ) स्वर० । श्रियम् । श्रियौ । श्रियः । श्रिया । श्रीभ्याम् । श्रीभिः । चतुर्थ्यादौ श्रीशब्दस्य विशेषमाह । सूत्रम् । ( वेयुवः ) वा ३-१ ( अव्य० ) इय् च उव् च इयुव् तस्मात् इयुवः ५-१ । स्वर० । मध्ये ( अ इ ए ) नित्यं स्त्रियां वर्त्तमानात् इयंतात् उवन्ताच्च शब्दात्परेषां ङितां वचनानां विकल्पेन अडागमः स्यात् न तु स्त्रीशब्दस्य । यतः कालापके स्त्री नदीवत् । तथा च हैमे ( वेयुवोः अस्त्रियाम् ) इति पूर्वम् ( य्वोर्धातोः० । वेयुवः ) इति अनेन एकत्र अडागमः ( य्वोर्धातोः० ) स्वर० ( ए ऐ ऐ ) अन्यत्र ( य्वोर्धातोः० ) स्वर० । ५-१ । ६-१ पूर्वम् ( य्वोर्धातोः० ) एकत्र ( वेयुवः ) इति अडागमः ( य्वोर्धातोः० ) स्वर० ( सवर्णे० । स्तो० ) पक्षे । ५-१ । ६-१ ( य्वोर्धातोः० ) स्वर० ( स्तो० ) ६-२ । ७-२ । ( य्वोर्धातोः० ) इत्यनेन इय् । स्वर० (स्तो०) श्र्यादीनां श्रीधीभीप्रभृतीनामामः षष्ठीबहुवचनस्य वा नुट् वक्तव्यः । अनेन नुट् आगमः ( रूऋर्णो० ) स्वर० । श्रीणाम् । अन्यत्र इय् । स्वर० । श्रियाम् । ७-१ रूपद्वयम् । एकत्र ( स्त्रियां योः ) इति टेः आम् ( य्वोर्धातोः० ) इति इय् । यदादेशस्तद्वद्भवतीति ( वेयुवः ) इत्यडागमः । स्वर० ( सवर्णे० ) अन्यत्र ( य्वोर्धातोः० ) स्वर० । श्रियाम्-श्रियि । ननु अडागमस्य अभावेपि टेः आम् कथं न भवतीत्याह । अडागमाभावे आमोऽप्यभावः । यत्र प्रयोगे अडागमो न भवति तत्र आमपि न भवति टेः आम् न भवतीत्यर्थः । शेषं सुगमम् । धीः । धातुत्वा-द्वेर्लोपो न ह्रस्वता च न । किंतु ( स्तो० ) हे श्रीः । द्वित्वे बहुत्वे ( य्वोर्धातोः० ) इति इय् । हे श्रियौ । हे श्रियः । एवं धीह्रीभीप्रभृतयोऽपि स्त्रीलिंगाः अनीवंताः

१ पटान्तर १०पा० ।

ईप्रत्ययरहिताः शब्दाः साध्याः । सुधीसुश्रीसेनानीग्रामण्यादयः पुंल्लिगवत् । ( वेयुवः ) इत्यत्र नित्यं स्त्रियामित्युक्तत्वात् । स्त्रीवाचकत्वेपि सुश्रिये सुधिये इत्यादौ न विकल्पः । एवमकारान्तो भूशब्दः । भूः । १-१ ( स्रो० ) १-२ ( य्वोर्धातो० ) भुवौ । भुवः । २-१ ( य्वोर्धातो ० ) भुवम् । भुवौ । भुवः । भुवा । भूभ्याम् । भूभिः । भुवै-भुवेभूभ्याम् । भूभ्यः भुवाः-भुवः । भ्रूशब्दस्य तु भ्रमचलन औणादिको डूप्रत्ययः । डकारष्टिलोपार्थः।भ्रमति चलतीति भ्रूः इति (अकिवंतत्वात् अधातुत्वाच्च ( य्वोर्धातोरियुवौ स्वरे ) इति न भवति । किंतु( स्त्रीभ्रुवोः ) इति सूत्रेण उवादेशः । भ्रूः । भ्रुवौ । भ्रुवः । भ्रुवम् । भ्रुवौ । भ्रुवः । भ्रुवा । भ्रूभ्याम् । भ्रूभिः । ( वेयुवः । स्त्रीभ्रुवोः ) भ्रुवै-भ्रुवे । भ्रूभ्याम् । भ्रूभ्यः । भ्रुवाः-भ्रुवः । भ्रूभ्याम् । भ्रूभ्यः । भ्रुवाः-भ्रुवः । भ्रुवोः । भ्रुवाम्-भ्रूणाम् । सप्तम्येकवचने भ्रुवाम् । इति रूपसिद्धौ ( स्त्रीभ्रुवोः । वेयुवः । स्त्रिया ङोः ) भ्रुवि इति सिद्धम् । भ्रुवोः । भ्रूषु । इयुवंतत्वाद्धौ न ह्रस्वता । हे भ्रूः । यद्वा । धौ परे तु सुभ्रूशब्दः स्त्रीवदिति केचित् । तेन ह्रस्वः । हे सुभ्रूः। सुभ्रूशब्दस्य धौ वा ह्रस्वता तेन हे सुभ्रु इत्यपि । वधूजंबूश्वश्रूशब्दादीना नदीशब्दवत्प्रक्रिया । पर सिविषये ( स्रो० ) वधूः । वध्वौ ( उ वम् ) वध्वः । वधूम् ( अम्शसोः० ) वध्वौ । वधूः । वध्वा । वधूभ्याम् । वधूभिः ( ङितामट्ट । वध्वै । वध्वाः ( स्त्रिया ङोः । ङितामट्ट । उ वम् ) वध्वाम् । हे वधु । एव चमूतनूतनूरुद्रूकच्छ्रूयवागूदिधिषूकद्रूचंचूकर्कंधूकरभोरूप्रभृतयः । स्वयंभूप्रमुखास्तु पुंवत् ॥

ऋकारान्तस्य मातृशब्दस्य पितृशब्दवत्प्राक्रिया । मातृ सि इति स्थिते ( सेरा ) आत्नम् ( डिति टेः ) माता । मातृ औ इति स्थिते ( पंचसु ) मातरौ । मातरः ।(धेरर्) हे मातः । हे मातरौ । हे मातरः। मातरम् । मातरौ । शसि (शसि) इति दीर्घत्वम् । मातॄः । मात्रा । मातृभ्याम् । मातृभिः। मात्रे । मातृभ्याम्। मातृभ्यः (ऋतो ङ उः ) इति उकारः । मातुः । मातृभ्याम् । मातृभ्यः । मातुः। मात्रोः । मातॄणाम् ( ङौ ) अर् । मातरि । मात्रोः । मातृषु । स्वसृशब्दस्तु कर्तृशब्दवत् । स्त्रीलिंगत्वान्नत्वाभावो विशेषः ॥

ऋकारांते स्त्रीलिंगे मातृशब्दस्य पितृशब्दवत्प्रक्रिया (सेरा । पचसु)इत्यर् नवरम् । शसि दीर्घ एव भवति । पर स्त्रीलिंगत्वात् ( सो न. पुंसः ) इति नत्व न भवति ।

१ न्यवचन्-द० पा० ।

(धौ) (वेरर्) एवं पितृष्वसृमातृष्वसृदुहितृयातृननान्दृशब्दाः । स्वसृशब्दस्तु कर्तृशब्दवत् । (स्तुरार् । सेरा) शसि स्त्रीलिङ्गत्वान्नत्वाभावः (सोनः पुंसः) इति न भवति । इति विशेषः । स्वसॄः । तृतीयादौ स्वरादौ (ऋ रम्) स्वर० । ङसिङसोर्विषये (ऋतो ङ उः) ङिविषये (ङौ) इत्यर् । हे स्वसः (धेरर्) एवं ननांदृशब्दः ॥

ऐकारांतः स्त्रीलिंगो रैशब्दः । तस्य सुरैशब्दवत्प्रक्रिया । रै सि इति स्थिते (रै स्भि ।) इत्यात्वम् । राः । रै औ इति स्थिते । स्वरादौ सर्वत्रायादेशः । रायौ । रायः । इत्यादि । गोशब्दः पूर्ववत । नौशब्दस्य ग्लौशब्दवत् प्रक्रिया ॥　॥ इति स्वरांताः स्त्रीलिंगाः ॥

रैशब्दः सुरैशब्दवत् । राः । (रै स्भि) रायौ । रायः । इत्यादि । रैशब्दः पुंस्त्रीलिंगे वर्तते । तथामरकोशे " अर्थरैविभवा अपि " इति पुँल्लिंगे एव उक्तः । अत्र तु स्त्रीलिंगे एव उक्तस्तच्चिन्त्यम् । गोशब्दः पुंवत् । (ओ रौ) गौः गावौ । गावः (आम्शसि) गाम् । गावौ । गाः । गवा । गोभ्याम् । गोभिः । इत्यादि । अत्रापि गोशब्दो दशार्थवाची । एवं द्योशब्दोपि । नौशब्दो ग्लौशब्दवत् । नौः । नावौ । नावः ॥

इति स्वरांतस्त्रीलिंगसाधनम् ।

---

## अथ स्वरांता नपुंसकलिंगाः ८.

अथ स्वरांता नपुंसकलिंगाः प्रदर्श्यंते । तत्राऽकारांतो नपुंसकलिंगः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने । अतोऽम् ॥ अकारांतान्नपुंसकलिंगात्परयोः स्यमोरम् भवत्यर्थो । अमोमृग्रहणं लुग्व्यावृत्त्यर्थम् । (अम्शसोरस्य) इत्यकारलोपः । कुलम् २ । हे कुल । ईमौ ॥ नपुंसकलिंगात्पर औ ईकारमापद्यते (अ इ ए) कुले २ । जश्शसोः शिः ॥ नपुंसकलिंगात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः [ गुरुः शिच सर्वस्य वक्तव्यः ] षष्ठ्या निर्दिष्टस्येत्यस्यापवादः ॥

अथ स्वरांतनपुंसकलिंगसाधनम् । तत्र अकारांतः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने । सूत्रम् । (अतोम्) अत ५-१ । स्वर० (स्रो०) तस्मात्पदपातं वा । अम् १-१ (इसे०) मध्ये (अतोऽत्युः । उ ओ । पदो०) द्विपदम् । अकारांतात् नपुंसकलिंगात्परयोः स्यमोः सि अम् इत्येतयोरम् भवति । अर्थो धेरम् न भवतीत्यर्थः । ननु स्यमोर्म् क्रियताम्, किं अम् इत्यकारग्रहणेन । सत्यम् । अजरस मित्या-

दिसाधनार्थम् । अमोऽम्करणे हेतुमाह । अमोऽम्ग्रहण लुग्व्यावृत्त्यर्थम् । अम् इति अम्स्थाने पुनर्यत् अम्करणं तत् (नपुंसकात्स्यमोर्लुक्) इति सूत्रनिषेधार्थम् । अयमर्थः । अकारात्परयोः स्यमोर्लुग् भवतीति भावः अनेन स्यमोरम् । (अम्शसोरस्य) १-२ । २-२ सूत्रम् ( ईमौ ) ईम्-२-१।( अम्श० ) औ १-१ सांके० । स्वर० । द्विपदम् । नपुंसकलिंगात्पर औ ईकारमापद्यते प्राप्नोति । दीर्घ ईकारस्तु वारिणी दधिनी इत्यादिरूपसिद्धयर्थः । अनेन औस्थाने ईकारः ( अ इ ए ) १-३ । २-३ सूत्रम् ( जश्शसोः शिः ) जस् च शस् च जश्शसौ तयोर्जश्शसोः ६-२ स्वर० ( स्रो० ) शि १-१ ( स्रो० ) द्विपदम् । नपुंसकलिंगात्परयोः जश्शसोः शिर्भवति । शिरिति शकारः सर्वादेशार्थः । तेन सर्वस्य जसः शसश्च इर्भवति न त्वंतस्य। तमेवाह गुरुः शिच्चेति । शकार इत् यस्य स शिदादेशः [ गुरुः शित् सर्वस्य वक्तव्यः ] गुरुः आदेशः च पुनः शित् शकारेत् आदेशः सर्वस्यैव भवति । गुरुर्नैकाक्षरः ( त्रेस्त्रय् ) इत्यादिकः । तथा शित् शकारेच्च यः आदेशः स सर्वस्य आदेशिनः स्थाने भवति न त्वंतस्य । अनेन ( जश्शसोः शिः ) इति शि आदेशः सर्वस्य जसः स्थाने भवति ॥

नुमयमः ॥ नपुंसकलिंगस्य नुमागमो भवति शौ परे । यमप्रत्याहारांतस्य न भवति[मिदंत्यात्स्वरात्परो वक्तव्यः]उकार उच्चारणार्थः। मकारः स्थाननियमार्थः। नोपधायाः[१] ॥ नांतस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु पंचसु परेषु नामि च । कुलानि २ । कुलेन । शेषं पुँल्लिंगवत् । एवं मूलफलपत्रपुष्पकुण्डकुटुम्बादयः ॥

सूत्रम् ( नुमयमः ) नुम् १-१ ( हसे० ) न यम् अयम् तस्य अयमः ६-१ । स्वर० ( स्रो० ) द्विपदम् । नपुंसकस्य नुमागमो भवति शौ परे । यमप्रत्याहारोंऽते यस्य शब्दस्य तस्य नुमागमो न भवति । यथा । अहानि चत्वारि इत्यादौ । मित् मकारेत् प्रत्ययः आगमश्च अंत्यात्स्वरात्परो वक्तव्यः । उकार उच्चारणार्थः । अनेन नुमागमः । न् । सूत्रम् ( नोपधायाः ) नस्योपधा नोपधा तस्याः नोपधायाः ६-१ ( टितां यट् । सवर्णे० । स्रो० ) नांतस्य शब्दस्य उपधायाः 'अंत्यात्पूर्व उपधा' इति संज्ञासंधिकथितलक्षणाया दीर्घो भवति नपुंसके शौ परे पुँल्लिंगे धिवर्जितेषु पंचसु वचनेषु नामि च नुट्सहिते आमि परे च । यथा । पञ्चानाम् । अनेन उपधाया दीर्घः । कुलानि । धौ ( समानाद्धेर्लोपोऽधातोः ) हे कुल । द्विवचने ( ईमौ । अ इ ए ) हे कुले । बहुवचने । (जश्शसोः शिः । नुमयमः । नोपधायाः )

---

१ ( नोपधायाः ) इत्यत्र छंदसि तु भवतीति नियमात्सिद्धिः । छंदोवत्सूत्राणि भवन्तीति वचनात् । इति पाठः पूर्वम् । ततः कुलानि । इति । २ देववत्-२० पा० ।

हे कुलानि । शेषं देवशब्दवत् । एवं कुलशब्दवत् मूलफलजलपत्रपुष्पकुंडकुटुंबज्ञानधनरत्नादयः शब्दाः साध्याः ॥

सर्वादीनामकारांतानामन्यादिपंचशब्दव्यतिरिक्तानां प्रथमाद्वितीययोः कुलशब्दवत्प्रक्रिया । सर्वम् । सर्वे । सर्वाणि २ । शेषं तु पूर्ववद्रूपम् । तत्रापि अन्यादेर्विशेषमाह । श्त्वन्यादेः ॥ अन्यादेर्गणात्परयोः स्यमोः श्तुर्भवति ॥

सर्वादयोऽपि नपुंसकलिंगे प्रथमायां द्वितीयायां च कुलशब्दवत् । सर्वम् । सर्वे । सर्वाणि । पुनरपि । सर्वम् । सर्वे । सर्वाणि । तृतीयादौ तु पुंल्लिंगवत् । परम् अन्यादीनां प्रथमाद्वितीयैकवचने विशेषमाह । सूत्रम् ( श्त्वन्यादेः ) श्तु १-१ । सांके० । अन्य आदिर्यस्यासौ अन्यादिस्तस्मात् ५-१ ( डिति । टस्य ) इत्यकारलोपः ( न्मो० । उ वम् ) स्वर० । द्विपदम् । अन्यादेः । अन्य । अन्यतर । इतर । कतर । कतम । इत्यन्यादेर्गणान्नपुंसकलिंगे वर्तमानात्परयोः स्यमोः श्तु इत्यादेशो भवति ॥

शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । (वावसाने । इति पक्षे दत्वमपि भवति । अन्यत्-अन्यद् । अन्ये । अन्यानि । पुनस्तथैव च । अन्यतरत्-अन्यतरद् । अन्यतरे । अन्यतराणि । इतरत्-इतरद् । कतरत्-कतरद् । कतमत्-कतमद् शब्दाः । शेषं सर्ववत् । एते चान्यादयः ॥

शकारः सर्वादेशार्थः ( गुरुः शिच्च सर्वस्य वक्तव्यः ) इति न्यायात् । उकार उच्चारणार्थः । अनेन सेः स्थाने अम्स्थाने च त् इत्यादेशः । द्वित्वबहुत्वयोः कुलशब्दवत् । हे अन्यत् । तृतीयादौ सर्वादिवत् । एवम् अन्यतरत् । इतरत् । कतरत् । कतमत् । एतेऽपि शब्दाः साध्याः । ( जरायाः जरस् वा ) इति वा जरस्[1] नास्ति जरा यस्य तत् । अजरसम्-अजरम् । अजरसी-अजरे । अजरांसि-अजराणि । शेषं पुंवत् । अत्र यद्यपि क्रमेण पूर्वम् आकारांतः सोमपाशब्दः । तदग्रे इकारांता अस्थि दधि सक्थि अक्षि वारिशब्दास्तद्वदेव तदग्रे ईकारांता ग्रामण्यादयस्तद्वदेव उकारांता मध्वादयस्तदग्रे ऊकारान्ता यवल्वादयस्तदग्रे ऋकारांताः कर्तृप्रमुखास्तदग्रे ऐकारांतः अति-

---

१ प्रथमादयः कुलवत् । प्रथमम् । प्रथमे । प्रथमानि । अकारांतो नपुंसकलिंगः सोमपाशब्दः । सोमपा इति स्थिते ( नपुंसकस्य ) नपुंसकस्य ह्रस्वो भवति स्वरांतु विभक्तिषु परतः । (अतोऽम्) सोमपम् । सोमपे । सोमपानि । हे सोमप । शेषं कुलवत् । इति पाठः ।

रैशब्दः तदग्रे ओकारांत उपगोशब्दः तदग्रे औकारांतः अतिनौशब्दः । इति क्रमो युज्यते । परमत्र केषुचित्पुस्तकेषु क्रमवैपरीत्येन लिखितानि संति ॥

इकारांतोऽस्थिशब्दः। **नपुंसकात्स्यमोर्लुक्॥** नपुंसकलिंगात्परयोः स्यमोर्लुग्भवति।अस्थि[ॠणां नपुंसके धौ वा गुणो वक्तव्यः] इश्च उश्च ऋश्च ॠवरस्तेषाम् इ उ ऋ इत्येतेषां नपुंसके धौ वा गुणो भवति। हे अस्थे हे अस्थि। हे अस्थिनी।उक्तं हि।"संबोधने तूशनसस्त्रिरूपं सान्तं तथा नांतमथाप्यदंतम्।माध्यंदिनिर्वष्टि गुणं त्विगंते नपुंसके व्याघ्रपदां वरिष्ठः"॥ इति । **नामिनः स्वरे ॥** नाम्यन्तस्य नपुंसकलिंगस्य नुमागमो भवति विभक्तिस्वरे परे ( ईमौ ) अस्थिनी । अस्थीनि । अस्थि । अस्थिनी। अस्थीनि । **अच्चास्थ्नां शसादौ॥** अस्थ्यादीनां नुमागमो भवति इकारस्य चाकारो भवति शसादौ स्वरे परे।**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ ॥** नांतस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च मकारवकारांतसंयोगादुत्तरस्य न भवति । अस्थ्ना । अस्थिभ्याम् । अस्थिभिः । अस्थ्ने। अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थ्नोः । अस्थ्नाम् **वेङ्योः ॥** नांतस्य नाम्नः ईङ्योः परयोर्वा अकारस्य लोपो भवति । अस्थ्नि-अस्थनि । अस्थ्नोः । अस्थिषु । एवं दधिसक्थ्यक्षिशब्दाः।इकारान्तो नपुंसकलिंगो वारिशब्दः । वारि । वारिणी । वारीणि । इत्यादि ॥

इकारांतो नपुंसकलिंगः अस्थिशब्दः । स्यमोर्विषये । सूत्रम् । ( नपुं० ) नपुं-

---

१ ॠ-इति पाठोऽस्ति परन्तु-तेषामिति बहुवचनानुसारेण सोऽशुद्ध एव-ॠवरः इति ॠ इत्यस्य बहुवचनं समीचीनमस्ति। यद्वा । ॠ इति अनुकरण बोद्धव्यम् । २ अत्र हि भट्टवासुदेवकृतप्रसादटीकासमन्विते पुस्तकेऽपि" अच्चास्थ्नाम् " इति सूत्र पठितम् । शसादौ अस्थ्यादीनां नुमागमो भवति इकारस्य चाकारो भवति शसादौ स्वरे परे इति वृत्तिः कृता दृश्यते । प्रसादटीकायां च तद्व्याख्यावसरे । अस्थ्यादिर्येषामित्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणात् अस्थि विहाय दध्यादिरित्यर्थः । तदुपादान च 'अस्थ्नि उः' इत्यादावुद्दरणार्थम् । इत्याद्युक्तम् ॥

सकू ५–१ ( टसिरत् । सवर्णे० ) सिश्च अम् च स्यमौ तयोः स्यमोः ६–२ । स्वर० ( स्रो० ) लुक् १–१ ( हसेपः० । नामिनो रः ) त्रिपदम् । अवर्णांतवर्जान्नपुंसकलिंगात्परयोः स्यमोर्लुक् भवति । अनेन स्यमोर्लुक् । धौ विशेषमाह । ( य्वृणाम् ) इश्च उश्च ऋश्च य्वरः तेषां य्वृणाम् । इकार–उकार–ऋकाराणां स्थाने नपुंसकलिंगविषये धौ वा गुणो वक्तव्यः । ( नपुंसकात् स्यमोर्लुक् ) इति धिलोपे विहिते इकारस्य एकारो गुणः । हे शब्दस्य प्राक्प्रयोगः । अत्र शिष्टसंमतिमाह । उक्तं च वृद्धैः । संबोधने० इति । तु इत्यवधारणे । माध्यंदिनिराचार्यः उशनसः उशनस्शब्दस्य संबोधने आमंत्रणे सिविषये त्रिरूपं रूपत्रयं वष्टि अभिलषति वाञ्छति वा कथयति । किं तत् त्रिरूपम् । सांतं सकारांतम् यथा–उशनस् ( हसेपः० । स्रो० ) हे उशनः । तथा नांतं नकारांतम्–उशनन् । तथा अदंतम् अकारांतम्–हे उशन इति । तु पुनः । इगंते इकारोकारऋकारांते नपुंसके धिविषये विकल्पेन गुणं वष्टि कथयति । यतः प्रक्रियाकौमुद्याम् । इउण् ऋऌक् एते इकसंज्ञाः । यथा–हे अस्थे–हे अस्थि । हे वारे–हे वारि । हे मधो–हे मधु । हे कर्त्तः–हे कर्तृ । कथंभूतो माध्यंदिनिः । व्याघ्रपदां व्याघ्रपदगोत्रीयविप्राणां मध्ये वरिष्ठो गरिष्ठः श्रेष्ठः ।१–३।२–२ ( ईमौ ) इति औस्थाने ई । सूत्रम् । (नामिनः०) नामिनः ६–१ । स्वर० (स्रो०) स्वर० ७–१ ( अ इ ए ) द्विपदम् । नाम्यंतस्य नपुंसकलिंगस्य नुमागमो भवति स्वरे परे । अत्र विभक्तिसंबंध्येव स्वरो ग्राह्यः । तेन दधि आनयेत्यत्र न नुम् । अनेन नुमागमः । स्वर० । बहुत्वे कुलवत् ( जश्शसोः शिः । नुमयमः । नोप० ) दीर्घत्वे इकारस्य ईकारः । तृतीयादौ हसादौ अविशेषः । स्वरादौ । सूत्रम् ( अद्यास्थ्नां शसादौ ) अत् १–१ ( हसे० ) च १–१ । अव्य० ( स्वोः श्रु० ) स्वर० । अस्थि ६–३ ( अद्यास्थ्नां० ) इति नुमागमः इकारस्य अकारः ( अल्लोपः स्वरे० ) स्वर० । मध्ये ( सवर्णे० ) त्रिपदम् । शस् आदिर्यस्यासौ शसादिः तस्मिन् ७–१ ( ङेरौ डित् ) डिलोपः । स्वर० । क्वचित्तु 'टादौ' इति पाठः । तत्र टा आदिर्यस्य स टादिः । शसोऽग्रतः अर्थात् टादिः । यद्वा । गौणत्वे प्रियास्थ्नः शुनकान्, प्रियदध्नश्च पुरुषान् । इत्यादिप्रयोगसिद्ध्यर्थं शसो ग्रहणं युक्तम् । अस्थ्यादीनाम् अस्थि–दधि–सक्थि–अक्षिशब्दानां शसादौ स्वरे परे नुमागमो भवति इकारस्य च अकारः । अनेन स्वरादौ सर्वत्र नुम् इकारस्य च अकारः ( नामिनः स्वरे ) इत्यनेन एव चेन्नुम् क्रियते तदा इकाराभावे जाते निमित्ताभावे नैमित्तिकस्याप्यभावः इति नुम्लोपः स्यादतः ( अद्यास्थ्नाम् ) इति नुम्करणं पुनरुक्तये न । सूत्रम् ( अल्लोपः स्वरे० ) अतः अकारस्य लोपः अल्लोपः १–१ ( स्रो० ) स्वर० ७–१ (अ इ ए) अम्वयुक्तः म् च वश्च म्वौ ताभ्यां युक्तः संयोगः म्वयुक्तः न म्वयुक्तः अम्वयुक्तः तस्मात् ५–१ ( टसिरत् । सवर्णे० ) पश्चात् ( एदोतोऽतः )

शस् आदिर्यस्य स शसादिः तस्मिन् ७-१ ( ङेरो ङित् ) टिलोपः ( चपाच्छः शः ) सूत्र सिद्धं चतुष्पदम् । अत्र तु टादौ स्वरे परे एव अकारस्य लोपो भवति । शसग्रहणं [illegible] प्रियास्थ्नः शुनकान् पश्य, तथा राज्ञ इत्यादिप्रयोगसिद्ध्यर्थं नातस्य नकारान्तस्योपधायाः उपधाभूतस्य अकारस्य लोपो भवति शसादौ स्वरे । मकारवकारसंयोगादुत्तरस्याकारस्य लोपो न भवति । यथा आत्मनः । आत्मना । यथा च । यज्वनः । यज्वना । अनेन स्वरादौ अकारस्य लोपः । स्वर० । अस्थ्ना । अस्थिभ्याम् । अस्थिभिः । अस्थ्ने । ङौ अल्लोपविशेषमाह । ( वेङ्योः ) वा२-१ ( अव्यय० ) ईश्च ङिश्च ईङी तयोः ७-२ । ( इ यं स्वरे ) स्वर० ( स्रो०) पश्चात् (अ इ ए) द्विपदं सूत्रम् । नातस्य नकारान्तस्य शब्दस्य ईति औस्थाने जाते ईकारे परे ङौ च सप्तम्येकवचने परे च वा अकारस्य लोपो भवति । ईकारे परे तु । अह्नी-अहनी । इत्यादौ ज्ञेयम् । ङौ परे अनेन वा अल्लोपः । अस्थ्नि-अस्थनि । एव दधि-सक्थि-अक्षिशब्दाः । दधि । दधिनी । दधीनि । पुनरपि । दधि । दधिनी । दधीनि । दध्ना । दधिभ्याम् । दधिभिः । दध्नि-दधनि । एवं सक्थिशब्दः ऊरुवाची । सक्थि, सक्थिनी, सक्थीनि २ । अक्षिशब्दो नेत्रवाची । अक्षि, अक्षिणी, अक्षीणि २ । अक्ष्णा । अक्षिभ्याम् । अक्षिभिः । इत्यादि ॥

**नपुंसकस्य** ॥ नपुंसकस्य ह्रस्वो भवति ( नपुंसकात्स्यमोर्लुक् ) ग्रामणि कुलम् । स्वरादौ ( नामिनः स्वरे ) इति नुमागमः।(ईमौ) ग्रामणिनी । ग्रामणीनि२। ( नामिनः स्वरे ) हे ग्रामणे हे ग्रामणि । **टादावुक्तपुंस्कं पुंवद्वा** ॥ उक्तपुंस्कं नाम्यंतं नपुंसकलिंगं टादौ स्वरे परे पुंवद्वा भवति ॥ " एक एव हि यः शब्दस्त्रिषु लिंगेषु वर्तते । एकमेवार्थमाख्याति ह्युक्तपुंस्कं तदुच्यते" ॥१॥ततः।ग्रामण्या-ग्रामणिना । ग्रामणिभ्याम् । ग्रामणिभिः। ग्रामण्ये-ग्रामणिने । ग्रामणिभ्याम्।ग्रामणिभ्यः।ग्रामण्यः-ग्रामणिनः ।ग्रामणिभ्याम्।ग्रामणिभ्यः । ग्रामण्यः-ग्रामणिनः । ग्रामण्योः ग्रामणिनोः।[ नुमंतस्यामि दीर्घः] ग्रामणीनाम्।ग्रामण्याम् ग्रामणिनि।ग्रामण्योः-ग्रामणिनोः। ग्रमाणिपुसोमपम्। कुलम्। सोमपे । सोमपानि । पुनरपि । सोमपम् । सोमपे । सोमपानि।सोमपेन।सोमपाभ्याम् ।सोमपैः।इत्यादि पूर्ववत्॥

१ [illegible]

, ईकारांतो ग्रामणीशब्दः । सूत्रम् ( नपुंसकस्य ) नपुंसक ६-१ ( ङस्य ) ह्रस्व १-१ ( स्रो० ) नपुंसकलिंगे वर्त्तमानस्य दीर्घस्वरांतस्य शब्दस्य सर्वविभक्तिषु ह्रस्वो भवति । ग्रामणी १-१ । २-१ अनेन सर्वत्र ह्रस्वः । ई इत्यस्य· इ ( नपुंसकास्यमोर्लुक् ) १-२ । २-२ । ह्रस्वः ( ईमौ । नामिनः स्वरे ) स्वर० । १-३ २-३ ह्रस्वः ( नामिनः स्वरे । नोपधायाः ) तृतीयादौ ह्रस्वत्वे कृते हसादौ अविशेषः स्वरादौ तु विशेषः । श्लोकः । 'एक० ।' यः कश्चित् एक एव शब्दः आप्प्रत्ययादिरहितः सन् त्रिषु लिंगेषु पुंस्त्रीनपुंसकेषु वर्त्तते । एकमेव अर्थम् आख्याति वक्ति एकार्थवाचक एव भवति तद्भाषितपुंस्कम्-उक्तपुंस्कमुच्यते । ततः किं कर्त्तव्यमित्याह ( टादावुक्तपुंस्कं पुंवद्वा ) टादौ ७-१ ( ङेरौ डित् ) उक्तपुंस्कम् १-१ । पुंवत् १-१ । वा ३-१ ( अव्यया० ) उक्तः पुमान् पुँल्लिंगो येन तदुक्तपुंस्कम् । अर्थरूपाभ्यां तुल्याकारो यः शब्दः पुंसि नपुंसके च वर्त्तमानः सः उक्तपुंस्कः । तथावस्थित निर्दिष्टपुँल्लिंगम् एवंभूतं नाम्यंतं नपुंसकं टादौ स्वरादौ विभक्तौ परतः पुंवद्वा भवति । नपुंसकलिंगेऽपि वा पुँल्लिंगवत् स्यात् । विकल्पेन पुँल्लिंगवद्रूपाणि स्युः । अनेन तृतीयादौ स्वरादौ वा ह्रस्वः । पक्षे पुँल्लिंगवत्त्वात् ह्रस्वाभावे सेनानीशब्दवत् ( य्वौ वा ) इति यकारः । ह्रस्वत्वे ( नामिनः स्वरे ) इति नुमागमः । ग्रामण्या-ग्रामणिना । ग्रामणिभ्याम् । ग्रामणिभिः । ग्रामण्ये-ग्रामणिने । ग्रामणिभ्याम् । ग्रामणिभ्यः । ग्रामण्यः । पुंवद्भावो न ( य्वौ वा ) ग्रामणिनः । आमि कृते ( नामिनः स्वरे ) विकल्पे पुँल्लिंगवद्रूपाणि स्युः । आमि पुंवद्भावे एकस्मिन्पक्षे ( य्वौ वा ) ग्रामण्य म् । द्वितीयपक्षे ( सेनान्यादीनां वामो नुट्० ) इति नुटि कृते ( नामि ) इति दीर्घत्वम् । ग्रामणीनाम् । नपुंसकपक्षे ( नामिनः स्वरे ) इति नुमि कृते ( नुडागमः ) इति सूत्रेण नुटोऽभावे कृते ( नामि ) इति दीर्घत्वं न संभवति तेन नुमंतस्यामि दीर्घः । पक्षद्वयेऽपि ग्रामणीनाम्, इत्येव रूपसिद्धिः । परम् ( नुडामः ) इति नुटो नित्यत्वात् ( नामिनः स्वरे ) इति न भवति । ततो नुमंतस्यामि दीर्घ इत्यपि व्यर्थमेव पुनश्चित्यम् । उक्तं च हैमव्याकरणे । ( अनामस्वरे नोंतः ) नाम्यंतस्य नपुंसकस्य संबंधिनि आमूर्वर्जिते स्यादौ स्वरे परे नोंतो भवति । अनामिति किम् । वारीणाम् । कर्त्तॄणाम् । त्रपूणाम् । एषु नुमागमाभावे नामि सति ( दीर्घो नाम्यतिसृचतसृ ) इत्यादिना दीर्घः सिद्धः । ग्रामण्या ( आम्ङेः । य्वौ वा ) ग्रामणिनि । ग्रामण्योः-ग्रामणिनोः । ग्रामणिषु । एवं सुश्रि कुलम् । तेन सुश्रिणा-सुश्रिया । सुश्रिणे-सुश्रिये । एवं पटुने-पट्वे । इत्यादि । एवं सेनानिसुधियखलु-खलपुप्रमुखाः । आकारांतः सोमपाशब्दस्तस्य ( नपुंसकस्य ) इति सूत्रेण ह्रस्वे कृते । प्रथमाद्वितीययोः कुलशब्दवत् । ( अतोम् ) सोमपम् १-१ । १-२ सोमपे ( ईमौ ) १-३ ( जश्शसोः शिः । नुमयमः । नोपधायाः ) सोमपानि । पुनरपि

द्वितीयायाम् । सोमपम् । सोमपे । सोमपानि । टादौ ( नपुंसकस्य ) इति ह्रस्वे कृते ( टेन । अ इ ए ) सोमपेन । सोमपाभ्याम् ( अद्भि ) सोमपैः ( भ्यः ) । सोमपाय । सोमपाभ्याम् । सोमपेभ्यः । सोमपात् । सोमपाभ्याम् । सोमपेभ्यः । सोमपस्य । सोमपयोः । सोमपानाम् । सोमपे । सोमपयोः । सोमपेषु । संबोधने ( नपुंसकस्य ) इति ह्रस्वे कृते कुलशब्दवत् साधना । ( समानाद्धेर्लोपोऽधातोः ) सोमपाशब्दस्य उक्तपुंस्कत्वेपि नाम्यन्तत्वाऽभावात् तृतीयादौ स्वरादौ वा पुंवत् रूपाणि न भवंति । इकारांतो वारिशब्दः । प्रथमाद्वितीययोः अस्थिशब्दवत् । वारि, वारिणी, वारीणि २ । तृतीयादौ ( नामिनः स्वरे ) इति नुमागमः । ( ष्रनों० ) स्वर० । वारिणा । वारिभ्याम् । वारिभिः ३ । वारिणे । वारिभ्याम् । वारिभ्यः ४ । वारिणः । वारिभ्याम् । वारिभ्यः ५ । वारिणः । वारिणोः । आमि ( नुडामः ) इति नुट् ( नामि ) इति दीर्घः । वारीणाम् ६ । वारिणि । वारिणोः । वारिषु ७ । संबोधने ( य्वृणां नपुंसके धौ वा गुणः ) हे वारि-हे वारे । इत्यादि । शेषं सुगमम् । ऐकारांतः सुरैशब्दः अतिरैशब्दश्च ( नपुंसकस्य ) इति ह्रस्वे कृते वारिशब्दवत् । [ ह्रस्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ ] सुष्ठु रा धनम् यस्य तत् सुरि । सुरि, सुरिणी, सुरीणि २ । सुरिणा-सुराया । सुरिभ्याम् । सुरिभिः । इत्यादि । एवं सुष्ठु नौर्यस्य तत् । सुनु, सुनुनी, सुनूनि २ । सुनुना-सुनावा । सुनुने-सुनावे । इत्यादि ॥

उकारांतो मधुशब्दः । मधु, मधुनी, मधूनि २ । इत्यादि । तस्यापि स्वरे नुमागमः ॥

उकारांतो मधुशब्दः । स च चैत्रमासवाची वसंतवाची मधुदैत्यवाची वा पुंल्लिंगे भवति । क्षौद्रमद्यमकरंदवाची तु नपुंसकलिंगे भवति । अत एवार्थभेदादुक्तपुंस्कं न । किंतु तस्य वारिशब्दवत् साधना । "पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे ॥ वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः" ॥ एवम् उकारांतो वस्तुशब्दः । वस्तु, वस्तुनी, वस्तूनि २ । एवं वास्तु, वास्तुनी, वास्तूनि २ । अंबु, अंबुनी, अंबूनि २ । सानु, सानुनी, सानूनि २ । जानु, जानुनी, जानूनि २ । ऊकारांतः खलपूशब्दः । ( नपुंसकस्य ) इति ह्रस्वः । खलपु, खलपुनी, खलपूनि २ । इत्यादि मधुशब्दवत् ॥

ऋकारांतः कर्तृशब्दः । ( नपुंसकात्स्यमोर्लुक् ) कर्तृ ( ईमौ । ष्रनों० ) कर्तृणी, कर्तॄणि २ । कर्तृणा । ( ऋ रम् ) कर्त्रा । कर्तृभ्याम् । कर्तृभिः । कर्तृणे-कर्त्रे । कर्तृभ्याम् । कर्तृभ्यः । ( ऋतो ङ उः ) स च डित ( डिति टेः ) कर्तुः-कर्तृणः । कर्तृभ्याम् । कर्तृभ्यः । कर्तुः-कर्तृणः । कर्त्रोः-कर्तृणोः । कर्तॄणाम् । कर्तरि-कर्तृणि । कर्त्रोः-कर्तृणोः । कर्तृषु । हे कर्त्तः-हे कर्तृ । हे कर्तृणी । हे कर्तॄणि ।

ऐकारान्तः । अतिरैशब्दः । रायमतिक्रांतं कुलमिति विग्रहे।( संध्यक्षराणामिदुतौ ह्रस्वादेशः ) इति ह्रस्वत्वं च । अतिरि, अतिरिणी, अतिरीणि२। शेषं वारिशब्दवत् । ओकारांतो नपुंसकलिंगः उपगोशब्दः । उपगता गावो यस्य तत् । उपगु । उपगुनी । उपगूनि । शेषं मधुशब्दवत् । औकारांतः अतिनौशब्दः । नावमतिक्रांतं यज्जलं तत् । अतिनु, अतिनुनी, अतिनूनि २ । शेषं पूर्ववत् ॥ इति स्वरांताः नपुंसकलिंगाः ॥ इति स्वरांताः समाप्ताः ॥

कर्तृशब्दस्य प्रथमाद्वितीययोः अस्थिशब्दवत् साधना । कर्तृ, कर्तृणी, कर्तॄणि२। तृतीयादौ स्वरादौ उक्तपुंस्कत्वात् रूपद्वयम् । तत्र एकत्र पुंवत् । तत्र (ऋ रम्)अन्यत्र ( नामिनः स्वरे ) इति नुमागमः । कर्त्रा–कर्तृणा ३–१ । कर्त्रे–कर्तृणे ४–१ । कर्तुः-कर्तृणः ५–१ । कर्तुः–कर्तृणः ६–१ । आमि ( नुडामः ) इति नुट् ( नामि ) इति दीर्घः । कर्तॄणाम् । कर्तरि–कर्तृणि ७–१ । धौ वा । गुणः अर् । हे कर्तः –हेकर्तृ । शेषं कंठयम् । ऐकारांतः अतिरैशब्दः । ( नपुंसकस्य ) इति ह्रस्वे कृते इकारे वारिशब्दवत् । ओकारांतः उपगोशब्दः । उपगोर्ह्रस्वत्वे । उपगु, उपगुनी, उपगूनि २ । पुँल्लिंगपक्षे उपगवा इत्यादि । औकारांतः अतिनौशब्दः । अतिनु । अतिनुनी । अतिनूनि २ । इत्यादि स्वयमूह्यम् ॥

इति स्वरांतनपुंसकलिंगसाधनम् ॥

---

## अथ हसांताः पुँल्लिंगाः ९.

अथ हसांताः पुँल्लिंगाः प्रदर्श्यन्ते । तत्र हकारांतोऽनडुह्शब्दः । नामसंज्ञायां स्यादयः [ पंचस्वनडुह आमागमो वक्तव्यः ] सावनडुहः ॥ अनडुह्शब्दस्य सौ परे नुमागमो भवति । संयोगांतस्य लोपः॥संयोगांतस्य रसे पदांते च लोपो भवति सभिन्नस्य रान्त । ( हसेपः सेर्लोपः । उ वम् ) इति वत्वम् । लोपविधिसामर्थ्यान्न दत्वम् । अनड्वान् । अनड्वाहौ । अनड्वाहः । धावम् ॥ अनडुह्शब्दस्य धौ परे अमागमो भवति । हे अनड्वन् । हे अनड्वाहौ । हे अनड्वाहः । अनड्वाहम् । अनड्वाहौ । अनडुहः ।

अनडुहा । वसां रसे ॥ वसु स्रंस् ध्वंस् भ्रंस् अनडुह् इत्येतेषां दो भवति रसे पदांते च । अनडुद्भ्याम् । अनडुद्भिः । अनडुहे । अनडुद्भ्याम् । अनडुद्भ्यः । अनडुहः । अनडुद्भ्याम् । अनडुद्भ्यः। अनडुहः ।अनडुहोः । अनडुहाम् । अनडुहि । अनडुहोः । ( खसे चपा झसानाम् ) अनडुत्सु ॥

अथ हसांतपुंल्लिंगसाधनं किंचिदुच्यते। तत्र प्रथमं हांतान् दर्शयति। अत्र हकारांतः अनडुह्शब्दः। तस्य नामसंज्ञायां सत्यां स्यादयो विभक्तयो दीयंते। ततः ( पंचस्वनडुह आमागमो वक्तव्यः ) अनडुह्शब्दस्य स्यादिषु पंचसु वचनेषु परेषु शौ च आम् आगमो भवति। केचित्तु ( अनडुहश्च ) इति सूत्रेण (चतुरनडुहोराम्शौ च) इति च सूत्रेण आमागममिच्छंति स्त्रीलिंगे च विकल्पेनामागममिच्छंति । अनड्वाही–अनडुही । इति। अनेन पंचसु आम् ( मिदंत्यात्स्वरात्परो वक्तव्यः ) इति डु अग्रे आ ( उ वम् ) स्वर०। अनड्वाह् सि इति स्थिते। सूत्रम् (सावनडुहः) सि ७–१ ( डेरौडित् ) टिलोपः। स्वर०। अनडुहः ६–१। स्वर०। ( स्रो० ) पश्चात् ( औ आव् ) सिद्धम्। वृत्तिः कंठ्या। अनेन सौ परे नुमागमः। हस्य पूर्वम् ( हसेपः० ) सूत्रम् ( संयोगांतस्य लोपः ) संयोगस्य अंतः संयोगांतस्तस्य संयोगांतस्य ६–१ ( ङस्य ) लोपः १–१ ( स्रो० ) संयोगाक्षरस्य योऽतः संयुक्तानामक्षराणां योऽन्त्यो वर्णस्तस्य लोपो भवति रसे पदांते च।चकाराद्रकारात् अग्रे संयोगांतस्य लोपो न भवति। यथा ऊर्क्–ऊर्ग् । ऊर्जौ । ऊर्जः । अनेन सौ परे हकारस्य लोपः। अनड्वान् इति सिद्धम्। अत्र नुम्विधानसामर्थ्यादेव (वसां रसे) इति दत्वं न भवति। यद्वा कृतेपि दकारे संयोगांतस्य लोपान्न रूपभेदः। अनः शकटं वहतीति अनड्वान् वृषभः। (वहेः क्विनसो डश्च ) इति ( यजां यवराणाम्) इति संप्रसारणं वस्य उः। स्वरादौ। स्वर०। धौ तु। सूत्रम् ( धावम् ) धि ७–१ ( डेरौ डित् ) टिलोपः। स्वरहीन०। अम् १–१ (हसे०) पश्चात् (औ) (आव्) स्वर०। अनडुह्शब्दस्य धौ परे अमागमो भवति। आमोपवादः अनेन अम् [ मिदंत्या० ] ( सावनडुहः ) इति नुम् ( हसे०। संयोगांतस्य लोपः ) द्वित्वबहुत्वयोरामागमः ( उ वम् ) स्वर०। द्वितीयादौ स्वरादौ। स्वर०। हसादौ। सूत्रम् ( वसां रसे ) वस् ६–३। स्वर०। रस ७–१ ( अ इ ए ) सिद्धम्। वसामिति बहुवचननिर्देशात् वसादयः वस् इति क्वस् प्रत्ययस्य वस् ( विदेर्वसुः ) इत्यपि वस्। स्रंस्, ध्वंस्, अधः पतने। अनडुह्शब्दो गोवृषभवाची। एतेषां रसे पदांते च दत्वं भवति।

[ षष्ठीनिर्दिष्टस्यादेशोऽन्तस्य भवति ] अनेन हस्य दः । भकारादौ । स्वर० । सुपि ( खसे चपा० ) दस्य तः । स्वर० । अनडुत्सु । सिद्धोऽनडुहशब्दः । संस्-ध्वंसोस्तु सकारांतावसरे । उपासत् । उपासतौ । उपासतः । उपासद्भ्याम् । एवं पर्णध्वत् । पर्णध्वसौ ॥

गोदुहशब्दस्य भेदः ॥ दादेर्घः । दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदांते च । गोदुह् सि इति स्थिते । आदिजबानां झभांतस्य झभाः स्ध्वोः ॥ धातोर्झभांतस्यादौ वर्तमानानां जबानां झभा भवंति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदांते च । वावसाने ॥ अवसाने वर्तमानानां झसानां जबा भवंति चपा वा । गोधुक्-गोधुग् । गोदुहौ । गोदुहः । हे गोधुक् हे गोधुग् । हे गोदुहौ । हे गोदुहः । गोदुहम् । गोदुहौ । गोदुहः । गोदुहा । भकारादौ ( दादेर्घः )इति घत्वे आदिजबस्य दकारस्य झभे धकारे च कृते ( झबे जबाः ) गोधुग्भ्याम् । गोधुग्भिः । गोदुहे । गोधुग्भ्याम् । गोधुग्भ्यः । गोदुहः । गोधुग्भ्याम् । गोधुग्भ्यः । गोदुहः । गोदुहोः । गोदुहाम् । गोदुहि । गोदुहोः। गोधुक् सु इति स्थिते । ( खसे चपा झसानाम् ) इति कत्वम् । ( किलात्पः सः कृतस्य ) इति षत्वम् । कषसंयोगे क्षः । गोधुक्षु ॥

हकारांतत्वेपि अनडुहशब्दापेक्षया गोदुहशब्दस्य भेदः कश्चिद्विशेषोस्ति । गां दोग्धीति गोधुक् । दुह प्रपूरणे । गोपूर्वः क्विप्प्रत्ययांतः । सूत्रम् ( दादेर्घः ) दकारः आदिर्यस्य स दादिस्तस्य दादेः ६-१ ( ङिति । ङस्य । स्रो० ) घ १-१ ( स्रो० । नामि० ) जल० । सिद्धं द्विपदम् । दादेरिति दकारादेर्धातोर्हकारस्य घत्वं भवति आख्याते झसे परे नाम्नस्तद्धिकारस्य रसे परे अथवा पदांतविषये । अनेन भकारादौ सुपि च हस्य घः । सूत्रम् ( आदिज० ) आदौ वर्तमाना जबा आदिजबास्तेषाम् आदिजबानाम् ६-३ ( नुडामः । नामिनः० ) स्वर० ( मोनु० ) झभा अंते यस्य स झभांतस्तस्य ६-१ (ङसस्य) झभाः १-३ । ( सवर्णे० । स्रो०) स् घ ध्व् च स्ध्वौ तयोः स्ध्वोः ७-२ । स्वर० ( स्रो० ) चतुष्पदमिदं सूत्रम् । झभांतस्य धातोः आदौ वर्तमानानां जबानां झभा भवंति । जडदगबानां क्रमेण झढधघभा भवंति सकारे ध्वे च परे आख्याते आत्मनेपदे से ध्वे ध्वसंबंधिनि सकारे ध्वशब्दे च परे नाम्नश्च रसे पदांते च । केचित्तु जभतीति जप् । जभौ । जभः इत्यादौ प्रयोगे

जकारस्य झकारासंभवात् आदिजबानां ढभांतस्य ढभाः स्ध्वोः इत्येवं सूत्रं पठंति । अनेन यत्र रसप्रत्याहारस्तत्र दस्य धः । सूत्रम् ( वावसाने ) वा ३–१ । ( अव्य० ) अवसान ७–१ ( अ इ ए । सवर्णे० ) सिद्ध द्विपदम् ( विरामोऽवसानम् ) अग्रे वर्णानामभावो अवसानं तस्मिन् अवसाने अंते वर्तमानानां झभाना जवा भवंति पक्षे विकल्पेन चपा भवंति । अनेन सौ धौ च रूपद्वयं विधाय ( हसे पः सेः० ) इति सिलोपे कृते एकत्र घस्य कः । अन्यत्र गः । स्वगदौ । स्वर० । भकारादौ विभक्तौ तु ( दादेर्घः ) इति घत्वे कृते ( आदिजबाना० ) इति दस्य धः ( झबे जबाः ) घस्य गः ( स्वर० ) सुपि ( दादेर्घः । आदिजबानां० । खसे चपा झसानाम् । ( किलात्वः सः कृतस्य ) इति षत्वम् ( कषसंयोगे क्षः ) ककारषकारसंयोगे क्षो भवति । गोधुक्षु इति सिद्धम् ॥

मधुलिह्शब्दस्य विशेषः । हो ढः ॥ धातोर्हकारस्य ढत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदांते च । ( वावसाने ) इति ढकारस्य डकारटकारौ । मधुलिट्-मधुलिड् । मधुलिहौ । मधुलिहः । हे मधुलिट्–हे मधुलिड् । हे मधुलिहौ । हे मधुलिहः । मधुलिहम् । मधुलिहौ । मधुलिहः । मधुलिहा । मधुलिड्भ्याम् । मधुलिड्भिः । इत्यादि ॥ तुरासाह्शब्दस्य भेदः । सहेः पः साढि ॥ साढिरूपे सहेर्धातोः सकारस्य षकारादेशो भवति । त्वर सहतीति तुराषाट्-तुराषाड् । इत्यादि ॥

लिह् आस्वादने । मधुपूर्व० क्विप्प्रत्ययान्तः । मधु मकरंदं पुष्परसं लेढीति मधुलिट् भ्रमरः । मधुलिह्शब्दस्य रसे पदांते च विशेषः। सूत्रम् । ( हो ढः ) ह् ६–१ । स्वर० ( स्रो० । हवे । उ ओ ) ढः १–१ ( स्रो० ) सिद्धम् । धातुसंबंधिनो हकारस्य झसे परे ढत्वं भवति नाम्नश्च नामत्वं प्राप्तस्य रसे परे पदांते च । उभयोः १–१ । रूपद्वयम् । उभयत्रापि हस्य ढः ( हसे० । वावसाने ) एकत्र टः अन्यत्र डः । स्वगादौ । स्वर० । भकारादौ ( हो ढः ) इति ढत्वे ( झभे जबाः ) ढस्य डः । स्वर० । सुपि ( हो ढः । खसे च० ) ढस्य टः । स्वर० । मधुलिट्सु इत्यत्र क्वचिदपदान्तेपि पदान्तत्वश्रवणीयेति न्यायात् टोरत्यादिति सूत्रेण सस्य षत्वाभावः । एवं तुराषाट्–पृतनाषाट्–हव्यवाट्–प्रष्ठवाड्–भारवाट्प्रभृतयः ॥

मित्रद्रुह्शब्दस्य भेदः । [ द्रुहादीनां घत्वढत्वे वा ] द्रुहादीनां धातूनां घत्वढत्वे वा भवतः धातोर्झसे परे नाम्नश्च रसे पदांते च । मित्रध्रुक् मित्रध्रुग् । मित्रध्रुट्–मित्रध्रुड् । मित्रद्रुहौ । मित्रद्रुहः ।

धावप्येवम् । मित्रद्रुहम् । मित्रद्रुहौ । मित्रद्रुहः । मित्रद्रुहा । ( झबे जबाः ) मित्रध्रुग्भ्याम्–मित्रध्रुड्भ्याम् । मित्रध्रुक्षु–मित्रध्रुट्त्सु इत्यादि । एवं तत्त्वमुहादयः ॥

हकारांतानामपि द्रुहादीनां वाक्यांतरे विशेषमाह । ( द्रुहादीनां घत्वढत्वे वा ) द्रुहादीनामिति द्रुह्मुह्स्नुह्स्निहां रसे पदांते च घत्वढत्वे वा भवतः । विकल्पेन घत्वे कृते । द्वितीयपक्षे ढत्वं भवति । द्रुह् जिघांसायाम् । मुह् वैचित्ये । स्नुह् उद्गिरणे क्षरणे । स्निह् प्रीतौ उद्गिरणे च । णश् अदर्शने । एते द्रुहादयः । अत्र द्रुहो दकारादित्वात् ( दादेर्घः ) इति प्राप्तस्य घत्वस्य विकल्पः । अन्येषां तु अप्राप्तस्य घत्वस्य विकल्पः इत्यर्थः । मित्राय द्रुह्यतीति मित्रद्रुह् । सर्वत्रापि १–१ रूपद्वये ( दादेर्घः ) इति घः । रूपद्वये च ( होढः ) इति ढः ( आदिजबानां० ) इति सर्वत्र द्रुस्थाने ध्रु ( हसेपः० । वावसाने ) घस्य यथासंख्यं कगौ । ढस्य च टडौ । मित्रध्रुक्–मित्रध्रुग्–मित्रध्रुट्–मित्रध्रुड् ४ । एवं सिविषये रूपचतुष्टयम् । मित्रद्रुहौ । मित्रद्रुहः । भकारादौ सुपि च रूपद्वयम् । तत्र एकत्र घत्वे कृते अन्यत्र ढत्वे कृते ( आदिजबानां० ) इति द्रु इत्यस्य ध्रु भकारादौ ( झबे जबाः ) घस्य गः ढस्य च डः। मित्रध्रुग्भ्याम्–मित्रध्रुड्भ्याम् । मित्रध्रुग्भिः–मित्रध्रुड्भिः । सुपि च ( खसे च० ) इति घस्य कः । ढस्य च टः । कत्वे ( किला० ) ( कपसंयोगे क्षः ) मित्रध्रुक्षु । टत्वे । स्वर० । मित्रध्रुट्सु । धौ सिवत् । एवं तत्त्वमुह्पुत्रस्निह्क्षीरस्नुहोपि साध्याः । तत्त्वं प्रति मुह्यतीति तत्त्वमुट् । हांतानां साधनमेतत् । यकारवकारांता अप्रसिद्धाः ॥

रेफांतश्चतुर्शब्दो नित्यं बहुवचनांतः। चतुराम्शौच॥ चतुर्-शब्दस्य आमागमो भवति धिवर्जितेषु पंचसु परेषु शौ च [ मिदंत्यात्स्वरात्परो वक्तव्यः ] चत्वारः । चतुरः। चतुर्भिः। चतुर्भ्यः २॥ रः संख्यायाः॥ रेफांतसंख्यायाः परस्यामो नुडागमो भवति । णत्वं द्वित्वं च । चतुर्णाम् । चतुर्षु ॥

रांतानाह । रेफांतश्चतुर्शब्दो नित्यं बहुवचनांतः । १–३ सूत्रम् । ( चतुरा० ) चतुर् ६–१ । सांके० आम् १–१ ( हसे० ) शि ७–१ ( ङेरौ० ) टिलोपः । च १–१ ( अव्य० ) चतुर्० । पंचसुग्रहणं समासांतत्वसूचकम् । यथा प्रियाश्चत्वारो यस्यासौ प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः । हे प्रियचत्वाः । इत्यादि ज्ञेयम् । अन्यथा बहुत्वे पंचस्विति पदं न संभवति। शौ चेति पदकथनेन नपुंसके (जश्शसोः शिः ) इति शौ परेऽपि आम् आगमो भवतीत्यर्थः । ( मिदंत्यात्स्वरात्परो वक्तव्यः)

रकारात्पूर्वम् । आ ( उ वम् ) स्वर० ( स्त्रो० ) ३-२ । ४-३ । ५-३ जल० । ६-३ । सूत्रम् ( रः सख्यायाः ) र् ५-१ । स्वर० ( स्त्रो० ) संख्या ५-१ । ( ङिता यट् । सवर्णे० ) रेफान्तो यः सख्यावाची चतुर्शब्दस्तस्मात्परस्यामो नुडागमः स्यात् । अनेन नुट् ( ष्णर्नां० । रहायपो० ) जलतु० । चतुर्णामिति सिद्धम् । ७-३ ( क्लिा० ) जल० । चतुर्षु ( दोषाम् ) इति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नान्यस्येति वक्तव्यम् । अतः चतुर्ष्वित्यत्र न विसर्गः । (चतुरनडुहोरम् संबुद्धौ )हे प्रियचत्वः ।लृकारान्ता अप्रसिद्धाः ॥

नकारांतो राजन्शब्दः ( नोपधायाः ) इति पंचसु दीर्घः । नाम्नो नो लोपशधौ ॥ नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदांते चाधौ । चकारात्कचित् नाम्नो नकारस्य लोपश् न भवति । सुष्ठु हिनस्ति पापमिति सुहिन् । राजा । राजानौ । राजानः । अधाविति विशेषणात् । हे राजन् । हे राजानौ । हे राजानः।राजानम्। राजानौ । ( अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ । स्तोः श्चभिःश्चुः ) इति चुत्वे नकारस्य ञकारः । [ जञोर्ज्ञः ] जकारञकारयोः संयोगे ज्ञ इत्यक्षरं भवति । राज्ञः । राज्ञा । योगानामुभयतः संबन्धः लोपशि पुनर्न संधिरिति नियमात् ( अद्रि ) इत्यात्वं न भवति । राजभ्याम् । राजभिः ।राज्ञे। राजभ्याम् ।राजभ्यः ।राज्ञः । राजभ्याम् । राजभ्यः । राज्ञः । राज्ञोः । राज्ञाम् । राज्ञि ( वेङ्योः ) राजनि । राज्ञोः । राजसु । अधाविति विशेषणात् । हे राजन् । हे राजानौ । हे राजानः । एवं यज्वन्-आत्मन्-सुधर्मन्प्रभृतयः।यज्वा। यज्वानौ । यज्वानः । यज्वानम् । यज्वानौ। अम्वयुक्तादिति विशेषणात् अल्लोपो नास्ति । यज्वनः । यज्वना । इत्यादि ॥

नान्तानाह । नकारांतो राजन्शब्दः । तस्य पंचसु वचनेषु ( नोपधायाः ) इति सूत्रेण दीर्घः । राजृ दीप्तौ । राजते इति राजा ( राजादेरन् ) १-१ स् । सूत्रम् ( नाम्नो० ) नामन् ६-१ ( अल्लोप. स्वरे ) स्वर० ( स्त्रो० ) न् ६-१ । स्वर० ( स्त्रो० ) पश्चात् ( हवे । उ ओ ) लोपश् १-१ ( हसे० ) पश्चात् । ( हवे । उ ओ ) न धि' अधिस्तस्मिन् अधौ ७-१ ( ङेरौ० ) टिलोपः । पश्चात् ( स्वर० )

चतुष्पदम् । नाम्न इति शब्दस्य संबंधिनो नकारस्य लोपश्च वर्णविरोधरूपो भवति । परम् अनागमजस्य शब्दान्तर्भूतस्यैव परं केनापि सूत्रेणागतस्य नस्य लोपश्च न भवति रसे परे पदांते च । चकाराव सुहिन्न । सुहिंसौ । सुहिंसः । मशान् इत्यादौ नकारस्य लोपो न धौ च लोपश् न भवति । अनेन सौ नस्य लोपः । राजा । राजानौ । राजानः । अधौ इति विशेषणात् धौ नस्य लोपश् न । हे राजन् । राजानम् । राजानौ । इति । शसि ( अल्लोपः स्वरे० ) इत्यकारलोपः ( स्तोः श्चुभिः श्चुः ) इति चुत्वे चवर्गे क्रियमाणे नकारस्य ञकारः । ततः ( जञोर्ज्ञः ) जश्च ञश्च जञौ तयोः जञोः जकारञकारयोर्योगे ज्ञो भवतीत्यर्थः । अनेन जञयोगे ज्ञः । स्वर० ( स्तो० ) टाविषयेऽप्येवम् । भकारादौ ( नाम्नो नो लोपशधौ ) ततः लोपशि पुनर्न संधिरिति कारणात् ( आद्भि ) इति सूत्रेण आकारो न भवति । राजभ्याम् । राजभिः । राज्ञे । ङौ ( वेङचोः ) सुपि ( नाम्नो० ) एवं यज्वन्–आत्मन्–सुधर्मन्–सुपर्वन्–प्रभृतयोपि साध्याः । परं शसादौ अम्वयुक्तादिति विशेषणात् मकारवकारयुक्तत्वात् अल्लोपो नास्ति ( अल्लोपः स्वरे० ) इति न भवति । तेन यज्वनः । यज्वना इत्यादि । उक्षन्मूर्द्धन्शब्दौ तु राजन्वत् ॥

श्वन् युवन् मघवन् शब्दानां पंचसु राजन्शब्दवत्प्रक्रिया शसादौ तु विशेषः । श्वादेः ॥ श्वादेर्वकार उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तद्धिते स्वरे तु न भवति । अत्र नियामकं पाणीनीयं सूत्रम् (श्वयुवमघोनामतद्धिते) तेन माघवनमिति । शुनः । शुना । श्वभ्याम् । श्वभिः । इत्यादि । युवन्शब्दे तु वकारस्योत्वे कृते ( सवर्णे दीर्घः सह ) यूनः । यूना । युवभ्याम् । युवभिरित्यादि । मघोनः । मघोना । मघवभ्यामित्यादि ॥

श्वन् युवन् मघवन् शब्दाः पंचसु राजन्वत्साध्याः । श्वा कुक्कुरवाची । युवा तरुणवाची । मघवा इंद्रवाची । इत्येतेषां शब्दानां पंचसु स्यादिषु वचनेषु राजन्शब्दवत्साधना । शसादौ तु विशेषस्तमेवाह । सूत्रम् ( श्वादेः ) श्वा आदिर्यस्य स श्वादिस्तस्य श्वादेः ६–१ ( ङिति । ङस्य । स्तो० ) श्वादेरिति श्वन्–युवन्–मघवन्–शब्दसंबंधिवकारः उत्वमुकारभावं प्राप्नोतीति भावः । शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च । ईपि प्रत्यये परे तु शुनी यूनी मघोनी इति भवति । वकारेण सहितोऽकारः इति सस्वरस्यापि वकारस्य स्थाने उकारः ( स्वर० ) शसादौ सर्वत्र

१ अत्र वशोर्व उरित्यस्मात्सूत्रात् 'व उ.' इत्यनुवृत्तेर्हेतोः 'श्वादे.' इत्येव सूत्रम् ।

उकारः । भकारादौ सुपि च ( नाम्नो नो० ) संबोधने राजन्शब्दवत् । श्वा । श्वानौ । श्वानः । श्वानम् । श्वानौ ( श्वादेः ) शुनः । शुना । श्वभ्याम् । श्वभिः । इत्यादि । युवा । युवानौ । युवानः । युवानम् । युवानौ । युवन्शब्दस्य शसादौ स्वरे (श्वादेः) इति उत्वे कृते ( सवर्णे० ) मघवन्शब्दे उकारे कृते ( उ ओ ) यूनः । यूना । मघोनः । मघोना । मघवभ्याम् । मघवभिरित्यादिरूपाणि ज्ञेयानि । तकारान्तमघवच्छब्दस्य तु मघवान् । मघवन्तौ । मघवन्तः । मघवन्तम् । मघवन्तौ । मघवतः । मघवता । मघवद्भ्याम् । मघवद्भिः । इत्यादिरूपाणि ॥

पथिन्शब्दस्य भेदः।**इतोऽत्पंचसु** ॥ पंचसु स्यादिषु परेषु पथ्यादीनामिकारस्याकारादेशो भवति।**थो नुट्**॥पथ्यादीनां थकारस्य नुडागमो भवति पंचसु स्यादिषु परेषु ।पन्थन् सि इति स्थिते।**आ सौ**॥ पथ्यादीनां टेरात्वं भवति सौ परे । पंथाः।पंथानौ । पंथानः । आत्वविधानान्न सेर्लोपः । हे पंथाः । पंथानम् । पंथानौ । **पथां टेः**॥ पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे । पथः । पथा । पथिभ्याम् । पथिभिरित्यादि । एवं मथिन्ऋभुक्षिन्शब्दौ ॥

पथिन्शब्दस्य भेदः । सूत्रम् ( इतोऽत्पंचसु ) ६-१ । स्व० ( स्रो० ) अत् १-१ । ( हसे० । अतोऽत्युः । उ ओ० । एद्धो० ) पंचन् ७-३ ( नाम्नो० ) सिद्धम् । स्यादिषु पंचसु वचनेषु परेषु पथ्यादीनां पथिन्मथिन्ऋभुक्षिन्शब्दानामिकारस्य अकारो भवति । अनेन सिऔजसअम्औवचनेषु थि इत्यस्य था । सूत्रम् ( थो नुट् ) थः ६-१ स्व० ( स्रो० ) नुट् १-१ ( हसे० । हबे । उ ओ ) पथ्यादीनां पथिन्मथिन्शब्दयोः थकारस्य पंचसु वचनेषु नुडागमो भवति । टित्वादादौ थस्य पूर्वम् । पन्थन् सि इति स्थिते सति सूत्रम् ( आ सौ ) आ १-१ ( सांके० ) सि ७-१ (टेसौ०) टिलोपः । स्वर० । सिद्धम् । पथ्यादीनां टेः सौ परे आत्वं भवति अनेन सौ न्-सहितस्य थ इत्यस्य था । टेरात्वकरणादेव सेर्लोपो न किंतु ( स्रो० । नश्चापदांते० ) पंथाः मार्गः । संबोधनेऽप्येवमेव । हे पंथाः । अग्रे द्वितीयाद्वित्वं यावत् ( नोपधायाः ) इति दीर्घः । स्वर० । शसादौ विशेषः । पथिन् २-३ । सूत्रम् । ( पथां टेः ) स्वर० । ( मोनु० ) टि ६-१ ( टिति । टस्य । स्रो० ) पथिन्मथिन्ऋभुक्षिन्शब्दानां टेर्लोपो भवति शसादौ स्वरे परे । अनेन शसादौ स्वरे टेः इन् इत्यस्य लोपः । स्वर० । भकारादौ ( नाम्नो० ) सुपि ( नाम्नो० ) नकारस्य लोपेऽपि कृते ( खिला० ) एवं मथिन्ऋभुक्षिनशब्दौ ज्ञेयौ । मंथाः-मथनदंडः । ऋभुक्षाः-इन्द्रः । ऋभुक्षाणौ । ऋभुक्षाणः । हे ऋभु-

क्षाः । ऋभुक्षाणम् । ऋभुक्षाणौ । ऋभुक्षः । ऋभुक्षा । ( पथां टेः ) ऋभुक्षिभ्याम् । ऋभुक्षिभिः ( नाम्नो० ) ऋभुक्षे । इत्यादि ॥

दंडिन्शब्दस्य भेदः। इनां शौ सौ॥ इन्हन्पूपन्अर्य्यमन्इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति । नलोपसिलोपौ । दंडी । दंडिनौ । दंडिनः । हे दंडिन् । हे दंडिनौ । हे दंडिनः । दंडिनम् । दंडिनौ । दंडिनः । दंडिना । दंडिभ्याम् । दंडिभिः । इत्यादि । एवं ब्रह्महन्शब्दः। ब्रह्महा । ब्रह्महणौ। ब्रह्महणः । हे ब्रह्महन् । हे ब्रह्महणौ।हे ब्रह्महणः।ब्रह्महणम्।ब्रह्महणौ।शसादौ तु अल्लोपः।हनो घ्ने॥ हंतेर्धातोर्हकारस्य घकारो भवति अव्यवधाने नकारे व्यवधाने ञिणति च परे।घसंयोगो णत्वनिषेधार्थः।ब्रह्मघ्नः । ब्रह्मघ्ना। ब्रह्महभ्याम्। ब्रह्महभिः । इत्यादि । अर्यम्णः । अर्यम्णा । अर्यमभ्यामित्यादि । पूषा । पूषणौ । पूषणः । हे पूषन् ।हे पूषणौ । हे पूषणः । पूषणम्। पूषणौ । पूषन्शब्दस्य शसादौ स्वरे परे वा टेर्लोपः । पूष्णः।पूष्णा । पूषभ्याम् । पूषभिः । पूष्णे [ ङौ टिलोपो वा वक्तव्यः ] पूष्णि—पूषणि । पूष्णोः । पूषसु ॥

दंडिन्शब्दस्य भेदः । सूत्रम् । ( इनां शौ सौ ) इन् ६–३ । स्वर० ( मोनु० ) शि ७–१ ( डेरौ० ) सि ७–१ ( डेरौ० ) सिद्धम् । इन्प्रत्ययान्तः इनित्युपलक्षणत्वाद्विन्प्रत्ययांतोपि । हन्धातुः ब्रह्मभ्रूणवृत्राद्युपपदपूर्वः क्विप्प्रत्ययांतः । पूषन् सूर्यवाची । अर्यमन् सूर्यवाची । इत्येतेषां शौ नपुंसके जश्शसोः स्थाने जाते सौ च पुंल्लिंगे प्रथमैकवचने धिवर्जिते परे दीर्घो भवति ( नोपधायाः ) इत्यनेन सिद्धो सत्यां ( इनां० ) इति सौ परे एव दीर्घः स्यात्तु पंचस्विति नियमार्थमुक्तम् । अनेन सौ दीर्घः ( हसेपः० । नाम्नो० ) स्वगदौ सर्वत्र । स्वर० । रसे च ( नाम्नो० ) सुपि ( क्लिा० ) धौ अधाविति विशेषणान्न लोपश्दीर्घौ । हे दंडिन् । शेषं सुगमम् । ब्रह्मन्शब्दो दंडिन्शब्दवत्। ब्रह्महा ( अवकुप्वंतरेपि ) इति णत्वम् । ब्रह्महणौ। ब्रह्महणः । ब्रह्महणम् । ब्रह्महणौ । शसादौ तु ( अल्लोपः स्वरे ) इत्यल्लोपे कृते । सूत्रम्। ( हनो घ्ने ) हन् ६–१ । स्वर० ( स्रो० ) घ् १–१ ( हवे । उ ओ ) न ७–१ ( अ इ ए ) सिद्धं त्रिपदम् । हन्तेरिति । हन् इत्यस्य धातोः संबंधिनो हकारस्य घत्वं

भवति नकारे परे तथा ञिति णिति च परे । अनेन हस्य घः । स्वर० । हस्य घत्वे कृते वसंयोगः ( पूर्वो० ) इति णत्वनिषेधार्थः। हेतरकारपूर्वस्यैव सति णत्वनिमित्ते णत्वं न तु व्यंजनपूर्वस्य इति वचनात् घकारनकारयोगे जाते सति ( पुर्नो णोनंते ) इति नस्य णत्वप्रतिषेधः । स्वर० । ङसे परे (नाम्नो०) ङौ तु ( वेङ्योः ) ब्रह्मघ्नि- ब्रह्महणि । धौ दंडिन्वत् । हे ब्रह्महन् । एवं पूषन्-अर्यमन्-शब्दौ । अत्र शसादौ ( अल्लोपः स्वरे० ) इत्यल्लोपे कृते ( पुर्नो० ) स्वरे० । हसादौ ( नाम्नो० ) शेषं कंठ्यम् । पूषा । पूषणौ । पूषणः । पूषणम् । पूषणौ । पूष्णः । पूष्णा । पूषभ्याम्। पूषभिरित्यादि ७-१ ङौ तु ( वेङ्योः ) पूष्णि- पूषणि । एवम् अर्यमा। अर्यमणौ अर्यमणः। अर्यमणम्। अर्यमणो । अर्यम्णः । अर्यम्णा। अर्यमभ्याम्। अर्यमभिः। अर्यमणि-अर्यम्णि । अर्यम्णोः । अर्यमसु । इत्यादि ॥

संख्याशब्दाः पंचन्प्रभृतयो बहुवचनांतास्त्रिपु लिंगेषु सरूपाः । पंचन् जस् इति स्थिते । जश्शसोर्लुक् ॥ पकारनकारांतसंख्यायाः परयो- र्जश्शसोर्लुग्भवति। [ लुकि न तन्निमित्तम् ] लुकि सति तन्निमित्तं कार्यं न स्यात् । तेन ( नोपधायाः ) इति दीर्घत्वं न । पंच । पंचभिः। पंचभ्यः २। ष्णः ॥ पकारनकारांतसंख्यायाः परस्यामो नुडागमो भवति । ( नोपधायाः ) इति दीर्घत्वम् ।( नाम्नो नो लोपशधौ) पंचानाम् । पंचसु । एवं सप्तन्नवन्दशन्प्रभृतयः ॥

संख्यावाचकाः शब्दाः पंचन्प्रभृतयो बहुवचनांतास्त्रिपु लिंगेषु सदृशरूपाः। जसि शसि च सूत्रम् (जश्शसोर्लुक्) जस् च शस् च जश्शसौ तयोर्जश्शसोः ६-२। स्वर० ( नो० ) लुक् १-१ ( हसे० । नामि० ) वृत्तिः कंठ्या । अनेन जश्शस् इत्येतयो- र्लुक् । प्रत्ययलोपे प्रत्ययलक्षणं न यातीति न्यायात् ( नोपधायाः ) इति सूत्रेण दीर्घत्वमाप्तौ निषेधहेतुमाह । लुकि न तन्निमित्तम् । इति लुकि कृते तन्निमित्तं कार्यं न भवति स एव निमित्तं कारणं यस्य तत्तन्निमित्तम्। यथा (नोपधायाः) इति सूत्रेण दीर्घत्वमाप्तावपि न दीर्घता तर्हि दीर्घं विहाय लुक् कार्यः इत्यत्रोच्यते। कृताकृतप्र- संगी यो विधिः स नित्य इति अभावरूपं तु न भवत्येव। तेन (नाम्नो नो लोपशधौ ) इति भवत्येव। ३-३ ।४-३ । ५-३ (नाम्नो०) आमि । सूत्रम् (ष्णः)ष् च न् च ष्ण् तस्मात् ष्णः ५-१ । स्वर०। पकारनकारांतसंख्यायाः संख्यावाचिनः शब्दात्परः यः आम् तस्य नुडागमो भवति। अनेन न् आगमः (नोपधायाः) इति दीर्घः (नाम्नो०) सुपि ( नाम्नो० ) एवं सप्तन्नवन्दशन्प्रभृतयोऽपि अष्टादशन्पर्यन्तसाध्याः ॥

अष्टन्‌शब्दस्य भेदः। **अष्टनो डौ वा** ॥ अष्टन्शब्दात्परयोर्जस्‌शसोर्वा डौ भवति। डित्वाट्टिलोपः। अष्टौ-अष्ट। अष्टौ-अष्ट। **वासु**॥ वा आ आसु। अष्टन्‌शब्दस्य आसु परासु विभक्तिषु वा टेरात्वं भवति। अष्टभिः—अष्टाभिः। अष्टभ्यः—अष्टाभ्यः २। अष्टानाम्। अष्टसु-अष्टासु ॥

अष्टन्‌शब्दस्य भेदः। सूत्रम् ( अष्टनो डौ वा ) अष्टन् ६-१। स्वर० ( स्रो० ) डौ १-१। सांके० ( इवे। उ औ ) वा ३-१ ( अव्य० ) सिद्धमिदं सूत्रम्। अष्टन्शब्दात्परयोर्जश्शसोर्वा विकल्पेन डौ भवति। गुरुत्वात्सर्वस्य जसो डौ जसि शसि च रूपद्वयम्। अनेन एकत्र डौ औ डित्वाट्टिलोपः। स्वर०। अन्यत्र जश्शसोर्लुक् ( नाम्नो० ) तृतीयादिबहुत्वेपि रूपद्वयम्। सूत्रम् ( वासु ) वा ३-१ ( अव्य० ) आ १-१। सांके०। इदम् ७-३ ( त्यदा०। स्भ्यः। आवतः स्त्रियाम्। सवर्णे०) त्रिपदम्। अष्टन्निति। अष्टन्शब्दस्य आसु तृतीयादिषु विभक्तिषु परासु सतीषु वा आत्वम् आकारो भवति। अनेन ३-३। ४-३। ५-३। वा आकारः। उभयत्रापि ( ष्णः ) इति नुट्। तृतीयरूपे ( नोपधायाः ) इति दीर्घः। (नाम्नो०) पक्षद्वयेपि एकत्र अकारे कृते अन्यत्र (नाम्नो०) पक्षद्वयेपि सदृशं रूपम् ॥

मकारांत इदम्‌शब्दः। **इदमोऽयं पुंसि** ॥ इदम्‌शब्दस्य पुंसि विषये अयमादेशो भवति सिसहितस्य। अयम्। इदम् औ इति स्थिते। द्विवचनादौ ( त्यदादेष्टेरः स्यादौ ) इत्यकारः। इद औ इति स्थिते। **दस्यः मः**॥ त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे। इमौ। इमे। सर्वादित्वात ( जसी ) इतीकारः। त्यदादीनां धेरभावः। इमम्। इमौ। इमान्। [ इदमेतदोरन्वादेशे द्वितीया टौस्स्वेनो वा वक्तव्यः। उक्तस्य पुनर्भाषणमन्वादेशः। यथा अनेन बालेन व्याकरणमधीतमेनं छन्दोऽध्यापय। एनम्। एनौ। एनान्। **अन टौसोः**॥इदमोऽनादेशो भवति टौसोः परयोः। (टेन) अनेन-एनेन। **स्भ्यः**॥इदमः सकारे भकारे च परे अकारो भवति कृत्स्नस्य। ( अद्वि ) इत्यात्वम्। आभ्याम्। **भिस् भिस्** ॥ इदमदसोर्भिस् भिसैव भवति न भकारस्याकारः। ( एस्भि बहुत्वे) एभिः। अस्मै। आभ्याम्। एभ्यः। अस्मात्। आभ्याम्। एभ्यः। अस्य।

अनयोः । एनयोः । एषाम् । अस्मिन् । अनयोः-एनयोः । एषु ।
किम्-शब्दस्य ( त्यदादेष्टेरः० )इत्यकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् ।
कः । कौ । के । कम् । कौ । कान् । केन । काभ्याम् । कैः ।
कस्मै । काभ्याम् । केभ्यः । कस्मात् । काभ्याम् । केभ्यः ।
कस्य । कयोः । केषाम् । कस्मिन् । कयोः । केषु ॥

मकारांतानाह । मकारांत इदम्शब्दः । सौ सूत्रम् ( इदमोऽयं० ) इदम् ६-१ । स्वर० ( स्रो० ) अयम् १-१ ( हसे० । अतोत्युः । उ ओ । एदो० ) पुंस् ७-१ । स्वर० । सिद्धम् । इदम्शब्दस्य पुंसि विषये पुल्लिंगे एव सौ प्रथमैकवचने परे अयम् इत्यादेशो भवति । गुरुत्वात्सर्वस्य । अनेन सौ परे अयम् । मांतकरणसामर्थ्यादेव ( त्यदादेष्टेरः स्यादौ ) इति न भवति । अन्यथा अय इत्येवावक्ष्यत् । अनेन अयम् इत्यादेशः ( हसे० ) केचित्तु सिसाहितस्यैव अयमित्यादेशमिच्छंति । द्विवचनादौ तु ( त्यदादेष्टेरः० ) इत्यकारे कृते सूत्रम् ( दस्य मः ) द ६-१ ( ङस्स्य ) म १-१ ( स्रो० ) त्यदादीनां दकारस्य असंयुक्तस्य स्यादौ सर्वविभक्तौ परे मत्वं भवति अनेन सर्वविभक्तिषु मकारः । १-२ ( ओ औ औ ) १-३ ( जसी । अ इ ए ) २-१ ( अम्श० ) २-२ ( ओ औ औ ) २-३ ( अम्श० । सो नः पुंसः । शसि ) ३-१ सूत्रम् ( अन टौसोः ) अन १-१ । सांके० । टा च ओस् च टौसौ तयोः टौसोः७-२ । स्वर० (स्रो०) इदम्शब्दस्य टा इति तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने परे अन इत्यादेशो भवति अनेन टावचने परे अन आदेशः । ( टेन । अ इ ए ) अग्रे द्वित्वे सूत्रम् ( स्भ्यः ) स् च भ् च स्भ् तस्मिन् ७-१ । स्व० । अ १-१ ( स्रो० ) पश्चात् ( इ यं स्व० ) स्व० । द्विपदम् । इदम्शब्दस्य सकारे भकारे च परे अकारो भवति कृत्स्नस्य समग्रस्येत्यर्थः । न त्वंतस्य । अनेन तृतीयाचतुर्थीपंचमीद्वित्वे इदमोऽकारः ( अद्भि ) इत्यात्वम् ३-३ । ४-३ । ५-३ । (स्भ्यः) इत्यकारः । ततो भिसि सूत्रम् ( भिस् भिस् ) भिस् १-१ ( हसे० ) भिस् १-१ ( हसे० ) द्विपदम् । इदम्अदससंबंधी यो भिस् स भिस् एव भवति । अत्र भिसो भिस्करणम् ( स्भ्यः ) इति सूत्रेण अकारनिषेधार्थम् । एतदेवाह । न भकारस्याऽकार इति । ( ए स्मि बहुत्वे ) परं कप्रत्ययसहितयोर्न ततः इमकैः । अमुकैः । एवं चतुर्थीपंचमीबहुत्वेपि ४-१ । ( सर्वादेः स्मट् । स्भ्यः । ए ऐ ऐ ) ५-१ ( ङसिरत् । अतः । स्भ्यः । सवर्ण०) ६-१ ( ङस् स्य ६-२।७-२ ) अन टौसोः । ओसि । ए अय् ) स्वर० । आमि ( सुडामः । स्भ्यः । ए स्भि बहुत्वे । किला० ) स्वर० । ७-१ ( ङि स्मिन् । स्भ्यः । ए स्मि० । किला० ) त्यदादित्वात्संबोधनाभावः । "इदमः प्रत्यक्षगते समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्" ॥ किम्शब्दस्य ( त्यदादेष्टेरः० ) इत्यनेन अकारे कृते । सर्वशब्दव-

त्मांक्रिया । त्यदादित्वादेरभावः ( संबोधनाभावः )इत्यादयो मांताः शब्दा ज्ञेयाः । झढधवभांता अप्रसिद्धाः ॥

धकारांतस्तत्त्वबुधशब्दः । तस्य रसे पदांते बकारस्य ( आदिजबानां० ) इति भकारः । (वावसाने ) तत्त्वभुद्- तत्त्वभुत् । तत्त्वबुधौ। तत्त्वबुधः । हे तत्त्वभुत्–हे तत्त्वभुद् ।तत्त्वबुधम् । तत्त्वबुधौ।तत्त्वबुधः । तत्त्वबुधा । तत्त्वभुद्भ्याम् । तत्त्वभुद्भिः । इत्यादि ॥

धकारांतानाह । धकारांतः तत्त्वबुधशब्दस्तस्य रसे पदांते च ( आदिजबानां झभांतस्य झभाः स्ध्वोः ) इति बकारस्य भकारः । सौ धौ च सिलोपे कृते ( वाव-साने ) इति धकारस्य दकारतकारौ । स्वरादौ । स्वर० । भकारादौ ( झबे जबाः ) स्वर० । सुपि ( खसे चपा झसानाम् ) धस्य तः । स्वर० । एवं मर्मा विध् ॥

जकारांतः सम्राज्शब्दः।छशपराजादेः षः ॥ छकारांतस्य शकारांतस्य षकारांतस्य च राज्यज्सृज्मृज्भ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च ।षस्य षत्वं डत्वनिषेधार्थम् । षो डः ॥ षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदांते च । ( वावसाने ) इति टकारः डकारश्च । सम्राट्–सम्राड् । सम्राजौ । सम्राजः । हे सम्राट्–हे सम्राड् । सम्राजम् । सम्राजौ । सम्राजः । सम्राजा । सम्राड्भ्याम् । साम्राड्भिः । इत्यादि । एवं विराजादयः ॥

अथ जांताः । तत्र जकारांतः सम्राजशब्दः । तस्य स्वरादौ । स्वर० । रसे पदांते च विशेषः । सूत्रम् ( छशपराजादेः षः ) छश्च शश्च षश्च राजादिश्च छशषराजादिः तस्य ६–१ ( ङिति । टस्य । स्रो० ) । ष १–१ । ( स्रो० ) सिद्धम् । छकारांतस्य तत्त्वमाछादेः शकारांतस्य विशादेः षकारांतस्य द्विष् इत्यादेः तथा राज्यजसृज्मृज्भ्राजादेश्च षकारो भवति । ( षष्ठीनिर्दिष्टस्य० ) इत्यंत्यस्य । धातोर्झसे परे नाम्नश्च रसे पदांते च उभयोः । आदिशब्दात् व्रश्चभ्रस्जपरिव्राजां ग्रहणम् । षकारषत्वकरणं डत्वनिषेधार्थम् । षस्य षत्वे कृते ( षो डः ) इति डकारो न भवति। यत्तु षस्य षत्वं डत्वनिषेधार्थमिति तदपि द्वेष्टीत्यादावेव नतु सर्वत्र । यथा द्विषधातोस्त्यादौ द्वेष्टीत्यादिरूपम् । यद्वा छशषेति ग्रहणं व्यर्थमिति केचित् । प्रयोगदर्शनाभावात् । यत्तु षस्य षत्वं डत्वनिषेधार्थमिति तदपि व्यर्थम् । द्विट्–द्विड् । द्विषौ ।

द्विपः । अद्वेट् इत्यादौ पस्य पत्वेऽपि डत्वस्य दर्शनात् । तथा द्वेष्टीत्यादावपि पस्य पत्व न किंतु केवलम् ( झु भिः झु. ) । अनेन रसे पदाते च पस्य डः । ततः सूत्रम् ( षो डः ) पु ६–१ । स्व० ( स्रो० ) ड १–१ ( स्रो० ) सिद्धम् । पकारस्य डकारो भवति धातोर्झसे परे नाम्नश्च रसे पदाते च । केचित्तु ( वावसाने ) इत्यनेनैव पकारस्य ऋटुरपा मूर्द्धन्या इति स्थानसवर्णौ मूर्द्धन्यौ टकारडकारौ स्यातामिति । तथा भ्या भिस् इत्यादौ च ( झबे जबाः ) अनेन डत्वं स्यादतः ( षो डः ) इति सूत्रं व्यर्थमिति वदन्ति तच्चिंत्यम् । अनेन सौ धौ च ( हसे० ) इति सिलोपे कृते पस्य डः ( वावसाने ) डस्य वा टः [ सम्रो मस्य राट्शब्दे परे अनुस्वाराभावो वक्तव्यः ] सम्राट्–सम्राड् । भकारादौ पस्य डत्वे कृते । स्वर० । सुपि डत्वे कृते ( खसे० ) स्वर० । सम्राट्सु । क्वचित् हसादौ विभक्तौ अपदातेऽपि पदातताश्रयणीयेति (टोरंत्यात् ) इति ष्टुत्वाभावः । शेषं कठ्यम् । एवं विराजादयः। विराट्–विराड् । विराजौ । विराजः । राट्–राड् । राजौ । राजः । एवं देवान् यजतीति देवेट्–देवेड् । देवेजौ । देवेजः । विश्वसट्–विश्वसड् । विश्वसृजौ । विश्वसृजः। परिमृट्–परिमृड । परिमृजौ । परिमृजः । विभ्राट्–विभ्राड् । विभ्राजौ । विभ्राजः । एवं परिव्राट्–परिव्राड् । परिव्राजौ । परिव्राजः । तरुवृट्–तरुवृड् । तरुवृश्चौ । तरुवृश्चः । यवभृट्–यवभृड् । यवभृज्जौ । यवभृज्जः । इत्यादि । अन्येऽपि । भूसुक् यलिभुक् हुतभुक् वणिक् भिषक् अश्वयुक्प्रभृतयोपि जातास्तत्र ( चोः कुः ) एवम् ऋत्विक् ( दिशाम् ) इति कुत्वम् । ऋतुषु ऋतुं वा यजतीति ऋत्विक् । ऋत्विजौ । ऋत्विजः । डान्ता अप्रसिद्धाः ॥

दकारांताः त्यद्तद्यद्एतद्शब्दाः । एतेषां ( त्यदादेष्टेरः स्यादौ ) इत्यकारे कृते सर्वत्र सर्वशब्दवत्रूपं ज्ञेयम् । तैः॥ त्यदादेस्तकारस्य सौ परे सत्वं भवति । स्यः । त्यौ । त्ये । त्यम् । त्यौ । त्यान् । त्येन । त्याभ्याम् । त्यैः । त्यस्मै । इत्यादि । सः । तौ । ते । यः । यौ । ये । एषः । षत्वम् । एतौ । एते । एतम्–एनम् ।एतौ–एनौ । एतान्–एनान् ।एतेन–एनेन । एताभ्याम् । एतैः । एतयोः–एनयोः। एतेषाम् । एतस्मिन् । एतयोः–एनयोः । एतेषु ॥

दकारांतास्त्यदादयः शब्दास्तेषाम् ( त्यदादेष्टेरः स्यादौ ) इत्यकारे कृते सर्वत्र सर्वशब्दवत् । सौ तु विशेषः । सूत्रम् ( तः ) स तु ६–१ ( स्रो० ) त्यदादेस्तकार-

१ इदं 'तः' इत्येव 'सूत्रं' सकारानुवर्तनात् ।

स्येति वृत्तिः सुगमा । अनेन सौ तस्य सः । शेषं सर्ववत् । न वरम् । धेरभावः । स्यः । त्यौ । त्ये । एवं तद्यद्एतद्शब्दाः । एतच्छब्दस्य सर्वत्र टेरत्वे कृते सौ च (तः) इति तस्य सत्वे च कृते । (क्लिा०। स्रो०) एषः । एतौ । एते । द्वितीयायां टौसोश्च विशेषः । एतद् इति एतद्शब्दस्य अन्वादेशे सति । उक्तस्य पुनः कथनमन्वादेश उच्यते । यथा । एष राजा याति एनं पश्य । एष पठति एनं व्याकरणं पाठय अथैनं वेदमध्यापयेत्यन्वादेशः । तस्मिंश्च वाच्यमाने द्वितीयाटौस्सु द्वितीयायां वचनत्रयेपि टा इति तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने वा विकल्पेन एनादेशस्तकारस्य वा नकार इत्यर्थः । अनेनोक्तवचनेषु वा एनादेशः । एतम्–एनम् । एतौ-एनौ । एतान्–एनान् । एतेन–एनेन । एतयोः–एनयोः२ । शेषं सुकरम् । इति दांताः । अन्येपि बलभिद्दिविपद्सर्वविद्वेदविद्सुहृद्मभृतयः । गवखफांता अप्रसिद्धाः ॥

छकारांतस्तत्त्वप्राछ्शब्दः । तत्त्वप्राट्-तत्त्वप्राड् । तत्त्वप्राछौ । तत्त्वप्राछः । इत्यादि ॥

छकारांतः तत्त्वप्राछ्शब्दः । व्याकरणांतरे तु (छ्वोः शूडनुनासिके च) इति छस्य शत्वं विधाय ततः (छशषराजादेः षः) इति षत्वे कृते (षो डः । वावसाने) सम्राड्वत् तत्त्वप्राट्शब्दः । शेषं सुकरम् । छांतोऽयम् ॥

थकारांतः अग्निमथ्शब्दः । तस्य (वावसाने) चपा जबाश्च। अग्निमत्-अग्निमद् । संबोधनेऽप्येवम् । अग्निमथौ । अग्निमथः । अग्निमथम् । अग्निमथौ । अग्निमथः । अग्निमथा । अग्निमद्भ्याम् । इत्यादि ॥

थकारांतोऽग्निमथ्शब्दस्तस्य सौ धौ वा सिलोपे कृते (वावसाने) इति (वर्ग्यो वर्ग्येण सवर्णः) इति वचनात् थकारस्य वा तकारदकारौ । भकारादौ (झबे जबाः) थस्य दः । स्वर० । सुपि (खसे च०) थस्य तः । स्वरादौ । स्वर० । एवं थांताः॥

चकारांतः प्रत्यच्शब्दः [ अंचेः पंचसु नुमागमो वक्तव्यः ] प्रत्यन्च् सि इति स्थिते (स्तोः श्चुभिःश्चुः) इति चुत्वेन ञकारः । संयोगान्तस्य लोपः । चोः कुः ॥ चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च यथासंख्येन । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । अंचेरलोपो दीर्घश्च ॥ अंचतेर्धातोरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते प्रत्यये ईपि

ईकारे च । निमित्ताभावे नैमित्तिकस्याप्यभावः । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम्। प्रत्यग्भिः । एवम् तिर्यंचूप्रभृतयः । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः। तिर्यञ्चम् । तिर्यञ्चौ । तिरश्चादयः॥तिरश्चादयो निपात्यंते शसादौ स्वरे परे तद्धिते ईपि ईकारेच । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् । तिर्य्यग्भिः । तिर्य्यक्षु । एवम् उदङ् । उदञ्चौ । उदञ्चः । उदञ्चम् । उदञ्चौ । उदचूशब्दस्य उदीच् निपात्यते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । उदीचः उदीचा । समीचः । समीचा ॥

चकारांतः प्रत्यचूशब्दः । अञ्चु गतिपूजनयोः अंच् प्रतिपूर्वः क्विप्प्रत्ययः [ प्रतिपूर्वस्य अपूजार्थस्याञ्चतेर्नलोपो वक्तव्यः ] यद्वा नो लोपः ( इ यं० ) स्वर० । क्विपः सर्वापहारी लोपः । प्रत्यच् इति सिद्धम् । तस्य पंचसु विशेषः ( अंचेः पंचसु० )इति अंचुगतिपूजनयोरित्यस्य धातोः पुँल्लिगे स्यादिषु पंचसु वचनेषु परेषु नुम इत्यागमो भवति । प्रत्यन् च् इति स्थिते ( स्तोः श्चुभिः श्चुः ) इति नस्य ञ् ( हसे० ) इति सेर्लोपः ( संयोगांतस्य० ) इति चलोपः । सूत्रम् ( चोः कुः ) चु ६–१ ( ङिति । ङस्य ) इत्यकारलोपः ( स्रो० ) कु १–१ ( स्रो० ) सिद्धम् । चवर्गस्य० । वृत्तिः सुगमा । न वरम् । यथासंख्येनेति यथाक्रमेण चस्य कः छस्य खः जस्य गः झस्य घः ञस्य ङः इत्यर्थः। अनेन ञस्य ङ् । प्रत्यङ् । केचित्त्वत्र ( स्तोः श्चुभिः श्चुः ) इति न आद्रियंते । यतः ( संयोगान्तस्य० ) इति चलोपे कृते निमित्ताभावे नैमित्तिकस्याप्यभावः । इति पुनर्ञकारस्य नकार एव । ततः (चोः कुः) इत्यपि न भवति किंतु प्रत्यन् इति सिध्यति । द्विवचनादौ नुमागमे कृते ( नश्चापदा० ) स्वर० । प्रत्यंचौ। यद्वा। प्रत्यञ्चौ । प्रत्यञ्चः। प्रत्यञ्चम् । प्रत्यञ्चौ। शसादौ तु विशेषः। सूत्रम् (अंचेरलो०) अंचि ५–१ (ङिति । टस्य) इत्यलोपः ( स्रो० ) अस्य अकारस्य लुक् अलुक्१–१ । (हसे०।नामिनो०)दीर्घः १–१ (स्रो०)च १–१ (अव्य० । विसर्ज० । स्रोः०)अंचतेर्धातोः शसादौ स्वरे परे तद्धितसंबंधिनि प्रत्यये ईपिप्रत्यये च (ईमौ) इति सूत्रेण कृते ईकारेच परेअकारस्य लोपो भवति पूर्वस्य च दीर्घो भवति । तद्धिते प्रतीचीनः । प्रतीच्यः । ईपि प्रतीची । ईकारे प्रतीची । प्रत्यंचि । अत्र तु शसादौ स्वरे अनेन प्रति अच् इति विश्लेषे कृते अकारलोपः । इति ति इत्यस्य दीर्घः ती । भकारादौ ( चोः कुः ) इति ककारे कृते ( झबे जबाः ) कस्य गः । स्वर० । सुपि (चोः कुः । किलात्पः सः । कपसंयोगे क्षः) शेषं कंठ्यम्। पूजार्थस्य तु अंचते-

नलोपो न तेन प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चा । प्रत्यग्भ्याम् । प्रत्यग्भिः । प्रत्यञ्चे । इत्यादि । एवं प्राङ् । प्रांचौ । प्रांचः । प्रांचम् । प्रांचौ । प्रांचः । प्रांचा । प्राङ्भ्याम् । प्राङ्भिः । प्राङ्चे । प्राङ्भ्याम् । प्राङ्भ्यः । गत्यर्थस्य तु शसादौ । प्राचः प्राचा । तिर्यच्उदच्शब्दयोः पंचसु प्रत्यच्शब्दवत् । शसादौ तु विशेषः । सूत्रम् ( तिरश्चादयः ) तिरश्च आदिर्येषां ते तिरश्चादयः १–३ ( ए ओ जसि । ए अय् ) स्वर० ( स्रो० ) तिरश्चादय इति । तिर्यच्उदच्सध्र्यच्सम्यच्शब्दानां यथाक्रमं तिरश्च् उदीच् सध्रीच् समीच् इत्यादेशा निपात्यंते शसादौ स्वरे तद्धिते प्रत्यये ईपि ईकारे च । तद्धिते यथा तिरश्चीनः । ईपि तिरश्ची । ईकारे तिरश्ची । तिर्यंचि । अनेन शसादौ स्वरे परे तिर्यच्शब्दस्य तिरश्च् । उदच्शब्दस्य उदीच् । स्वर० । भकारादौ ( चोः कुः । झबे जबाः ) सुपि च ( चोः कुः । किला० ) इत्यादि । प्रत्यच् इत्यादयश्चांताः । टकारांता अप्रसिद्धाः ॥

तकारांतो मरुत्शब्दः ( वावसाने ) मरुत्-मरुद् । मरुतौ । मरुतः । मरुतम् । मरुतौ । मरुतः । मरुता । मरुद्भ्याम् । मरुद्भिः । इत्यादि । एवमग्निचित्प्रभृतयः । अग्निचित्–अग्निचिद् । अग्निचितौ । अग्निचितः । इत्यादि ॥

तकारांतो मरुत्शब्दस्तस्य सौ धौ च सिलोपे कृते ( वावसाने ) तकारस्य वा दकारः । भकारादौ (झबे जबाः) तस्य दः। स्वर०। स्वरादौ ( सुपि च ) स्वर० । एवम् अग्निचित्प्रभृतयोऽपि साध्याः । अग्निं चिनोति इंधनैर्वर्द्धयतीति अग्निचित् ॥

तकारांत उकारानुबन्धो महत्–शब्दः। ऋितो नुम् ॥ उकारानुबंधस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि विषये पंचसु परेषु । न्सम्महतोऽधौ दीर्घः शौ च ॥ न्संतस्य अप्शब्दस्य महत्शब्दस्य च दीर्घो भवति पंचसु धिवर्जितेषु शौ च परे । महान् । महांतौ । महांतः । हे महन् । महांतौ । महतः । महता । महद्भ्याम् । महद्भिः । इत्यादि ॥

तकारांत उकारानुबंधो महच्छब्दस्तस्य पंचसु विशेषः । मह पूजायाम् ( द्रुहिमहिपृषिभ्यः शतृ) एभ्यः शतृप्रत्ययो भवति । ऋकारानुबंधित्वं तु चित्यम् । महते इति महत् । कार्यार्थमुच्चारितस्य वर्णस्यानुबंधः इति संज्ञा । यथा–उच्चरितप्रध्वंसिनो ह्यनुबंधाः । सूत्रम् ( ऋितः० ) उश्च ऋश्च वृ वृ इत् यस्य स ऋित् तस्य ऋितः ६–१ ) स्वर० ( स्रो० ) नुम् १–१ ( हसे० । हबे । उ ओ ) सिद्धम् । उकारानुबंधस्य

वतुप्रत्ययादेः ऋकारानुबन्धस्य शतृप्रत्ययादेः नुमागमो भवति पुंसि पुँल्लिंगे पंचसु वचनेषु परेषु शौ च इति नपुंसके जश्शसोः स्थाने जाते शौ परे । अनेन पंचसु स्वादिषु तकारात् पूर्वं न । सूत्रम् ( न्सम्महतोऽधौ दीर्घः शौ च ) न्स् च अप् च महच्च न्सम्महत्तस्य ६–१ । स्वर० । न्सम् अग्रे महत् ( ञमे ञमा वा ) पस्य मः। स्वर० । न धिः अधिस्तस्मिन् अधौ ७–१ ( ङेरौ० ) टिलोपः । स्व० ( अतो० । उ ओ । एदो० ) दीर्घ १–१ ( स्रो० ) शि ७–१ ( ङेरौ० ) टिलोपः । स्वर० । च १–१ ( अव्य० ) पंचपदम् । न्संतस्येति सुहिन्स्शब्दं विहाय नुमागमसहितसकारांतस्य तथा अप्शब्दस्य जलवाचिनो नित्यं बहुवचनांतस्य तथा महत्शब्दस्य उकारानुबंधस्य पुंसि पंचसु वचनेषु धिवर्जितेषु नपुंसके शौ च दीर्घो भवति । ह्रस्वदीर्घप्लुता विधीयमानाः स्वरस्थाने भवंतीति न्सादीनां व्यंजनसन्निकृष्टस्य स्वरस्य दीर्घो भवतीत्यर्थः । अप्शब्दो बहुत्व एव । तत्र असमासांतस्य जसि दीर्घो नान्यत्र । समासांतस्य पंचस्वेव इयं विवक्षा । तथा शोभना आपो यत्र स स्वाप् देशः । स्वाप्–स्वाब् । स्वापौ । स्वापः । स्वापम् । स्वापौ । इति नपुंसके शौ स्वांपि। सरांसि । इति अनेन धिवर्जितेषु पंचसु दीर्घः । धौ तु नुमागम एव न दीर्घः । ( हसे० । संयोगांतस्य० ) इति सौ धौ च तकारस्य लोपः । शेषेषु ( नश्चापदांते झसे ) शसादौ । स्वर० । भकारादौ ( झबे जबाः ) स्वर० । शेषं सुगमम् ॥

उकारानुबंधो भवच्छब्दः । अत्वसोः सौ ॥ अत्वंतस्यासन्तस्य च दीर्घो भवति धिवर्जिते सौ च परे । भवान् । भवंतौ । भवंतः । हे भवन् । भवन्तम् । भवंतौ । भवतः । भवता । भवद्भ्याम् । भवद्भिरित्यादि । ऋकारानुबन्धः पचतृशब्दः । तस्य नुमागम एव न दीर्घो भवति । पचन् । पचंतौ । पचंतः । पचंतम् । पचंतौ । पचतः । पचता । पचद्भ्यामित्यादि । एवम् ऋकारानुबन्धो भवतृशब्दः ॥

उकारानुबंधो भवत्शब्दः । भा दीप्तौ । भातेर्डवतुः । यतः 'भातेस्तु भवतुः परः । भवान् पूज्ये युष्मदर्थे' । इति । तस्य पंचसु ( ब्रितो नुम् ) इति नुमागमः । सूत्रम् । ( अत्वसोः सौ ) अतुश्च अस् च अत्वसौ तयोः अत्वसोः ६–२ । स्व० ( स्रो० ) सि- ७–१ ( ङरौ० ) सिद्धम् । अत्वंतस्येति उकारानुबंधस्य असंतस्येति नुमागमरहितस्याऽसंतस्य शब्दस्य धिवर्जिते सौ परे दीर्घो भवति। अनेन सौ दीर्घो भवति न धौ धिवर्जित इति विशेषणात् धौ ( हसे० । संयो० ) हे भवन् । पक्षे हे भोः । अन्यत्र ( नश्चाप० ) स्वरादौ । स्वर० । भकारादौ ( झबे जबाः ) शेषं सुकरम् । एवम् अघीवत्चक्रीवत् कक्षीवत्शब्दाः । ऋकारानुबन्धो भवतृशब्दः । सू। ( शतृशानौ तिसिवत्क्रियायाम् ) इति शतृ-

प्रत्ययः ( अप्कर्त्तरि । गुणः । ओ अव् ) स्वर० । भवत् ( सुपि च ) इति तस्य ( ञितो नुम् ) इति नुमागमे कृते एव स्यात् । परम् अत्वंताभावात् ( अत्वसोः सौ ) इति दीर्घत्वं न । शेषं सुगमम् । एवं पचत् शब्दोपि रित् ऋकारानुबंध इत्यर्थः । एवम् अन्योपि शतृप्रत्ययांता ऋकारानुबंधा ज्ञेया इति तांताः । कपांता अप्रसिद्धाः ॥

शकारांतो विश्शब्दः (छशषराजादेः षः ) इति षत्वम् (षोडः)इति डत्वं च ( वावसाने ) चपा जबाश्च । विट्-विड् । विशौ । विशः । इत्यादि।षकारान्तः षष्शब्दः नित्यं बहुवचनांतस्त्रिषु सरूपः (जश्शसो-र्लुक्। षो डः।( वावसाने)षट्-षड्। षड्भिः। षड्भ्यः२ ।(ष्णः) इति नुट् । षड् नाम् इति स्थिते । डणः ॥ संख्यासंबंधिनो डकारस्य णत्वं भवति नामि परे । षण्णाम् । षट्सु[क्चिदपदान्तेऽपि पदांतता-श्रयणीया ] दोषाम् ॥ दोष्सजुष्आशिष्प्रविष्प्रभृतीनां षकारस्य रेफो भवति रसे परे पदांते च । दोः । दोषौ । दोषः । दोषम् । दोषौ । [ शसादौ स्वरे परे नांतता वा वक्तव्या ] दोष्णः–दोषः। दोष्णा-दोषा । दोर्भ्याम् । दोर्भिः । दोष्णे दोषे । दोर्भ्याम् । दोर्भ्यः । दोष्णः–दोषः । दोर्भ्याम् । दोर्भ्यः । दोष्णः–दोषः । दोष्णोः-दोषोः।दोष्णाम्-दोषाम्। दोष्णि-दोषि । दोष्णोः-दोषोः । दोर्षु । सजूः । सजुषौ । सजुषः । सजुषम् । सजुषौ । सजुषः । [ सजुषाशिषो रसे पदांते च दीर्घो वक्तव्यः ] ॥

शकारांतो विश्शब्दस्तस्य ( छशषरा० ) इति षत्वे कृते ( षो डः । वावसाने ) स्वरादौ । स्वर० । सुपि ( रसे च० ) सम्राज्शब्दवत् । विट्–विड् । विशौ । विशः इत्यादीनि रूपाणि । विट्–मनुष्यो वैश्यश्च । इत्यादयः शांताः । षकारांतः षष्शब्दो नित्यं बहुवचनांतस्त्रिषु लिंगेषु सदृशरूपः ( जश्शसोर्लुक् । षोडः । वाव-साने ) षट्–षड् । पुनरपि षट्–षड् । भकारादौ ( षो डः ) इति डत्वे कृते । स्वर० । आमि ( ष्णः ) इति नुडागमः ( षो डः ) इति डत्वम् । षड् नाम् इति स्थिते सति सूत्रम् ( ड् णः ) ड ६–१ ( सांके० ) ण् १–१ ( ह्से० ) न् ६–१ ( स्रो० ) संख्या० । वृत्तिः कंठ्या । अनेन नामि परे डकारस्य णकारः ( ष्टुभिः ष्टुः ) स्वर० । सुपि ( षो डः । रसे च० ) ततः टकारसकारयोगे ( ष्टुभिः ष्टुः ) इति प्राप्तौ ( टोरंत्यात् ) इति सूत्रेण ( ष्टुभिः ष्टुः ) इति तस्य षत्वनिषेधः । ननु अत्र पदांतत्वाभावात् टोरंत्यादिति सूत्रं कथं संभवति तत्राह क्वचिदिति । क्वचित्प-

योगांतरे अपदांतेपि पदांतता आश्रयणीया ग्रहणीया वक्तव्येति भावः । दोष्शब्दो भुजार्थवाचकस्तस्य भेदः । सूत्रम् । दोष् ६-३ । स्वर० । एकपदमिदं सूत्रम् । दोष्सजुष्आशिष्हविष्आयुष्सर्पिष्धनुष्ज्योतिष्प्रभृतिशब्दानां पकारस्य रसे परे पदांते च रेफो भवति सकारस्थाने जातस्य षकारस्येति व्याख्येयम् । अनेन रसे पदांते च रेफः । सौ औ च ( हसे० । स्रो० ) द्विवचनादौ । स्वर० । दोः । दोषौ । दोषः । दोषम् । दोषौ । शसादौ तु विशेषः [ शसादौ स्वरे परे नांतता वा वक्तव्या ] अस्यार्थः । दोष्शब्दस्य शसादौ स्वरे परे नांतत्वं भवति वा विकल्पेन अंते नकारागमो भवतीत्यर्थः । दोष् न् इति स्थिते ( ष्टुत्वो० ) स्वर० । दोष्णः-दोषः । दोष्णा । दोषा । भकारादौ (दोषाम्) जल० । दोर्भ्याम् । दोर्भिः । यद्वा (दोषाम्। रहाद्यपो० । झबे जबाः ) स्वर० । दोर्भ्याम् । दोर्भिरित्यादि । केचित्तु शसादावनंतता वा वक्तव्या इत्येवं पठंति । स्वरे इति पदं न पठंति । तन्मते स्वरादौ हसादौ च सर्वत्र विकल्पेन अन्-आगमे कृते स्वरादौ ( अल्लोपः स्वरे । ष्टुत्वो० ) स्वर० । द्वितीयपक्षे केवलम् । स्वर० । दोष्णः-दोषः । दोष्णा-दोषा । भकारादौ एकत्र अन्-आगमे कृते । स्वर० (नाम्नो०) दोषभ्याम् । द्वितीये ( दोषाम् ) जल० । दोर्भ्याम् । एवं दोषभिः-दोर्भिः । दोषे । स्वर० । दोष्णे । शसादावनंतता । स्वर० । ततः अल्लोपः । स्वर० ( ष्टुत्वो०) स्वर० दोषभ्याम्-दोर्भ्याम् । दोषभ्यः-दोर्भ्यः । दोष्णः-दोषः । दोषभ्याम्-दोर्भ्याम् । दोषभ्यः-दोर्भ्यः । दोष्णः-दोषः । दोष्णोः-दोषोः । दोष्णाम्-दोषाम् ( वेङ्योः ) दोष्णि-दोषणि-दोषि । दोष्णोः-दोषोः । सुपि अनंतत्वे कृते ( नाम्नो० ) दोषसु । पक्षे ( दोषाम् ) इति रत्वे ( किला० ) दोर्षु । केचित्तु ( दोषाम् । स्रो० । विसर्ज०) दोष्षु इत्यपि साधयंति । केचित्तु दोःषु इत्यपि पठंति ततो यथासंभवं साध्यः। दोष्शब्दः पुंक्लीबलिंगः क्लीबे तु । दोः । दोषी । दोंषि । जुषी प्रीतिसेवनयोः । जोषणं जुट् मिलनं प्रीतिः सह तेन वर्तते इति सजूर्मित्रम् [ सजुषाशिषो रसे पदांते च दीर्घो वक्तव्यः ] इति केचिन्नेच्छंति ( दोषाम् ) इति रत्वं विधाय ( य्वोर्वि हसे ) इत्यनेनैव सिद्धत्वात् । इति षांताः ॥

सकारांतः पुंस्शब्दः । पुंसोऽसुङ्॥ पुंस्शब्दस्य पंचसु परेषु असुङादेशो भवति । ङकारोंत्यादेशार्थः । उकारो नुम्विधानार्थः ( स्वरे मः ) पुमस् सि इति स्थिते ( त्रिनो नुम् ) इति नुमागमः ( न्सम्महतोऽध्वौ दीर्घः शौ च ) ( संयोगांतस्य लोपः ) (हसे० ) इति सेर्लोपः सयोगांतस्य लोपः । पुमान् । पुमांसौ । पुमांसः । हे पुमन् । पुमांसम् । पुमांसौ । पुंसः । पुंसा । पुंभ्याम् । पुंभिः ॥

सकारांतः पुंस्शब्दः। पुनातीति पुमान् ( पुनातेः सुप् नुम् च ) इति सुप्प्रत्ययो नुमागमश्च। प्रादेर्ह्स्वः। अथवा ( पातेर्डुमसुरिमन् ) इति डुम्सुप्रत्ययः। डित्वाट्टिलोपः। पुम्स्शब्दस्य पंचसु विशेषः। सूत्रम् ( पुंसोऽसुङ् ) पुंस् ६-१ स्वर० ( स्रो० ) असुङ् १-१ ( हसे०। अतोत्युः। उ ओ। एदो० ) पुम्स्शब्दस्य पंचसु स्यादिषु परेषु असुङ् इत्ययमादेशो भवति। ङकारोंत्यादेशार्थः। उकार उच्चारणार्थः। अनेनांत्यस्य सकारस्य अस् इत्यादेशः। पुमस् इति स्थिते ( ञिनो नुम् ) इति नुमागमः। पंचसु ( न्सम्महतः० ) इति धिवर्जमन्यत्र दीर्घः। सौ धौ च ( हसे० ) इति सिलोपः। ( संयोगांतस्य० ) इति सलोपः। अग्रे द्वितीयाद्वित्वं यावत् ( नश्चा० ) स्व०। पुमान्। पुमांसौ। पुमांसः। हे पुमन्। हे पुमांसौ। हे पुमांसः। पुमांसम्। पुमांसौ। शसादौ ( नश्चा० ) स्व०। पुंसः। पुंसा। भकारादौ ( संयोगांतस्य०। नश्चा० ) एवं सुपि ( संयोगां० नश्चा० ) पुंसु॥

**असंभवे पुंसः कक्सौ॥** असंभवेऽर्थे वाच्ये सति पुंस्शब्दस्य कगागमो भवति सुपि परे। ( स्कोरायोश्च ) इति सकारलोपः। कषसंयोगे क्षः। पुंक्षु। एवम् विद्वान्। विद्वांसौ। विद्वांसः। हे विद्वन्। विद्वांसम्। विद्वांसौ। **वसोर्व उः॥** वसोः संबंधी वकार उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च। विदुषः। विदुषा। ( वसां रसे ) विद्वद्भ्याम्। विद्वद्भिः। विद्वत्सु। इत्यादि॥

अथ रूपांतरं साधयति। असंभवे वैदिकप्रयोगे। असंभवो नाम वेदांतैकवेद्यस्यात्मनो बहुत्वाऽसंभवः। न विद्यते आत्मनो ब्रह्मणो बहुत्वसंभवो यत्रासौ असंभवः। कुतः। "एकमेवाद्वितीयं ब्रह्म। नेह नानास्ति किंचन" इति वेदांतशास्त्रेण वेद्यस्य ज्ञेयस्य आत्मनो बहुत्वाऽसंभवः। अथवा नास्ति संभवो बुद्धेः सूत्रादेश्च यत्र सोऽसंभवस्तस्मिन् वाच्ये सति पुंस्शब्दस्य सौ इति सुपि परे कगागमो भवति। अनेन पुंस् अग्रे कक्। कित्वादन्ते ( स्कोरायोश्च ) इति सलोपः ( किला० ) कषसंयोगे क्षः। पुंक्षु। इति सिद्धम्। परमपुरुषे पुंक्षु वैदिकप्रयोगोयं लौकिकेषु पुरुषेषु पुंसु। विद्वस्शब्दस्य पंचसु पुंसवत् ( ञिनो नुम्। न्सम्महतो धौ दीर्घः०। संयो० ) विद्वान्। विद्वांसौ। विद्वांसः। हे विद्वन्। विद्वांसम्। विद्वांसौ। शसादौ तु विशेषः। सूत्रम् ( वसोर्व उः ) वसु ६-१ ( टिति। टस्य। स्रो० ) व १-१ ( स्रो०। नामि० ) जल०। उ १-१। ( आदन्ते० ) वसोरिति क्वसुकानौ णलेवत् ( विदेर्वा वसुः ) इत्यादिसूत्रोत्पन्नो यो वसुप्रत्ययस्तस्य संबंधी वकारः सस्वरः उत्वं प्राप्नोति शसादौ स्वरे तद्धिते यप्रत्यये परे ईपि ईकारे च परे। तद्धिते वैदुष्यम्। ईपि च

विदुषी । अत्र अनेन शसादौ स्वरे परे सर्वत्र द्द इत्यस्य दुः ( किला० ) स्व० । हसादौ ( वसां रसे ) इति सस्य दत्वे कृते । भकारादौ । स्वर० । सुपि ( खसे० ) दस्य तः । स्वर० । एवं तस्थिवस्शब्दः । तस्थौ इति तस्थिवान् । ष्ठा गतिनिवृत्तौ । ( आदेः ष्णः स्नः ) स्था क्वसु-प्रत्ययः वस् च णवेवत् । तेन द्वित्वं ह्रस्वः ( शसात् खपाः ) इति पूर्वसस्य लोपः । (झपानां जबचपाः ) इति थस्य तः । (स्थामी) इति आकारस्य इकारः । तस्थिवस् इति जातम् । स्यादिः तस्थिवान् । तस्थिवांसौ । तस्थिवांसः । तस्थिवांसम् । तस्थिवांसौ । शसादौ स्वरे परे ( वसोर्व उः ) इति वस्य उत्वे कृते निमित्ताभावे नैमित्तिकस्याप्यभावः इति इकारस्य आकार एव । ततः ( आतोऽनपि ) इत्याकारलोपः । स्वर० ( किला० ) तस्थुषः । तस्थुषा । तस्थिवद्भ्यामित्यादि । एवं गतः इति जग्मिवान् । जग्मिवांसौ । जग्मिवांसः । जग्मिवांसम् । जग्मिवांसौ ( गमां स्वरे ) जग्मुषः । जग्मुषा । जग्मिवद्भ्यामित्यादि । अथवा जगन्वस्शब्दः । गम् वस्प्रत्ययः । द्वित्वम् ( मो नो धातोः ) जगामेति जगन्वान् । शसादौ स्वरे निमित्ताभावे नैमित्तिकस्याप्यभावः इति नकारस्य मकार एव । ( गमां स्वरे ) जग्मुषः । जग्मुषा । जगन्वद्भ्याम् । जगन्वद्भिरित्यादि । एवं पेचिवान् । पेचिवांसौ । पचिवांसः । पेचिवांसम् । पेचिवांसौ । पेचुषः । पेचुषा । पेचिवद्भ्याम् । पेचिवद्भिरित्यादि । उपास्रंसुपर्णध्वंसादीनां तु रसे पदांते च ( वसां रसे ) इति दत्वम् स्वरादौ । स्वर० । उपास्रत् (द्) । उपास्रसौ । उपास्रसः । उपास्रसम् । उपास्रसौ । उपास्रसः । उपास्रसा । उपास्रद्भ्याम् । उपास्रद्भिः । उपास्रत्सु । एवं पर्णध्वत् । पर्णध्वसौ । पर्णध्वसः । इत्यादि ॥

सुवचस्शब्दे तु ( अत्वसोः सौ ) इति दीर्घः । सुवचाः । सुवचसौ। सुवचसः । हे सुवचः । सुवचसम् । सुवचसौ । सुवचसः । सुवचसा ( स्रोर्विसर्गः । हबे) उत्वम् ( उ ओ ) सुवचोभ्याम् । सुवचोभिः । इत्यादि । एवं चन्द्रमस्शब्दः । चन्द्रमाः । चन्द्रमसौ । चन्द्रमसः। हे चन्द्रमः । चन्द्रमसम् । चन्द्रमोभ्याम् । चन्द्रमस्सु । इत्यादि ॥

सकारांतः सुवचस्शब्दः । वच परिभाषणे । सुपूर्वः (वचादेरस् ) स्वर० । नामत्वात्स्यादयः । ततः । सौ परे ( अत्वसोः सौ ) इति दीर्घः ( हसे० । स्रो० ) धौ ( हसेपः० । स्रो० ) हे सुवचः । स्वरादौ सर्वत्र सुपि च स्व० । भकारादौ ( स्रो० । हबे । उ ओ ) शेषं सुगमम् । एवं चंद्रमस्शब्दः । चंद्रमाः । चंद्रमसौ । चंद्रमसः । हे चंद्रमः । चंद्रमोभ्याम् । चंद्रमस्सु । एवं वेधाः । दुर्मेधाः । इत्यादि । एवं प्रचेतसञ्जातवेदस्उर्वःअरस्सुमनस्सुतेजस्विडोजस्प्रभृतयः साध्याः ॥

उशनस्शब्दस्य विशेषः । उशनसाम् ॥ उशनस् पुरुदंसस् अनेहन् इत्येतेषां सेरधेर्डा भवति । डकारष्टिलोपार्थः । उशना । उशनसौ । उशनसः । उशनसम् । उशनसौ । उशनसः [ उशनसो धौ सांतता नांतता अदंतता च वक्तव्या ] हे उशनः—हे उशनन्—हे उशन । हे उशनसौ । हे उशनसः ॥

उशनसादीनां सौ विशेषः । सूत्रम् (उशनसाम्)उशनम् ६–३ । स्व० । उशनस् पुरुदंसस् अनेहस् इत्येतेषां शब्दानां धिवर्जितस्य सेर्डा भवति। अनेन सेर्डा। डकारष्टिलोपार्थः ( डिति टेः ) इति टिलोपः। स्वर०। शेषं द्वित्वादौ सुवचस्वत् । उशनसौ । धौ विशेषमाह । [ उशनसो धौ० ] इति उशनसशब्दस्य धिविषय नान्तता अंत्यसकारस्य नकारः अदंतता अकारांतता च सकारस्य लोपो भवतीत्यर्थः । चकारात् तृतीये तु सांत एव तिष्ठतीति धौ रूपत्रयम् । यतः "संबोधने तूशनसस्त्रिरूपम्" इति । एकत्र ( हसे० । स्नो० ) द्वितीयरूपे सस्य नः ( हसे० ) तृतीये तु अदंतता वक्तव्येति सलोपः ( समाना० ) इति धेर्लोपः । हे उशनः- हे उशनन्-हे उशन इति ज्ञेयम् । उशनस् भ्याम् । इत्यत्र ( स्नो० । हवे । उ ओ ) उशनोभ्याम् । उशनोभिरित्यादि । उशना शुक्रः । एवं पुरुदंसस्—अनेहस्प्रभृतयः। पुरुदंसा । पुरुदंससौ। पुरुदंससः । पुरुदंसा इंद्रः । अनेहा । अनेहसौ । अनेहसः । इत्यादि । अनेहा कालः वर्षमासादनादिः ॥

अदस्शब्दस्य भेदः ( त्यदादेष्टेरः स्यादौ ) इति सर्वत्राकारः । अदस् सि इति स्थिते । सौ सः ॥सौपरे अदसो दकारः सो भवति।सेरौ॥ अदसः सेरौकारादेशो भवति । असौ । द्विवचने अद औ इति स्थिते दस्य मः ।मादू ॥ उश्च ऊश्च ऊ ।अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति । अमू । बहुवचने सर्वादित्वात् ( जसी।अ इ ए)अमे इति स्थिते। एरी बहुत्वे ॥ बहुत्वे त्यदस एकारस्य ईकारादेशो भवति।अमी । अमुम् । अमू। अमून् । तृतीयादौ मत्वे उत्वे च कृते (टा नास्त्रियाम्)अमुना।द्विवचने ( अद्रि) इत्यात्वं पश्चादूकारः ॥ अमूभ्याम् । अमीभिः।अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमूभ्याम् ।अमीभ्यः।अमुष्य। ओसि एत्वे कृते अयादेशे च उत्वे पश्चादुकारः । अमुयोः । अमी-

पाम्। अमुष्मिन्। अमुयोः। अमीषु। ( सामान्ये अदसः कः स्यादिवच्च ) अमुकः। अमकौ। अमुके। पुँल्लिंगे सर्ववत ॥ ॥ इति हसांतपुँल्लिंगप्रक्रिया ॥

अदस्शब्दस्य सकारांतस्यापि विशेषः। तस्य ( त्यदादेष्टेः० ) सर्वत्राकारे कृते अद सि इति स्थिते। सूत्रम् ( सौ सः ) सि ७-१ ( ङेरौ० ) टिलोपः। स १-१ ( स्रो० ) अदसो दकारस्य सौ परे सो भवति। अनेन दस्य सः। अस इति स्थिते सूत्रम्। सि ६-१ (ङिति। ङस्य। स्रो०) औ १-१। साके० (नामिनो रः) स्वर०। अदसः सवधिनः सेः औकारो भवति। अनेन सिस्थाने औ ( ओ औ औ ) असौ इति सिद्धम्। द्विवचनादौ ( त्यदादेष्टेः० ) इति सर्वत्राकारे कृते (दस्य मः) अम औ इति स्थिते (ओ औ औ) सूत्रम्। (मादू) म ५-१ ( ङसिरत्। सवर्णे०) उश्च ऊश्च ऊ १-१।साके० ( चपा अबे० ) सिद्धम्। अदसो मकारात्परस्य ह्रस्वस्य स्वरस्य ह्रस्व उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति। अनेन अमौ इत्यस्य औकारस्य दीर्घत्वादूकारः। अत्र पूर्वं विभक्तिकार्यं पश्चात् ( मादू )। टास्थाने तु पूर्वं ( मादू ) पश्चाद्विभक्तिकार्यमिति विवेकः।। अमू। बहुवचने सर्वादित्वात् ( जसी। अ इ ए ) अमे इति स्थिते। सूत्रम्। ( एरीं० ) ए ६-१ ( स्रो० ) ई १-१। साके० ( नामि० ) स्व०। बहुत्वे ७-१ (अ इ ए) बहुत्वे बहुवचने सति अदस्शब्दस्य मकारात्परस्य एकारस्य ईकारो भवति। अनेन एकारस्य ईकारः। अमी। मकारात्परस्येति चेन्न व्याक्रियते तदा। अमुक.। अमुकौ। अमुके। इति न सिद्ध्यति। अमि (अम्श०। मादू०) इति अकारस्य उकारः। अमुम् इति सिद्धम्। द्विवचनं प्रथमाद्विवचनवत्। बहुत्वे ( अम्श०। सोनः पुंस.। शसि। मादू )। अमून् इति सिद्धम्। टाविषये ( मादू ) अस्य उः। अमु। ततः ( टा नाऽस्त्रियाम् ) अमुना। द्विवचने ( अद्रि ) इत्यात्वम्। पश्चात ( मादू ) इत्याकारस्य दीर्घत्वादूकारः। अमूभ्यामिति सिद्धम्। एवं चतुर्थीपंचमीद्वित्वेऽपि तृतीयाबहुवचने (भिस्भिस् ) इति वचनात् ( ए स्मि बहुत्वे। एरी बहुत्वे ) अमीभिः। एव ४-३। ५-३ चतुर्थ्येकवचने ( सर्वादेः स्मट। मादू। क्लि०। ए ऐ ऐ ) अमुष्मै। पंचम्येकवचने ( टसिरत्। अतः ) इति स्मडागमः ( सवर्णे०। मादू। क्लि० ) अमुष्मात् षष्ठ्येकवचने ( ङस्य। मादू। क्लि० ) अमुष्य ६-२। ७-२। ओसि अकारस्य एकारः ( ए अय। मादू ) स्वर०। अमुयो.। आमि ( सुडाम.। ए स्मि०। एरी बहुत्वे। क्लि० ) अमीषाम्। ७-१ (ङि स्मिन। मादू। क्लि०) अमुष्मिन्। सुपि (ए स्मि०। एरी बहुत्वे। क्लि०) अमीषु। त्यदादित्वाद्दिरभाव'। संबोधनं न भवतीत्यर्थ। पुनर्विशेषमाह। सामान्य इति सामान्येऽर्थे विशेषकथने अज्ञानार्थे अदस्-

शब्दस्य कः प्रत्ययो भवति । स च स्यादिवत् ज्ञेयः । स्यादौ परे सति यत्कार्यं भवति तत्कार्यं कप्रत्यये परे भवतीत्यर्थः । तेन ( त्यदा० । दस्य मः । मादू ) इति भवति । स्यादिवच्चेति चकारात्प्रथमैकवचने असकौ इत्यपि रूपमपि भवति । पुंसि स्त्रियां च अदसः कप्रत्ययः । स्यादिवत्त्वात् ( त्यदादेष्टेरः स्यादौ । दस्य मः । मादू ) अमुक इति सिद्धम् । ततः स्यादयः । प्रक्रिया सर्वशब्दवत् ॥

इति हसांतपुँल्लिंगसाधनम् ।

---

## अथ हसांताः स्त्रीलिंगाः १०.

हकारांत उपानह्शब्दः । नहो धः ॥ नहो हकारस्य धकारादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च ( वावसाने ) इति तत्वं दत्वं च । उपानत्–उपानद् । उपानहौ । उपानहः । हे उपानत्–हे उपानद् । हे उपानहौ । हे उपानहः । उपानहम् । उपानहौ । उपानहः । उपानहा । उपानद्भ्याम् । उपानद्भिः । इत्यादि ॥

अथ हसांतस्त्रीलिंगे किंचिच्छब्दसाधनं लिख्यते । हकारांतः उपानह्शब्दः पादत्राणार्थवाचकः । तस्य स्वरादौ । स्वर० ( हो ढः ) इति ढत्वमाप्तौ तदपवादार्थं रसे पदांते च विशेषमाह । सूत्रम् । ( नहो० ) नह् ६–१ । स्वर० ( स्रो० । हचे । उ ओ ) ध १–१ ( स्रो० ) सिद्धम् । वृत्तिः कंठ्या । अनेन रसे पदांते च हस्य धः । सौ धौ च धत्वे कृते ( हसे० । वावसाने ) धकारस्य वा तकारदकारौ । भकारादौ । ( नहो धः । झबे ज० ) धस्य दः । स्वर० । सुपि ( नहो धः । रसे० ) धस्य तः । स्व० । शेषं कंठ्यम् । गोधुक्प्रभृतयः पुँल्लिंगवत् ज्ञेयाः । उष्णिक्–उष्णिग् । उष्णिहौ । उष्णिहः । उत् ऊर्ध्वं स्निह्यति क्षरतीति वा उष्णिक्–यवागूः ( दिगादि ) इति क्वम् । इति हांताः । यकारांता अप्रसिद्धाः ॥

वकारांतो दिव्शब्दः । दिव औ ॥ दिव्शब्दस्य औकारादेशो भवति सौ परे । द्यौः । दिवौ । दिवः । दिव् अम् इति स्थिते । वामि ॥ दिवो वकारस्य अमि परे वा आ भवति । द्याम्–दिवम् । दिवौ । दिवः । दिवा ( ऊ रसे ) दिवो वकारस्य उकारो भवति रसे परे । द्युभ्याम् । द्युभिः । दिवे । द्युभ्याम् । द्युभ्यः । इत्यादि ॥

वकारांतो दिव्शब्दः स्वर्ग–आकाशादिवाचकः । तस्य नामसंज्ञायां स्यादयः । दिव् स् इति स्थिते । सूत्रम् । दिव् ६–१ । स्वर० ( सो० ) औ १–१ सांके० ।

(आदेशे०) अत्र 'आ सौ' इति सूत्रात् 'सौ' इत्यनुवर्तते। दिव इति षष्ठ्या निर्दिष्टत्वा-द्दिवशब्दसंबंधिनो वकारस्य औकारो भवति सौ परे। अनेन सौ धौ च वस्य औकारः ( इ य० ) स्व० ( स्रो० ) द्यौः। एवं हे द्यौः। वर्णविधौ नेदमिति यदादेशस्तद्वद्भवतीति सिलोपो न। द्वित्वे बहुत्वे च। स्व०। अमि विशेषः। सूत्रम् ( वामि ) वा ३-१ ( अव्य० ) अम् ७-१। स्वर० ( सवर्णे० ) आ १-१। सांके० ( इ यं० ) त्रिपदम्। दिवो वकारस्य अमि परे वा आत्वं भवति। अनेन अमुविषये वकारस्य आकारः ( इ यं स्वरे ) स्वर०। द्याम्-पक्षे दिवम्। अग्रे स्वरादौ सर्वत्र। स्वर०। हसादौ तु विशेषः। सूत्रम्। उ १-१ सांके०। रसे ७-१ ( अ इ ए ) दिवो वकारस्य रसे परे उकारो भवति। यद्वा ( ऊ रसे ) उ १-१। उ ७-१। रसे ७-१। इति त्रिपदं सूत्रं पठंति। तेन रसे परे उवर्णेपि परे उकारो भवति। यथा द्युपितः दिवि ऊपितः द्यूपितः। एवं दिवम् ऊर्णोति आच्छादयतीति द्यूर्णुत्। अनेन भकारादौ सुपि च वस्य उकारः ( इ यं स्वरे ) सुपि ( ऊ रसे ) ततः ( किलादपः स:० ) इति वांताः॥

रकारांतश्चतुर्शब्दो नित्यं बहुवचनान्तः। **त्रिचतुरोः स्त्रियां तिसृचतसृवत्॥** स्त्रियां वर्तमानयोस्त्रिचतुर्शब्दयोस्तिसृ चतसृ इत्येतावादेशौ भवतः स्यादौ विभक्तौ परतः ऋकारश्च ऋकारवत्। ततः ( स्तुरार् ) इत्यादिसूत्रैः ऋदंतशब्दकार्यं न भवति। किं तु ( ऋ रम् ) भवति। तिस्रः। तिस्रः। चतस्रः। चतस्रः। तिसृभिः। चतसृभिः। तिसृभ्यः २। चतसृभ्यः २। **न तिसृ चतसृ नामि दीर्घत्वम्॥** तिसृचतसृ इत्येतयोर्दीर्घो न भवति नामि परे छंदसि वा। तिसृणाम्। चतसृणाम्। छन्दसि तु वा भवति। तिसॄणाम्। चतसृणाम्। तिसृषु। चतसृषु॥

रेफांतश्चतुर्शब्दो नित्यं बहुवचनांतस्तस्य च स्त्रियां विशेषः। सूत्रम् ( त्रिच० ) त्रिश्च चतुश्च त्रिचतुरौ तयोः ६-२। स्वरे० ( स्रो० ) स्त्री ७-१ ( स्त्रियां योः ) स्त्रीभुवोः। ( टिद्यामट ) स्व० ( सव० ) तिसृ च चतसृ च तिसृचतसृ १-२ सांके०। ऋवत् १-१ ( अव्य०। सवर्णे० ) सिद्धमिदं सूत्रम्। स्त्रियां वर्तमानौ यौ त्रिचतुर्शब्दौ तयोस्तिसृचतसृ इत्येतावादेशौ क्रमात् भवतः। त्रिशब्दस्य तिसृ चतुर्शब्दस्य चतसृ ऋकारश्च ऋकारवत् ऋकारेण तुल्यो ज्ञेयः। ततो दीर्घत्वाज्जसि ( स्तुरार् ) इति सूत्रेण आर न भवति ( पंचमु ) इत्यर। शसि ( अम्श० ) इत्य-

कारलोपो न । सप्तस्वपि बहुवचनेषु त्रिशब्दस्य तिसृ आदेशः चतुरशब्दस्य चतसृ । जसि शसि च ( ऋ रम् ) स्वर० ( स्रो० ) आमि नुडागमे कृते विशेषः । सूत्रम् । न १-१ ( अव्य० ) नाम् ७-१ । स्व० । दीर्घः १-१ ( स्रो० ) तिसृ चतसृ ६-२ । सांके० । छंदसि ७-१ । वा ३-१ तिसृचतसृ इत्येतयोरिति । स्त्रीलिंगे वर्तमानयोस्त्रिचतुरशब्दयोर्नामि परे दीर्घो न भवति । छंदसि तु वा भवति । वेदे तु तिसृणाम्-तिसॄणाम् । चतसृणाम्-चतसॄणाम् । इति द्वे रूपे भवतः। अन्यथा तिसृणाम् । चतसृणामित्येव । सुपि ( क्लिा० ) ॥

गिर्शब्दस्य भेदः । य्वोर्वि हसे ॥ धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः पदान्ते च । गीः । गिरौ । गिरः । हे गीः। गिरम् । गिरौ । गिरः । गिरा । गीर्भ्याम् । गीर्भिः । गीर्षु । पूः । पुरौ । पुरः । हे पूः । धूः । धुरौ । धुरः । हे धूः । धकारांतः समिधूशब्दः ( वावसाने ) समित्-समिद् । समिधौ । समिधः। हे समित्-हे समिद् । समिधम् । समिधौ । समिधः । समिधा । समिद्भ्याम् इत्यादि । भकारांतः ककुभ्शब्दः ( वावसाने ) ककुप्-ककुब् । ककुभौ । ककुभः । ककुभम् । ककुभौ । ककुभः । ककुभा । ककुब्भ्याम् । हे ककुप्-हे ककुब् । इत्यादि ॥

रेफांतो गिर्शब्दः गिरत्यनयेति गीः । गीर्वाणी सरस्वती चगॄ निगरणे । क्विप्-प्रत्ययः । क्विपः सर्वापहारी लोपः ( ऋत इर् ) इति गिर् इति जातम् । तस्य स्वरादौ सर्वत्र । स्व० । हसादौ तु विशेषः । सूत्रम् ( य्वो० ) इश्च उश्च य्वौ तयोः य्वोः ६-२ ( इ यं० । उ वम् ) ।स्व०( स्रो० ) र् च व् च र्व् तस्मिन् र्वि ७-१।स्व०। पश्चात् ( नामि० । रिलोपो दीर्घः० ) हसे ७-१ ( अ इ ए ) धातुसंबंधिनोरिकारोकारयोर्दीर्घो भवति रेफवकारयोः परयोः सतोः । किंविशिष्टयोः रेफवकारयोः हसपरयोः हसः परो अग्रे वर्तमानो याभ्यां तौ हसपरौ तयोः। अनेन हसादौ दीर्घः । गि इत्यस्य गी ( हसे० । स्रो० ) गीः । गिरौ । गिरः । हे गीः । गीर्भ्याम् । गीर्भिः । गीर्भ्यः २ । गीर्षु इत्यादिरूपमवसेयम् । शेषं कण्ठ्यम् । एवं पुरधुरादयः । उकारस्य दीर्घत्वे ऊकारः । शेषं गिर्-शब्दवत् । पूः । पुरौ । पुरः । पुरम् । पुरौ । पुरः । पुरा । पूर्भ्याम् । पूर्भिः । इत्यादि । एवम् । धूः । धुरौ । धुरः । इत्यादि । धकारांतः समिध्शब्दः इंधनार्थवाचकः । तस्य सौ धौ च ( हसे० ) इति सिलोपे कृते ( वावसाने ) धस्य वा तकारदकारौ । समित्-समिद् । भकारादौ ( झबे जबाः ) धस्य दः । स्व० । सुपि ( खसे० ) धस्य तः । स्व० । समित्सु । शेषं सुकरम् । एवं वीरुध् क्षुध् क्रुध् शब्दाः । भकारांतः ककुभ्शब्दः दिग्वाचकस्तस्य समिध्शब्दवत् प्रक्रिया । न वरम् ( वावसाने ) इति जयत्वे बः चपत्वे तु पः ।

ककुप्-ककुब् । ककुब्भ्याम् । ( झबे जबाः ) ककुप्सु ( खसे० ) इत्यादि । जकारांतः स्रजशब्दः पुष्पमालावाचकः । ( दिशाम् ) इति कत्वम् । स्रक्-स्रग् । स्रजौ । स्रजः । एवम् । रुक्-रुग् । रुजौ । रुजः । भकारादौ ( झबे जबाः ) स्रग्भ्याम् । स्रग्भिः । सुपि ( दिशाम् ) इति कत्वम् ( खसे० । क्लि० ) ( कप० ) स्रक्षु । दकारांताः शरद्संविद्संपद्आपद्विपद्परिषद्प्रतिपद्संसद्मुद्प्रभृतयः ॥

दकारांताः त्यद्तद्यद्एत शब्दाः ( तः ) ( त्यदादेष्टेरः स्यादौ ) इति सर्वत्राकारः ( आबतः स्त्रियाम् ) पकारः सिलोपार्थः ( सवर्णे दीर्घः सह ) इति दीर्घे कृते स्त्रीलिंगसर्वशब्दस्येव रूपं ज्ञेयम् । स्या । स्ये । स्याः । स्याम् । स्ये । स्याः । स्यया । स्याभ्याम् । स्याभिः । स्यस्यै । स्याभ्याम् । स्याभ्यः । इत्यादि । सा । ते । ताः । या । ये । याः । एषा । एते । एताः । अन्वादेशे । एताम्-एनाम् । एते-एने । एताः-एनाः । एतया-एनया । एतयोः-एनयोः । एवं किम् । का । के । काः । इयं स्त्रियाम् ॥ इदम् शब्दस्य स्त्रियामियं भवति सौ परे सिसहितस्य । इयम् । इमे । इमाः । इमाम्-एनाम् । इमे । इमाः । अनया । आभ्याम् । आभिः । अस्यै । आभ्याम् । आभ्यः । अस्याः । आभ्याम् । आभ्यः । अस्याः । अनयोः । आसाम् । अस्याम् । अनयोः । आसु ॥

त्यदादीनां विशेषः । दकारांतास्त्यद्तद्यद्एतद्शब्दास्तेषाम् ( त्यदादेष्टे० ) इत्यकारे कृते ( आबतः स्त्रियाम् ) इति सूत्रेण आप्प्रत्ययः । आप् इति पकारः ( आपः ) इति सूत्रेण सिलोपार्थः । ततः ( सवर्णे० ) इति दीर्घे कृते सिविषये ( तः ) इति तस्य सः । सावना सर्वशब्दवत् । स्या । स्ये । स्याः । एवं तद् । सा ( आपः ) ते ( औरी ) ताः ( सवर्णे० । स्रो० ) ताम् ( सवर्णे० ) ते ( औरी ) ताः ( सवर्णे० । स्रो० ) तया ( टौसोरे । ए अय् ) ताभ्याम् । ताभिः । तस्यै ( ङितां यट् । यटोच्च ) इति सुट्पूर्वस्य आपः अकारः । स्वर० ( ए ऐ ऐ ) ताभ्याम् । ताभ्यः । तस्याः ५-१ ( ङितां यट् । यटोच्च ) इति सुट् ६-१ । ङितां यट् । यटो० ) तयोः ( टौसोरे । ए अय ) स्वर० । तासाम् ( सुडामः ) स्वर० । तस्याम् ( आम्ङेः । ङितां यट् । यटोच्च ) स्वर० । तयोः । तासु । त्यदादित्वात्संबोधनाभावः । एवम् या । ये । याः । एतद्शब्दस्य एनादेशादिकं पुंवत् ( तः । षिला० ) एषा । एते । एताः [ इदमेतदोरन्वादेशे द्वितीयाटौस्स्वेनो या वक्तव्यः ] एताम्-एनाम् । एते-एने । एताः-एनाः । एतया-एनया ।

१ त्यच्छब्दस्य प्रायस्तच्छब्दस्येव प्रयोगो भवति । 'सच त्यधामगत्'इत्यादुवनिरलु प्रयोगोनलभात् ।

एतयोः–एनयोः । इति विशेषः । इत्यादि ज्ञेयम् । एवं मकारांतः किम्शब्दोऽपि सर्वाशब्दवत् ( त्यदादेष्टेः स्यादौ )( आवतः स्त्रियाम् )का । के । काः । इदम्शब्दस्य सौ विशेषः । इदम् १–१ सूत्रम् । इयम् १–१ ( इसे० ) स्त्री ७–१ ( स्त्रिया योः । स्त्रीभ्रुवोः । ङिता यद् ) स्वर० ( सवर्णे० ) द्विपदम् । इदम् शब्दस्य स्त्रीलिंगे सौ परे इयम् आदेशो भवति गुरुत्वात्सर्वस्य । अनेन । इयम् ( इसे० ) इयम् । इमे । इमाः । अग्रे द्वितीयाबहुत्वं यावत् । त्यदादेष्टेरत्वे कृते ( दस्य मः ) इति मत्वे कृते ( आवतः स्त्रियाम् । सवर्णे० ) गंगाशब्दवत् । तृतीयादौ ( त्यदादेष्टेः० ) इति सर्वत्र अकारः टाविषये ओसि च (अनटौ०) इति अनादेशे कृते(आवतः स्त्रियाम् । टौसोरे । ए अय् ) स्व० । अनया । अनयोः । भकारादौ सुपि च ( स्म्यः ) इति अकारे कृते ( आवतः स्त्रियाम् ) आभ्य म् । आभिः । ङेङसिङस्ङिषु(आवतः स्त्रियाम् । ङिता यद् । यटोच्च । स्म्यः ) अस्यै । अस्याः । सप्तम्येकवचने (आवतः स्त्रियाम् । आम् ङे० । ङिता यट् । यटोच्च । स्म्यः ) स्वरहीन० । अस्याम् । आमि ( सुडामः । स्म्यः । आवतः० ) स्व० । आसाम् । शेषं सुगमम् ॥

चकारांतः त्वच्शब्दः ( चोः कुः ) इति कत्वम् । त्वक्–त्वग् । त्वचौ । त्वचः । त्वचम् । त्वचौ । त्वचः । त्वचा । त्वग्भ्याम् । त्वग्भिः । त्वक्षु । इत्यादि । एवम् ऋच्वाच्प्रभृतयः ॥

चकारांतस्त्वच्शब्दस्तस्य रसे पदांते च ( चोः कुः ) इति चस्य कः सौ धौ च ( हसे० ) इति सिलोपे कृते चस्य कत्वे कृते ( वावसाने ) इति वा कस्य गकारः । पक्षे ककार एव तिष्ठति । त्वक्–त्वग् । हे त्वक्–हे त्वग् । भकारादौ कत्वे कृते ( झबे जबाः ) कस्य गः । स्व० । त्वग्भ्याम् । त्वग्भिरित्यादि । सुपि ( चोः कुः । कि० ) कषसंयोगे क्षः । त्वक्षु । स्वरादौ सर्वत्र । स्वर० । त्वचौ । त्वचः । इत्यादि । एवम् ऋचवाचूशुचप्रभृतयोऽपि चकारांता ज्ञेयाः । ऋक्–ऋग् । ऋचौ । ऋचः । वाक्–वाग् । वाचौ । वाचः । इत्यादि । शुक्–शुग् । शुचौ । शुचः । तकारांता योषित् सरित् तडित् विद्युत् प्रभृतयः ॥

पकारांतोऽप्शब्दो नित्यं बहुवचनांतः।अप् जस् इति स्थिते(न्सम्महतः०) इति दीर्घः ।आपः । द्वितीयाबहुवचने पंचस्विति विशेषणात न दीर्घः । अपः । भि दपाम् ॥ अनादीनां भकारे परे दत्वं भवति। अद्भिः । अद्भ्यः २ । अपाम् । अप्सु ॥

पकारांतः अप्शब्दो नित्यं बहुवचनांतः नित्यं स्त्रीलिंगे । अप् अस् इति स्थिते सति ( न्सम्महतः० ) इति दीर्घः । स्वर० ( सो० ) आपः । शसि पंचसु इति विशेषणात्र दीर्घः किंतु । स्वर०( सो० ) अपः । भकारादौ विशेषः । सूत्रम् ( भि दपाम् ) भ् ७–१ । स्वर० । द् १–१ ( इसे० ) अप् ६–३ त्रिपदम् । अपादीना-

मित्युक्तः पाठः । किं तु अप्शब्दस्य अप्शब्दसंबधिनः पकारस्य स्यादौ भकारे परे दकारो भवति । सूत्रे अपामिति बहुवचनं अप्शब्दस्य बहुवचनातत्वे ज्ञापकम् । अनेन पस्य दः । अद्भिः । अद्भ्यः २ । आम सुपि च । स्व० । अपाम् । अप्सु ॥

चकारांतो दिश्शब्दः । दिशाम्[1] ॥ दिश् दृश् स्पृश् मृश् इत्यादीनां रसे पदांते च कुत्वं भवति । दिक्–दिग् । दिशौ । दिशः । दिशम् । दिशौ । दिशः । दिशा । दिग्भ्याम् । दिक्षु । इत्यादि । पकारांतः त्विष्शब्दः । ( षो डः ) इति डत्वम् ( वावसाने ) इति टकारः । त्विट्–त्विड् । त्विषौ । त्विषः । हे त्विट्–हे त्विड् । त्विषम् । त्विषौ । त्विषः । त्विषा । त्विड्भ्यामित्यादि । आशिष्शब्दः सजुष्शब्दवत् । आशीः । आशिषौ । आशिषः । इत्यादि । स्त्रीलिंगस्य अदस्शब्दस्य सौ न विशेषः । द्विवचनादौ तु टेरत्वे मत्वे च कृते अनन्तरम् (आवतः स्त्रियाम् ) इत्याप् दीर्घत्व विभक्तिकार्यम् । पश्चात् (माद् ) इति ह्रस्वस्य ह्रस्व उकारः दीर्घस्य दीर्घ ऊकारश्च । असौ । अमू । अमूः । अमूम् । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमुयोः । अमूषु (सामान्ये अदसः कः०) अमुका । अमुके । अमुकाः । इत्यादि स्त्रीलिंगे सर्वाशब्दवद्रूपं ज्ञेयम् ॥

इति हसांताः स्त्रीलिंगाः ।

शकारांतो दिश्शब्दस्तस्य रसे पदांते च विशेषः । सूत्रम् । दिश् ६–३ । स्वर० ( स्रो० ) दिश्दृश्स्पृश्मृश्ऋत्विज्दधृष्स्रज्उष्णिह्अंच्युज्कुञ्च्असृज् इत्यादीनां शकारस्य अन्तस्य च रसे पदांते च कुत्वमित्यर्थः । शेषं कंठ्यम् । अनेन रसे पदांते च शस्य कः । ततः ( वावसाने ) दिक्–दिग् । हे दिक्–हे दिग् । दिशौ । दिशः । दिग्भ्याम् ( दिशाम् । सूत्रे जवा. ) दिक्षु ( दिशाम् ) इति कत्वम् ( कि ?१० ) कपस० । एवम् । दृक्–दृग् । दृशौ । दृशः । मर्मस्पृक्–मर्मस्पृग् । मर्मस्पृशौ । मर्मस्पृशः । ऋत्विक्–ऋत्विग् । ऋत्विजौ । ऋत्विजः । इत्यादि । षकारांतस्त्विष्शब्दस्तस्य रसे पदांते ( षोडः ) इति डत्वम् । सौ धे । न ( हसे० । वावसाने ) डकारटकारौ । त्विट्–त्विड् । हे त्विट्–हे त्विड् । भकारादौ ( षोडः )

1 अत्र षो डः इत्यस्मात् पूर्वाद्दुषूचो इत्यार्थं 'दिशाम्' इत्येकम् सूत्रम् ।

स्वर० । त्विड्भ्यामित्यादि । सुपि । ( षो डः । खसे चपा० ) डस्य टः । स्वर० । त्विट्सु । एवं मावृष् विप्रुष् रुष् तृष् शब्दाः । आशिष्शब्दः सजुष्शब्दवत् ज्ञेयः । ( दोषाम् ) इति षस्य रः । ( सजुषाशिषो रसे पदांते च दीर्घः ) स्रो० । आशीः । स्वरादौ । स्वर० । आशिषौ आशिषः। आशिषम् । आशिषौ । आशिषः ।(दोषाम्) सजुषाशिषो रसे पदांते च दीर्घः । जल० । आशीर्भ्याम् । आशीःषु । ( स्रो० ) इत्यादि ज्ञेयम् । सकारांतस्य स्त्रीलिंगस्य अदस्शब्दस्य सौ विशेषो न सिविषये । यथा पुँल्लिंगे रूपं तथैवात्रापि ( त्यदादेष्टेः० ) इत्यकारः ( आवतः स्त्रियाम् । सौ सः । सेरौ । ओ औ औ ) असाविति सिद्धम् । द्विवचनादौ सर्वत्र टेरत्वे कृते ( दस्य मः ) ततः ( आवतः स्त्रियाम्) इत्यापि कृते स्त्रीलिंगे सर्वाशब्दवत् विभक्तिकार्ये कृते ( औरी । अ इ ए ) पश्चात् ( मादू ) इति ह्रस्वस्य स्वरस्य ह्रस्व उकारः दीर्घस्य स्वरस्य दीर्घ ऊकारः । अमूः । ( सवर्णे०। मादू । स्रो० ) अमूम् । अमू । अमूः । अमुया ( टौसोरे ) अमूभ्याम् । अमूभिः । ( मादू ) अमुष्यै ( ङितां यट् । यटोच्च ) इति पूर्वस्यापोऽकारः ( मादू । कि० ) स्वर० ( ए ऐ ऐ ) अमूभ्याम् । ( मादू ) अमूभ्यः ( मादू ) अमुष्याः । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमुयोः ( टौसोरे । ए अय् ) स्वर० ( मादू ) अमूषाम् । ( सुडामः । मादू । कि० ) स्वरहीनं० । अमुष्याम् ( आम्ङेः । ङितां यट् । यटोच्च ) पूर्वस्य चापोऽकारः ( मादू । किला० ) स्व० । अमुयोः ( टौसोरे ) अमूषु ( मादू । किला० ) सामान्येऽर्थे वाच्ये सति अदस्शब्दात्कः प्रत्ययो भवति । अमुका । अमुके । अमुकाः ।इत्याद्या ज्ञेयाः ।सुमनस् अप्सरस् भास् सुवचस्प्रभृतयो ज्ञेयाः॥

इति हसांतस्त्रीलिंगसाधनम् ।

## अथ हसांता नपुंसकलिंगाः ११.

अथ हसान्ता नपुंसकलिंगाः प्रदर्श्यन्ते । रेफांतो वार्शब्दः(नपुंसकात्स्यमोर्लुक् ) वाः, वारी, वारि २ । अयम इति विशेषणात्व नुम् न भवति । वारा । वार्भ्याम् । वार्भिः । वार्षु । इत्यादि । चतुर्शब्दो नित्यं बहुवचनांतः (चतुराम्शौ च) इत्याम् । चत्वारि२ ।इत्यादि ॥

अथ हसांतनपुंसके किंचित्साधनमुच्यते । अथ मुख्यवृत्त्या हकारांतः शब्दो नास्ति । गौणत्वे तु सुष्ठु अनड्वान् यस्य तत् स्वनडुह्स्वनडुह् १–१ (नपुंसकात्स्यमोर्लुक् । वसां रसे । वावसाने ) स्वनडुत्–स्वनडुद् । स्वनडुही । स्वनड्वांहि ( चतुरनडुहोराम् शौ च ) इत्याम् । पुनरपि । स्वनडुत्–स्वनडुद् । स्वनडुही । स्वनड्वांहि । एवम् । गोधुक्–गोधुग् । गोदुही । गोदुंहि । अनुपानत्–अनुपानद् । अनुपानही । अनुपानंहि इत्यादि । अथ रेफांतो वार्शब्दस्तस्य ( नपुंसकात्स्यमोर्लुक् । स्रो० )

वाः। हे वाः। द्वित्वे तु ( ईमौ ) स्व० । वारी । हे वारी । जसि शसि च ( जश्शसोः शिः ) इति शौ कृते अयम इति विशेषणात् यमभत्याहारातस्य नुमागमनिषेधान्नुमागमो न भवति । तेन स्व० । वारि । हे वारि । पुनरपि द्वितीयायाम् । वाः । वारी । वारि । तृतीयादौ स्वरादौ । स्व० । वारा । हसादौ तु । जल० । वार्भ्याम् । सुपि ( किञ० ) जल० । वार्षु । इत्यादयः। चतुर्शब्दस्य बहुवचनातस्य ( जश्शसोः शिः ) इतीकारे कृते ( चतुराम् शौ च ) इत्याम् ( उ वम् ) स्व० । चत्वारि २ । चतुर्भिः । चतुर्भ्यः।चतुर्भ्यः। आमि (रः संख्यायाः) इति नुडागमः (ष्रुर्नो०। रहाद्‌यो० ) स्वर० । चतुर्णाम् । सुपि ( किला० ) चतुर्षु । शेषं कंठ्यम् । गौणत्वे तु प्रियाश्चत्वारः पुरुषा यस्य तत् । प्रियचतुः । प्रियचतुरी । प्रियचत्वारि । प्रियाः चतस्रः स्त्रियो यस्य तत्-प्रियचतस्र । प्रियचतसृणी । प्रियचतसृणि ॥

नकारांतः अहन्शब्दः । अह्नः[१] ॥ अहन्शब्दस्य नकारस्य विसर्गादेशो भवति रसे पदांते च ( स्रोर्विसर्गः ) अहः ( ईमौ।वेङ्योः) अह्नी-अहनी, अहानि २ । अह्ना । अहोभ्याम् । अहोभिः।अह्ने । अहोभ्याम् । अहोभ्यः ।अह्नः।अहोभ्याम्। अहोभ्यः।अह्नः।अह्नोः। अह्नाम् । अह्नि अहनि । अह्नोः । अहःसु । ब्रह्मन्शब्दस्य रसे पदांते च नस्य लोपः । ब्रह्म,ब्रह्मणी, ब्रह्माणि २ । ब्रह्मणा । ब्रह्मभ्याम् इत्यादि [ संबुद्धौ नपुंसके वा नलोपो वाच्यः । ] एवं चर्मन् वर्मन् पर्वन् प्रभृतयः ॥

नकारांतः अहन्शब्दः । सूत्रम् । अहन् ६-१ ( अल्लोपः स्वरे० ) स्व०।( स्रो०) अह प्रकाशगत्योः । अहातीति अहः । अन्नंतादन्शब्दस्य सवधिनो नकारस्य सकारो भवति षष्ठीनिर्दिष्टत्वादत्यस्य रसे पदाते च। अनेन सौ औ च अमि च ( नपुसकात्स्यमोर्लुक् ) इति स्यमोर्लोपे कृते ( अह्नः ) इति नकारस्य सकारे कृते ( स्रो० ) अहः २ । हे अहः । द्विवचने तु ( ईमौ ) इतीकारे कृते ( वेङ्योः ) इति वा अकारलोपः । स्वर०। अह्नी-अहनी २। जसशसविषये तु ( जश्शसोः शिः । नोपधायाः ) स्वर० । अहानि २ । यमभत्याहारातत्वान्न नुम् स्वरादौ सर्वत्र ( अल्लोपः स्वरे) इति अल्लोपः । अह्ना। अह्ने । इत्यादि। भकारादौ (अहः )इति नकारस्य सकारः (स्रो० । हने । उ ओ ) अहोभ्याम् । अहोभिरित्यादि । ङिवचने (वेङ्योः)इति वा (अल्लोपःस्वरे०) अह्नि-अहनि । सुपि ( अह्नः ) इति स.। स्व०। अहस्सु। ब्रह्मन्शब्दस्य ( नपुंसकात्स्यमोर्लुक् ) इति सौ अमि च लुप्ते सति ( नाम्नो० ) इत्यधाविति विशेषणात् घौ नस्य लोपो न भवति । ब्रह्म । हे ब्रह्मन् । क्षेमेंद्राचार्यस्तु-संबो-

१ अह'सादिषस्य 'इति सूत्रात् 'विसग 'इ'यस्य पदस्याऽनुवर्तन जाते 'अह्न इतार सा' मय सूत्रम् ।

धनेपि वा नकारलोपमिच्छति । तेन हे ब्रह्म इत्यपि स्यात् । प्रक्रियाकौमुद्यां च ( संबुद्धौ वा नपुंसकानां नलोपो वाच्यः ) इति द्विवचने तु ( ईमौ ) इति ईकारे कृते अम्वयुक्तादिति विशेषणादल्लोपनिषेधः । स्वर० । ब्रह्मणी, बहुत्वे ( जश्शसोः शिः । नोपधायाः । ष्णो० ) स्व० । ब्रह्माणि २ । अग्रे स्वरादौ सर्वत्र ( ष्णो० ) स्व० । ब्रह्मणा । रसे परे च ( नाम्नो० ) ब्रह्मभ्याम् । ब्रह्मसु । एवं चर्मन्कर्मन्वर्मन्गर्मन्नर्मन्पर्वन्प्रभृतयः ( अल्लोपः स्वरे० ) इत्यकारलोपानर्हाः । दामन्सामन्नामन्लोमन्व्योमन्प्रेमन्धामनहेमन्प्रभृतयोऽपि नांताः शब्दाः साध्याः । नाम, नामनी, नामानि २ । एव दंडिन्– दंडि, दंडिनी, दंडीनि २ ॥

नांतादद्‌ंताच्छंदसि ङिश्योर्वा लोपः । [ छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ ] परमे व्योमन् । सर्वा भूतानि ।

पुनर्विशेषमाह । ( नांता० ) छंदसि वेदे नांतात् नकारांतात् अदंतात् अकारांतात् शब्दात्परयोर्नपुंसकलिंगसंबंधिनोर्ङिश्योर्वा लोपः । ङि सप्तम्येकवचनम् । शि ( जश्शसोः शिः) इति एतयोर्वा बहुलं लोपो भवति । यथा परमे७–१ । व्योमन्७–१ उभयत्रापि ७–१ । ङि एकत्र ( अ इ ए ) अन्यत्र ङिलोपः । छांदसिकत्वात् ( नाम्नो नो० ) इत्यपि न भवति । अथवा ( छंदस्यागमजानागमजयोर्नकाग्योर्लोपालोपौ क्वचिद्वक्तव्यौ ) इति । सर्व १–३ । भूत १–३ । उभयत्र प्रथमाबहुवचने ( जश्शसोः शिः । नुमयमः । नोपधायाः । ष्णो० ) स्वर० । ततः शिलोपः छांदसिकत्वात् ( नाम्नो नो लोपश्वौ ) इति नकारस्यापि लोपो भवति । यद्वा निमित्ताभावे नैमित्तिकस्याप्यभावः छांदसिकत्वादेव दीर्घत्वं तु न निवर्त्तते । भूत १–३ ( जश्शसो० । नुम० । नोप० ) स्वर० । परमे प्रकृष्टे व्योमन् आकाशे सर्वा भूतानि सर्वाणि भूतानि वर्त्तते इत्यर्थः । यथा परमे व्योमन् इत्यत्र ङिलोपः। सर्वाणि भूतानि इत्यत्र नुमसहितशिलोपः । परमे व्योमन् सर्वा भूतानि इति छांदसिकम योगः । असृक्–असृग् । असृजी । असृंजि ( दिशाम् ) इति कत्वम् ॥

दकारांतास्त्यदादयः शब्दाः । त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति स्यादाविति विशेषणात् । द्विवचनादौ टेरत्वे कृते सर्वशब्दवद्रूपं ज्ञेयम् । त्यत्–त्यद्, त्ये, त्यानि २ । तत्–तद्, ते, तानि २ । यत्–यद्, ये, यानि २ । [ नपुंसके एतदोऽन्वादेशे अनि एनदिति वक्तव्यम् ] एतत्–एतद्, एते, एतानि२ । एनत्(द्)एने।एनानि । किम्, के, कानि २ । इदम्, इमे, इमानि २ । तृतीयादौ सर्वत्र पुंवत् ॥

अथ दकारांतास्त्यदादयः । तेषां त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति । स्यादौ विभक्तौ परे एव भवति न तु लुकि कृते इति विशेषणात् लुकि न तन्निमित्तमिति । अत एव ( तः ) इति सत्वमपि न भवति । तत् । द्विवचनादौ ( त्यदादे० । ईमौ । अ इ ए ) त्ये, त्यानि २ । तत् ( त्यदादे० । जश्श० । नुम० । नोप० ) स्व० । तृतीयादौ सर्वत्र ( त्यदादेष्टे० । टेन ) तेन । ताभ्याम् ( अद्भि )तैः ( अ इ ए । ए ऐ ऐ ) तस्मै ( सर्वादेः स्मट् । ए ऐ ऐ ) ताभ्याम् ( अद्भि ) तेभ्यः ( ए स्भि० ) तस्मात् ( ङसिरत् ) इति स्मडागमः ( सवर्णे० ) ताभ्याम् । ( अद्भि ) तेभ्यः ( ए स्भि० ) तस्य ( ङस्स्य )तयोः ( ओसि । ए अय् ) तेषाम् ( सुडामः । ए स्भि० । किला० ) स्व० । तस्मिन् ( ङि स्मिन् ) तयोः ( ओसि । ए अय् ) तेषु ( कि० ) त्यदादीनां घेरभावः । एवम् । एतत्-एतद् । एते । एतानि । द्वितीयायाम् [ एतदोन्वादेशे० ] इत्यस्य प्राप्तौ अमि विषये वक्तव्ये विशेषमाह [ नपुंसके एतदोऽन्वादेशे अमि एनदिति वक्तव्यम् ] एतत् ( द् )-एनत् ( द् ) । एते-एने । एतानि-एनानि । शेषं पुवत् । केचित्तु इदमशब्दस्याप्यन्वादेशे नपुंसके अमि एनदितीच्छंति । मकारांतः किमूशब्दस्तस्य ( नपुंसकात्स्यमोर्लुक् ) इति लुकि कृते त्यदादेष्टेरत्वं न । किंतु ( मोनु० ) अन्यत्र तु त्यदादेष्टेरत्वे कृते नपुंसके सर्वशब्दवत् । किम्, के, कानि २ । एवम् । इदम्, इमे, इमानि २ । तृतीयादौ सर्वत्र पुंवत् पुँल्लिंगवत् ॥

चकारांतः प्रत्यच्शब्दः (चोः कुः) प्रत्यक्२ ।(अञ्चेरलोपो दीर्घश्च) प्रतीची २ । प्रत्यञ्चि २ । तकारांतः जगत्शब्दः । जगत ( द् ), जगती, जगंति २। महत्शब्दे तु न्सम्महत इति विशेषणात सिविषये दीर्घत्वम् । महत् ( द् ), महती, महांति २ । इत्यादि ॥

चकारांतः प्रत्यच्शब्दः ( नपुंसकात्स्यमोर्लुक् । चोः कुः । वावसाने ) प्रत्यक्-प्रत्यग् २ । द्विवचने ( ईमौ । अञ्चेर्लुग्दीर्घश्च ) स्वर० । प्रतीची २ । बहुत्वे ( जश्श० । नुम० । नश्चा० ) प्रत्यञ्चि २ । अनाकारस्योपधाऽभावात् ( नोपधायाः ) इति न दीर्घत्वम् । अग्रे तृतीयादौ पुंवत् । एवम् स्वरादौ ( अञ्चेरलोपो दीर्घश्च ) भकारादौ ( चोः कुः । झबे जबाः ) प्रतीचा । प्रत्यग्भ्याम् । प्रत्यग्भिरित्यादि । सुपि ( चोः कुः । किला० ) कप० । प्रत्यक्षु । एवम् । तिर्यक् ( ग् ), तिरश्ची, तिर्यञ्चि २ । अन्वक् ( ग ), अनूची, अन्वञ्चि २ । गवाक् ( ग् ), गोची, गवाञ्चि २ । गामंचतीति गोअक् ( नो लोपः । गवादेरवर्णागमः । ओ अव् ) गवाक् ( ग् )। गवाच् औ ( अञ्चेर्लोपो० ) निमित्ताभावे नैमित्तिकस्याप्यभावः । इत्यवर्णागमस्यापि लोपः ( ओ अव ) इत्यस्यापि निषेधः । गोची । गवाच् अस ( जश्शसोः

शिः । नुमयमः ) इत्यादि । सकारांतो जगत्शब्दस्तस्य स्यमोर्लुकि । जगत् (द्) २ । द्वित्वे (ईमौ) स्वर० । जगती २ । बहुत्वे (जश्शसो० । नुम० । नश्चाप० ) जगंति २ । शेषं कंठ्यम् । एवं यकृत् ( द् ) । यकृती । यकृंति । शकृत्(द्) । शकृती । शकृंति । महत्शब्दोऽप्येवम् । न वरम् । शौ विषये ( न्सम्महतोर्धौ दीर्घः० ) इति दीर्घत्वम् । महत् ( द् ), महती, महांति २ । महता । महद्भ्यामित्यादि । पुंवत् ॥

सकारांताः पयस्तेजस्वचस्प्रभृतयः । पयः, पयसी, पयांसि २। पयसा । पयोभ्याम् । पयोभिः । इत्यादि । अदस्शब्दस्य स्यमोर्लुकि कृते ( स्रोर्विसर्गः ) द्विवचनादौ टेरत्वे कुत्वे मत्वोत्वे । अदः, अमू, अमूनि २ । शेषं पूर्ववत् । इति हसांता नपुंसकलिंगाः ॥

इति हसांताः समाप्ताः ।

सकारांतः पयस्शब्दः । पयः पानीयं दुग्धं वा । स्यमोर्लुकि कृते (स्रो०) पयः २। द्वित्वे ( ईमौ ) स्वर० पयसी २ । बहुत्वे ( जश्शसोः शिः । नुमयमः । न्सम्महतः०) इति दीर्घः । पयांसि २ । तृतीयादौ स्वरादौ । स्वर० । भकारादौ (स्रो० । हवे । उ ओ ) पयसा । पयोभ्याम् । पयोभिरित्यादि । एवं तेजस् वचस् महस् यशस् वयस् शिरस् तपस् मनस् तमस् अंभस् नभस् एनस् स स् वासस् रजस् छंदस् अनस् अयस् स्रोतस् रक्षस् श्रेयस् उपस् वर्चस् मेदस् शेफस् श्रवस् अर्चस् तरस् रहस् ऊधस् यादस् आगस् एधस् ओकस् प्रभृतयः । हविष्शब्दो हविर्द्रव्यवाची (दोषाम् । नपुंस० । स्रो० ) हविः, हविषी, ( ईमौ ) स्वर० । हवींषि २ । ( जश्शसोः शिः । नुम० । न्सम्महतो धौ दीर्घः० ) इति दीर्घे कृते नुमि सकार एवास्तीति न्सन्तत्वम् ततो नुम् । विसर्गव्यवधानेपि षत्वम् । हविषा । भ्यांभिस्भ्यस्सुविषये(दोषाम्) जल० । हविर्भ्याम् । हविर्भिः । हविःषु । एवम् । अर्चिः । अर्चिषी । अर्चींषि । ज्योतिः । ज्योतिषी । ज्योतींषि । रोचिः । रोचिषी । रोचींषि । आयुः । आयुषी । आयूंषि । वपुः । वपुषी । वपूंषि । जनुः । जनुषी । जनूंषि । चक्षुः । चक्षुषी । चक्षूंषि । यजुः । यजुषी । यजूंषि । सर्पिः । सर्पिषी । सर्पींषि । धनुः । धनुषी । धनूंषि । इत्यादि । अदस्शब्दस्य प्रथमाद्वितीययोर्विशेषः । तत्रैकवचने ( नपुंसकात्स्यमोर्लुक् ) इति लुकि कृते सति त्यदादेष्टेरत्वं न भवति । किंतु ( स्रो० ) अदः २ । द्वित्वे ( त्यदादेष्टेरः० । दस्य मः । ईमौ । अ इ ए । मादू ) एकारस्य ऊकारः अमू २ । अमुनी इति तु छांदसं रूपम् । उक्तं च भागवते । " अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते । उभे अपि न गृह्णंति मायासृष्टे विपश्चितः " ॥ १ ॥ इति । बहुत्वे ( त्यदादे० । दस्य मः । जश्शसोः० । नुम० । नोपधायाः । मादू ) आकारस्य ऊकारः । अमूनि २ । तृतीयादौ सर्वत्र पुंवत् । ३–१ ( त्यदादेष्टेरः० । मादू । टा नास्त्रियाम् ) अमुना । ३–२ ( त्यदादे० । आद्वे । मादू ) अमूभ्याम् । ३–३ ( भिस् भिस् । ए स्मि० । एरी ब० ) अमीभिः । ४–१ ( त्यदा० । दस्य मः ।

सर्वादेः स्मट् । माटू । किला० । ए ऐ ऐ ) अमुष्मै । ४-२ ( अद्रि । माटू ) अमूभ्याम् । ४-३ ( ए स्मि० । एरी० ) अमीभ्यः । ५-१ ( त्यदा० । दस्य मः । अत. । माटू । किला० ) अमुष्मात् । ५-२ ( अद्रि । माटू० ) अमूभ्याम् । ५-३ ( ए स्मि० । एरी० ) अमीभ्यः । ६-१ ( त्यदा० । ङस्स्य । दस्य मः । माटू । किला० ) अमुष्य । ६-२ ( ओसि । ए अय् । माटू ) अमुयोः । ६-३ (त्यदा० । दस्य मः । सुडामः । ए स्मि० । एरी० । किला०) अमीषाम् । ७-१ ( त्यदा० । दस्य मः । ङि स्मिन् । माटू । किला० ) अमुष्मिन् । ७-२ ( त्यदा० । दस्य मः । ओसि । ए अय ) स्व० । ( माटू ) अमुयोः । ७-३ ( ए स्मि० । एरी० । किला०) अमीषु ॥ ॥ इति हसान्तनपुंसकलिंगसाधनम् ॥

इति षड्लिंगाः समाप्ताः ।

## अथ युष्मदस्मत्प्रक्रिया १२.

अथ युष्मदस्मदोः स्वरूपं निरूप्यते । तयोश्च वाच्यलिंगत्वात्त्रिष्वपि लिंगेषु समानं रूपम् । **त्वमहं सिना ॥** युष्मदस्मदोः सिसहितयोः त्वम्-अहम् इत्येतावादेशौ भवतः यथासंख्येन । त्वम् अहम् । **युवावौ द्विवचने॥** युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवतः॥

अथेति संज्ञासंधिस्वरान्तहसान्तलिंगत्रयसाधनानन्तरं युष्मदस्मदोः युष्मच्च अस्मच्च युष्मदस्मदौ तयोः स्वरूपं मुख्यस्वरूपमेव निरूप्यते, न तु गौणत्वविशेषादिकमित्यर्थः । अत्राह परः । ननु यथा सर्वादयो लिंगत्रये साधितास्तथा एतावपि कथं न साधितौ तत्रोत्तरमाह । तयोर्युष्मदस्मच्छब्दयोर्वाचि वचने वाग्व्यवहारकाले अलिंगत्वात् स्वविषये लिंगोद्योतकत्वाभावात् त्रिष्वपि पुंस्त्रीनपुंसकलिंगेषु समानं सदृशमेव रूपम् । यथा त्रिषु लिंगेषु-सर्वो जनः, सर्वा जगती, सर्वं जगत् इत्यादिरूपभेदो दृश्यते न तथैतयोः । यथा-त्वं देवः, त्वं देवी, त्वं ब्रह्म इत्यादौ न कोपि रूपभेदः । अतः प्राङ् न साधिताविल्यर्थः । अथवा वाच्यमिति नामशब्दरूपम् अभिधेयं विशेष्यपदमित्यर्थः । तस्यैव लिंगं विद्यते ययोस्तौ वाच्यलिंगौ । यदि वा वाच्यस्य पुरुषस्त्रीकुलादेर्लिंगमेव लिंगं ययोरिति बहुव्रीहिः । यदुक्तम् । "वाच्यमित्युच्यते भेद्यं तल्लिंगं भजते तु यः । विशेषणत्वमापन्नो वाच्यलिंगः स उच्यते" ॥ १ ॥ इति । अनयोः साधनमुच्यते । प्रथमैकवचने सूत्रम् । त्वं च अहं च त्वमहम् १-२ । साक० । सि ३-१ ( टा नास्त्रियाम् ) युष्मद० । वृत्ति कंठ्या । युष्मदः सिना सह त्वम् इत्यादेशः । अस्मदश्च सिना सह अहम् इत्यादेशः । द्विवचने-युष्मद औ अस्मद् औ इति स्थिते सति । सूत्रम् (युवावौ०) युवश्च आवश्च युवावौ १-२ । (ओ औ औ) द्विवचने । ७-१ ( अइए ) युष्मद० । युष्मदः सर्वविभक्तिद्विवचने परे युव-आदेशः अस्मदश्च आव इत्यर्थः । युव औ आव औ इति स्थिते ॥

आमौ ॥युष्मदस्मद्भ्यां पर औ आम् भवति। युवाम् । आवाम् । यूयंवयं जसा ॥ जसा सहितयोर्युष्मदस्मदोर्यूयम् वयम् इत्येतावादेशौ भवतः । यूयम् । वयम् । त्वन्मदेकत्वे ॥ युष्मदस्मदोः त्वद् मद् इत्येतावादेशौ भवतः एकत्वे गम्यमाने ।आम्स्भौ ॥ युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे ।त्वाम् । माम्।युवाम्। आवाम् । त्यदादेष्टेरत्वे कृते ( शसि ) इति दीर्घत्वम् [ शसो नो वक्तव्यः ] युष्मान् । अस्मान् ॥

सूत्रम् । आम् १–१ (इमे०) औ १–१ । सांके०। स्वर० । सिद्धम् । युष्मद्स्मद्भ्यां परः औ आम् भवति । यदादेशस्तद्वदिति । ननु आम् किमिति क्रियते अमेव कथं न क्रियते । मात्रालाघवमपि पुत्रोत्सवं मन्यंते वैयाकरणा इति । सत्यम् । अमि कृते ( अम्शसोरस्य ) इत्यलोपः स्यादिति आमेव युक्तः अनेन औ इत्यस्य आम् ( सवर्णे० ) युवाम् । आवाम् । इति सिद्धम् । बहुत्वे युष्मद् अस् अस्मद् अस् इति स्थिते । सूत्रम् ( यूयंवयं० ) यूयं च वयं च यूयंवयम् १–१ । सांके० । जस् ३–१ । स्वर० । सिद्धम् । जसा० । अनेन जससहितस्य युष्मदो यूयम् इत्यादेशः अस्मदश्च वयम् इत्यादेशः । यूयम् । वयम् । अमि । सूत्रम् ( त्वन्मद्० ) त्वच्च मच्च त्वन्मद् १–२ । सांके० । एकस्य भाव एकत्वं तस्मिन्नेकत्वे ७–१ ( अ इ ए ) त्वन्मद् । अग्रे एकत्वे । स्वर० । सिद्धम् । अग्रे वृत्तिः कंठ्या । एकवचने एकार्थवाचित्वे वा युष्मदस्त्वद् अस्मदो मद् आदेशः । त्वद् अम् मद् अम् इति स्थिते । सूत्रम् । आ १–१ । सांके० । अम् च शस् च भिस् च अम्स्भि । देशैकग्रहणेन देशीयग्रहणम् । तस्मिन् अम्स्भौ ७–१ ( ङेरौ० ) टिलोपः । स्व० । आ अग्रे अम्स्भौ ( सवर्णे० ) युष्मद्० । अनेन त्वत् इत्यस्य त्वा मत् इत्यस्य मा ( अम्श० ) त्वाम्। माम् । द्विवचने तु प्राग्वत् । शसि युष्मद् अस् अस्मद् अस् इति स्थिते । त्यदादेष्टेरकारे कृते ( अम्श० ) इत्यकारलोपः ( शसि ) इति दीर्घः । वाच्यलिंगत्वात्केवलं पुँल्लिंगत्वाभावात् ( सो नः पुंसः ) इति सूत्रेण सकारस्य नकारो न भवति तेन विशेषमाह [ शसो नो वक्तव्यः ] शसः सकारस्य नकारो भवतीत्यर्थः । युष्मदस्मदोरेवेति विशेषः । ( शसि ) युष्मान् । अस्मान् । इति सिद्धम् ॥

त्वन्मदादेशे च कृते । ए टाङ्योः॥युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः । अयादेशः । त्वया । मया । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः । तुभ्यं मह्यं ङ्या ॥ ङ्या सहितयोः युष्मदस्मदोः तुभ्यम् मह्यम् एतावादेशौ भवतः। तुभ्यम्।मह्यम्।

युवाभ्याम् । आवाभ्याम् । भ्यस्श्भ्यम् ॥ युष्मदस्मदोः परो भ्यस् श्भ्यं भवति । शकारो भकारादित्वव्यावृत्त्यर्थः।तेनात्वैत्वे न भवतः। युष्मभ्यम् । अस्मभ्यम् । ङसिभ्यसोः श्तुः ॥ पंचम्या ङसिभ्यसोः श्तुर्भवति ॥

तृतीयैकवचने त्वन्मदादेशे च कृते त्यदादेष्टेरकारः । त्व आ म आ इति स्थिते सूत्रम् । ए १-१ । सांके० । टाङ्योः । टा च ङिश्च टाङी तयोः ७-२ । ( इ यं० ) स्वर० । सिद्धमिदं सूत्रम् । युष्म० । वृत्तिः कंठ्या । आदेशिवत् आदेशोऽपि भवति इति न्यायात् । अनेन यथाक्रमं त्वे मे ( ए अय् ) स्वर० । त्वया मया इति रूपद्वय सिद्धम् । द्विवचने भ्याम् ( युवावौ द्विवचने ) युव ( अद्धि ) युवाभ्याम् । आव ( अद्धि ) आवाभ्याम् । एवं चतुर्थीपंचमीद्वित्वेऽपि । भिसि ( आम्स्भौ ) इति टेराकारः । युष्माभिः । अस्माभिः । चतुर्थ्येकवचने सूत्रम् ( तुभ्यंमह्यं० ) तुभ्यं च मह्यं च तुभ्यंमह्यम् । १-२ । सांके० । ङे ३-१ ( ए अय् ) स्व० । सिद्धम् । वृत्तिः सुबोधा । अनेन यथाक्रमं ङेसहितयोः युष्मदस्मदोः तुभ्यम् मह्यम् आदेशौ भवतः । तुभ्यम् । मह्यम् । चतुर्थ्या बहुत्वे सूत्रम् । भ्यस् १-१ । सांके० । श्भ्यम् १-१ ( हसे० ) युष्मदस्मच्छब्दाभ्यां परं यच्चतुर्थीबहुवचनं तस्य कृत्स्नस्यापि श्भ्यं भवति । भ्यमादेशस्य गुरुत्वात्सर्वस्य प्राप्तौ शकारग्रहणं किमर्थमित्याह । शकारो भकारादित्वनिषेधकः । उच्चारणमात्रः । शकारो भकारादित्वव्यावृत्त्यर्थः । भकार एव आदिर्यस्य स भकारादिस्तस्य भावो भकारादित्वं तस्य व्यावृत्त्यर्थः निषेधार्थः । भ्यम् इत्येवं चेत्क्रियतां तदा ( अद्धि । ए स्मि० ) एतयोः सूत्रयोः प्राप्तिर्भवति भकारपरत्व तु । अतस्तन्निवारणार्थं श्भ्यम् इति क्रियते । तेन ( अद्धि ) इत्यात्वं ( ए स्मि० ) इति एत्वं च न भवति । अनेन चतुर्थी बहुवचनस्य श्भ्यम् ( त्यदादे० ) युष्मभ्यम् । अस्मभ्यम् । पंचम्येकवचनं त्वन्मदादेशे कृते त्वत् अस् मत् अस इति स्थिते । सूत्रम्–ङसिश्च भ्यस् च ङसिभ्यसौ तयोः ६-२ । स्व० । ( स्तो० ) श्तु १-१ ( स्तो० ) पंचम्याः एकवचनस्य बहुवचनस्य च श्तु इत्यादेशो भवति अनेन ङसिस्थाने श्तुर्भवति ॥

शकारः सर्वादेशार्थः । उकार उच्चारणार्थः। त्वत।मत । युवाभ्याम्। आवाभ्याम् । युष्मत् । अस्मत । तव मम ङसा ॥ ङसा सहितयोर्युष्मदस्मदोः तव मम इत्येतावादेशौ भवतः ।तव ।मम।युवयोः । आवयोः । सर्वादित्वात्सुट् । सामाकम् ॥ युष्मदस्मदोः परः साम् आकम् भवति । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥

शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । त् इति स्थिते ( त्यदादे० ) त्वत् ( द् ) मत् ( द् ) युवाभ्याम् । आवाभ्याम् । बहुत्वे भ्यस्स्थाने त् ( त्यदादे० ) युष्मत् ( द् ) अस्मत् ( द् ) षष्ठ्येकवचने सूत्रम्-तव च मम च तव्मम १-२ ( सांके० ) ङस् ३-१ । स्व० । ङसा० । अनेन ङस्सहितस्य युष्मदस्तव अस्मदो मम इत्यादेशः । तव । मम । ओसि विषये युव आव आदेशे कृते ( ओसि । ए अय् ) स्व० । युवयोः । आवयोः । एवं सप्तमीद्विवचनेऽपि आमि ( त्यदादेः० । सुडामः ) स्व० । युष्म साम् । अस्म साम् इति स्थिते । सूत्रम् । साम् १-१(इसे०) आकम् १-१ ( इसे० ) स्व० । युष्मदस्मद्भ्यां परस्य सुट्सहितस्य आम् आकम् इत्यादेशो भवति अनेन आकम् ( सवर्णे० ) युष्माकम् । अस्माकम् । सुट्सहितस्यामः आकमादेशविधानम् ( ए स्भि बहुत्वे ) इत्येकारनिवृत्त्यर्थं नत्वाम्स्भाविति आकारस्य निवृत्त्यर्थम्।। कृते तस्मिन्न रूपविपर्ययः स्यादिति । सप्तम्येकवचने ( त्वन्मदेकत्वे । त्यदादे० । ए टाङ्योः । ए अय् ) स्व० । त्वयि । मयि । युवयोः । आवयोः । सुपि ( आम्स्भौ ) युष्मासु । अस्मासु । त्यदादित्वात्सम्बोधनाभावः । तथा समासांतत्वे प्राधान्ये च युष्मदस्मदोः सिजसूङेङस्सु एव एते पूर्वोक्ताः। त्वम् अहं यूयं वयं तुभ्यं मह्यं तव मम आदेशाः स्युः नान्यत्र। अन्यत्र तु सिजसूङेङस्वर्जितेषु सप्तदशवचनेषु एकवचने एकस्यातिक्रमे त्वमौ द्वयोरतिक्रमे युवावौ बहूनामतिक्रमे युष्मास्मौ । यथा त्वाम् अतिक्रांतः अतित्वम् । अतित्वाम्।अतियूयम् अतित्वाम् ।२-१ । अतित्वाम्२-२।अतित्वान् २-३।अतित्वया । अतित्वाभ्याम् । अतित्वाभिः । अतितुभ्यम् । अतित्वाभ्याम् । अतितुभ्यम् । अतित्वत् । अतित्वाभ्याम् । अतित्वत् । अतितव । अतित्वयोः । अतित्वाकम् । अतित्वयाम् । अतित्वयि । अतित्वयोः । अतित्वासु । एव युवाम् अतिक्रांतः अतित्वम् १-१ । अतियुवाम् १-२ । अतियूयम् १-३ । अतियुवाम् २-१ । अतियुवाम् २-२ । अतियुवान् २-३ । अतियुवया ३-१ । एवं युष्मान् अतिक्रांतः अतित्वम् । अतियुष्माम् । अतियूयम् । अतियुष्माम् २-१ । अतियुष्माम् २-२ । अतियुष्मान् । उक्तं च प्रक्रियाकौमुद्याम् "सुजसूङेङस्सु परत आदेशाः स्युः सदैव ते । त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि॥" यथा प्रियस्त्वं प्रियौ युवां प्रिया यूयं वा यस्य प्रियत्वम् । एवं प्रियोऽहम् प्रियौ आवाम् प्रिया वयं वा यस्य स प्रियाहम्। एवं जसि प्रिययूयम् । प्रियवयम् । ङेविषये प्रियतुभ्यम् । प्रियमह्यम् । ङसि प्रियतव प्रियमम । तथा त्वाम् अतिक्रांत इति विग्रहे अतित्वम् । माम् अतिक्रांत इति अत्यहम् । इत्यत्रापि सिजसूङेङस्सु प्राग्वत् एवादेशाः स्युः । तथा द्विवचने युवावादेशौ न भवतः । यथा अतित्वम् १-१ अत्यहम् १-१ अतित्वाम् १-२ अतिमाम् १-२ अतियूयम् १-३ अतिवयम् १-३ अतित्वाम् २-१ अतिमाम् २-१ द्वित्वेऽपि । अतित्वाम् २-२ अतिमाम् २-२ अतित्वान् २-३ अतिमान् २-३ अतित्वया३-१ अतिमया३-१अतित्वाभ्याम् ३-२ अतिमाभ्याम्३-२ अतित्वाभिः.

३-३ अतिमाभिः ३-३ अतितुभ्यम् ४-१ अतिमह्यम् ४-१ अतित्वाभ्याम् ४-२ अतिमाभ्याम् २-३ अतितुभ्यम् ४-३ अतिमभ्यम् ४-३ अतित्वत् ५-१ अतिमत् ५-१ अतित्वाभ्याम् ५-२ अतिमाभ्याम् ५-२ अतित्वत् ५-३ अतिमत् ५-३ अतितव ६-१ अतिमम ६-१ अतित्वयोः ६-२ अतिमयोः ६-२ अतित्वाकम् ६-३ अतिमाकम् ६-३ केचित्तु अतित्वयाम् ६-३ अतिमयामिति वदंति । अतित्वयि ७-१ अतिमयि ७-१ अतित्वयोः ७-२ अतिमयोः ७-२ अतित्वासु ७-३ अतिमासु ७-३ । एवं युवाम् आवां वा अतिक्रांत इत्यत्रापि सिजसुङेङस्सु प्राग्वत् । अतित्वम् । अत्यहम् । अतियुवाम् । अत्यावाम् । अतियूयम् । अतिवयम् । अतियुवाम् । अत्यावाम् । द्विवचनेऽपि । अतियुवाम् । अत्यावाम् । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् । इत्यादि । एवं युष्मान् अस्मान्वा अतिक्रांत इत्यत्रापि सिजसुङेङस्सु प्राग्वत् । अतित्वम् । अत्यहम् । अतियुष्माम् । अत्यस्माम् । अतियूयम् । अतिवयम् । अतियुष्माम् । अत्यस्माम् । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । इत्यादि । एवं परमत्वम् । परमाहम् । परमयूयम् । परमवयम् । परमतुभ्यम् । परममह्यम् । परमतव । परमम । इत्यादि लोकाज्ज्ञेयम् ॥

इति युष्मदस्मत्साधनम् ।

अथानयोरादेशविशेषविधिर्निरूप्यते ।

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ ॥

युष्मदस्मदोर्यथासंख्येनामी आदेशा भवंति । तत्रैकवचनेन सह ते मे भवतः । द्विवचनेन वां नौ बहुवचनेन वस्नसौ ॥

पुनर्विशेषमाह । अथेति । अथ युष्मदस्मच्छब्दयोः साधनानंतरं कश्चित् आदेशस्य विशेषः आदेशविशेषस्तस्य विधिः । आदेशाः पूर्वं कथिता अयमादेशविशेषविधिः कथ्यते इत्यध्याहारः । सूत्रम् । युष्मदस्मदोः६-२ षष्ठीचतुर्थीद्वितीयाभिः३-३तेमे१-२सांके०। वांनौ १-२।सांके०।वस्नसौ १-२ स्व० । पंचपदमिदं सूत्रम् । ( युष्म० । ) युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयानामेकवचनद्विवचबहुवचनेषु क्रमेण अमी अग्रे वक्ष्यमाणाः तेमेवांनौवस्नसआदेशा भवंति । अयं भावः । षष्ठीचतुर्थ्येकवचनेन सह युष्मदस्ते अस्मदश्च मे आदेशः । द्वितीयैकवचनस्य त्वा मा इति विशेषविधानात् ते मे न भवतः । ६-२ । ४-२ । २-२ । युष्मदो वाम् अस्मदश्च नौ आदेशः । ६-३ । ४-३ । २-३ । युष्मदो वस् अस्मदश्च नस् आदेशः । द्वितीयाचतुर्थीषष्ठीति वक्तव्ये व्युत्क्रमेण षष्ठीचतुर्थीद्वितीयाभिरित्युक्तत्वात् क्वचित्त्वया मयेत्यस्मिन्नर्थे ते मे भवतः इत्यपि सूचितम् । यथा । "श्रुतं ते निखिलं पार्थ" इत्यादिप्रयोगेषु । तथा च । "कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमंडलम्" । तथा च रघुकाव्ये "गेये किं न विनीतौ वाम्" इत्यादि प्रथमाद्विवचनेऽपि वाम् इत्यादेशार्थम् । केचित्तु वामित्यव्ययं मन्यंते । "विपर्ययविधानेन

नियमो नेष्यते बुधैः ॥ अतो विभक्तिष्वन्यासु भवंति वसूनसादयः" ॥ यद्वा षष्ठी-चतुर्थ्योरत्र षष्ठ्याः अल्पस्वरत्वात् पूर्वं निपातः । द्वितीयापेक्षया चतुर्थ्याश्चाल्पस्वरत्वात्पूर्वनिपातः । इति द्वंद्वः ॥

उक्तं च । "स्वामी ते स समायातः स्वामी मे सांप्रतं गतः ॥
नमस्ते भगवन्भूयो देहि मे मोक्षमव्ययम् ॥ १ ॥
स्वामी वां स जहासोच्चैर्दृष्ट्वा नौ दानयाचनाम् ॥
राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः ॥ २ ॥
देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः ॥
स्वामी वो बलवान्राजा स्वामी नोऽसौ जनार्दनः॥ ३ ॥
नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम् ॥
सानंदान्वः प्रपश्यामः पश्यामो नः सुदुखिनः ॥ ४ ॥"
त्वामामा॥ अमासहितयोर्युष्मदस्मदोः त्वा मा इत्येतावादेशौ भवतः । "पश्यामि त्वा मदालीढं पश्य मा मदभेदकम् ॥
पश्यामि त्वा जगत्पूज्यं पश्य मा जगतांपतिम्"॥

तत्रोदाहरणानि श्लोकैर्व्यञ्जयति । यथा—स्वामी० । स ते तव स्वामी समायातः मे मम स्वामी सांप्रतं गतः अत्र स्वामित्वे षष्ठी तस्या एकत्वे ते मे इत्यादेशौ दर्शितौ । चतुर्थ्येकवचने दर्शयति ॥ नमस्ते० । भगो ज्ञानमस्यास्तीति भगवान् तस्यामंत्रणं हे भगवन्भूयः पुनरपि वारंवारं ते तुभ्यं नमः । अत्र नमःशब्दयोगे चतुर्थी । तत्र युष्मदस्ते आदेशः । मे मह्यम् अक्षयं मोक्षं देहि प्रयच्छ । अत्र दानार्थे चतुर्थी । अस्मदो मे आदेश एकवचनत्वात् ॥ १ ॥ द्विवचनत्वात् द्विवचनादेशं दर्शयति । स्वामी वां० । स वां युवयोः स्वामी उच्चैरतिशयेन जहास अहसत् । किं कृत्वा । नौ आवयोर्दानयाचनां दानपीडां दृष्ट्वा । अत्र षष्ठीद्विवचने युष्मदो वाम् अस्मदो नौ आदेशः । अथ चतुर्थीद्विवचने । वां युवाभ्यां राजा भूपतिर्दानं दास्यते । मधुसूदनः कृष्णः नौ आवाभ्यां ज्ञानं तत्त्वावबोधं दास्यते । अत्र चतुर्थीद्विवचनम् ॥ २ ॥ द्वितीयाद्विवचने । देवो वां० । वां युवां विष्णुर्देवः अवतात् पातु । जनार्दनः कृष्णः नौ आवां नरकाद्रक्षतु । अत्र द्वितीयाद्विवचनम् । बहुत्वे दर्शयति । स्वामी वो० । वो युष्माकं स्वामी राजा बलवान् बलयुक्तः । नः अस्माकम् असौ जनार्दनः कृष्णः स्वामी ॥ ३ ॥ षष्ठीबहुत्वे रूपमिदम् । नमोवः० । युष्मदो वस् अस्मदो नस् । ४–३ वो युष्मभ्यं नमः । किंविशिष्टेभ्यो वः ब्रह्मविज्ञेभ्यः ब्रह्म विशेषेण जानंतीति ब्रह्मविज्ञास्तेभ्यो ब्रह्मविज्ञेभ्यः । ज्ञानज्ञातृभ्य इत्यर्थः । नः अस्मभ्यं ज्ञानधनं ज्ञानमेव धनं भवद्भिः दीयताम् । चतुर्थीबहुत्वे रूपमिदम् । २–३ । सानंदान् वः० । युष्मान् वयं सानंदान् सह आनंदेन वर्तमानान्प्रपश्यामः । नः अस्मान् सुदुःखिनो दुःखयुक्तान्

पश्यामः । 'पश्य त्वं नः सुखान्वितान्' इति पाठः। द्वितीयाबहुवचने रूपमिदम्॥४॥

अमि विशेषमाह। सूत्रम्। त्वामा १-२ साके०। अम् ३-१। स्वर०। (सवर्णे०) द्विपदम्। अमा०। युष्मदः अमुसहितस्य त्वा अस्मदश्च मा आदेशः। अत्रोदाहरणम्। पश्यामि त्वा०। त्वा त्वाम् अहं मदालीढं मदव्याप्त गर्वयुक्त पश्यामि। मा मा मदभेदकं मदोत्तारकं पश्य॥

**नादौ** ॥ पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवंति।

"तव ये शत्रवो राजन्मम तेऽप्यतिशत्रवः ॥
तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥ १ ॥
रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ॥
स एव नाथो भगवानस्माकं पापनाशनः ॥ २ ॥"

पादादाविति किम्।

"पांतु वो नरसिंहस्य नखलांगलकोटयः ॥
हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः ॥ ३ ॥"

पुनरादेशनिषेधमाह। सूत्रम्। न १-१ (अव्य०) आदि ७-१ (डेरौ०) टिलोपः। पश्चात्। स्व०। सिद्धम्। पादः श्लोकचतुर्थांशस्तस्यादौ तेमेवानौवस्नस् इत्येते आदेशा न भवंति। अत्रोदाहरणम्। "तव ये शत्रवो राजन्मम तेऽप्यतिशत्रवः। तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि॥ युष्माकं भगवान्देवश्चास्माकं पापनाशनः"। अत्र पादादित्वात् ते मे आदेशौ वः नः आदेशौ च न जातौ। संबोधनमामंत्रणं तदंतं यत्पदं तदग्रेऽपि वस्नसादय आदेशाः प्रायो बाहुल्येन न भवंति। यथा। राजन् मम इत्युदाहरणम्। अथवा 'हे देव तव दासोऽस्मि देव तुभ्यं नमो नमः।' पादादाविति किम्। पादादावेव एतेषामादेशानां निषेधो न तु पदमध्ये। तत्रोदाहरणम्। श्लोकः-पातु वो०। नरसिंहस्य नरसिंहावतारस्य विष्णोः नखलांगलकोटयः नखा एव लांगला हलास्तेषां कोटयः अग्रभागाः वो युष्मान् पांतु रक्षन्तु। कथंभूताः नखलांगलकोटयः हिरण्यकशिपोरेतन्नाम्नो दैत्यस्य यद्वक्षो हृदयं तदेव क्षेत्रं तत्र योऽसौ असृजो रुधिरस्य कर्दमः पंकस्तेन अरुणा आरक्ताः एवंविधा नरसिंहरूपधारिणो विष्णोर्नखरूपहलाग्रभागाः वो रक्षंतु इत्यर्थः। पातु व इत्यत्र पादाद्यभावात् प्रतिषेधः॥ इति युष्मदस्मदादेशविशेषविधिः॥

इति युष्मदस्मत्प्रक्रिया।

## अथाव्ययानि।

**चादिभिश्च** ॥ चादिभिः पंचभिरपि योगे नैते आदेशा भवंति।

"मावयोर्युवयोश्वेशो वेशो हेशस्तथैव च ॥

अहेश आवयोरेवं हरिर्मामेव रक्षतु ॥"

**चादिर्निपातः ॥** चादिर्गणो निपातसंज्ञको भवति ।

च वा ह अह एव इह एवम् नूनम् पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथम् वृथा अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् स्वर् अंतर् प्रातर् पुन_ भूयस् आहोस्वित् उत स्वित् सह ऋते अन्तरेण अंतरा नमस् अलम् कृतम्।अ·मा-नो·नाः प्रतिषेधे। ईषत् किल खलु वै आरात् दूरात् भृशम् यत् तत् स्वराश्च। इत्येवमादिर्गणो निपातसंज्ञो भवति।**त्रादिर्विभक्त्यर्थे॥** निपात्यते॥ तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र–कुह क्व । अस्मिन्निति अत्र । तस्मिन्काले तदा । यस्मिन्काले यदा । कस्मिन्काले कदा।अन्यस्मिन्काले अन्यदा।तेन प्रकारेण तथा।केन प्रकारेण कथम्। अनेन प्रकारेण इत्थम्। तस्मादिति ततः । कुतः । अतः । इतः । यतः । सार्वविभक्तिकस्तस् इत्येके । पूर्वस्मिन्निति पुरस्तात् । परस्तात् । परस्मिन्निति–परेण । **आहिच् दूरे ॥** दूरेऽर्थवाच्ये सति आहिच् प्रत्ययो भवति । दक्षिणाहि वसंति चांडालाः ॥

पुनर्निषेधांतरमाह । सूत्रम् ( चादिभिः० ) च आदिर्येषां ते चादयस्तैश्चादिभिः ३–३ ( स्त्री० ) च १–१ ( अव्य० । विसर्ज० । स्तोः श्चुभिः श्चुः ) सिद्धमिदम् । चादिभिरपि सह योगे । च वा ह अह एव एतेषां पंचानामव्ययानां योगेऽपि समीपवर्तित्वे सति एते तेमेवांनौवस्नसरूपाः आदेशाः प्रायो न भवंति । यथा "तव मम च समागमस्तदासीत्तव मम वा न किमप्यसाध्यमस्ति। तव ममाह मह-च्च कास्ति सख्यं न तव ममाह कचिद्भवेद्वियोगः" ॥ सदा तवैव भक्तोस्मि । "भवतु तव ममैव सर्वदा सन्निधानम्" । इत्यादि द्विवचनादावपि प्रयोगवशाच्च ज्ञेयम् । अथ चादिनिपातानाह । सूत्रम् । चादिः १–१ ( स्त्री० ) निपतन्त्यनेकेष्वर्थेष्विति नि-पातः १–१ ( स्त्री० ) सिद्धम् । च, वा, ह इत्यारभ्य यावत्स्वराश्च इत्येवमादिर्गणो निपातसंज्ञो भवति । एते निपाता उच्यंते ॥ अथैतेषां किंचिद्विवरणं लिख्यते । च पुनरर्थे समुच्चयादिषु च । वा विकल्पार्थे उपमानार्थे च । ह अह इति द्वौ खेदार्थौ पादपूरणार्थौ च । अह इत्यपि खेदे आश्चर्ये च । एव निश्चयार्थे अवधारणे औपम्ये वा । एवम् अमुना प्रकारेण अंगीकरणे च पूर्वोक्तस्मरणे च उपमायां च । नूनम् निश्चये । पृथक् भिन्नार्थे । विना अभावार्थे वर्जनार्थे च । नाना बहुप्रकारवाची । स्वस्ति कल्याणार्थे । अस्ति सत्तार्थे । दोषा रात्र्यर्थे । मृषा मिथ्या एतौ द्वौ असत्यार्थौ । मिथस् परस्परार्थे । अथ अथो एतौ आनंतर्यार्थे मंगलारंभयोश्च प्रश्नांतर-

कथने च । ह्यस्-शब्दो गतादिनार्थे । श्वस् आगामीदिनार्थे । उच्चैस् उच्चत्ववाचकः अतिशयार्थवाचकश्च एवम् उच्चकैरपि । एवं नीचैः नीचकैर्नीचत्वार्थः अल्पार्थश्च हीनत्वार्थश्च । स्वर् स्वर्गार्थः । अंतर् मध्ये । प्रातः प्रभाते । पुनर् भूयस् एतौ द्वौ पानःपुन्य द्वितीयवारार्थे । आहोस्वित् वितर्के संबोधने च । उत अथवार्थे । स्वित् इत्यपि वितर्के । सह सहार्थे । ऋते विनार्थे । अंतरेण विनार्थे । अंतरा मध्येर्थे । नमस् नमस्कारे । अलम् भूषाया निवारणे च पर्याप्ते सामर्थ्ये च । कृतम् निवारणे पूरणार्थे च । अमानोनाः इमे चत्वारः प्रतिषेधार्थे च । ईषत् स्तोकार्थे इत्यर्थः । किल खलु वै एते त्रयोपि निश्चयार्थे स्मरणार्थे च । आरात् निकटार्थे दूरार्थे च । दूरात् दूरार्थे च । भृशम् अत्यर्थे । यत् यस्मात्कारणात् । तत् तस्मात्कारणात् । स्वराश्च अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ एते निपाताः । एते चतुर्देश स्वरा अपि अर्थांतरवाचकत्वे निपातसंज्ञका भवंति । तत्र अ संबोधने निर्भर्त्सने च । आ वाक्यस्मरणे च । इ संबोधने । ई दुःखचिंतने च । उ रोषोक्तौ निवारणे च । ऊ प्रश्ने निश्चये रोषे च । ऋकारलृकारौ क्षोभवाचकौ लोभवाचकौ च । लोभो दोषवृद्धिः । विश्रामवाचकौ वा । ए संबोधने । ऐ आश्चर्ये । ओ अनुनये । औ भवत्यर्थे । अम् अंगीकारे । अः भये आश्चर्ये च । इत्यादिर्गणो निपातसंज्ञो भवति । आदिशब्दादन्येऽपि ज्ञेयाः । सह साकं सार्धं सत्रा अमा एते सहार्थे । कच्चित् इष्टपरिप्रश्ने । अयि अये एतौ द्वौ कोमलामंत्रणे । ननु निश्चये वितर्के च । नु वितर्के । नक्त रात्रिवाचक स्यात् । अनेकार्थपर्यायाः । अनेकार्थार्थवाचका इत्यर्थः । इति समाप्त्यर्थे । नाम इति कोमलामंत्रणे । मन्ये इति वितर्के विचारणे च । एतेषु च केचिद्वाचकाः । केचित्सूचकाः । तत्र वाचकाः पृथगादयः । ते ह्यर्थं वदंति सूचकाश्चादयः ते किंतु सूचयन्ति । सूचका उच्यंते । "केप्यत्र द्योतकाः केपि वाचकाः केप्यनर्थकाः ॥ आगमा इव केऽपि स्युः सभूयार्थस्य साधकाः" ॥ १ ॥ अथ विभक्त्यर्थसूचकान्निपातानाह । तत्रादिविभक्त्यर्थे निपात्यते । तत्र सप्तम्यर्थे यथा ७-१ तस्मिन्नित्यस्यार्थे तत्रेति निपातः । एवम् तयोः तेषु तस्या तयोः तासु एतेष्वपि तत्रेति निपातः । सप्तम्यर्थे वर्तमानात्तच्छब्दात् त्रप्रत्ययः दलोपश्च । एवं सप्तम्यर्थे वर्तमानाद्यच्छब्दात् त्रप्रत्ययो दलोपः । यस्मिन्नित्यस्य यत्र । किमशब्दात् त्रप्रत्ययः । किमः कु आदेशश्च । कुत्र । एवं सप्तम्यर्थे किमशब्दात् अप्रत्ययः कु आदेशः (ह वम्)स्वर० । ह । कस्मिन्नित्यस्य कुत्र कुह ह । एवम् द्वि भवत् युष्मदस्मदो वर्जयित्वा सर्वादिगणात् सप्तम्यर्थे त्र इति भवति । सर्वत्र उभयत्र अन्यत्र एकत्र पूर्वत्र परत्र इत्यादि । तस्मिन्काले तदा । यस्मिन्काले यदा । कस्मिन्काले कदा । एवम् एकदा सर्वदा । पक्षे सर्वस्य सः॥सदा । अन्यदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थम् । सर्वेण प्रकारेण सर्वथा । एवम् अन्यथा इतरथा अपरथा । तसप्रत्ययाविधानाह । पंचम्यर्थे तसुः कस्मादित्यर्थे कुतः । अस्मादित्यर्थे इतः । अमुष्मादित्यर्थे अमुतः । एवम् ग्रामतः । लोकतः । सर्वतः । (सार्व०) पक्षे आचार्याः इत्यादि । तसप्रत्ययः सार्वविभक्तिकः सर्वविभक्तिषु भवति ।

सर्वासां विभक्तीनामर्थे भवतीत्यर्थः । स्वमते तु पंचम्यर्थे एव अयम् इति भावः । अयम् इति अतः । क्व इति कुतः । पार्श्वे इति पार्श्वतः । पूर्वस्यामिति पूर्वतः । एवं सर्वतः । इतः । इत्यादयोऽन्ये ज्ञेयाः । पूर्वस्मिन्निति पुरस्तात् पूर्वस्मिन्काले देशे च पूर्वस्यां दिशि चेत्यर्थः । तथा च कालापके । पूर्वशब्दात् दिग्देशकालार्थात्सप्तमी-पञ्चमीप्रथमांतात् अस्तातिः । पूर्वस्य पुर इति निपातः अनद्यतने काले । एवम् अधः इति अधस्तात् अधः एवम् उपरिष्टात्-उपरि इत्यर्थः । परस्मिन्निति परस्मिन् देशे काले । परस्यां दिशि चेति परेण । दक्षिणस्यां दिशि दूरे दक्षिणाहि चांडालाः वसंति । दक्षिणस्यां दिशि दूरे वसंतीत्यर्थः । एवम् उत्तराहि वसंति कौरवाः । उत्त-रस्यां दिशि दूरे वसंतीत्यर्थः ॥

**[ किमः सामान्ये चिदादिः ] कश्चित् कौचित् काचित् केचित् कश्चन कचित् कचन । [ तदधीनकार्त्स्न्ययोर्वा सात् ] राजाधीनं राजसात् । भस्मसात् [ ऊर्युर्यंगीकरणे ] ऊरीकृत्य । उररीकृत्य । सद्यआदिः काले ॥ निपात्यते । सद्यः । अद्य । सपदि । अधुना । इदानीम् । सांप्रतम् । संप्रति । आशु । शीघ्रम् । झटिति । तूर्णम् । पूर्वेद्युः । परेद्युः । यर्हि । तर्हि ॥**

( किमः सामा० ) त्रिषु लिंगेषु सिद्धादेव किम्शब्दात् सामान्ये अज्ञातार्थे, अनिर्धारणेऽर्थे सप्तसु विभक्तिषु चिदादिरिति । चित्चनप्रत्ययौ भवतः । सार्वविभ-क्तिकात्पुरत इति भावः । अज्ञातः कः कश्चित् । कौचित् । केचित् । किंचित् । कुत्र-चित् । क्वचित् । कश्चन । काचन । किंचन । क्वचन । एवं सप्तस्वपि विभक्तिषु । पुन-र्निपातांतरमाह । ( तदधीन० ) इति । यद्यस्याधीनमायत्तं तत्तदधीनम् । कृत्स्नस्य समग्रस्य भावः कार्त्स्न्यं समग्रत्वम् तदधीनं च कार्त्स्न्यं च तदधीनकार्त्स्न्ये तयोः । ततः एतयोरर्थे नाम्नः पुरतः सात्प्रत्ययो निपात्यते । राजन् भस्मन् । राज्ञः अधीनं राजसात् । सर्वं भस्म भवति इति भस्मसात् ( तदधीनकार्त्स्न्ययोः० ) इति सात्प्र-त्ययः । (नाम्नो० ) राजसात् भस्मसात् । सात्प्रत्ययस्य षत्वं नेच्छंति । यथा अग्नि-सात् ( ऊर्यु० ) अंगीकरणेऽर्थे ऊरीउररीशब्दौ निपात्येते । ऊरीकृत्य । उररीकृत्य । अंगीकृत्येत्यर्थः । ऊरीकृतम् उररीकरोति ( सद्यआदिः काले ) निपात्यते । अर्थं कालविशेषे सद्यआदिर्निपात्यते । सद्यस्तत्कालम् । अद्य सांप्रतदिने । सपदि शीघ्रम् । अधुना, इदानीम् । एतौ वर्त्तमानक्षणार्थौ । अक्षिपक्ष्मपातावच्छिन्नकालः क्षणः । एवम् संप्रति सांप्रतमपि । झटिति आशु शीघ्रम् तूर्णम् एते चत्वारः शैघ्र्यार्थाः । पूर्व-स्मिन् इति पूर्वदिवसे । पूर्वेद्युरिति गतदिवसार्थवाचकम् । परेद्युः दिवसांतरवाचकम् । यर्हि—यदि । तर्हि-तदा । कर्हि—कदा । आदिशब्दात् एतत् प्रभृति [illegible] अपरेद्युः अन्येद्युः उत्तरेद्युः उभयेद्युः इत्यादयो ज्ञेयाः ॥

**प्रादिरुपसर्गः ॥ प्र परा अप सम् अनु अव निर् दुर वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप अत् अंतर् प्रादुः आविः। अयं गण उपसर्गसंज्ञकः ॥**

सूत्रम् । ( प्रादिः० ) प्र आदिर्यस्य स प्रादिः १–१ ( स्रो० ) उपसृज्यते धातोः समीपे क्रियते इत्युपसर्गः १–१ ( स्रो० ) प्रादिः अग्रे उपसर्गः ( नामि० ) द्विपदं सिद्धं सूत्रम् । प्र–आरभ्य यावत्–आविः । प्र १ परा २ अप ३ सम् ४ अनु ५ अव ६ निर् ७ दुर ८ वि ९ आङ् १० नि ११ अधि १२ अपि १३ अति १४ सु १५ उत् १६ अभि १७ प्रति १८ परि १९ उप २० ॥ अत्र अभियुक्तोक्तिः । यथा । " प्रपरापसमन्ववनिर्दुरभिव्याधिसूदतिनिः प्रतिपर्यपयः । उप आङिति विंशतिरेष सखे उपसर्गगणः कथितः कविना " ॥ १ ॥ अयं प्रादिः आविःपर्यवसानो गणः उपसर्गसंज्ञकः । तत्र प्रशब्दः प्रकर्षार्थः । यथा प्रणम्य । प्रवादः । "आदिकर्मणि दीर्घे च सामर्थ्ये भृशसंभवे। वियोगशुद्धिशक्तीच्छाशांतिपूजाग्र्यदर्शने" ॥ १ ॥ आदिकर्मणि प्रारब्धम् प्रकृतम् । आयामे प्रलंभः । सामर्थ्ये प्रभुः। भृशार्थे प्रतपति । संभवे प्रभवति । प्रीणने प्रतुष्यति । गमने प्रयाति । प्रतिष्ठते । प्रविशति । इच्छायां प्रार्थयते । शांतौ प्रशांतः । मुख्ये प्रवरः । अवलोकने प्रपश्यति । शुद्धौ प्रसन्नाः आपः । प्रसन्नेंद्रियः । प्रीतौ प्रसीदति राजा । पूजायां प्रांजलिः । प्रह्वः । तत्परे पितामहात्परः प्रपितामहः । एवं प्रपौत्रः । प्रशिष्य इत्याद्यर्थेषु प्र इत्युपसर्गो ज्ञेयः ॥ १ ॥ परा–इति विपरीतार्थे पराजयार्थे विमुखार्थे दुःखार्थे दूरीकरणे च । यथा–पराजितः । पराभूतः । पराकृतः । पराङ्मुखः । परावृत्तः । पराक्रमः । परामर्शः । २ । अप–असत्यार्थविकारवर्जनस्तेनकर्षणादौ । यथा–अपकर्षति । अपचरति । अपशब्दः । अपनयति । पूजायाम् अपचितिः । निह्नवे अपजानीते । अपलापः । अपकृतः । अपहरति । ३ । सम्–संभवसम्यक् मकारादौ । यथा संभवति। मिलने संगच्छति । समवाये संकरः । एवं संधिः । संकेतः । संस्कृतः । संशयः । संरंभः। संवृतम्।४।अनु–अनुतापश्चाद्भावादौ सादृश्याऽभिमुख्यहीनसामीप्यवीप्सादौ पश्चात्सादृश्ययोरनु । अनुजानाति । अनुवदति । अनुगच्छति । अनुकरोति । अनुहरति । वत्सा मातरमनुधावन्ति। अन्वर्जुनं योधारः । अनुमेघम् । अनुगृहम् । अनुग्रहः । अनुशयः । अनुबंधः । अनुकूलः । ५ । अव–अवज्ञाऽवलंबनज्ञानशुद्धिव्याप्त्यादौ। अवगणयति । अवजानाति । यष्टिमवष्टभ्य तिष्ठति। अवगताऽर्थः। अवदातम् । अवकीर्णः।६। निर्निश्चयगमनातिशयनिर्णयादौ। निर्णयति। निर्गतः। निरुपमः। निष्पन्नः।निश्चयः। निर्मक्षिकम् ।७।दुरिति दुष्टदुःखकष्टाद्यर्थे।दुर्जनः। दुष्करम्। दुर्लभम्।दुर्नयः।दुर्गंधिः।८। वि इति नानार्थवियोगविदीर्णवैपरीत्यवैमनस्याविशेषणाद्यर्थे। विविधम्।वियुक्तः।विदारितः।विकटः।विमनाः।विराजते। विशेषणादौ यथा।विशिनष्टि। विरूपः।विलोम।विस्मितः। विपण्णः। विप्रकृतः। विमुखः। विनयः ।९। आङ्–इति

मर्यादाभिविधिईषदर्थसमंतात्आशंसनोपदेशआगमादौ । यतः । आङ् "सीमायामभिविधौ क्रियायोगेषदर्थयोः" ॥ आसमुद्रक्षितीशानाम् । आजन्मशुद्धानाम् । आगच्छति । आरोहति । आशास्ते । आलभते । आलिंगते । आरभते । आदत्ते । आताम्रा । आसन्नः । आसादितः । आशयः । १० । नि–निरन्तरनिक्षेपणादौ । निपीय । निहितम् । निक्षिपति।दर्शने निध्यायति।निशामयते । निवर्तते । निष्णातः । निपुणः । निर्द्रव्यः । निहितः । निकरः । नियुक्तः।निमन्त्रणम्।निकटः।निपातः । नियोगः । ११ । अधि–इतिअध्ययनाधीनाधिपत्याधिकाधिष्ठानादौ । यथा अधीतः । अधीनः । अधिगुणः । अधिपतिः । अधितिष्ठति । अधिरोहति । स्मरणे मातुरध्येति । अधिकृतो ग्रामे अध्याहारः । १२ । अपि–आच्छादनादौ । अपिदधाति । यतः । "अपि संभावनाप्रश्नशंकागर्हासमुच्चये ।" अपिहितं द्वारम् । अपिनद्धः । अपिवेत्ति । अपि ते कुशलम् । किमपि । अपि च भवान् सावद्य सेवते । इन्द्रादयोऽपि ।१३। अति–अतिशयादौ ।"अतिशब्दः प्रशंसायां प्रकर्षे लंघनेऽप्यति" । यथा–अतिरथः । अतितराम् । अतिक्रामति । अतिशेते । पूजितो राजा अतिराजा। अतिगः । भृशार्थे अतिसारः । अतिरिक्तम् । अतीतम् । १४ । सु–इति पूजाप्रशंसनातिशयसुखशोभनशुभादौ । सुसाधुः । सुरूपः । सुतप्तम् । सुस्वरम् । सुकरः । सुगन्धः । सुपूजितो राजा सुराजा । सुगौः । सुकृतम् । सूक्तम् । १५ । उत्–प्राबल्ये ऊर्ध्वक्रियोत्कर्षादौ । "उत्–प्राबल्ये वियोगे च प्रकाशे चोर्ध्वकर्मणि" ॥ उन्मादना । उत्तिष्ठति शयनात् । उन्मीलितम् । उद्गच्छति । उदयति । उत्पन्नः । उच्चरति । उत्कर्षति । उत्सुकः । उन्मत्तः । उत्सृष्टः । उत्सवः । उत्साहः । १६ । अभि–अभिवादनेच्छारूपसम्मुखपराभवादौ । यथा–अभिवन्दते गुरुं नमस्करोतीत्यर्थः । अभिवादयति द्विजो द्विजम् । अभीष्टम् । अभीप्सितम् । अभिरूपः । अभिगच्छति । अभिभवति । अभिजातः । अभिवेहि । अभ्यासः । अभितः।अभिप्रायः । १७ । प्रति–प्रतिष्ठाप्रतिज्ञासादृश्यांगीकारग्रहणाभिमुख्यसमीपार्हिसाप्रतिषेधादौ । यथा–"प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः" । प्रतिष्ठा । प्रतिजानीते । प्रतिमः । प्रतिपन्नम् । प्रतिसूर्यम् । प्रतिशुक्रम । प्रतिग्रामम् । प्रतिपिद्धम् । प्रत्यादिष्टम् । प्रतिदानम् । प्रतिक्रिया । प्रतीकारः । प्रत्युत्तरम् । प्रतिलोमम् । प्रतिकूलम् । प्रतिपत्तिः । प्रत्ययः । प्रत्यक्षम् । वृक्षं प्रति । १८ ।परि–सामस्त्यदोषकथनालिंगनपरिभवादौ । परिभ्रमति । परिलापयति । परीवादः । परिरिप्सते । परिष्वंगः । परिभूतः । परिचरति गुरुम् । परिगतेभ्यः । परिभवति । परिच्छेत्तुम् । परिधत्ते । परिधानम् । परिषत् । परिधिः । पर्यंकः । परिणामः । परिवारः । परिसरः । १९ । उप–इति समीपव्याप्तोपरमप्रतिक्रियाऽध्ययनपुष्ट्यादौ । उपतिष्ठते । उपकुम्भम् । उपरतः । उपवासः । एधोदकस्योपस्कुरुते।उपस्कृतः । उपेक्षा । उपपन्नं रहसि । उपकरः । उपांशु । उपमा । उपालंभः । उपाध्यायः । उपनयः ।

उपकारः । उपचारः । उपहारः । उपज्ञा । उपमा । उपदेशः । २० । श्रत्-श्रद्धायामास्तिक्यबुद्धौ च । श्रद्धत्ते । २१ । अन्तर्मध्ये तिरोधाने च । अन्तर्विशतु । अन्तर्दधे । २२ । प्रादुः-प्राकट्ये । आविः-प्राकट्ये । आविः करोति । आविर्भवति । २३ । अन्ये अर्थाः शास्त्रांतरेभ्यो ज्ञेयाः । अयं प्रादिर्गणः उपसर्गसंज्ञकः । एषोपि बाधकानुवर्त्तकविशेषकनिरर्थकभेदाच्चतुर्धा । यतः "धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्त्तते ॥ तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते" ॥ १ ॥ यथा-पराजयते । वितरति । "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इति वचनात् तमुपसर्गमनुवर्तते । यथा-विजयते । विशिनष्टि । विशेषयति । यथा प्रभवति । निरर्थकस्तु अशोभनार्थः । यथा-प्रलोकते ॥

**प्राग्धातोः ॥** उपसर्गाः धातोः प्राक् प्रयोक्तव्याः ॥

अथैतेषां प्रयोजनमाह । सूत्रम् । प्राक् १-१ ( अव्य० ) धातु ६-१ ( ङिति । ङस्य । स्रो० ) सिद्धम् । उपसर्गा धातोः भ्वादेः क्रियायोगे प्राक् पूर्वम् आदौ प्रयोक्तव्याः । यथा प्रभवतीत्यादि ॥

**तदव्ययम् ॥** तदिदं चादिशब्दरूपमव्ययसंज्ञं भवति क्त्वाद्यंतं च । क्त्वा । क्यप् । तुम् । णम् । च्वि । डा । धा । वत् । आम् । कृत्वस् । शस् । सु ॥ **अव्ययाद्विभक्तेर्लुक् ॥** अव्ययात्परस्या विभक्तेर्लुग् भवति न शब्दनिर्देशे । अव्ययानां न च लिंगादिनियमः । उक्तं च "सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ॥ १ ॥ उक्तान्यलिंगान्यव्ययानि ॥

अथ चादीनां प्रादीनां च संज्ञामाह । सूत्रम् । तद् १-१ ( नपुंसकात्स्यमो० ) अव्ययम् न व्येति न क्षय यातीत्यव्ययम् । १-१ ( अतोम् । अम्श० ) पश्चात् । स्वर० । द्विपदम् । तदिदं पूर्वोक्तं चापि चवाहेत्यारभ्य आविःपर्यन्तं यत् शब्दरूपं तत् अव्ययसंज्ञं भवति । च पुनः क्त्वा इति ( पूर्वकाले क्त्वा ) इति सूत्रोत्पन्नः क्त्वा आदौ यस्य स क्त्वादिः( भुवो भावे क्यप् ) इति सूत्रोत्पन्नक्यप्प्रत्ययं यावत् । सः अन्ते यस्य तत् क्त्वाद्यंतम् । क्त्वातुमुक्यप्धाकृत्वसुणमवत्आमशस्सुप्रत्ययांतः शब्दः सोपि अव्ययसंज्ञक इत्यर्थः । यथा-कृत्वा । दत्त्वा । कर्तुम् । भोक्तुम् । प्रणम्य । प्रणिपत्य । द्विधा । त्रिधा । चतुर्धा । चतुष्कृत्वः । सप्तकृत्वः । कारंकारम् । पायंपायम् । घटवत् । पटवत् । बहुशः । द्विः । त्रिः । इत्यादि । ततः किं कार्यमित्याह । सूत्रम् । अव्यय ५-१ ( टसिरत् । सवर्णे० ) विभक्ति ६-१ ( ङिति । टस्य । चपा अबे० ) लुक् १-१ ( इसे० । नामि० ) सिद्धं त्रिपदम् । अव्ययात्परा या विभक्तिस्तस्या लुग्भवति । तत्रापि विशेषः । न तु शब्दनिर्देशे । परं शब्दनिर्देशे विभक्तेर्लुक् न भवति शब्दस्वरूपत्वेन प्रतिपादनं शब्दनिर्देशः । अव्य-

यस्य नामग्रहणं न तु तदर्थवाचकत्वमित्यर्थः । यथा अवाप्योरुपसर्गयोरिति । तथा द्वितीयवृत्तौ ( क्रीडोऽनुसंपरिभ्यश्च । समवप्राविभ्यः स्थः । उद्भिभ्यां तपः ) इत्यादौ शब्दनिर्देशत्वादव्ययात्परस्या अपि विभक्तेर्न लुक् । च पुनः अव्ययानां लिंगादिनियमो नास्ति लिंगविभक्तिवचनभेदो न । उक्तं च शास्त्रांतरे–सदृशं० । त्रिषु लिंगेषु पुंस्त्रीनपुंसकेषु सदृशं समानरूपम् च पुनः सर्वासु प्रथमाद्वितीयादिषु सप्तम्यंतासु विभक्तिषु सदृशं समानरूपम् सर्वेषु च एकत्वद्वित्वबहुत्वेषु सदृशं समानरूपम् यन्न व्येति व्ययं न याति रूपांतरं न भजति तदव्ययम् इत्युच्यते । अव्ययोपसंहारमग्रेतनसूत्रसंबंधं च व्याचिकीर्षुः फक्किकामाह । उक्ता० । अव्ययानि उक्तानि कथितानि किंभूतानि अव्ययानि अलिंगानि पुंरूपादिलिंगभेदरहितानि ॥

इत्यव्ययानि ।

## अथ स्त्रीप्रत्ययाः १४.

अधुना लिंगविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयंते ( आवतः स्त्रियाम् ) । जाया माया मेधा श्रद्धा धारा इत्यादि । [ अजादेश्चाप् वक्तव्यः ] अजा एडका कोकिला बाला शूद्रा गणिका । अत्र काप्यतः ॥ कापि इ अतः । स्त्रियां कापि परे पूर्वस्य अकारस्य इकारो भवति । कारिका । पाचिका । पाठिका । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।आपं चैव हसांतानां यथा वाचा निशा दिशा॥" अवगाहः–वगाहः । अपिधानम्–पिधानम् । ह्रस्वो वा॥स्त्रियां कापि परे तरादौ च पूर्वस्य ह्रस्वो वा भवति।वेणिका–वेणीका।नदिका-नदीका । श्रेयसितरा–श्रेयसीतरा । श्रेयसितमा–श्रेयसीतमा । नौकादौ ह्रस्वो न भवति । वाग्रहणादेव इयं विवक्षा । निश्चयेन पतंत्यनेकेऽर्थेष्विति निपातानामनेकार्थत्वात् ॥

अधुना वक्ष्यमाणसूत्रैर्लिंगविशेषविजिज्ञापयिषया लिंगरूपो विशेषस्तस्य विशेषेण ज्ञापयितुमिच्छया स्त्रीलिंगभेदज्ञापनाय स्त्रीप्रत्ययाः स्त्रीत्वसूचकाः स्त्रीलिंगज्ञापका ये प्रत्ययास्ते प्रस्तूयंते प्रारभ्यंते इत्यर्थः । सूत्रम् । ( आवतः० ) आप् १–१ ( हसे० ) अत् ५–१ स्वर० । ( स्रो० । चपा०)स्त्री ७–१ (स्त्रियां योः। स्त्र्युभ्रोः । वेयुवः ।) स्व० । सिद्धम् । त्रिपदम् । अकारांतं स्त्रियां वर्त्तमानं स्त्रीलिंगत्वेन निर्दिष्टं विवक्षितं टित् षित् नदादिवर्जितं यन्नाम तस्मात्परतः आप्प्रत्ययो भवति । पकारः सिलोपार्थः । उदाहरणम् । जाया माया मेधा श्रद्धा धारा । अनेन आप्प्रत्ययः । सर्वत्र

( सवर्णे० ) १-१ ( आपः ) इति सेर्लोपः । अग्रे गंगावत् । पुनर्विशेषमाह । आन्तः स्त्रियामित्याप्सिद्धौ पुनरजादेरिति ( जातेरयोपधात् ) इतीपो निषेधार्थ पठ्यते । अजादेरिति । अजादेः शब्दगणाज्जातिवाचित्वेपि आप्प्रत्ययो भवति । यथा । अजा एडका कोकिला बाला शूद्रा गणिका । अत्र शूद्रा आभीरजातिः । एवम् अश्वा चटका मूषिका बलाका मत्स्या इत्यजादयः । अजादेरित्याप् ( सवर्णे० ) [ प्रथमवयोवाचिनः अत ईप् वक्तव्यः ] सूत्रम् । काप् ककारेण सहित आप् काप् तस्मिन् कापि ७-१ अग्रे इ १-१ ( साके० ) अग्रे अतः ६-१ । स्व० । ( सो० ) कापि अग्रे इ ( सवर्णे० ) अग्रे अत. ( इ यं स्वरे ) स्वर० । त्रिपदं सिद्धम् । स्त्रियामिति स्त्रीलिंगे कसहिते आप्प्रत्यये परे अकारस्य इकारो भवति । उदाहरणं च डुकृञ् करणे । कृ । डुपचष् पाके । पच् । पठ व्यक्तायां वाचि । पठ् । करोतीति कारकः । पचतीति पाचक. । पठतीति पाठकः ( तृवुणौ ) इति वुण् प्रत्ययः । कृधातोः ( नामिनः ) इति वृद्धिः कृ इत्यस्य कार् । पच् पठ् इत्यत्र ( अत उपधायाः ) इति प इत्यस्य पा ( युवोरनाकौ ) इति वु इत्यस्य अकादेशः । स्व० । कारकः । पाचकः । पाठक इति सिद्धम् । ततः ( आन्तः स्त्रियाम् । सवर्णे० ) ततः ( काप्यतः ) इत्यनेन अकारस्य इकारो भवति । १-१ स् ( आपः ) इति सेर्लोपः । कारिका पाचिका पाठिका इति रूपत्रयम् । "कारिका तु स्वल्पवृत्तौ बह्वर्थस्य सूचिका" एवमन्यान्यप्यवसेयानि । वाटिका । शाटिका । कन्यायाः कापि परे ह्रस्वत्वेव न त्विकारः कन्यका इत्यादि । क्वचिन्न भवत्यपि । यथा बहुपरिव्राजका । बहुपाठका । अथ आप्प्रत्ययाधिकारे व्यंजनेभ्योपि तत्कारणसूचकं श्लोकमाह । वष्टि० । भागुरिराचार्यः अतोऽकारस्य लोपं वष्टि अभिलषति वांछति । कयोः । अव अपि इत्येतयोर्द्वयोरुपसर्गयोः यथा पिदधाति सुखम् । आपिधानम्-पिधानम् । अवगाहः-वगाहः । विमलगिरिरवतंसः विमलगिरिर्वतंसः । तोयनिधी अवगाह्य-तोयनिधौ वगाह्येत्यादय. । च पुनः एव अवधारणे । केषांचित् हसान्तानां व्यंजनान्तानां शब्दानामपि आपम् आप्प्रत्ययं वष्टि । यथेत्युदाहरणोपन्यासे । वाच् निश् दिश् । सर्वत्र आप्प्रत्ययः । स्व० । १-१ ( आप. इति श्लोकव्याख्या । सीमन्शब्दस्य वा आपडिलोपश्च । सीमा । "अज्ञाते कुत्सिते चैव संज्ञायामनुकंपने । तद्युक्तनीतावल्पे ह्रस्वे स्वार्थे च कः स्मृत." । अज्ञाते-अनुकः । कुत्सिते-अश्वकः । संज्ञायाम्-देवदत्तकः । तद्युक्तनीतौ-गुडेन धाना गुडधानकाः । अल्पे-अल्पं तैलं तैलकम् । ह्रस्वत्वे-ह्रस्वा वृक्षाः वृक्षकाः । च पुनः स्वार्थेऽपि चौर एव चौरकः । अथ काबधिकारात् कापि परे अन्यकृत्यमाह । सूत्रम् ( ह्रस्वो वा ) ह्रस्व १-१ ( सो० ) वा १-१ ( अव्य० । ह वे । उ ओ ) द्विपदम् । स्त्रियामित्यादिवृत्तिः सुगमा । न परम् । तरादाविति तरतमौ तद्धितप्रत्ययौ ( तरतमेयस्विष्ठाः प्रकर्षे ) इति सूत्रोत्पन्नौ । उदा० । वेणी, नदी । वेण्येव वेणीका-वेणिका वा । नद्येव नदीका नदिका वा । ( स्वार्थेपि ) इति कप्रत्ययः । यद्वा । ह्रस्वा वेणी वेणीका वेणिका वा । ह्रस्वा नदी नदीका नदिका

वा । ह्रस्वात्कप्रत्ययः सर्वत्र । ( आवतः स्त्रियाम् ) इत्याप् । अनेन सूत्रेण एकत्र वेणी इत्येतस्य वेणि । नदी इत्यस्य नदि । सर्वत्र १-१ सु( आपः ) "सेतौ च वरणे वेणी नदीवादे कचोच्चये" । अग्रे श्रेयसी २ । अतिशयेन श्रेयसी श्रेयसीतरा श्रेयसितरा वा । ( तरतमेयस्विष्ठाः० ) इति तरप्रत्ययः । ( ह्रस्वो वा ) इति सी इत्यस्य वा सि । एवं श्रेयसीतमा, श्रेयसितमा । प्रयोगांतरे ह्रस्वनिषेधमाह । नौकादौ तु ह्रस्वो न भवति । ह्रस्वा नौर्नौका । इत्यादौ शब्दे तु का इति परं न भवति । एवं सुरैका सुरलोका द्यौः । एवमन्येपि यथासंभवमवसेयाः । कुतो ह्रस्वनिषेध इत्याह । वाग्रहणादेवेति । सुगमम् । अत्राह परः । ननु विकल्पसूचको वाशब्दः कथं निषेधार्थं सूचयति तत्राह । निपातानामनेकार्थत्वात् । निपतंति निश्चयेन नितरां वा पतंति प्रवर्तंते अनेकेषु बहुष्वर्थेष्विति निपाताः । यथा चशब्दः पुनरर्थे समुच्चयार्थे च । एवं वाशब्दो विकल्पार्थे निषेधार्थे चेति । कुत्रचिद्विकल्पं कुत्रचिन्निषेधं सूचयतीति न दोषः ॥

**न्रण ईप् ॥ नकारांताद्दकारांतादणंताच्च स्त्रियामीप्प्रत्ययो भवति । दंडिनी । दंतिनी । कारिणी । मालिनी [ ईपि राज्ञोऽल्लोपो वक्तव्यः ] राज्ञी । शुनी । कर्त्री । हर्त्री । औपगवी । यस्य लोपः ॥ इश्च अश्च यं तस्य इवर्णावर्णयोर्लोपो भवति तद्धितस्वरयोरीपि च परे ॥**

स्त्रीप्रत्ययाधिकारादाप्प्रत्ययमुक्त्वा ईप्प्रत्ययमाह । सूत्रम् ( न्रण० ) न् च ऋ च अण् च न्रण तस्मात् न्रणः ५-१ स्व० ( ऋ रम् ) स्व० । ( स्त्रो० ) ईप् १-१ ( हसे० ) द्विपदम् । नकारांता इन्प्रत्ययान्तादयः ऋकारांतास्तृप्रत्ययांतादयः अण्णंता औपगवादयः एतेभ्यः शब्देभ्यः स्त्रियां स्त्रीलिंगे ईप् प्रत्ययो भवति । उदा० । दंड-दंत-कर-माला । दंडोऽस्त्यस्या इति दंडिनी । दंतौ स्तः अस्या इति दंतिनी । करः शुंडा अस्त्यस्या इति करिणी । माला अस्ति अस्या इति मालिनी ( मांतोपधात्० ) इति इन्प्रत्ययः । ( यस्य लोपः ) इति अवर्णलोपः । स्व० । अग्रे ( न्रण ईप् ) इति सूत्रेण ईप्प्रत्ययः । स्वर० । १-१ ( हसे० ) करिणी इत्यत्र ( ऋरुर्ष्णो० ) इति सूत्रेण नस्य णः । एवं राजन् अग्रे ईप्प्रत्ययः [ ईपि० ] ईपि प्रत्यये परे राज्ञो राजनशब्दसंबंधिनोऽकारस्य लोपो वक्तव्यः । अनेन उपधाया अकारस्य लोपः ( स्तोः श्चुभिः श्चुः ) इति नस्य ञः [ ज्ञोर्ज्ञः ] स्व० । राज्ञी । अन्येपि । श्वन् ( न्रण ईप् । श्वादेः ) स्व० । शुनी-मघोनी-इत्यादयो नांताः । युवन्शब्दस्य तु युवतिरिति वक्ष्यति । ओणृ अपनये ( अन्येभ्योऽपि दृश्यते ) इति वन् ( विड्वनोरनुनासिकः स्यात् ) इति णस्य अकारः । अवावा । विधवा स्त्री ( वनोर च ) वन्नन्तात्स्त्रियां ङीप् स्यात्-रश्चान्तादेशः । अतिधीवरी । शर्वरी । अथ ऋकारांताः । हृञ् हरणे । डुकृञ् करणे । हरतीति हर्त्री । करोतीति कर्त्री ।

शीले तृन्प्रत्ययः गुणः करः हरः ( रहाद्य० ) जल० । ऋकारांतत्वात् ( त्रण ईप् ) इतीप् ( ऋ रम् ) स्व० । अथ अण्णंत उपगुः । उपगोरपत्यं औपगवी । ( अपत्येऽण् । आदिस्वरस्य ञ्णिति वृद्धिः ) उ इत्यस्य औ ( वो व्यस्वरे ) इति उकारस्य अव् । स्व० । अण्णंतत्वादीप् । औपगवई इति स्थिते । सूत्रम् ( यस्य लोपः ) इ अ । इश्च अश्च यं तस्य यस्य ६-१ ( ङस्स्य ) लोपः १-१ ( स्रो० ) सिद्धम् । यद्वा इश्च ई च ई (सवर्णे०) अश्च आ च आ (सवर्णे०) ततः ईश्च आश्च या ६-१ ( नपुंसकस्य० ) इति ह्रस्वः । ( ङस्स्य ) लोपः १-१ ( स्रो० ) इवर्णस्य अवर्णस्य च इति इकारस्य ईकारस्य च अकारस्य च आकारस्य च लोपो भवति । वृत्तिः कंठ्या । न वरम् । यस्येति इवर्णस्य अवर्णस्य च लोपो भवति ईरि प्रत्यये परे तद्धिते स्वरे परे यकारे च परे । अनेन वकारस्य अलोपः । स्व० । औपगवीति सिद्धम् । अण्णंताच्चेति चकारात्पंचादीनां नकारांतत्वेपि स्वस्रादिशब्दानाम् ऋकारांतत्वेऽपि ईप् न स्यात् । पंच सप्त स्वसा दुहिता ननांदा माता याता तिस्रः चतस्रः इत्यादि ॥

प्टिृतः ॥ पकारटकारउकारऋकारानुबंधात् स्त्रियामीप्प्रत्ययो भवति । प् वराकी । ट् कुरुचरी । उ गोमती । ऋ पचन्ती । इत्यादि ॥

सूत्रम् । ( प्टिृतः ) प् च ट् च उश्च ऋश्च प्टिृ ते इतो यस्य स प्टिृत् तस्मात् प्टिृतः ५-१ अस् मध्ये ( उ वम् । ऋ रम् ) स्व० ( स्रो० ) । इत् इति पदं शकारादिषु प्रत्येकं योज्यम् । तेन पकारानुबंधाः पाकप्रत्ययांतादयः । टकाराऽनुबन्धाः टप्रत्ययान्तादयः, उकारानुबंधाः मत्वन्तादयः, ऋकारानुबंधाः शतृप्रत्ययांतादयः,तत एभ्यः स्त्रियामीप्प्रत्ययो भवति । पानुबंधमाह । वृ निवारणे । वृ ( पाकोकणः ) इति पाकप्रत्ययः । पकारस्येत्संज्ञात्वाल्लोपः । आक । स्व० । पकारानुबंधत्वात् ( प्टिृतः ) अनेन ईप्प्रत्ययः ( यस्य लोपः ) स्व० ( हसे० ) टानुबंधो यथा । चर गतिभक्षणयोः । चर कुरुपूर्वः । कुरुषु देशेषु चरतीति कुरुचरी । ( अटौ ) इति टप्रत्ययः । टकार इत् । अ इति । स्व० ईप्प्रत्ययादिकं प्राग्वत् । उकारानुबंधो यथा-गौरस्या अस्तीति गोमती । अस्त्यर्थे मतुः । मत् । उकारानुबंधत्वादीप्प्रत्ययः । शेषं प्राग्वत् । ऋकारानुबंधो यथा-डुपचष् पाके । पच् । पठ व्यक्तायां वाचि । पच् ( शतृशानौ ) इति शतृप्रत्ययः । ऋकारः शकारश्च इत् ( अप् कर्त्तरि ) इति अप्प्रत्ययः । स्वर० ( अदे ) इत्यप्प्रत्ययाकारस्य लोपः । स्वर० । ऋकारानुबंधत्वादीप्प्रत्ययः ( अप्ययोरान्नित्यम् ) इति नुमागमः ( नश्चा० ) स्व० । शेषं प्राग्वत् ( प्टिृतः ) इति केवलात् धातोर्न भवति । तेन त्रपूष् लज्जायाम् त्रपा । क्षमूष् सहने क्षमा । धेट् पाने इत्यस्य तु ईप् भवति । स्तनंधयी ॥

नदादेः ॥ नदादेर्गणात्स्त्रियामीप्प्रत्ययो भवति । नदी । गौरी । गौतमी ॥

सूत्रम्। ( नदादेः ) नद आदिर्यस्य स नदादिस्तस्मात् ५-१ ( ङिति ) इति इकारस्य एकारः। ( ङस्य ) इत्यकारलोपः ( स्रो॰ ) नदादिर्योऽसौ गणस्तस्मात्स्त्रीलिंगे ईप्प्रत्ययो भवति। नद गौर गौतम। अनेन ईप्प्रत्ययः ( यस्य लोपः ) स्व॰। नदादिराकृतिगणो द्रष्टव्यः। यथा—नर्त्तकी तैपी पौपी मत्सी अनडुही अनड्वाही मातामही पितामही महिषी सूकरी आगस्ती त्रिदशी॥

इंद्रादेरानीप्॥ इंद्रादेर्गणात्स्त्रियामानीप्प्रत्ययो भवति। इंद्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानीप्प्रत्ययो भवति। इन्द्राणी। भवानी। [ मातुलोपाध्याय क्षत्रियाचार्यमर्याद्वा]मातुली-मातुलानी। उपाध्यायी—उपाध्यायानी। क्षत्रियी—क्षत्रियाणी। आचार्यी-आचार्यानी। [ हिमारण्ययोराधिक्ये॰ आनीप्प्रत्ययो भवति ] महद्धिमम्—हिमानी। महदरण्यम्—अरण्यानी॥

सूत्रम्। इंद्रादि ५-१ ( ङिति। ङस्य। स्रो॰ ) आनीप् १-१ ( हसे॰ ) पश्चात् ( नामिनो रः ) स्व॰। केचित्तु इंद्रादेः आन ईप् इति त्रिपद मन्यंते तन्मते इंद्रादेः ईप्प्रत्ययः आन् आगमश्चेति। इंद्रादेर्गणात् स्त्रियाम् आनीप्प्रत्ययो भवति। इंद्रभवशर्वमृडवरुणब्रह्मरुद्र। अनेन सूत्रेण आनीप्प्रत्ययो भवति। यथासंभवं नकारस्य णकारः ( यस्य॰ ) इंद्रस्य स्त्री इंद्राणी। स्व॰। ( हसे॰ ) मातुलश्च उपाध्यायश्च क्षत्रियश्च आचार्यश्च सूर्यश्च मातुलोपाध्यायक्षत्रियाचार्यसूर्यम् तस्मात् एतस्मा च्छब्दपंचकाद्वा आनीप्प्रत्ययो भवति। आचार्यक्षत्रियाभ्या तु स्वार्थे एव वा आनीप्। मातुल २ एकत्र आनीप्, अन्यत्र ईप् ( यस्व॰ ) शेषं सुगमम्। एवं च उपाध्याय २ एकत्र आनीप् प्रत्ययः, अन्यत्र ( पुंयोगे च ) इति ईप्। उपाध्यायानी—उपाध्यायी। एवं क्षत्रियसूर्ययोः ( ऋवर्णे॰ ) भवति। ( आचार्यादणत्वम् ) इति। आचार्यानी- आचार्या। क्षत्रियाणी-क्षत्रिया। सूर्याणी—सूर्या। अर्याणी-अर्या। पुंयोगे तु ईप्। एवं क्षत्रियी। अर्यी। उपाध्यायी। स्वयंव्याख्यात्री तु उपाध्याया अत्र आप् [ हिमारण्ययोर्महत्त्वे आनीप् ] महत् हिमं हिमानी। महत् अरण्यम् अरण्यानी [ यवनशब्दाल्लिप्यामानीप् ] यवनना तुरुष्काणां लिपिर्यवनानी ( यवाद्दोषे वा आनीप् ) दुष्टो यवो यवानी॥

[ ईप्समाहारे गुणश्च ] त्रयी। पुंयोगे च॥ पुंयोगे च स्त्रियामीप् प्रत्ययो भवति। शूद्री। गणकी॥

( ईप्समाहारे गुणश्च) समाहार॰ एकीभावस्तत्रार्थे ईप्प्रत्ययो भवति। नामिनो गुणश्च। त्रयाणां समाहारस्त्रयी समाहारत्वात् ईप्। इकारस्य च एकारो गुण.। ( ए अय् ) स्व॰। ( हसे॰ ) केचित्तु ( ईप्समाहार गुणश्च ) इति न मन्यते। तन्मते

( तयायडौ संख्यायाम् ) इति त्रिशब्दादयटि कृते ( यस्य० ) इतीकारलोपः । टित्वात् ( ष्ट्रिद्रतः ) इतीप् । पुनः ( यस्य लोप. ) स्व० । त्रयः अवयवा अस्या इति त्रयी । सूत्रम् ( पुंयोगे च ) पुमान् पुरुषः तस्य योगे च ईप्प्रत्ययो भवति । शूद्र गणक । शूद्रस्य भार्या शूद्री । जात्या या काचिद्भवतु परं शूद्रस्य पुरुषस्य स्त्रीत्वात् शूद्री । गणकस्य भार्या गणकी । ईप्प्रत्ययः ( यस्य० ) शेष सुगमम् ॥

जातेरयोपधात् ॥जातिवाचिनो यकारोपधादकारांतात् स्त्रियामीप्प्रत्ययो भवति । मेषी । सूकरी । हंसी । कुक्कुटी । ब्राह्मणी । अयकारोपधग्रहणात् । क्षत्त्रिया । वैश्या ॥

सूत्रम् ( जाते० ) जाति ५-१ ( ङिति ) इति इकारस्य एकारः ( ङस्य ) इत्यकारलोपः ( स्रो० ) योकारः उपधा यस्य स योपध. न योपधः अयोपधः तस्मात् । ५-१ ( ङसिरत् । सवर्णे० ) पश्चात् ( नामिनो रः ) स्व० । सिद्धम् । जातिर्मेषादिकानाम् ताम् वक्तीति जातिवाची तस्मात् । स जातिवाची शब्दो यकारोपधोपि स्यादत आह । अयकारोपधादिति । यकारोपधवर्जितादित्यर्थ. । यकारोपधवर्जिता अपरेपि स्वराः स्युरत आह अकारांतादिति । सुगमम् । जातिलक्षणमाह। " आकृतिग्रहणा जातिर्लिंगाना च न सर्वभाक्॥सकृदाख्यातनिर्ग्राह्या गोत्र च चरणैः सह " इति । आकृतिः आकारग्रहणं व्यंजकं यस्याः सा । च पुनः लिंगाना सर्व भाक् न । सर्वलिंगानि न भजते इत्यर्थः । यथा ब्राह्मणः । पुंसि स्त्रिया च पुनः सकृदुपदिष्टा सती निर्ग्राह्या निश्चेतुं शक्या सा जातिः । अपत्यप्रत्ययांतस्य चरणसंज्ञा । गोत्रम् गोत्रमपत्यप्रत्ययांतः शब्दोऽपि जातिः । चरणैः अपत्यैः सह गोत्रं जातिरुच्यते । यद्वा नित्या एका अनेकसमवेता सामान्यरूपा जातिः। यदि नित्या न तर्हि पिंडे नष्टे सैव नश्यति । यद्येका न तर्हि अनेकेष्वप्येका जातिर्न स्यात् । यद्यनेकसमवेता न तर्हि यस्मिन्पिण्डे उक्ता तस्मिन्नष्टे अन्यतरे पिंडे न प्रतीयते इति । तस्माज्जातिवाचकशब्दादीप्प्रत्ययो भवति । उदा० । मेषसूकरहंसकुक्कुटब्राह्मण । अनेन जातित्वादीप्प्रत्ययो भवति । ( यस्य० ) १-१ ( हसे ) शेष सुगमम् । मेषस्य जातिः मेषी । क्षत्रिया । वैश्या । अत्र जातिवाचिनोऽपि यकारोपधत्वादीप्प्रतिषेधः। ततः आप्प्रत्ययः । मत्स्यमनुष्यहयगवयाना यकारोपधत्वेऽपि ईव् निषेधो न । मत्स्य ईप्प्रत्यय. ( यस्य० ) यलोपश्च । स्व० । मत्सी इत्यादि । जातेः किम् । मुंडा । अकारांतात्किम् । गौः ॥

( प्रथमवयोवाचिनोऽत ईप्प्रत्ययः ) कुमारी । किशोरी । कलभी इत्यादयः । प्रथमवयोग्रहणात् । वृद्धा । स्थविरा । इत्यादौ न ईप् । अद्ग्रहणात् । शिशुः ॥

( प्रथम० ) कालकृता शरीरावस्था वयः प्रथमवयो बाल्यं तद्वक्तीत्येवंशीलाद्-कारांताच्छब्दादीप्प्रत्ययो भवतीत्यर्थः । कुमारकिशोरकलभ । अनेन ईप्प्रत्ययः ( यस्य० ) स्व० ।"१-१ ( हसे० ) वृद्धा । स्थविरा । अत्र प्रथमवयोवर्जितत्वादाप्-प्रत्यय एव न त्वीप् । इयं स्त्री शिशुः । अत्र प्रथमवयोवाचित्वे सत्यपि अकारांतत्वा-भावात् ईप्प्रत्ययनिषेधः १-१ ( स्रो० ) ॥

स्वांगाद्वा ॥ स्वांगवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । "स्वांगं स्यादद्रवन्मूर्त्तं प्राणिस्थमविकारजम् । तत्र दृष्टमतत्स्थं चेत् स्थितं तद्वच्च तादृशि" ॥ १ ॥ सुमुखी । मृगाक्षी । तन्वंगी । वाग्रहणात् । पद्मवदना । कमलनयना । इत्यादौ न ईप् ॥

सूत्रम् ( स्वांगाद्वा ) स्वं स्वकीयमंगं स्वांगं तद्वाची शब्दोपि स्वांग इत्युच्यते । यद्वा सुष्ठु शोभनमंगं स्वंगं स्वंगमेव स्वांगम् । यद्वा सुष्ठु शोभनम् आसमंतात् अंगं स्वांगम् । स्वस्य प्राणिनो वा अंगं स्वांगं तस्मात् ५-१ ( टसिरत् । सवर्ण० ) वा ३-१ ( अव्य० । चपा अवे० ) स्व० । सिद्धं स्वांगमिति । "प्राणिस्थमद्रवन्मूर्त्तं स्वांगं स्याद्विकारजम् । तत्र दृष्टमतत्स्थं चेत् स्थितं तद्वच्च तादृशि" ॥ प्राणिस्थं चेतनशरीरे वर्त्तमानम् पुनः अद्रवत् प्रस्वेदादिरहितम् पुनर्मूर्त्तम् आकारसहितम् । पुनः अविकारजं शोफादिविकाररहितम् तत् स्वांगम् उच्यते । पुनः पूर्वं तत्र प्राणिनि दृष्टं पश्चात् यदि अतत्स्थम् अप्राणिस्थं भवति तदपि वा स्वागम् । च पुनः तद्वत् प्राणिवत् तादृशि प्राणिसदृशे अप्राणिन्यपि स्थितं भवति तदपि वा स्वांगम् । यत्तु अप्राणिस्थं द्रवरूपम् अमूर्त्तम् अरूप विकाराज्जातं तत्स्वागं न । यथा सुमुखा शाला । अत्र अप्राणिस्थत्वात् ईप् न । बहुस्वेदा । अत्र द्रवत्वात् ईप् न । सुज्ञाना । अत्र अमूर्त्तत्वात् नेप् । बहुशोफा । अत्र विकारजत्वात् नेप् । सुकेशी सुकेशा वा रथ्या । प्राणिस्थस्य अप्राणिनि दृष्टत्वात् । वाग्रहणादेवात्र वा ईप् । सुस्तनी सुस्तना वा प्रतिमा । प्राणिवत् प्राणिसदृशे स्थितत्वात् । इत्यादौ विकल्पेनेप् । स्वांगं मुख-कर्णादि तद्वाचिनः शब्दात् स्त्रियाम् ईप्प्रत्ययो भवति । वाशब्दः प्रयोगांतरे निषे-धार्थो न विकल्पार्थः । सुमुख मृगाक्ष तन्वंग । सुष्ठु मुखं यस्याः सा सुमुखी । मृगवत् अक्षिणी यस्याः सा मृगाक्षी । अथवा मृगस्य अक्षिणी इव अक्षिणी यस्याः सा मृगाक्षी । तनु कृशम् अंगं यस्याः सा तन्वंगी ( स्वांगाद्वा ) इतीप् ( यस्य० ) स्वर० । ( हसे० ) वाशब्दस्य निषेधार्थत्वात् पद्मवदना कमलनयना किसलयकरा सुजघना इत्यादौ ईप्प्रत्ययो न भवति ॥

---

१ अतत्स्थ तत्र दृष्ट च तेन चेत्तथा युतम्—इत्यन्यत्र पाठ । ■ एव महाजिनीश्वितवृत्तसिद्धांत-कौमुद्या दृश्यते । २ कमलवदना—इ० पु० ।

[ कृदिकारादक्तेरीप्वा वक्तव्यः ] अंगुलिः-अंगुली । धूलिः धूली । आजिः-आजी । अक्तेरिति विशेषणात् । कृतिः । भूतिः । **ऐ च मन्वादेः ॥** मन्वादेर्गणात्स्त्रियामीप्प्रत्ययो भवति ऐकारादेशश्च॥ मनायी । आदिशब्दात् अग्नेर्भार्या स्वधा अग्नायी।कुसितस्य भार्या कुसितायी ।पूतक्रतोर्भार्या पूतक्रतायी।अन्यथा पूताः क्रतवो यस्याः सा पूतक्रतुः । चकारात् [ मनोरौ वा ] मनावी मनायी मनुः । वृषाकपायी ॥

( कृदिकारा० ) कृतः इकारः कृदिकारस्तस्मात् । कृदिकारात् । कृदिति वृत्ती यद्वृत्तिप्रत्ययोत्पन्नो योऽसौ इकारस्तस्मात् ईप्प्रत्ययो वा भवति । किंविशिष्टात् कृदिकारात् अक्तेः क्तिप्रत्ययवर्जितादिकारादित्यर्थ. । उदा० । अगि रगि लगि गत्यर्थाः। अग ( ध्वादेरुलिः ) इति उलिप्रत्यय. ( इदितः० ) इति नुमागमः । ( नश्चा० ) स्व० । अंगुलिः । धूञ् कंपने । धू ( ध्वादेरुलिः ) इति उणादित्वादुलिप्रत्ययः ( सवण० ) धूलिः । अज गतौ क्षेपणे च । अज । उणादौ इण्प्रत्यय. । णित्वात् ( अत उपधायाः ) इति वृद्धिः । स्वर० । आजि. । अनेन वा ईप्प्रत्ययः । ( यस्य-लो० ) स्व० । १-१ ( हसे० ) अन्यत्र १-१ ( स्रो० ) अक्तेरिति किम् । डुकृञ् करणे । कृ । मनु ज्ञाने । मन् भू सत्तायां भू ( क्तिः ) इति क्तिप्रत्यय. ति । मन् इत्यत्र (लोपस्त्वनुदात्ततनाम् ) इति नलोप । अक्तेरिति विशेषणादीप्प्रत्ययनिषेधः। सूत्रम । ऐ १-१ । साके० । च १-१ ( अव्य० ) मनुरादिर्यस्य स मन्वादिस्त स्मात् ५-१ ङिति । ङस्य० । ( स्रो० ) मन्वादेरित्यादिवृत्ति. सुकरा । अंत्यस्वरस्य च ऐकारादेशो भवति । उदा० । मनु वृषाकपि । मनोर्भार्या मनायी । वृषस्य धर्मस्य आसमंतात् कं फलं पिबतीति वृषाकपिस्तस्य वृषाकपेः भार्या वृषाकपायी । उकारेकारयोश्च अंत्यस्वरस्य वा ऐकारः ( ऐ आय् ) स्व० । ( हसे० ) "वृषाकपायी श्रीगौर्यो."इत्यमरः । चकारात् मनुशब्दसंबंधिनः उकारस्यौकारो वा भवति । ततः ( औ आव् ) स्वर० । मनावी । एवम् अग्नायी । पूतक्रतायी । कुसितायी । कुसिद ऋषिस्तस्य भार्या कुसिदायी कुसीदो वृद्धिजीवकस्तस्य भार्या कुसीदायी । पूता. क्रतवो येन स पूतक्रतुस्तस्य स्त्री पूतक्रतायी ॥

**पत्न्यादयः ॥** पत्न्यादयः शब्दाः ईप्प्रत्ययान्ताः निपातात्साधवः । ( समानैकवीरपिंडपुत्रभ्रातृदासेभ्यो बहुव्रीहौ पत्युर्नादेश ईप् च ) पत्नी । समानः पतिरस्याः सा सपत्नी । एकः पतिरस्याः सा एकपत्नी । वीरः पतिर्यस्याः सा वीरपत्नी । पिंडः

पतिर्यस्याः सा पिण्डपत्नी । एवम् । पुत्रपत्नी । भ्रातृपत्नी । दासपत्नी । इत्यादि ॥ अंतर्वत्नी । सखी । अशिश्वी । अर्धजरती । युवती । प्रतीची । प्राची । समीची । उदीची । इत्यादयः।दारशब्दो नित्यं बहुवचनांतः पुँल्लिंगः । दाराः । दारान् । इत्यादि ॥

सूत्रम् ( पत्न्यादयः ) पत्नी आदिर्येषां ते पत्न्यादयः १–३ जस् ( ए ओ जसि । ए अय् ) स्व० । ( स्रो० ) पत्न्यादयः शब्दाः ईप्प्रत्ययांता निपात्यन्ते । न वरम् । पत्नी भार्या । अन्तर्वत्नी गुर्विणी । नारी स्त्री । सखी प्रसिद्धा । पतिवत्नी जीवद्भर्तृका । अशिश्वी अप्रसूता स्त्री । अर्धजरती अर्धवृद्धा स्त्री । युवती स्त्री । प्राची पूर्वा दिक् । प्रतीची पश्चिमा दिक् ।एवमन्येऽप्यूह्याः।सपत्नी एकपत्नी वीरपत्नी इत्यादयः ईप्प्रत्ययांता निपातसिद्धा इत्यर्थः । कुशी लोहविकारः । कामुकी वृषस्यंती । मैथुनेच्छावतीति यावत् । कबरी केशवेशे।इत्यादयोऽपि निपात्यन्ते । तथा उदीची मत्सी मानुषी अगस्ती पाणिगृहीती असिक्नी पलिक्नी पितामही स्थली कुण्डी गोणी कबरी नारी नागी कुशी कामुकी इत्यादयः पत्न्यादिषु ज्ञेयाः । अकारांतो दारशब्दो नित्यं बहुवचनांतः पुँल्लिंगे कलत्रवाची तस्मात् आप्प्रत्ययः ईप्प्रत्ययोऽपि न भवतीति । किंतु । दाराः । दारान् । दारैः । दारेभ्यः । दारेभ्यः । दाराणाम् । दारेषु । देवशब्दस्य बहुवचनवत्साध्यः ।

वोर्गुणात् ॥ उकारांताद्गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" ॥१॥ पट्वी–पटुः । मृद्वी–मृदुः । तन्वी–तनुः । ऋज्वी–ऋजुः ॥

सूत्रम् ( वो० ) वा १–१ ( अव्य० ) उ ५–१ ( ङिति । ङस्य ) इत्यकारलोपः ( स्रो० । ओ औ औ ) अग्रे गुण ५–१ ( ङसिरत् । सवर्णे० । नाम्नि० ) जल० । गुणा रूपादयश्चतुर्विंशतिः । "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" ॥ १ ॥ बुधैः स गुणः उच्यते । स कः । यः सत्त्वे द्रव्ये एव निविशते वर्त्तते इत्यर्थः । पुनस्तस्मात् द्रव्यात् अपैति याति । च पुनः पृथग्जातिषु द्रव्यत्वावांतरजातिषु दृश्यते । च पुनः आधेयः उत्पाद्यः । यथा कस्तूरिकासंयोगाद्वस्त्रगंधः । पुनः अक्रियाजः अनुत्पाद्यः । यथा आकाशादेः महत्त्वादि । पुनः असत्त्वप्रकृतिः अद्रव्यस्वभावः स गुणस्तद्वाची उकारांतो यः शब्दस्तस्मात्स्त्रियां स्त्रीलिंगे वा ईप्प्रत्ययो भवति पट्वी–पटुः । अनेन वा ईप्प्रत्ययः ( उ यम् ) स्वर० ( ह्रस्वे० ) अन्यत्र ( स्रो० ) एवम् । मृद्वी–मृदुः । तन्वी–तनुः ।

---

१ पुँल्लिंगः -इति पाठोऽन्यत्र । भवेति साधुः ।

बह्वी-बहुः । ऋज्वी-ऋजुः । लघ्वी-लघुः । वाग्रहणादेव खरुः पांडुः इत्यादौ नेप् । गुणग्रहणात् । धेनुः रज्जुः अणुः इत्यादौ नेप् ॥

उत ऊः ॥ उकरांतान्मनुष्यजातेः स्त्रियामूप्रत्ययो वा भवति । पंगूः-पंगुः । वामोरूः-वामोरुः ॥

सूत्रम् ( उत ऊः ) उत् ५-१ स्व० ( स्रो० ) ऊ १-१ ( स्रो० ) मध्ये(आद्वे) वृत्तिः कंठ्या । न वरम् । गुणवाचिनोऽगुणवाचिनोऽपि मनुष्यजातिवाचिन उकारान्तात्स्त्रियाम् ऊप्रत्ययो वा भवति । उदा० । अनेन ऊप्रत्ययः ( सवर्णे० ) १-१ ( स्रो० ) पंगूः-पंगुः । एवं वामोरूः । ऊप्रत्ययः ( सवर्णे० ) करभोरूः । पुरुषश्चेत् पंगुः । स्त्री चेत् पंगूः ॥

यूनस्तिः ॥ युवन्शब्दात् स्त्रियां तिप्रत्ययो भवति । ( नाम्नो नो लोप० ) । युवतिः । एभ्यो नामत्वात्स्यादयः । आबंतात् ( आपः ) इति सेर्लोपः । ईबन्तात् ( हसेपः सेर्लोपः ) पूर्ववत्प्रक्रिया ॥

इति स्त्रीप्रत्ययाः समाप्ताः ॥

( यूनस्तिः ) युवन्शब्दात् तिप्रत्ययो भवति स्त्रियाम् । ईब्निषेधः । युवन् अग्रे तिप्रत्ययः ( नाम्नो० ) ( स्रो० ) पक्षे पत्न्यादिषु पाठात् युवती इत्यपि । एवं स्त्रीप्रत्यया ज्ञेयाः । अथ तेषां विभक्तिकार्यमाह । एभ्य इति॥एभ्यः पूर्वोक्तस्त्रीप्रत्ययांतेभ्यः शब्देभ्यः ( अविभक्ति नाम ) इति सूत्रोक्तलक्षणनामत्वात्स्यादयो विभक्तयो दीयन्ते । तत आबन्तात् आप्प्रत्ययांतात् ( आपः ) इति सूत्रेण सिलोपः । ईबंतात् ( हसेपः सेर्लोपः ) इति सिलोपः । तत्र आबंताः गंगाशब्दवत्साध्याः । ईबंताः नदीशब्दवत् । इकारोकारांता बुद्धिरज्जुवत् । ऊकारांता वधूवत् ।

इति स्त्रीप्रत्ययाः समाप्ताः ॥

---

## अथ कारकप्रक्रिया १५.

अथ विभक्त्यर्थो निरूप्यते । लिंगार्थे प्रथमा ॥ धातुप्रत्ययातिरिक्तमर्थवच्छब्दरूपं लिंगं तस्यैवार्थे सन्मात्रे प्रथमा विभक्तिर्भवति । लिंगादयोऽपि प्रथमार्था इति केचित् । तत्सद्व्रह्म ।

रविरिव राजते राजा रोषात्कुमारी रोरूयते ॥
चोभुज्यते भुवं भूपालः प्रागास्तां रामलक्ष्मणौ ॥ १ ॥

मनसिवचसिकाये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयंतः ॥ परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसंतः संति संतः कियंतः ॥ २ ॥

कुमाराः शेरते स्वैरं रोरूयंते च नारकाः ॥
जेगीयंते च गीतज्ञा मेम्रियंते रुजा जिताः ॥ ३ ॥

एवं ये पुँल्लिंगादयः स्त्रीप्रत्ययांता उक्तास्ते विभक्तिमंतरा न शब्दतां प्राप्नुवंतीति विभक्तिकार्यसंबंधमाह । अथेति । संज्ञासंधिकार्यस्वरांतहसांतलिंगत्रयप्रक्रियायुष्मद्स्मत्स्त्रीप्रत्ययकथनानंतरं विभक्तीनां कर्तृत्वादिसूचिकानां प्रथमादीनाम् अर्थोऽभिधेयो निरूप्यते तत्र प्रथमाविभक्तेः कार्यमाह । सूत्रम् ( लिंगा० ) लिंगार्थे लिंगस्य अर्थो लिंगार्थस्तस्मिन् ७–१ ( अ इ ए ) प्रथमा १–१ ( आपः ) सिद्धं सूत्रम् । लिंग्यन्ते चिह्नयंते ज्ञायंते पुंस्त्रीनपुंसकतया शब्दा अनेनेति लिंगम् । तत् किंविशिष्टम् । धातुप्रत्ययातिरिक्तमिति । धातुः भ्वादिः, प्रत्ययाः कृदादयस्तेभ्योऽतिरिक्तम् अधिकम् अन्यत् पृथक् यत् पुंस्त्रीनपुंसकलिंगभेदज्ञापकं तल्लिंगम् । "नामैव लिंगम्" इति कौमाराः "संस्त्यानप्रसवौ लिंगम्" इति महाभाष्यकारः । संस्त्यानं स्त्रीत्वम् । प्रसवः उपचयः । क्रमादुपचयापचयस्थितिरूपो वस्तुधर्मः । उपचये यथा । हरिः रविः । अपचये यथा । गंगा शाला । क्वचिदुपचयाभावः । यथा–कुलम् । ज्ञानम् । तस्य लिंगस्य एवार्थे अभिधेये सन्मात्रे सत्तामात्रे विद्यमानमात्रे वाच्यमाने प्रथमा–सि औ जस्-रूपा विभक्तिर्भवति । लिंगादयोऽपि प्रथमार्था इति मतांतरवाचकं पद्यं लिंगम् । पुँल्लिंगस्त्रीलिंगनपुंसकलिंगम् । आदिशब्दात्परिमाणवचनप्रभृतयः । प्रथमैव अर्थो येषां ते प्रथमार्थाः । लिंगवचनपरिमाणानां त्रयाणामप्यर्थे प्रथमा विभक्तिर्भवतीत्यर्थः । यथा–देवः श्रीः ज्ञानम् । खारी द्रोणः आढकम् । एकः द्वौ बहवः इति । उदा० । तत्तद्ब्रह्म । तदिति ज्ञानदृष्टिगोचरम् । सदिति वर्तमानं अविनाशि प्रधानं वा । एवंविधं ब्रह्म ज्ञानस्वरूपं परब्रह्म वर्त्तते । तत्तद्ब्रह्म इति त्रिष्वपि स्थानेषु नपुंसकलिंगस्य प्रथमाया उदाहरणम् । रविरिव० । राजा राजते क इव रविः इव सूर्य इव । राजा अत्र पुँल्लिंगे प्रथमैकवचने उदाहरणम् । पुनः कुमारी रोरूयते । अतिशयेन रोदिति कस्मात्क्रोधात् । कुमारी अत्र स्त्रीलिंगे प्रथमैकवचनोदाहरणम् । भूपालो राजा सुखं पृथ्वीं बोभुज्यते अतिशयेन पालयतीत्यर्थः । भूपालः अत्रापि पुँल्लिंगे प्रथमैकवचनोदाहरणम् । रामलक्ष्मणौ प्राक्पूर्वम् आस्ताम् अभूताम् । रामलक्ष्मणौ इति पुँल्लिंगे प्रथमाद्विवचनस्योदाहरणम् । १ । संतः सज्जनाः कियंतः संति पुनः श्लोकेन उदाहरति । कुमाराः० । कुमाराः बालकाः स्वैरं स्वेच्छया शेरते । तु पुनः नारकाः नरकस्था जना रोरूयंते अतिशयेन फूत्कुर्वंति । पाठांतरे तु रोरूयंते कुमारिकाः इति । गीतज्ञा जेगीयंते अत्यर्थं गायंति । रुजा रोगेण जिता ग्रस्ताः पुरुषा मेम्रियंते अतिशयेन म्रियंते । संतः कुमाराः नारकाः गीतज्ञाः रुजा जिताः । अत्र सर्वत्रापि पुँल्लिंगे प्रथमाबहुवचनस्योदाहरणानि ॥

आमंत्रणे च ॥ अभिमुखीकरणेऽपि प्रथमा विभक्तिर्भवति ॥

१ सन्नर्दिताः–इति पाठः । २ च-इति पाठः ।

मां समुद्धर गोविंद प्रसीद परमेश्वर ॥
कुमारौ स्वैरमासाथां क्षमध्वं भोस्तपस्विनः॥ १ ॥

सूत्रम् । ( आमंत्रणे च ) आमंत्र्यते आहूयते पुरुषोऽनेनेति आमंत्रणं संबोधनं तस्मिन् ७-१ ( अ इ ए ) च १-१ ( अव्य० ) आमंत्रणम् अभिमुखीकरणमित्यादि सुगमम् । उदा० श्लोकेन । मां समुद्धर० । व्याख्या । हे गोविंद त्वं मां समुद्धर । भवसमुद्रादिति गम्यम् । हे परमेश्वर त्वं प्रसीद प्रसन्नो भव । हे कुमारौ युवां स्वैरं स्वेच्छया सुखेन आसाथाम् उपविशतम् । भोस्तपस्विनो यूयं क्षमध्वं क्षमां कुरुध्वम् । अत्र गोविंद १-१ परमेश्वर १-१ कुमारौ १-२ तपस्विनः १-३ इत्यत्र यथाक्रमं प्रथमाया एकद्विबहुवचनानि ॥

भोस् भगोस् अघोस् ॥ एते शब्दा भवद्भगवदघवतां स्थाने निपात्यंते धिविषये ।

क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोऽस्तु ते ॥
अधीष्व भो महाप्राज्ञ घातयाघोः स्वघस्मरम् ॥ १ ॥

भोस् १-३ । स्त्र० ( श्लो० ) एकस्य ग्रहणे तज्जातीयान्यशब्दस्य ग्रहणमिति न्यायाद्भोस इत्यनेन भोः भगोः अघोः इति त्रयाणामपि ग्रहणम् । सूत्रपाठे तु भोस् भगोस् अघोस् इत्येवंरूपं सूत्रं दृश्यते । तेन भवन्नित्यस्य भोस् इति निपातः । भगवन्नित्यस्य भगोस् इति निपातः । अघवन्नित्यस्य अघोस् इति निपातः । यतः भवद्भगवदघवतां भोस् भगोस् अघोस् एते शब्दा वा निपात्यंते धौ विषये । संबोधने इत्यर्थः । भोः इत्यामन्त्रणे । भगोः इति पूज्यामंत्रणे । अघोः इति पापजनवाचि संबोधनविषये । एते शब्दा निपात्यंते । उदा० । भो दुराराध्य दुःखेन आराध्यते सेव्यते इति दुराराध्यस्तस्यामंत्रणे भो दुराराध्य त्वं क्षमस्व क्षमां कुरु । न विद्यते स्तुतिर्वचनगोचरा यस्य सः अस्तुतिस्तस्यामंत्रणे हे अस्तुते वचनागोचर स्तवनातीत इति संबोधनपदम् । यद्वा न स्तौति अन्यं कंचन इति अस्तुत् तस्मै अस्तुते तुभ्यम् इति चतुर्थ्यंतम् । एवंविध हे भगोः हे भगवन् तुभ्यं नमः । अथवा "भगोस्तुभ्यं नमोनमः" इति पाठे सुगमम् । भो महाप्राज्ञ महांश्चासौ प्राज्ञश्च महाप्राज्ञस्तस्यामंत्रणे भो महाप्राज्ञ त्वम् अधीष्व । हे अघोः पापिष्ठ स्वघस्मरं स्वभक्षकम् अथवा स्वपापं कालं वा घातय विनाशयेति श्लोकार्थः ॥

शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबंध आधारभावयोः ॥ शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवंति। "कर्त्ता कर्म्म च करणं संप्रदानं तथैव च । अपादानाऽधिकरणमित्याहुः कारकाणि षट्" ॥ कार्ये कर्मकारके वत्याये आप्ये संस्कार्ये विकार्ये

च द्वितीया विभक्तिर्भवति ।

कटं करोति कारूको रूपं पश्यति चाक्षुपः ॥
राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ १ ॥

इत्थं प्रथमार्थमुक्त्वा इदानीं द्वितीयादिशेषविभक्त्यर्थसूचकं सूत्रमाह ( शेषाः० ) इति । शेषाः १-३ ( सवर्णे० । स्रो० ) कार्यं क्रियते यत्तत्कार्यं तस्मिन् ७-१ ( अ इ ए ) कर्तृसाधनयोः । करोतीति कर्त्ता । साध्यते छिदादिक्रिया अनेनेति साधनम् । कर्त्ता च साधनं च कर्तृसाधने तयोः ७-२ ( ओसि । ए अय् ) स्व० । दानार्थं पात्रं दानपात्रं तस्मिन् ७-१ ( अ इ ए ) पश्चात् ( नामि० ) जल० । अग्रे विश्लेषावधौ विश्लेषे विश्लेषं प्रति वा अवधिराश्रयः विश्लेषावधिः तस्मिन् ७-१ ( ङेरौ० ) टिलोपः । स्व० । अग्रे संबध्यते भृत्यस्वाम्यादिरनेनेति संबंधस्तस्मिन् ७-१ ( अ इ ए ) आधारभावयोः आध्रियते स्थाप्यते वस्तु यत्र स आधारः। भूयते क्रियालक्षणतया अनेनेति भावः । ततः आधारश्च भावश्च आधारभावौ तयोः ७-२ ( ओसि । ए अय् ) स्व० । ( स्रो० ) पश्चात् ( ए अय् । य्वोर्लोपश्च् ) सिद्धं सूत्रं सप्तपदम् । शेषाः प्रथमा उक्ता अतः शेषा द्वितीयाद्याः षट् विभक्तय इत्यादिवृत्तिः । तत्र कार्ये द्वितीया । कर्तृसाधनयोस्तृतीया । दानपात्रे चतुर्थी । विश्लेषावधौ पंचमी । संबंधे षष्ठी । आधारभावयोः सप्तमी । इति संक्षेपार्थः । अथ विस्तरार्थः । कार्ये इत्यादि । कार्ये द्वितीया विभक्तिर्भवतीति योगः । कार्ये इति कोऽर्थः कर्मकारके क्रियते यत्तत् कर्म नाम यत्कारकं कर्म तस्मिन्कर्तुः कर्मतापन्ने वस्तुनीत्यर्थः । यद्वा कार्यं कर्म तत्कारकसंज्ञत्वात्कारकं कर्म कारकं षष्ठीं विना अन्या विभक्तयः कारकसंज्ञकाः । क्रियाहेतुः कारकम् । षष्ठ्यास्तु क्रियाहेतुत्वाभावेन कारकसंज्ञा न । यतः "कर्त्ता १ कर्म २ च करणं ३ संप्रदानं ४ तथैव च । अपादाना ५ धिकरणे ६ इत्याहुः कारकाणि षट्" ॥ १ ॥ इति तस्मिन्कर्मकारके कथंभूते इत्याह । उत्पाद्ये १ आप्ये २ संस्कार्ये ३ विकार्ये च ४ एवं चतुर्विधे । तत्र उत्पाद्यते यन्नवीनं क्रियते तदुत्पाद्यम् । यदाप्यते सिद्धमेव प्राप्यते तदाप्यम् । संस्क्रियते इति संस्कार्यम् । संस्कारो नाम कश्चिदतिशयस्तदर्हं संस्कार्यम् । संस्कारो द्विधा । गुणाधानं मलापकर्षो वा । पूर्वजन्मकृतः शुभाशुभो वा संस्कारः तस्माद्भवं संस्कार्यम् । सिद्धमेव रूपं पश्यतीति गुणाधानम् । यद्वा रूपमिति चक्षुर्ग्राह्यत्वादाप्यमिति केचित् । राज्यमिति राज्ञः संस्काराद् संस्कार्यम् । विकार्ये इति विक्रियते अवस्थांतरं भजते इति विकार्यं तस्मिन् विकार्ये ततः एवं चतुर्विधेऽपि कर्मकारके द्वितीया विभक्तिर्भवति । उदा० । कटमित्यादिश्लोकः । कारूकः पुमान् कटं करोतीत्यत्र कटस्य उत्पाद्यकार्यत्वात् द्वितीयांतत्वम् । एवं चाक्षुषो नेत्रवान् जनो रूपं पश्यतीति रूपम् आप्यं कर्म तत्र द्वितीया । केचित्

रूपस्य नेत्रेंद्रियेण स्थापने संस्कार्ये द्वितीया । अतिधार्मिष्ठः पुमान् राज्यं प्राप्नोति । अत्र राज्य संस्कार्यं तत्र द्वितीया केचित्तु राज्यम् आप्यमिति । सोमम् अमृतवल्लीरसं पिबतीति सोमपाः ब्राह्मणः सोमम् अमृतवल्लीं सुनोति खंडयति इत्यर्थः । अत्र सोमस्यामृतवल्ल्याः खंडनरूपो विकारस्तत्र द्वितीया । अवस्थान्तरापादनं विकार इति ॥

अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ॥
द्वितीयाम्रेडितांतेषु ततोऽन्यत्रापि दृश्यते ॥ १ ॥

अभितो ग्रामं नदी वहति । सर्वतो ग्रामं वनानि संति । धिग्देवदत्तम् । उपर्युपरि ग्रामं मेघाः पतन्ति ।अधोधो वृक्षं याति।अध्यधि व्याधं मृगाः पतन्ति । समया ग्रामम् । निकषा ग्रामम् । प्रति ग्रामम्।अनुग्रामम्।[कालाध्वनोर्नैरंतर्येऽपि]मासमधीते। क्रोशं पर्वतः॥

एवं द्वितीयार्थमाख्यायाधुना तदधिकारात्पुनर्वृत्तिकारः उपपदद्वितीयार्थमाह । अभिसर्वतसोरित्यादिः श्लोकः । तस् च तस् च तसौ अभिश्च सर्वश्च अभिसर्वौ ताभ्यां सहितौ तसौ अभिसर्वतसौ अभितस्सर्वतसावित्यर्थः । अथवा द्वंद्वांते श्रूयमाणः शब्दः प्रत्येकं संबध्यते इति तयोरर्थयोगे षष्ठ्यर्थे द्वितीया विभक्तिः कार्या प्रयोक्तव्या । पुनर्धिगिति धिगर्थेपि धिकछब्दयोगेऽपि द्वितीया कार्या प्रयोक्तव्या ॥ धिङ्निर्भत्सननिंदयोः । पुनस्त्रिषु उपर्यादिषु इति उपरि अधः अधि इत्येवं त्रिष्वव्ययेषु प्रयुज्यमानेषु द्वितीया विधेया । कथंभूतेषु उपर्यादिषु आम्रेडितांतेषु । आम्रेडितमिति द्विस्त्रिर्भाषणं तदंते येषां ते आम्रेडितांताः । द्विवारमुच्चरिता इत्यर्थः । यथा उपर्युपरि-अधोधः-अध्यधिरूपास्तेषु । तत इति अभितस्सर्वतसादिव्यतिरिक्ते अन्यत्र उपपदयोगेपि शब्दार्थे द्वितीया दृश्यते रूढिवशादिति तत्रोदाहरणमाह । अभितो ग्रामम् ग्रामंग्रामम् अभितः अभितोग्रामम् अनेन द्वितीया । अभितो ग्राममिति ग्रामस्य समीपे चतुर्दिक्षु वा नदी वहति । एवं सर्वतो ग्राम वनानि दृश्यंते । ग्रामस्य सर्वतः चतुर्दिक्षु वनानीत्यर्थः । एवं समया ग्रामं तीर्थं वर्तते । ग्रामस्य समीपे इत्यर्थः । निकषा ग्रामं निहतः शत्रुः । ग्रामस्य समीपे इत्यर्थः । धिग्देवदत्तमित्यत्र धिग्योगे द्वितीया । "धिक् तां च तं च मदनं च इमां च मां च" उपर्युपरि ग्रामं पक्षिणो गच्छंति । उपर्युपरि ग्रामं मेघो वर्षति । ग्रामस्य उपरि इत्यर्थः । अधोऽधो ग्राम निधानं दृश्यते । ग्रामस्य अध इत्यर्थः । अध्यधि ग्राम तापसास्तिष्ठंति । ग्रामेग्रामे इत्यर्थः । एवमत्र त्रिष्वाम्रेडितांतेषु द्वितीया । 'ततोऽन्यत्रापि दृश्यते' इति वचनात् उभयतः परितः समया निकषा हा प्रति

अनु एषां योगेऽपि द्वितीया । समया ग्रामं तीर्थं वर्तते । ग्रामस्य समीपे तीर्थम् । निकषा ग्रामं शत्रुर्निहतः । ग्रामस्य निकषा समीप इत्यर्थः । अनुग्रामं ग्रामस्य अनु पश्चात्सीमा वर्त्तते । एवं ग्रामंग्रामं प्रति प्रतिग्रामं जिनालयाः संति । हा स्वामिनम् । इत्यादि । कालाध्वनोरितीयं फक्किका । अंतरेण रहितत्वं नैरंतर्यं तस्मिन् नैरंतर्ये वाच्यमाने । तथा कालो दिवसमासादिः । अध्वा मार्गः क्रोशयोजनादिस्तत एतयोर्विषये द्वितीया कार्या नैरंतर्ये कालवाचकशब्दात् । अध्ववाचकशब्दाच्च नैरंतर्ये निरंतरार्थे द्वितीया भवतीत्यर्थः । तत्रोदाहरणम् । काले । मासं यावत् निरंतरम् अधीते पठति । अत्र नैरंतर्ये द्वितीया । अन्यथा मासस्य द्विरधीते मासे वा दशदिवसानधीते इति भवति । एवं मार्गे क्रोशं पर्वतः । क्रोशं यावन्निरंतरं पर्वत इत्यर्थः । क्रोशप्रमाणत्वं इत्यर्थः । अन्यथा क्रोशस्यैकभागे पर्वत इति द्वितीयार्थः । अन्यत्रापीति ग्रहणात् अंतर्ग्राममुपग्राममित्यादयः शब्दा ज्ञेयाः । इति द्वितीयार्थः ॥ २ ॥

[ कर्त्तरि प्रधाने क्रियाश्रये साधने च ] प्रधाने कर्त्तरि क्रियासिद्ध्युपकारके करणेर्थे तृतीयाविभक्तिर्भवति ।
भिन्नः शरेण रामेण रावणो लोकरावणः ॥
कराग्रेण विदीर्णोपि वानरैर्युद्ध्यते पुनः ॥ १ ॥

अथ तृतीयार्थसूचकं कर्तृसाधनयोरिति पदं व्याचिख्यासुराह । ( कर्तरि० )इति। कर्तरि कर्तृविषये तृतीयाविभक्तिर्भवति । कर्त्रुक्तौ इति शेषः । कथंभूते कर्तरि । प्रधाने मुख्यक्रियायाः आश्रये मुख्यवृत्त्या कार्यस्य कारके च उत्पादके ईदृशे कर्तरि तृतीया वा च पुनः साधनेपि तृतीया । कथंभूते साधने । क्रियासिद्ध्युपकारके कार्यस्य साहाय्यकारके पुनः करणनामकारके साधनेऽपि तृतीया । यः प्रधानभूतः सन् क्रियायाः आश्रयभूतः स्वातंत्र्येण क्रियां कार्यं कर्तुं प्रवृत्तः स कर्ता तस्यार्थे तृतीया भवति । च पुनः क्रियासिद्धेरुपकारके करणे प्रकृष्टकारणभूते साधनेपि तृतीया भवति ।करोतीति कर्ता । स कर्ता उच्यते इत्याह । क्रियाश्रयः क्रियायाः कार्यस्य आश्रयः क्रियाश्रयः क्रियाया आश्रयोऽप्रधानोपि भवति पटोऽपर्तो तुरीवेमादिवचनाह । प्रधान इति । सकलकारकप्रयोक्तृत्वे सति इतरकारकाप्रयोज्यत्वमत्र प्रधानत्वं तस्मिन् । किंविशिष्टे साधने । क्रियासिद्ध्युपकारके क्रियायाः सिद्धम् उपकरोतीति क्रियासिद्ध्युपकारकम्। क्रियासिद्धेः साहाय्यदायकभेदनादेक्रियासिद्धौ उपसंनिहितत्वेन कारकं तस्मिन् । पुनः कीदृशे साधने । करणे । साधकतमं करणं क्रियासिद्धे । प्रकृष्टं कारणम् । यद्वा करणं नाम कारकं तस्मिन्। एवं कर्तृसाधनयोर्द्वयोरर्थे तृतीया भवति । उदाहरणम् । भिन्नः शरेण० इत्यादिः श्लोकः । रामेण रावणो

१ 'क्रियां करोतीति कर्ता स स्वतंत्रः प्रयोजकः कर्मकर्त्ता चेति भेदात्त्रिविधः.' इति *लघुटीकायाम् ।

भिन्नः । केन कृत्वा शरेण । रामेण इति कर्त्तरि तृतीया । शरेणेति साधने तृतीया । कथंभूतो रावणः लोकरावणः लोकान् रावयति क्रंदयति इति लोकरावणः । उदाहरणांतरमाह । तथा रावणो वानरैः कराग्रेण नखेन विदीर्णोऽपि विदारितोपि पुनः पुनरपि युध्यते । अत्र वानरैरिति कर्तृपदम् । कराग्रेणेति साधनपदम् । उभयत्रापि तृतीया । कराग्रेणेत्यत्र जातावेकवचनम् । पुनस्तृतीयार्थं विनासहेत्यादिना अग्रे वक्ष्यति । इति तृतीयार्थः ॥ ३ ॥

दानपात्रे संप्रदानकारके चतुर्थी ] दानपात्रे संप्रदानकारके चतुर्थी विभक्तिर्भवति । सम्यक् श्रेयोबुद्ध्या प्रदीयते यस्मै तत्संप्रदानम् । ददाति दण्डं पुरुषो महीपतेर्न चातिभक्तिर्न च दानकामना । यद्दीयते वासनया सुपात्रे तत्सम्प्रदानं कथितं मुनीन्द्रैः ॥ वेदविदे गां ददाति । अन्यत्र राज्ञो दण्डं ददाति । रजकस्य वस्त्रं ददाति । इति चतुर्थी ॥

अथ चतुर्थ्यर्थमाह ( दानपात्रे० ) । इति । दीयते इति दानं दानाय पात्रं दानपात्रम् । दत्तवस्तुनः स्वामी भवतीति यावत् । तस्मिन् दानपात्रे । कीदृशे । संप्रदाननामकारके । सम्यक् श्रेयोबुद्ध्या यस्मै प्रदीयते तत् संप्रदानम् । यस्मै दत्ते सति आमुष्मिकफलप्राप्तिर्भवति तत्संप्रदानमुच्यते । संप्रदानं च तत्कारकं च संप्रदानकारकम् । तस्मिन् । यदुक्तम् "ददाति दंडं पुरुषो महीपतेर्न चात्र भक्तिर्न च दानकामना ॥ यद्दीयते वासनया सुपात्रे तत्संप्रदानं कथितं मुनीन्द्रैः" ॥ १ ॥ तत्रोदाहरणम् । वेदं वेत्तीति वेदवित् तस्मै वेदविदे वेदज्ञाय ब्राह्मणाय कश्चित्पुरुषो गां ददाति इत्यत्र वेदवित्त्वे सति दानपात्रत्वं संगतमेव । एवं साधवे अन्नं प्रतिलाभयति । अन्यथा दानपात्राभावे राज्ञो दंडं ददाति इत्यत्र चतुर्थ्यभावः ॥ इति चतुर्थ्यर्थः ॥ ४ ॥

[ विश्लेषावधावपादानकारके पंचमी ] विश्लेषो विभागस्तत्र योऽवधिश्चलतया अचलतया वा विवक्षितस्तत्रापादाने पंचमी ॥ धावतोऽश्वादपतत् । भूभृतोऽवतरति गंगा । इति पञ्चमी ॥

अथ पंचम्यर्थं व्याचिख्यासुः ( विश्लेषावधौ० ) इति पदं व्याकरोति । अश्वादपतत् इत्यत्र । विश्लेष इति कोर्थः । विभागो विरहः पृथग्भावः । बुद्ध्या संश्लेषेण वा एकाश्रयात् पृथग्भवनमित्यर्थः । तत्र विश्लेषे योऽवधिराश्रयो यस्मात्

१ दानं त्रिविधम्–अनिराकर्तृ–प्रेरकम्–अनुमन्तृ चेति । सत्त्वगुणानि च प्रकारे गीतासु च "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥ देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्" इत्यादि- [illegible]

विभागो जायते स चलतया अश्वकरभादिभावेन अचलतया वा पर्वतशिखरादि-भावेन विवक्षितो वक्तुमिष्टः वाञ्छितः तत्र विश्लेषावधावपादाननामकारके अपादीयते पृथक्क्रियते यस्मात्तदपादानम् अपादानं च तत्कारकं च अपादानकारकं तस्मिन् पंचमीविभक्तिर्भवति । तत्रोदाहरणम् । कश्चित्पुरुषो धावतोऽश्वात्पतदित्यत्र अपतदिति विश्लेषः । अश्वादिति तस्य अवधिः आश्रयः । धावत इत्यश्वस्य चलन-क्रियाकारित्वाच्चलतया विवक्षितावधित्वम् । एवं भूभृतः पर्वताद्गंगा पुरुषो वा अव-तरतीत्यत्र अवतरणात्मको विश्लेषः भूभृत इति स्थिरावधिः एवमन्येऽप्यवसेयाः ॥ इति पञ्चम्यर्थः ॥ ५ ॥

संबंधे षष्ठी । संबंधिनोर्मध्ये योऽप्रधानस्तत्र षष्ठी ।
भेद्यभेदकयोः श्लिष्टः संबंधोऽन्योन्यमुच्यते ॥
द्विष्ठो यद्यपि संबंधः षष्ठ्युत्पत्तिस्तु भेदकात् ॥
एकक्रियातः परस्पराऽपेक्षारूपः संबंधः ।
राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत्प्रपूजनम् ॥
गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥ १ ॥

अथ षष्ठ्यर्थमाह । संबंधे इति । संबध्यते स्वजनादिरनेनेति संबंधो जन्यजन-कादिः । स्वस्वामित्वादिः । पदार्थलिंगार्थकारकव्यतिरिक्तः स्वस्वामित्वादिलक्षणः संबंधः । स चोभयनिष्ठश्च भवति तस्मिन्नर्थे षष्ठीविभक्तिर्भवति । यतः । "भेद्यभेद-कयोः श्लिष्टः संबंधोऽन्योन्यमिष्यते ॥ द्विष्ठो यद्यपि संबंधः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ २ ॥ भेद्यं विशेष्यमित्याहुर्भेदकं च विशेषणम् ॥ प्रधानं च विशेष्यं स्यादप्रधानं विशेषणम्" ॥ १ ॥ उदाहरणं श्लोकेनाह । राज्ञः० । इति । स पुमान् राज्ञो राज-संबंधी ज्ञेय इत्येवं स्वामिसेवकसंबंधः । एतत्समीपतरवर्ति प्रपूजनं पूजनोपकरणं पूजासामग्री पित्रोरिति । माता च पिता च पितरौ तयोः पितृमातृसंबंधि । गुरूणां गुरुसंबंधि वचनं जाड्यज्वरविमुक्तानां पथ्यवत् पथ्यतुल्यं हितकारकम् । तथ्यमिति वा पाठः । कवीनां वचो वचनं रससंयुक्तं मिष्टम् । एवमन्येऽप्यूह्याः । इति षष्ठ्यर्थः ६

[ आधारे सप्तमी ] आधारोऽधिकरणम् । तत् षड्विधम् । औप-श्लेषिकम् १ सामीपिकम् २ अभिव्यापकम् ३ वैषयिकम् ४ नैमि-त्तिकम् ५ औपचारिकम् ६ चेति ।

कटे शेते कुमारोऽसौ वटे गावः सुशेरते ।
तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ॥ १ ॥
युद्धे संनह्यते धीरोंगुल्यग्रे करिणां शतम् ।

---

१ संबंधः । सामान्यादिकेशगात् द्विविधः । रविततदीतिकामन् ।

[ भावः क्रियालक्षणं तत्रापि सप्तमी ] प्रसिद्धक्रिययाऽप्रसिद्ध क्रियाबोधनं भावः । वर्षति देवे चौर आयातः । पतत्यंशुमालिनि पतितोऽरातिः । काले शरदि पुष्यन्ति सप्तच्छदाः ॥

आधारभावयोरिति पदं व्याचिख्यासुः प्रथमम् आधारं प्रकटयन्नाह ( आधारे सप्तमी ) इति सुगमार्थः । आध्रियते स्थाप्यते षट्प्रकारा क्रिया अस्मिन्नित्याधारः क्रियाश्रयस्य कर्तुः क्रियाया आश्रयस्तत्र सप्तमी विभक्तिर्भवति । आधाराधिकरणे एकपर्याये । आधारशब्देन अधिकरणमेवोच्यते । अतः अधिकरणस्याधारस्य भेदानाह । षड्विधमिति । अधिक्रियते आधारतया तदधिकरणम् । गुणानां गुणिवत् तत् षड्विधमिति पठिति । षट्संख्याका विधाः प्रकारा यस्य तत् षड्विधं बोद्धव्यमित्यर्थः । तानेव षड्भेदानाह । औपश्लेषिकमित्यादि । उप सामीप्येन श्लेषणं संघट्टनम् उपश्लेषः । एकदेशमात्रसंयोगो वा उपश्लेषः । यथा—कटे शेते । कटस्यैकदेशे इत्यर्थस्तेन निर्वृत्तमौपश्लेषिकम् ॥ १ ॥ सामीपिकमिति । समीपेन निर्वृत्तं सामीपिकं यदाधेयसमीपमात्रेण क्रियाहेतुः । यथा वटे वटसमीपे गावः सुशेरते । गंगायां घोषः । गंगासमीपे घोषो व्रजं गोकुलं वर्त्तते इति ॥ २ ॥ अभि समंताद्व्याप्नोतीत्यभिव्यापकम् । आधेयेन समस्तावयवसंयोगोऽभिव्यापकः । अपृथग्भूतयोराधाराधेययोर्यः सकलावयवसंबंधः सोऽभिव्यापकः यथा तैलं तिलेषु ॥ ३ ॥ विषये भवं वैषयिकम् अन्यत्र संभवो वा विषयः । स यथा । नभसि तारकाः । आकाशे वायुः । हृदि ब्रह्मेत्यादि हृदि विषये ब्रह्म एवं परं प्रकृष्टं अमृतम् अस्ति । नहि सर्वाधारस्य परब्रह्मणो हृदयमाधारो भवितुमर्हति । विषयमात्रम् ॥ ४ ॥ निमित्तेन भवं नैमित्तिकम् । यथा युद्धे युद्धनिमित्तमित्यादि ॥ ५ ॥ अविद्यमानस्यारोपणमुपचारः । उपचारे भवम् औपचारिकम् ॥ ६ ॥ एवं षड्विधेष्वधिकरणे सप्तमीविभक्तिर्भवतीति शेषः । अथ सार्धश्लोकेन षडप्याधारभेदोदाहरणान्याह । कटे शेते इत्यादि । असौ कुमारः कटे शेते इति कटमुपश्लिष्य शेते इत्यत्र औपश्लेषिकमधिकरणम् । अत्र शयनक्रियाश्रयः कर्ता कुमारस्तदाधारः कटस्तत्रोपश्लेषः । गावो धेनवः वटे इति वटसमीपे शेरते शयनं कुर्वंते इति । सामीपिकाधिकरणम् । नहि वटस्योपरि गावः शेरते किंतु समीपे । एवं गंगायां घोषः । गंगासमीपे घोषः । गोकुलम् ॥ तिलेषु तैलं विद्यते । तिलेष्वभिव्याप्य सर्वत्र स्थितमित्यर्थः । अभिव्यापकमेतदिति ॥ हृदीति । हृदिविषये ब्रह्म परममृतमित्येतत् वैषयिकाधिकरणम् । युद्धे युद्धनिमित्तं धीरः संनह्यते संनाहं परिदधाति इति नैमित्तिकमधिकरणम् । अंगुल्यग्रेण प्रदर्श्यमानम् इत्यर्थः । करिणां हस्तिनां शतमित्युपचारमात्रत्वादौपचारिकं ननु साक्षाद्वर्तमानमिति ॥ इत्थमाधारमाख्यायेदानीं भावपदस्यार्थमाह ( भावः क्रियालक्षणम् ) इति । क्रिया गमनस्थानोत्थानादिका तस्या यल्लक्षणं चिह्नं ॥ भाव इति कथ्यते । प्रसिद्धक्रियया इतरा अप्रसिद्धक्रियाया लक्षणं बोधनं भावः इति तत्रापीति तस्मिन्नर्थेपि सप्तमीविभ-

क्तिर्भवति॥ उदा० । देवे मेघे वर्षति चौरस्तस्करः आयातः आगतः । अत्र मेघवर्षणरूपा प्रसिद्धा क्रिया तया चौरागमनरूपा अप्रसिद्धक्रिया लक्षिता । देवे मेघे वर्षतीति प्रसिद्धेन मेघवर्षणेन अप्रसिद्धं चौरागमनं लक्ष्यते इति तत्र सप्तमी॥ "राज्ञि मेघे सुरे देवः" इति कोशः । एवम् अंशुमालिनि सूर्ये पतति अस्तं गच्छति सति अरातिः शत्रुः पतित इति । युद्धार्थमागत्य पतित इत्यर्थः । यद्वा पतितो मृत इत्यर्थः । अत्र प्रसिद्धेन सूर्यस्यास्तमनेन अप्रसिद्धं शत्रोः पतनं लक्ष्यते । एवं गुरौ धर्ममुपदिशति सति शिष्यः आगत इत्येवमाद्योऽवसेयाः । एवं द्वितीयादिविभक्तीनामर्थाः ॥

अथोपपदविभक्त्यर्थो निरूप्यते। विनासहनमऋतेनिर्धारणस्वाम्यादिभिश्च॥ एतैरपि योगे द्वितीयाद्या विभक्तयो भवंति । विनादियोगे द्वितीया। विनापापं सर्वं फलति। "विना वातं विना वर्षं विद्युतः पतनं विना ॥ विना हस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ" ॥ १ ॥ अंतरेणाक्षिणी किं जीवितेन। अंतरा त्वां मां हरि रित्यादिपदाद्ग्राह्यम्। [ सहादियोगे तृतीया । ] सह सदृश साकं समं सार्धमित्यादियोगे तृतीयाविभक्तिर्भवति। सह शिष्येणागतो गुरुः । सदृशश्चैत्रो मैत्रेण । साकं नयनाभ्यां श्लक्ष्णा दंताः । समं चन्द्रेणोदितो गुरुः । सार्धं धनिभिर्धूतः साधुः । [ नम आदियोगे चतुर्थी ] नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगे चतुर्थी । नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । वषडिंद्राय । [ ऋत आदियोगे पञ्चमी ] ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । ऋतेयोगे द्वितीयापि । ज्ञानमृते । विनायोगेपि तृतीया । ज्ञानेन विना । दिग्योगे पञ्चमी । पूर्वो ग्रीष्माद्वसंतः । [ निर्द्धारणे षष्ठीसप्तम्यौ । ] निर्धारणं क्रियागुणजातिभिः समुदायात् पृथक्करणं तत्र षष्ठी सप्तमी च । क्रियापराणां भगवदाराधकः श्रेष्ठः । क्रियापरेषु वा । गवां कृष्णा गौः संपन्नक्षीरा गोषु वा । एतेषां क्षत्रियः शूरतमः एतेषु वा ॥

अथ पुनस्तासामुपपदविभक्तीनामर्थान् प्रकारांतरेणाह[1] । सूत्रम् ( विना २ सह ३ नम ४ ऋते ५ निर्धारण ६ स्वाम्यादि ७ भिश्च ) ततो विना सहेत्यादिपदस्य

१ 'मनुष्येषु' इत्यपि पाठः ।

द्वंद्वः । ते आदौ येषां ते तथा तैः ३-३ ( स्रो० ) च १-१ ( अव्य० ) सिद्धं सूत्रम् । एतैर्विनादिभिरपि शब्दैर्योगे सति द्वितीयाद्या षट् विभक्तयः षट्स्वप्यर्थेषु यथाक्रमं भवंति । द्वंद्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इति आदिशब्दो विनादिषु प्रत्येकं योज्यः । विनादिवाचके शब्दे प्रयुज्यमाने द्वितीयाविभक्तिर्भवतीति विनादियोगे द्वितीया । सहादियोगे तृतीया । नम आदियोगे चतुर्थी । ऋत आदियोगे पंचमी । निर्द्धारणाद्यर्थे षष्ठी । स्वाम्याद्यर्थे सप्तमी । तत्रोदाहरणेन द्वितीयां व्यंजयति । विना पापमिति । पापं विना । पापाभावेन सर्वमपि धर्मकृत्यादिफलमावहति सफलं भवति । एवमत्र विनार्थे वाच्यमाने विनाशब्दयोगे पापमिति द्वितीया । चकारात्पापेन विना पापाद्विना इति तृतीयापंचम्यावपि । यथा वृद्धत्वं जरसा विना । अक्षिणी इति । नेत्रे अंतरेण विना जीवितेन जीवनेन किम् । न किमपीति भावः । अक्षिणी इदमत्र द्वितीयाद्विवचनं नपुंसकांतम् । अंतरेत्यादि । त्वां माम् अंतरा मध्ये विचाले मधु क्षौद्रं मद्यं वा वर्त्तते । अथवा यथा भीम इत्युक्ते भीमसेनः । भामा इत्युक्ते सत्यभामा । यथा मधुः इत्युक्ते मधुसूदनः । कृष्णः त्वां माम् अंतरा मध्ये विचाले वर्त्तते । त्वामिति युष्मदस्मदोर्द्वितीयैकवचनांतत्वम् । आदिशब्दादंतरेण अंतरा इत्यर्थद्वयेऽपि द्वितीयाविभक्तिर्भवति । एतदेवाह । इत्यादिपदाद्ग्राह्यमिति इत्युदाहरणद्वयम् । आदिपदाद्विनादियोगे द्वितीयेत्यादिशब्दाद्ग्राह्यमेवेयमिति भावः । इति द्वितीयार्थः ॥ २ ॥ अथ तृतीया । तत्र द्रव्यगुणक्रियाभिस्तुल्ययोग्यतायां विद्यमानायां सहार्थे तृतीयाविभक्तिर्भवति इति वृद्धाम्नायः । सह शिष्येणेति । गुरुः शिष्येण सह आगतः । अत्र आगमनक्रियया शिष्यशब्दस्य गुरुणा तुल्ययोग्यतायां सत्यां तृतीयांतत्वम् । सह पुत्रेण पिता धनी । इत्यत्र धनद्रव्येण तुल्ययोग्यत्वे पुत्रस्य तृतीयांतत्वम् । सदृशश्चैत्रो मैत्रेण । चैत्रनामा कश्चित्पुरुषः मैत्रेण मैत्रनाम्ना पुरुषेण सदृशः तुल्यः । साकं नयनाभ्यामिति । नयनाभ्यां साकं सहिता दंता श्लक्ष्णा मनोज्ञाः । अत्र गुणेन तुल्यत्वे तृतीया । एवम् आदिशब्दात्साधुः पुरुषः धनिभिः धनवद्भिः पुरुषैः सार्द्धं धृतो गृहीतः । बद्ध इत्यर्थः । वारणार्थालंयोगे तृतीया । समर्थार्थालंयोगे चतुर्थी इत्यर्थः । एतावता अलम् । अलं विवादेन । धर्मेण अर्थः । गुडेन मिश्रः । शस्त्रेण कलहः । कर्मणा विना । पुण्येन हीनः इत्यादिशब्दात् अवसेयाः । प्रक्रियामते तु तुल्यार्थे तृतीयाषष्ठ्यौ स्तः । कृष्णेन कृष्णस्य वा तुल्यः । यदुक्तं रघुकाव्ये "धृतेश्च धीरः सदृशीर्व्यधत्त सः" । इति तृतीया ॥ ३ ॥ अथ चतुर्थीं व्याचष्टे । नम आदियोगे चतुर्थी । [ नमः स्वस्ति स्वाहा स्वधा अलम् वषट् एतेषामव्ययानां योगे चतुर्थी वक्तव्या ] इति सुगमम् । तत्र नमः नमस्कारार्थः । स्वस्ति इति कल्याणवाचकमव्ययम् । स्वाहा इति होमावसरे मन्त्रावसाने अशब्दयोच्चारणं हव्यवस्तुवाचकम् । स्वधा इति पितृकल्प्यम् । अलमिति

१ दशरथः भूयमानैरित्यत्र ।

सामर्थ्यार्थे । वषट् होतव्यं वस्तु । नमो नारायणायेति नमः नमस्कारार्थे । स्वस्ति राज्ञे । राज्ञे नृपाय स्वस्ति कल्याणं भवतु अत्र स्वस्त्यर्थे । सोमाय चन्द्राय स्वाहा । पितृभ्यः स्वधा । तत्संतानकल्पितं वस्तु । अलमिति । मल्लो मल्लाय अलम् समर्थः । इन्द्राय वषट् होतव्यं वस्तु । इत्यादिष्वर्थेषु चतुर्थी । वृहट्टीकासु च अन्यान्यप्युदाहरणानि दृश्यन्ते तानि त्वत्र ग्रन्थगौरवभयान्न व्याख्यायन्ते ॥ ४ ॥ अथ पंचमी । ऋते इति । ज्ञानात् ऋते विना मुक्तिर्न भवतीति शेषः । अत्र ऋते-शब्दयोगे पंचमी ज्ञानादत्र । आदिशब्दात् गृहादन्यो विहारः विचरणम् । विना-पृथग्योगेऽपि पंचमी । विना कामात् । पृथक् ग्रामात् । एवं भिन्नो । ग्रामात् इतरो ग्रामात् । प्राक् ग्रामात् । दक्षिणाहि ग्रामात् । गृहाद्बहिः आरात् ग्रामादित्यादि॥५॥ अथ षष्ठ्यर्थसूचकं निर्धारणं व्याचष्टे । निर्धारणमिति । निर्ध्रियते पृथक्क्रियते अनेनेति निर्धारणम् । काभिः क्रिया १ गुण २ जातिभिः ३ । क्रिया करणा-त्मिका गमनस्थानादिका । गुणो रूपादिः । जातिर्ब्राह्मणादिः । ततः क्रिया च गुणश्च जातिश्चेत्यादिना द्वंद्वस्ततस्ताभिः कृत्वा यत्समुदायात् बहूनां समूहात् पृथक्करणम् एकस्य तन्निर्धारणमुच्यते तत्र षष्ठीविभक्तिर्भवति । तत्रोदाहरणम् । क्रियासु पराः क्रियापराः क्रियासु निष्ठाः तत्परा इत्यर्थः । तेषां मध्ये यो भगव-तश्चिदानन्दस्य आराधकः स एव श्रेष्ठः प्रशस्तः । अत्र सामान्यक्रियापरेषु भगव-दाराधकत्वरूपया क्रियया पृथक्करणे परशब्दस्य षष्ठी । गवां धेनूनां मध्ये या कृष्णा गौः सा संपन्नक्षीरा बहुदुग्धा । अत्र गोशब्दस्य कृष्णत्वगुणेन निर्धारणे षष्ठी । एतेषां क्षत्रियः शूरतम इति । एतेषां सर्वजातीयानां पुरुषाणां मध्ये क्षत्रियोः अतिशयेन शूरः शूरतमः । अत्र जात्या निर्द्धारणे षष्ठी । व्याकरणांतरमते तु निर्द्धारणे षष्ठीसप्तम्यौ द्वे अपि भवतः ॥

स्वाम्यादिभिश्च । स्वाम्यादियोगे षष्ठीसप्तम्यौ भवतः । गवां स्वामी गोषु स्वामी । गवामधिपतिः गोष्वधिपतिः । **कर्तृकार्ययोरक्तादौ कृति षष्ठी ॥** कर्त्तरि कार्ये च षष्ठी विभक्तिर्भवति क्तादिवर्जिते कृदंते शब्दे प्रयुज्यमाने । व्यासस्य कृतिः । भारतस्य श्रवणम् ॥

( स्वाम्या० ) स्वाम्यादियोगे षष्ठीसप्तम्यौ भवतः । गवां स्वामी गोषु स्वामी । एवं गवामधिपतिः गोष्वधिपतिरित्येतदपि ज्ञेयम् । स्वामीश्वराधिप तिदायादसाक्षिप्रतिभूप्रसूतआयुक्तकुशलप्रभुशब्दयोगे षष्ठीसप्तम्यौ भवतः । पुनः षष्ठ्यर्थांतरमाह । सूत्रम् ( कर्तृकार्ययोः० ) इति । कर्त्ता च कार्यं च कर्तृकार्ये तयोः ७–२ ( ओसि० । ए अय् ) स्वर० ( स्रो० ) अग्रे अक्तादिः क्तप्रत्ययः आदिर्यस्य सः क्तादिर्न क्तादिरक्तादिः तस्मिन् ७–१ ( टेर्ङौ० ) टिलोपः पश्चात्

( नामि० ) स्व० । कृत् ७-१ स्व० । अग्रे षष्ठी षण्णां संख्यापूरणी षष्ठी १-१ ( हसे० ) सिद्धम् । कर्त्तरीति । प्रागुक्तलक्षणे प्रधाने क्रियाश्रये अर्थे तथा कार्ये कर्मणि चार्थे षष्ठीविभक्तिर्भवति क सति कृति इति कृदंत इति कृत् तृतीयावृत्तिप्रोक्तः प्रत्ययसमूहः सोऽन्ते यस्य स कृदन्तस्तस्मिन्कृदंते शब्दे प्रयुज्यमाने वाच्यमाने सतीति भावः । कथंभूते कृदन्ते शब्दे क्तादिवर्जिते क्तप्रत्ययादिरहिते । क्तादीत्यादिशब्दात् क्तक्तवतुईपद्दुःसुषु खलशतृशानौ कसुकानौ पूर्वकाले क्त्वा समासे क्यप् तुम् इष्णु स्नु क्रु इत्य दि कृत्प्रत्ययांतान् विहाय अन्येषु कृत्प्रत्ययांतेषु परेषु सत्सु इत्यर्थः। तत्रोदा० । व्यासस्य कृतिः । व्यासेन क्रियते स्म इति । अत्र व्यासः कृतेः कर्ता ततः कृतिरिति कृत्प्रत्ययांते शब्दे प्रयुज्यमाने व्यासस्येति कर्त्तरि षष्ठी । एवं भारतस्य श्रवणम् भारतं शृणोतीति श्रवणमिति युट्क्ते कृदंते प्रयुक्ते भारतस्येति कर्मणि षष्ठी । अत्रोभयत्रापि कृद्योगलक्षणा षष्ठी । अक्तादाविति किम् । त्वया कृतम् । ग्रामं प्राप्तः । अत्र यथाक्रमं कर्त्तरि कर्मणि च तृतीया द्वितीया क्तप्रत्ययांतत्वात् षष्ठी न । आदिशब्दात् शतृशानकसुकानइष्णुस्नुक्नुक्त्वातुमुक्यप्इत्याद्यंतेष्वपि शब्देषु परेषु षष्ठी न भवति । किंतु द्वितीयैव । ग्रामं गच्छन् । अन्नं पचमानः । अन्नं पेचिवान् । शुभं चक्राणः । देवं दिदृक्षुः । आत्मानमलंकरिष्णुः । दैत्यान् घातुकः । दानवान् जिष्णुः । देवं नत्वा । गुरुं प्रणम्य । कार्यं कर्त्तुम् । ग्रामं गंतुम् उत्कंठितः इत्यादीन्युदाहरणान्यवसेयानि । द्विषेः शतुर्वा षष्ठी । मुरस्य मुरं वा द्विषन् ॥

[ स्मरतौ च कार्ये ] स्मरतौ धातौ प्रयुज्यमाने कर्मणि षष्ठी भवति । मातुः स्मरति मातरं स्मरति ॥

किंच ( स्मरतौ च कार्ये ) स्मरतावर्थे स्मरणार्थे स्मृन् स्मरणे धातुयोगे कार्ये कर्मणि विषये षष्ठीविभक्तिर्भवति । उदा० । पुत्रः मातुः स्मरति । मातुः स्मर्त्तव्यत्वे षष्ठी चकाराद्द्वितीयापि । कर्मापि भवति । मातरं स्मरति । तृप्त्यर्थानां करणे वा षष्ठी । फलैः फलानां वा तृप्तः । अद्भिः अपां वा तृप्तः ।

[ हेतौ तृतीया पंचमी च वक्तव्या ] अनित्यः शब्दः कृतकत्वेन कृतकत्वात् वा ॥

(हेतौ०)इतिहेतौ साधके तृतीयापंचम्यौ भवतः इह किल प्रतिज्ञा १ हेतु २ दृष्टांत ३ उपनय ४ निगमन ५ भेदादनुमानस्य पंचावयवाः । तत्र पक्षवचनं प्रतिज्ञा प्रतिज्ञास्थापको हेतुः । यथा पर्वतोऽयं वह्निमान् कस्मात् धूमवत्त्वात् । अयं पर्वतो वह्निमान् इति प्रतिज्ञा सा च धूमवत्त्वेन हेतुना स्थाप्यते इति । तत्र [ हेतौ० ] इति । द्वितीयानुमानावयवे तृतीया पंचमी च भवति । तत्रोदाहरणम् । अनित्यः शब्दः इति

प्रतिज्ञा १ । केन कस्माद्वा कृतकत्वेन कृतकत्वाद्वेति हेतुस्तत्र तृतीया विकल्पेन तु पंचम्या वा प्रयोगः । हेतुत्वादिति २ । प्रस्तावाच्छेषा अपि त्रयोऽवयवाः व्यज्यंते ते चामी । योयः कृतकः सस अनित्यः यथा घट इति दृष्टांतः ३ । कृतकोय-मित्युपनयः ४ । तस्मादनित्यश्चायमिति निगमनम् ५ ॥

[ भयहेतौ पंचमी ] चौराद्बिभेति । व्याघ्रात्त्रस्यति । विद्युत्पाता-च्चकितः [ षष्ठी हेतुप्रयोगे च ] कस्य हेतोरियं कन्या ॥

( भय० ) इति । भयहेतौ भयस्य कारणे पंचमी भयस्य हेतुः यः पशुपुरुषा-दिजनितः कारणवर्गस्तस्मिन्नर्थे पंचमीविभक्तिर्भवति । चौराद्बिभेति । व्याघ्रात्त्र-स्यति । विद्युत्पाताच्चकितः । अत्र भयहेतौ भयोत्पादकार्थे पंचमी ( षष्ठी हेतु-प्रयोगे च ) हेतुशब्दस्य प्रयोगे हेतुः इति शब्दे प्रयुज्यमाने षष्ठी भवति । कस्य हेतोरियं कन्या । कस्य निमित्तमित्यर्थः । चकारात्सर्वादेः हेतुप्रयोगे तृतीयाषष्ठ्यौ स्तः । केन हेतुना कस्य हेतोः । निमित्तकारणे हेत्वर्थप्रयोगे सर्वादेः सर्वा विभक्तयो भवंति । को हेतुः । कं हेतुं वसति । केन हेतुना । कस्मै हेतवे । कस्मात् हेतोः । कस्य हेतोः । कस्मिन् हेतौ । इत्यादि ॥

[ इत्थंभावे तृतीया ] शिष्यं पुत्रेण पश्यति । पश्यति संसारमसा-रेण । पुष्करिणीं नद्या पश्यति ॥

( इत्थंभावे तृतीया ) इति । असावयमिति इत्थभावस्तस्मिन्नर्थे तृतीया विभ-क्तिर्भवति । उदा० । गुरुः शिष्यं पुत्रेण पश्यति । पुत्रसदृशं पश्यति पुत्रमिवेति भावः । यद्वा अयं प्रकारः इत्थं तस्य भावः इत्थंभावः । सामान्यस्य भेदको विशेषः प्रकारः किंचित्प्रकारांतरं प्राप्तः इत्थंभावः । यथा मनुष्यसामान्यभेदको विशेषः शिष्यत्वं तल्लक्षणं पुत्र इति न भवति किं तु तद्गतस्नेहः पुत्रशब्देनोच्यते इति । आचार्यः शिष्यं पुत्रेण पश्यति पुत्रमिव पश्यतीत्यर्थः । एवं साधुः संसारमसारेणे-त्यपि ज्ञेयम् । साधुः संसारं असारमिव पश्यति असारतया पश्यति इत्यर्थः ॥

[ येनांगविकारः ।] येन विकृतेनांगेनांगिनो विकारो लक्ष्यते तस्मा-दङ्गात्तृतीया विभक्तिर्भवति ॥ देवदत्तः अक्ष्णा काणः । पादेन खञ्जः । कर्णेन बधिरः । शिरसा खल्वाटः । करेण कुणिः ॥

( येनां० ) यत् ३-१ ( त्यदा० । टेन० । अ इ ए ) अंगविकारः अंगं विक्रि-यते अनेनेत्यंगविकारः १-१ ( सो० ) पश्चात् ( सवर्णे० ) सिद्धं द्विपदम् । येन विकृतेनांगेन अक्ष्यादिना अंगिनः शरीरिणोऽगविकारः शरीरविकृतिर्लक्ष्यते ज्ञायते तस्माद्विकृतादंगात् तृतीया विभक्तिर्भवतीति । तत्र विकृतत्वं द्विविधं न्यूनत्वेन १ आधिक्येन २ चेति न्यूनत्वं व्याचष्टे । अक्ष्णा नेत्रेण काणः । पादेन खञ्जः ।

शिरसा मस्तकेन खल्वाटः । केशरहितः इत्यर्थः । करेण कुणिः न्यूनत्वविकृतेरि-दमुदाहरणचतुष्टयम् । एवं मुखेन त्रिलोचनः । वपुषा चतुर्भुजः । इत्येतदुदाहरणद्वय-माधिक्यविकृतौ ज्ञेयम् । अथ पंचम्या अर्थांतरमाह ॥

[ जनिकर्तुः प्रकृतिः । ] जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति । तत्रापादाने पंचमी । "यस्मात्प्रजाः प्रजायंते तद्ब्रह्मेति विदुर्बुधाः" । [ आङादियोगे च ] आङादियोगे लिंगात्पंचमी भवति । आपाटलिपुत्राद्वृष्टो देवः ॥

( जनिकर्तुः० ) जनेर्जन्मनः कर्त्ता जनिकर्ता क्रियापदस्य कर्त्ता उत्पद्यमान-वस्तुजननकर्ता तस्य ६-१ ( ऋतो ङ उः ) अस्य उः । डित्वाट्टिलोपः । स्व० । प्रकृति १-१ ( स्लो० ) सिद्धम् ( जनिकर्तुः प्रकृतिरपादानम् ) इत्य वा । अथ वृत्तिः । जनिकर्तुरिति कोर्यः । जायमानस्य जायमानमुत्पद्यमानं यत्कार्यं तस्य प्रकृतिः उपादानं मूलकारणं तदपादानसंज्ञं भवति तत्रापादाने पचमीविभक्तिर्भवतीति शेषः । अर्थाज्जनेर्द्धातोर्जनिक्रियायाः जननं जनिरुद्भवः इति जनेरुत्पत्तिर्यः कर्त्ता स जाय-मानः सन्कार्यं भवति तस्य प्रकृतिः कारणं तदपादानं तत्र पचमी । उदा० "यस्मा-त्प्रजाः प्रजायंते तद्ब्रह्मेत्यभिधीयते" । प्रजायंते इति जनिधातुः क्रियापदम् । प्रजा इति जनिकर्तृपदं जायमानकार्यत्वात्तस्य प्रकृतिर्यच्छब्दनिर्दिष्टं ब्रह्म ततो यस्मा-दिति मूलकारणत्वात्प्रकृतिपदात्पंचमी आङुपसर्गादियोगेपि पंचमी । आदिश-ब्दात् आङ् अपपरियोगे । आङ् उपसर्गो मार्यादायाम् अभिविधौ च वर्तते । तत्र तेन विनेति मर्यादा तेन सहेत्यभिविधिरिति भेदः । तत्रोदाहरणम्-आपाटलिपुत्रा-दिति पाटलिपुत्रं नगरं मर्यादीकृत्य तस्मादर्वाक् अभिव्याप्य देवो मेघः वृष्ट इत्यर्थः । पर्यपाभ्या वर्जने पंचमी । अपपरी वर्जनार्थे । परि त्रिगर्तेभ्यो देवो वृष्टः । अप त्रिगर्तेभ्यो वृष्टो देवः । त्रिगर्तदेशान् वर्जयित्वा वृष्ट इत्यर्थः । "राज्ञि मेघे सुरे देवः" इत्यनेकार्थः ॥ विद्यास्वीकारे आख्यातुः पंचमी स्यात् । उपाध्यायादधीते ॥

[ तादर्थ्ये चतुर्थी च वक्तव्या ]
संयमाय श्रुतं धत्ते नरो धर्माय संयमम् ॥
धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥ १ ॥

अथ पुनश्चतुर्थीमाह । तादर्थ्ये इति । सः अर्थो यस्य तत्तदर्थं तस्य भावः ताद-र्थ्यम् । यद्वा स एव अर्थस्तदर्थस्तस्य भावस्तादर्थ्यम् । यद्वा तस्मै कार्याय इदं कारणं तदर्थम् तस्य भावस्तादर्थ्यं तस्मिंस्तादर्थ्ये अर्थे वाच्यमाने चतुर्थी विभ-क्तिर्भवति । तत्रोदाहरणं श्लोकेन । संयमायेति।नरो मनुष्यः श्रुतं शास्त्रं धत्ते धारयति

१ तद्ब्रह्मत्यभिधीयत इत्यपि पाठः ।

कस्मै संयमाय संयमार्थमित्यर्थः । धर्माय धर्मार्थं संयमं धत्ते । मेधावी बुद्धिमान् मोक्षाय मोक्षार्थं धर्मं धत्ते । नरो दानाय दानार्थं तथा भुक्तये भोगाय धनं धत्ते । अत्र संयमादिभ्यस्तादर्थ्ये चतुर्थी ॥

[ क्रुध्यादियोगे च । ] क्रूराय क्रुध्यति । विप्रायद्रुह्यति । पुत्राय कुप्यति । गुणवते असूयति ॥

क्रुध्यादिधातुयोगेपि चतुर्थी । क्रुधि द्रुहि ईर्ष्या असूया श्लाघ् हुङ् स्था शप् धारि स्पृहि एते क्रुधादयः । क्रूराय क्रुध्यति । मित्राय द्रुह्यति । क्रूरं प्रति क्रोधः इत्यस्मिन्नर्थे क्रुधधातुयोगे क्रूरायेत्यत्र चतुर्थी । आदिशब्दात् मित्राय द्रुह्यतीति गुणवते पुरुषाय असूयतीत्यादिरोषवाचकधातुयोगेपि चतुर्थी । पुत्राय कुप्यति । दुष्टायेर्ष्यतीत्येवमादयः । गुणेषु दोषारोपोऽसूया । परसंपत्त्यसहनम् ईर्ष्या इति भेदः । [ सोपसर्गयोश्च क्रुधद्रुहोर्योगे चतुर्थीप्रतिषेधो वक्तव्यः ] क्रूरमभिक्रुध्यति । मित्रमभिद्रुह्यति । चकारात् श्लाघशप्स्थाधृञ्स्पृहादीनां रुच्यर्थानां च तृप्यमाणात् चतुर्थीति सूचितम् । भगवते श्लाघते । मदनाय शपते । मित्राय तिष्ठति । पत्न्यै धारयति भूषणानि पतिः । कृष्णाय स्पृहयति गोपी । क्षुधिताय रोचते अन्नम् । इत्यादि ज्ञेयम् । लोकानां शुभाशुभसूचको भूतादिविकार उत्पातस्तत्रापि चतुर्थी । वाताय कपिला विद्युत् । वातोत्पातज्ञापिका इत्यर्थः । तुमंतलोपे चतुर्थी । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । तुमर्थाच्च भाववचनात् । यागाय याति । यष्टुं यातीत्यर्थः । मन्यतेः कर्मण्यनादरे वा चतुर्थी । न त्वां तृणाय मन्य इत्यर्थः । कर्मणि द्वितीयाचतुर्थ्यौ । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ ग्रामाय व्रजति ग्रामं वा ॥

[ ल्यब्लोपे कर्मण्यधिकरणे पंचमी च वक्तव्या ]हर्म्यात्प्रेक्षते हर्म्यमारुह्य प्रेक्षते इत्यर्थः । आसनाद्वदति आसने उपविश्य वदतीत्यर्थः ।

[ निमित्तात्कर्मयोगे सप्तमी च वक्तव्या ]

> चर्मणि द्वीपिनं हंति दंतयोर्हंति कुंजरम् ॥
> केशेषु चमरीं हंति सीम्नि पुष्कलको हतः ॥ १ ॥

[ विषये च । ] तर्के चतुरः [ षष्ठीसप्तम्यौ चानादरे । ] बहूनां क्रोशतां गतश्चौरः । बहुष्वसाधुषु निवारयत्स्वपि स्वयमार्यो याति साधुमार्गेण ॥ बहुषु साधुषु निवारयत्स्वपि स्वयमनार्यो यात्यसाधुमार्गेण ॥ मातापित्रोः रुदतोः प्रव्रजति पुत्रः ॥

[ ल्यब्लोपे० ] इति । ल्यबर्थो वाच्यमानःल्यपश्च अप्रयोगः स ल्यब्लोपस्तस्मि-

१ 'वदत्स्वपि' इत्यपि पाठः ।

न्यर्थे पंचमी वक्तव्या । यतः "क्यबर्थो दृश्यते यत्र क्यबंतं न प्रयुज्यते । स एव क्यब्लोपः स्यादिति प्रोक्तं मनीषिभिः" ॥ १ ॥ [ क्यब्लोपे कर्मण्यधिकरणे च पंचमी वक्तव्या ] उदा० । हर्म्यात्प्रेक्षते इति । कोऽर्थः। हर्म्यं गृहमारुह्य प्रेक्षते पश्यतीत्यर्थः । अत्र आरुह्येति क्यप्प्रत्ययांतं पदं तस्य लोपे हर्म्यादिति पंचमी । एवम् आसनात् वदति आसने उपविश्य वदतीत्यर्थः । सप्तमीमाह । निमित्तादिति । निमित्तं नाम पंचमोऽधिकरणभेदस्तस्मान्निमित्तात् । यद्वा निमित्तात्प्रयोजनवाचिनः शब्दात्कर्मयोगे सति सप्तमी वक्तव्या । तत्रोदा० । चर्मणि० । चर्मणीति । चर्मनिमित्तं द्वीपिनं चित्रकं हंति विनाशयति । दंतयोर्दन्तनिमित्तं कुंजरं हस्तिनं हंति । केशेषु केशनिमित्तं चमरीं गां हंति । सीम्नि सीमायां सीमानिमित्तं केनापि पुरुषेण पुष्कलको नामा क्षुद्रग्रामाधिपतिः हतो मारितः । पुष्कलकः कीलको वा हतः निखातः । कीलः पुष्कलकः शिवः ॥ "पुष्कलकः स्याद्गंधमृगः सीमा तत्राभिरुच्यते" । कस्तूरिकानिमित्तं गंधमृगो हत इति भावार्थः । ( विषये च ) इति । विषये विषयार्थे ग्राह्यार्थे वाच्यमाने सप्तमी विभक्तिर्भवति । उदा० । तर्के तर्कविषये चतुरो निपुणः ॥ अत्र तर्कः क्रियाश्रयत्वाभावान्नाधिकरणं ततो विषये सप्तमी। षष्ठी० । अनादरे क्रियमाणे सति षष्ठी सप्तमी च भवति । तत्रोदा० । बहूनां जनानां क्रोशतां सतां फूत्कारं कुर्वतां सतां स चौरो गतः । बहून् जनानाक्रुशतोऽवज्ञाय अनादृत्येत्यर्थः । बहुष्वनार्येषु निषेधयत्स्वपि साधुमार्गेण याति साधुः । बहुषु साधुषु निवारयत्सु सत्स्वपि निषेधयत्स्वपि अनार्योऽसाधुः स्वयमात्मना असाधुमार्गेण असमीचीनमार्गेण अधर्ममार्गेण दुराचारे याति । बहुषु साधुजनेष्वनादरं कृत्वा प्रगतीत्यर्थः । एवं मातापित्रोः रुदतोः सतोः प्रव्रजति पुत्रः इत्यपि ज्ञेयम् । मातापित्रोः अनादरं कृत्वा दीक्षां गृह्णाति इत्यर्थः । इन्नंते कर्मण्यपि सप्तमी । अधीती व्याकरणे ॥

**अन्योक्ते प्रथमा॥ यदिदं कार्याद्यन्येनाख्यातेन कृता चोक्तं भवति तदा प्रथमा प्रयोक्तव्या । घटः क्रियते । पटः कार्यः ॥**

सूत्रम् ( अन्योक्ते ) अन्येनोक्तं अन्योक्तं तस्मिन् ७-१ ( अ इ ए ) प्रथमा १-१ ( आपः० ) इति सेर्लोपः । सिद्धं सूत्रं द्विपदम् । अन्योक्त इति पदं व्याचष्टे यदिति । यत् इदं कार्यादि कर्म कारकम्, अन्येनेति कोऽर्थः अन्येन कर्मोक्तिभावोक्तिसंपन्नाख्यातेन द्वितीयवृत्त्युक्तप्रत्ययनिष्पन्नेन यक्प्रत्ययान्तधातुरूपेण कृता कृदंतप्रत्ययेन तृतीयवृत्तिप्रत्ययसाधितशब्देन चशब्दात्समासेन तद्धितेन च सह यदुक्तं भवति यत् उच्यते तदा तस्मिन्कर्मणि प्रथमा विभक्तिर्भवति । अर्थात् यत्र तृतीयांतः कर्ता तत्र कर्मणि प्रथमा भवतीति भावः । उदा० । कुंभकारेण घटः क्रियते। इत्यत्र घटस्य कार्यत्वात्क्रियते इत्याख्यातोक्तत्वेन कर्मणि प्रथमा । एवं कारुकेण पटः कार्यः । इत्यत्र कृतोक्तत्वात् कर्मणि प्रथमा ॥

**[ छन्दसि स्यादिः सर्वत्र ]** दध्ना जुहोति । पुनंतु ब्रह्मणस्पतिः । व्रजतीर्विरेजुः ॥ ॥ इति कारकप्रक्रिया ॥

छन्दसि कारकनियममाह । ( छंद० ) छंदसि वेदविषये स्यादिर्विभक्तिः सर्वत्र सर्वेष्वर्थेषु व्यत्ययेन भवति । सर्वा विभक्तयः सर्वविभक्तीनामर्थे भवंतीत्यर्थः । तत्रार्षत्वान्न विभक्तीनियम इत्यर्थः । उदा० । दध्ना जुहोतीति । दधि जुहोतीति द्वितीयासंभवे छांदसत्वात् द्वितीयास्थाने तृतीया । ब्रह्मणस्पतिः पुनंतु । ब्राह्मणाः ब्रह्मणस्पतिं प्रक्षालयंतु इति द्वितीयार्थे प्रथमा । यद्वा एवं ब्रह्मणस्पतिर्ब्रह्मा पुनंतु अत्रैकवचनसंभवे बहुवचनम् । उक्तं च भागवते दशमस्कंधे पंचमाध्याये कृष्णजन्माधिकारे "नंदालयं सवलया व्रजतीर्विरेजुः" इति । एवमन्यान्यपि छांदसोदाहरणान्यवसेयानि । ग्रंथगौरवभयान्न लिख्यंते । अथ विभक्तीनां कांश्चिदर्थान् समाहृत्याह । सामान्यलिंगवचनपरिमाणकर्तृसंबोधनान्योक्तेषु प्रथमा । तृतीयांते कर्त्तरि सति कर्मणि प्रथमा १ स्यात् इत्यर्थः । कर्मण्यभितः सर्वतः उभयतः परितः प्रति समया निकषा हा अनु धिग् उपर्युपरि अधोधः अध्यधि विना अंतरेणांतरा स्मरति कालाध्वनोर्नैरंतर्ये शतृ शान कसु कान इष्णु स्नु क्त्वा तुमुन् क्यप्-योगे क्रियाविशेषणे च द्वितीया २ । कर्तृसाधनयोः सह सदृशं साकं सार्द्धं विना इत्थं तद्भावे येनागविकारवारणार्थालंयोगनिषेधार्थकृतादियोगहेतुतुल्यार्थादिषु तृतीया ३ । दानपात्रे नमः स्वस्तिस्वाहास्वधावषदतादर्थ्यक्रुध्यादिरुच्यर्थादिधातुयोगसमर्थार्थालंयोगेषु वलिरक्षितहितशब्दयोगोत्पातज्ञापितेषु चतुर्थी ४ । विश्लेषावधौ ऋते अन्यारादिविना पृथक् भिन्नेतरप्रभृत्यारभ्य बहिःशब्दयोगह्व्यर्थजनिकर्तृमर्यादाङादियोगक्यब्लोपभयहेतुविद्याख्यातृप्रभृत्यर्थेषु पंचमी ५ । संबंधनिर्द्धारणस्वामित्वकर्तृकार्यस्मरणार्थमातुहेतुशब्दप्रयोगतुल्यार्थानादरादिषु षष्ठी ६ । आधारभावस्वामित्वनिमित्तविषयानादराधीत्यादिष्वर्थेषु सप्तमी ७ । छंदसि सर्वा विभक्तयः सर्वेष्वर्थेषु व्यत्ययेन च भवंति । जातावेकवचनं बहुवचनवद्भवति । एको द्वौ वास्मदो विशेषणे बहुवद्भवतः । गुरौ च एको द्वौ बहुवद्भवतः इत्यादि ज्ञेयम् । यथात्र देशे प्रचुरो यवो विद्यते तथा अहम् आवाम् एतयोरर्थे वयमिति भवति । तथा एकस्मिन्नपि गुरौ एते गुरव इति बहुवचनं भवति ॥

इति कारकप्रक्रियाविवरणं संक्षेपतः समाप्तम् ॥

---

## अथ समासप्रक्रिया १६.

अथार्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते ।

**समासश्चान्वये नाम्नाम् ॥** नाम्नामन्वययोग्यत्वे सत्येव समासो भवति चशब्दात्तद्धितोपि भवति । ततो भार्या पुरुषस्येत्यादौ न भवति ॥

अथ समासप्रारंभः। अत्र प्रथमं परिभाषामाह। अथार्थेत्यादि। अथ व्याख्या। अथेति कारककथनानंतर समासो निरूप्यते स्थाप्यते इति संबंधः। तत्र समसनम् अनेकेषां पदानामेकपदमित्यादि यत्संक्षेपणं स समासो निरूप्यते कथ्यते। केषां पदानां स्यादिविभक्त्यंतानाम्। एवंविधानां पदानां समासो निरूप्यते कथ्यते इति योगः। कथंभूताना पदाना अर्थवदित्यादि। अर्थः प्रथमादीना लिंगादिः स आसामस्तीति अर्थवत्यः ताश्चता विभक्तयश्च अर्थवद्विभक्तयः ताभिर्विशिष्टानि युक्तानि अर्थवद्विभक्तिविशिष्टानि तथा तेषाम्। यद्वा अर्थवंति च तानि विभक्तिविशिष्टानि च अर्थ वद्विभक्तिविशिष्टानि तेषाम्। अथ समासस्य याथातथ्यमाह। सूत्रम्(समासः०) समास १-१ (स्तो०) च १-१ (अव्य०) पश्चात् (विसर्ज०। स्तोः श्चुभिः श्चु) रव०। अन्वयेति पदानामर्थमित्यन्वयस्तस्मिन् ७-१ (अ इ ए) पश्चात् (सवर्ण०) नामन् ६-३ (अलोपः स्वरे) सिद्धं सूत्रम्। नाम्नामन्वयेत्यादिवृत्तिः सुगमा कंठ्या। परमत्र नामशब्देन पदमेव विवक्षितम्। अन्यथा अविभक्ति नामेत्युक्ते (समासप्रत्यययोः०) इति सूत्रं व्यर्थ स्यादिति द्विवचनस्य बह्वर्थांतःपातित्वात् द्वयोरपि नाम्नोः समासः स्यात्। यद्वा नाम्नी च नामानि च नामानि तेषां नाम्नाम् एकशेषः समासः। तेन द्वयोर्नाम्नोर्बहूना च नाम्ना समासो भवति। न वरम्। अन्वययोग्यत्वे सत्येवेति परस्परमर्थानुगमनमन्वयः। बाधकप्रमाणाभावो योग्यता यत्र नाम्ना पदाना शब्दाना अन्वययोग्यत्वं संभवति तत्रैव समासो भवति नान्यत्रेति भावः। चशब्दात्तद्धितोपि। तद्धितप्रत्ययसंबंधिविग्रहोऽप्यन्वययोग्यत्वे सत्येव भवति। तत् इति तस्मात्कारणात् भार्या पुरुषस्येत्यादौ विपरीतान्वये समासो न भवति। यथा-देवदत्तस्य भार्या पुरुषस्य वस्त्रमित्यत्र चतुर्णां पदानां मध्यात् आदिमम् अंतिमं च पदं शब्दं विहाय मध्यस्थशब्दद्वयग्रहणादन्वययोग्यत्वं नास्ति ततः समासो न भवति। अन्वयायोग्यत्वात्। पुरुषस्य भार्येत्यादौ तु भवति॥

स च षड्विधः।अव्ययीभावस्तत्पुरुषो द्वंद्वो बहुव्रीहिः कर्मधारयो द्विगुश्चेति। तत्र पूर्वपदप्रधानोऽव्ययीभावः। द्विगुतत्पुरुषौ परपदप्रधानौ।द्वंद्वकर्मधारयौ चोभयपदप्रधानौ। बहुव्रीहिरन्यपदप्रधानः।तस्य क्रियाभिसंनधादुभयपदप्रधानो बलवान्॥

अथ समासः कतिविध इति नामभिस्तद्भेदानाह। स चेति। स समासः षड्विधः षट्प्रकारः षट्संख्याक इत्यर्थः। तत्राद्यः अव्ययीभावो द्वितीयस्तत्पुरुषस्तृतीयो द्वंद्वश्चतुर्थो बहुव्रीहिः पंचमः कर्मधारयः षष्ठो द्विगुरिति। एवं समासः षड्विधो ज्ञेयः। सामन समासेषु पदाना प्राधान्यमाह। पूर्वपदप्रधानः अव्ययीभावः। पूर्वपदमव्ययं परपदमनव्ययं तद्द्वयोन अनव्ययस्य अव्ययभवनम् अव्ययीभावः। द्विगुतत्पुरुषौ समासौ परपदप्रधानौ पूर्वोत्तरयोः पदयोर्मध्ये यत्परम् अग्रेतनं पदं तस्यार्थः प्रधानो ययोस्तौ

द्वंद्वकर्मधारयौ चोभयपदप्रधानौ उभे पूर्वापरे पदे प्रधाने मुख्ये ययोस्तौ। बहुव्रीहिरन्यपदप्रधानः । पूर्वोत्तराभ्यां पदाभ्याम् अन्यत्किंचिद्बहिः स्थितं पदं प्रधानं यस्मिन् सः। कस्मात् । तस्य क्रियाभिसंबंधात् । अस्य व्याख्या यथा । तस्य क्रियाभिसंबंधादिति पदं सर्वत्रापि योज्यते तत्रतत्र तस्यतस्य पदस्य क्रियाभिः सह अभिसंबंधात् क्रियायां मुख्याधिकारित्वात् क्रियायोगित्वेन प्राधान्यादित्यर्थः । अव्ययीभावः पूर्वपदप्रधानो यथा अधिस्त्रि स्त्रियं स्त्रियां वा अधिकृत्य भवतीत्यत्र पूर्वपदस्य अधिशब्दस्य क्रियायां मुख्यत्वात् अव्ययीभावः पूर्वपदप्रधानः । तथा तस्य अग्रेतनपदस्य क्रियाभिसंबंधात् द्विगुस्तत्पुरुषश्च एतौ द्वौ परपदप्रधानौ । यथा पंचानां गवां समाहारः पंचगु इत्यत्र पंचन्शब्दस्य संख्याभूतस्य विशेषणत्वं गोशब्दस्य विशेष्यत्वं विशेष्यविशेषणयोर्विशेष्यस्य मुख्यत्वमिति गोशब्दस्य परपदस्य द्विगुसमासे प्रधानत्वम् । यथा ग्रामं प्राप्तस्तथा पुरं गृहं धनं सुखं प्राप्त इत्यादिषु पूर्वपदस्य पराकृतिमद्विग्रहत्वात्परपदस्य च परावृत्त्यसहत्वात्तत्पुरुषे परपदस्य प्राधान्यम् । एवं द्विगुतत्पुरुषयोः परपदस्य क्रियाभिसंबंधात् द्विगुतत्पुरुषौ परपदप्रधानौ । तथा द्वंद्वे कर्मधारये च उभयपदयोः क्रियाभिसंबंधाद्द्वंद्वकर्मधारयौ उभयपदप्रधानौ । यथा अग्निश्च सोमश्च अग्नीषोमौ वर्तेते इत्यादिषु परपदस्य द्वयस्यापि क्रियायाम् अधिकारित्वाद्द्वंद्वे उभयपदयोः प्राधान्यम् । तथा कर्मधारये नीलं च तदुत्पलं चेत्यत्र विशेषणविशेष्ययोरेकार्थनिष्ठत्वादन्योन्याश्रयभूतत्वाच्च पदद्वयस्य प्राधान्यम् । बहुव्रीहौ चान्यपदस्य प्राधान्यम् । यथा बहु धनं यस्येत्यत्र बहुधनस्य वस्तुभूतत्वं यच्छब्दस्य तु स्वामित्वमिति अन्यपदस्य प्राधान्यं तस्यान्यपदस्य क्रियाभिसंबंधादिति । अथ बलाबलत्वमाह । उभयपदप्रधानो बलवानिति समासद्वयस्य संभवे यः उभयपदप्रधानः समासः स बलवान्भवति । यथा निषादस्थपतिरित्यत्र निषादानां स्थपतिरित्यत्र तत्पुरुषे क्रियमाणे परपदप्रधानत्वम् । तथा निषादश्चासौ स्थपतिश्चेति कर्मधारये क्रियमाणे उभयपदप्रधानत्वम् । ततोऽत्र कर्मधारय एवोभयपदप्रधानत्वाद्बलवान् । अतोत्र बलवत्त्वात्कर्मधारय एव स्यात् न तु तत्पुरुषः ॥

ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजनम् । अधि स्त्री इति स्थिते स्त्रीशब्दात् द्वितीयैकवचनम् अम् ( स्त्रीभुवोः )स्त्रियमधिकृत्य भवतीति विग्रहे अन्वययोग्यार्थसमर्पकः पदसमुदायो विग्रहो वाक्यमिति यावत् [ कृते समासे अव्ययस्य पूर्वनिपातो वक्तव्यः ] ॥

ननु विभक्तान्येव पदानि प्रयोक्तव्यानि किं समासेनेत्यतः समासस्य प्रयोजनमाह। ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजनमिति । अनेकेषां पदानामेकपद-

मिति तस्य भाव ऐकपद्यं वहूनि पदानि द्वे वा पदे उच्चार्य विभक्तिलोपं कृत्वा समा
सत्वात् या विभक्तिः क्रियते तस्यां कृतायामेकपदभावो भवति तदैकपद्यम् । यद्व
एकशेषः । द्वे त्रीणि वा पदान्युच्चार्य एकं पदमवशिष्यते तदैकपद्यम् । देवश्च देवश्च
देवश्च देवाः । तथा अनेकेषां स्वराणामेकस्वरस्तस्य भावः ऐकस्वर्यम् । यथा स्त्रिय
मधिकृत्य भवतीति विभागोच्चारणे प्रयत्नगौरवं स्यात् समासे तु कृते उच्चारणप्रयत्ने
लाघवं स्यात् । इदमेकं प्रयोजनम् ऐकपद्यात् शरवणादौ णत्वमपि प्रयोजनम् । तथ
वैदिकप्रक्रियाप्रसिद्धोदात्तादिस्वराणाम् ऐकस्वर्यं च प्रयोजनम् । अनेकासां विभक्ती
नामेकविभक्तिः तस्या भावः एकविभक्तिकत्वं समासस्य प्रयोजनमिति । यथा शशाश्च
कुशाश्च पलाशाश्च इत्यत्र । समासकरणे पदत्रयम् । विभक्तिलोपानंतरं त्रयाणामपि
पदानामेकपदम् तथा समासे किंचित्पदमुदात्तस्वरेणोच्चार्यते किंचिदनुदात्तस्वरेण
किंचित्स्वरितपदेनोच्चार्यते । ततः समासे कृते एकस्वरेणैवोच्चारणम् । तथा विभक्ति
त्रयस्याप्येकपदत्वे एकैव विभक्तिरित्येकविभक्तिकत्वमिति समासेन तत्त्रयं साध्यत
इत्यर्थः । यतः "विभक्तिर्लुप्यते यत्र तदर्थस्तु प्रतीयते॥ऐकपद्यं पदानां च स समासो
ऽभिधीयते"॥१॥ अथ पूर्वमुद्दिष्टत्वादव्ययीभावोदाहरणमाह ॥ अधि स्त्री इति ताव
ल्लिख्यते । अत्राधिरुपसर्गोऽधिकृत्येत्यर्थस्य वाचकः । स्वपदैरन्यपदैर्वा कथनं विग्रह
स्तेनाव्ययीभावस्य स्वपदविग्रहत्वात् अधिशब्दो नोच्चार्यते किंतु तदर्थवाचकोऽधिकृ
त्येति शब्दोऽलिखित एवाग्रे उच्चार्यते अतः केवलस्त्रीशब्दस्याग्रे द्वितीयाया एकवचनम्
अम् प्रदीयते ( स्त्रीभ्रुवोः ) इति ( वाम्शसि ) इति वा इयू । स्व० । स्त्रियमिति
सिद्धम् । ततः स्त्रियमधिकृत्येति विग्रहो भवति।यद्वा स्त्रियाम् अधिकृत्य इति सप्तमी
अधिरुपसर्गः सप्तम्यर्थ इति । अथ विग्रहपदस्यार्थमाह । अन्वयेति । परस्परसापे
क्षपदैकार्थीभावोऽन्वयस्तस्यान्वयस्य योग्यो योऽसावर्थस्तस्य समर्पकः प्रापकः सम
र्थको वा दृढकरः यः पदसमुदायः पदसमूहः स विग्रहस्तस्यापरं नाम वाक्यमित्यर्थः।
समासार्थबोधकवाक्यं विग्रह इति वा । ततोऽधिस्त्रियमितिपदं स्त्रियमधिकृत्य भव
तीति कृते विग्रहे यद्वा स्त्रियमधिकृत्य उच्चार्य कृते विग्रहे अव्ययस्य पूर्वनिपातः कार्यः।
अन्यच्च यत्प्रतिपदं प्रधानं तस्य पदस्य सर्वत्र समासे पूर्वनिपातो वक्तव्य इति ॥

पूर्वेऽव्ययेऽव्ययीभावः ॥ अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययी-
भावसंज्ञकः समासो भवति । समाससंज्ञायाम् ।समासप्रत्यययोः॥
समासे वर्तमानाया विभक्तेः प्रत्यये च परे लुग्भवति । इत्यमो
लुक् । निमित्ताभावे नैमित्तिकस्याप्यभावः । नामसंज्ञायां स्यादि-
विभक्तिः । अधिस्त्री सि इति स्थिते । स नपुंसकम् ॥ सोऽव्ययी-

भावः समासो नपुंसकलिंगो भवति।नपुंसकत्वाद्ध्रस्वत्वम्। अधिस्त्रि। अव्ययीभावात् ॥अव्ययीभावात्परस्या विभक्तेर्लुग्भवति।अधिस्त्रि गृहकार्यम्।रायमतिक्रांतम्—अतिरि कुलम्।नावमतिक्रांतम्—अतिनु जलम्। [ ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ च वक्तव्यौ ] ॥

अथाव्ययीभावस्य लक्षणमाह। पूर्व ७–१( अ इ ए ) अव्यय ७–१ ( अ इ ए ) अव्ययीभावः १–१ ( स्रो० ) अकारद्वयस्यापि ( एदो० ) इति लोपः। त्रिपदमिदं सूत्रम्। अव्यये पूर्वपदे सति प्राधान्येन पूर्वपदवर्तिनि सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति। अत्र अधि इत्युपसर्गस्य ( तदव्ययम् ) इति सूत्रेण अव्ययसंज्ञा। ततोऽव्यये पूर्वपदे अस्यान्वयस्य अव्ययीभाव इति समाससंज्ञा। ततः समाससंज्ञायां सिद्धायां किं कृत्यमिति सूत्रेणाह ( समास० ) इति। समासप्रत्यययोः समासश्च प्रत्ययश्च समासप्रत्ययौ तयोः समासप्रत्यययोः७–२ ( ओसि ) इति अकारस्यैकारः ( ए अय् ) स्वर०। ( स्रो० ) समासे अव्ययीभावादौ वर्तमानाया विभक्तेस्तथा प्रत्यये कृत्तद्धितलक्षणे परे च विभक्तेर्लुग्भवति। समासे वर्तमानत्वं प्रस्तुतमेव। तद्धितप्रत्यये परे यथा उपगोरपत्यमत्र षष्ठीलोपः। कृत्प्रत्यये यथा कुंभं करोतीत्यत्र द्वितीयावर्तमानार्थयोर्लोपः। इति सूत्रेण अमो लुक्। ततो निमित्ताभावे नैमित्तिकस्याप्यभाव इति वचनात् द्वयोरपि निषेधः। स्त्रीशब्दः प्रकृत एव तिष्ठति। अधिस्त्री। इति जातम्। ततः ( कृत्तद्धितसमासाश्च) इति समासस्य नामसंज्ञा। अग्रे नामत्वात्स्यादयः इति सामान्येन १–१ सु। अधिस्त्री सु इति स्थिते लिङ्गव्यवस्थां सूत्रेणाह ( स नपुंसकम् ) इति। तद्१–१ ( त्यदादेः०। तः ) इति तस्य सः ( स्रो० ) नपुंसक १–१ ( अतोम्। अमृशसोरस्य। सेपाद्द्से ) इति विसर्गलोपः। द्विपदमिदं सूत्रम्। सोऽव्ययीभावो नपुंसकलिंगो भवतीति नपुंसकलिंगता। ततो नपुंसकत्वात् ( नपुंसकस्य० ) इति सूत्रेण ह्रस्वत्वमेव नान्यत्सेरमादिकार्यम्। ( नपुंसकात्स्यमोर्लुक् ) इति सूत्रेण स्यमोर्लुकि प्राप्ते सर्वविभक्तिलुगर्थं सूत्रांतरमाह ( अव्य० ) अव्ययीभाव ५–१ ( ङसिरत्। सवर्णे० ) अव्ययीभावसमासात्परस्याः सर्वस्या अपि विभक्तेर्लुग्भवति। न शब्दनिर्दिष्ट इति सर्वविभक्तीनां लुगेव। न तु (अतोऽम्। औरी। जश्शसोः शिः ) इत्यादिसूत्रप्राप्तिः इति सेर्लुक्। अधिस्त्रि इति सिद्धम्। स्त्रियमधिकृत्य आश्रित्येत्यर्थः। इदं गृहकार्यं स्त्रीस्वामिकं तदाधारमित्यर्थः। स्त्रिया अधिकारे भवति। सप्तस्वपि विभक्तिषु सर्ववचनेषु अधिस्त्रि ईदृशमेव रूपं स्यात्। एवं हरौ अधिकृत्य प्रवृत्ता कथा अधिहरि। एवम् अतिरि अतिनु इत्यत्र २–१ अम् प्रतो रायमतिक्रांतम्—नावमतिक्रांतमिति विग्रहे कृते अव्ययीभावः समासः। ततः ( समासप्रत्यययोः ) इति विभक्तिलोपः। निमित्ताभावे नैमित्तिकस्याप्यभाव

इत्यमभावे ( ऐ आय् ) इत्येतस्याप्यभावः । ततो नपुंसकत्वाद्ध्रस्वत्वं क्रियत इति ह्रस्वकरणविधिमाह [ ह्रस्वादेशे० ] इति । सन्ध्यक्षराणामेकारैकारादीनाम् एऐओऔ एतेषां ह्रस्वादेशे क्रियमाणे सति एकारैकारयोरिकारः ओकारौकारयोः उकारादेशः इति अतिरि इत्यत्र ऐकारस्य इकारः । अतिनौ इत्यत्र औकारस्य उकारः । ततः १-१ ( अव्ययीभावात् ) इति सेर्लोपः । अतिरि इति सिद्धम् । एतत्कुलम् अतिरि । द्रव्यपूर्णमित्यर्थः । एवम् एतज्जलम् अतिनु । नावापि तरीतुमशक्यमित्यर्थः । अन्ये त्वत्राव्ययीभावं नेच्छंति । किंतु । अत्यादयः क्रांताद्यर्थे द्वितीयया सह समस्यंते समासश्च तत्पुरुषो भवति इति तत्पुरुषसमासमिच्छंति । अत्र तु अव्ययीभावस्तर्ह्युचितम् । एवम् उपनदि उपवन्धु उपकर्त्रृ अभ्यग्नि प्रत्यग्नि साग्नि अनुगिरि अनुवनम् अनुज्येष्ठम् प्रत्यक्षम् परोक्षम् समक्षम् । नाय निद्राकाल इति अतिनिद्रम् । पारेमध्येशब्दौ षष्ठ्या वा समस्येते सोऽव्ययीभावः । एदंतत्वानयोर्निपात्यते । पारे गंगायाः पारेगंगम् । मध्ये गंगाया मध्येगंगम् । समुद्रस्य मध्ये मध्येसमुद्रम् । पक्षे गंगापारमित्यादि लोकात् ज्ञेयम् । ततः उक्त प्रक्रियाकौमुद्याम् । ( अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाऽभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यांतवचनेषु ) इति । विभक्तौ-हरौ अधि प्रवृत्ता कथा इत्यधिहरि । समीपे-कुम्भस्य समीपमुपकुम्भम् । समृद्धौ-मद्राणां देशानां समृद्धिः सुमद्रम् । ऋद्धेर्व्यपगमो व्यृद्धिः । यवनानाम् ऋद्धेर्निर्गमः दुर्यवनम् । अर्थाभावे-मक्षिकाणामभावो निर्मक्षिकम् । अत्यये-अतीतानि हिमानि अतिहिमम् । संप्रति नासौ निद्राकाल इति अतिनिद्रम् । शब्दप्रादुर्भावे-इतिहरि । हरिशब्दप्रकाश इत्यर्थः । पश्चात्-विष्णोः पश्चादनुविष्णु । आनुपूर्व्ये-ज्येष्ठंज्येष्ठम् अनुक्राम्य अनुज्येष्ठम् । यौगपद्ये-चक्रेण युगपदेहि इति सचक्रम् । सादृश्ये-सदृशः सख्या इति ससखि । संपत्तौ-क्षत्राणां संपत्तिः सक्षत्रम् । साकल्ये-तृणेन सकलम् अत्ति इति सतृणम् । अन्तवचने-अग्निग्रंथपर्यंतम् अधीते इति साग्नि ॥

**यथाऽसादृश्ये ॥ यथाशब्दोऽसादृश्ये वर्तमानः समस्यते । शक्तिमनतिक्रम्य करोतीति यथाशक्ति ॥**

पुनरव्ययीभावसंभवमाह । यथाशब्दः सादृश्यार्थे असादृश्यार्थे वा वर्तते तत्र सादृश्यार्थे उपमार्थे यथाशब्देन सह समासो न भवतीत्यर्थः । यद्वा योग्यता १ वीप्सा २ पदार्थानतिवृत्ति ३ सादृश्यानि ४ इति यथाशब्दस्य चत्वारोऽर्थास्तत्र सादृश्यार्थं विहायाऽन्येष्वर्थेषु वर्तमानस्य यथाशब्दस्यान्वितेन पदेन सह समासो भवतीत्यर्थः । बाधाभावो योग्यता । पदार्थानां व्याप्तुमिच्छा वीप्सा । उदाहरणम् । यथारूपं चेष्टते । रूपस्य योग्यं यथारूपम् इति योग्यता १। यथावृद्धं प्रणमति येये वृद्धास्तांस्तान् यथाप्रर्म प्रणमति इति यथावृद्धमिति वीप्सा २ । शक्तिमनतिक्रम्य करोतीति यथा

शक्ति । एवं सूत्रम् अनतिक्रम्येति यथासूत्रम् । इति पदार्थानतिवृत्तिः ३ । सादृश्ये तु न समासः । यथा विष्णुस्तथा शिवः । यथाशक्ति । शक्ति २-१ अम् ( अम्शः० ) अग्रे अनतिक्रम्येति उच्चारणमात्रं तमनुसृत्येत्यर्थः । अनतिक्रम्य अनुल्लंघ्येत्यर्थः । पूर्वं यथाशब्दः । असादृश्यार्थत्वात्समासः स चाव्ययीभाव इति समाससंज्ञायां विभक्तेरमो लोपः नामसंज्ञायां स्यादिर्विभक्तिः १-१ अव्ययीभावादिति सेर्लोपः । यथाशक्ति शक्त्यनुसारेण करोतीत्यर्थः । सादृश्ये यथा विष्णुस्तथा शिवः । अत्र न समासः । एतच्चाव्ययीभावादिति सूत्रं सामान्यसूचकम् ॥

अतोऽमनतः ॥ अकारांतादव्ययीभावात्परस्या विभक्तेरम् भवति अतं वर्जयित्वा । कुंभस्य समीपे उपकुंभं वर्तते । उपकुंभं पश्य ॥

अथाऽकारांतात्परतो विभक्तीनां विशेषमाह । ( अतोऽमनतः ) अत् ५-१ । स्व० (स्रो० ) अम् १-१ ( हसे० ) न अत् अनत् तस्मात् अनतः ५-१ । स्व० (स्रो०) पश्चात् (अतोत्युः । उओ । एदो०) मकारस्य अकारेण सह । स्व० । त्रिपदमिदं सूत्रम् । अकारांतो योऽव्ययीभावस्तस्मात् परस्याः सर्वस्या विभक्तेः सप्तानामपि विभक्तीनाम् अमादेशो भवति । परम् अतमिति । पंचम्या अत्-आदेशं त्यक्त्वा । अत-आदेशग्रहणादादेशिनं ङसिं वर्जयित्वेत्यर्थः । पंचम्या अम् न भवतीति तात्पर्यार्थः । अत्रोदाहरणम् । कुम्भस्य समीपमिति विग्रहे कुंभ ६-१ ( ङस्स्य ) कुम्भस्य इति सिद्धम् । समीपार्थे उप इति पूर्वमुपसर्गरूपमव्ययम् । उपशब्देन समीपार्थस्योक्तत्वादुक्तार्थानामप्रयोग इति समीपशब्दस्याप्रयोजनम् । ततोऽव्ययीभावसमाससंज्ञा ( समासप्रत्ययोः ) इति षष्ठीलोपः । उपकुंभ इति समासपदस्य नामसंज्ञा । तत्र ( लिंगार्थे प्रथमा ) इति १-१ ( अतोऽमनतः ) इति सेरम् ( अम्शो० ) प्रथमायाम् । उपकुंभं वर्तते इति । अग्रे उपकुंभशब्दात् द्वितीयायाः सप्तमीपर्यंता विभक्तयो यथार्थ योज्याः । तत्र द्वितीयायामुपकुंभं पश्य ॥

वा टाङ्योः ॥ आकारांतादव्ययीभावात्परयोष्टाङि इत्येतयोर्वा अम् भवति । उपकुंभेन कृतम् उपकुंभकृतम् । उपकुंभे देहि । उपकुंभादानय । अनत इति विशेषणात्पंचम्या अम् न भवति । उपकुंभं देशः । उपकुंभे निधेहि । उपकुंभं निधेहि ॥

सूत्रम् ( वा टाङ्योः ) इति । वा ३-१ ( अव्य० ) टा च ङिश्च टाङी तयोः ६-२ ( इ यं० ) स्व० । द्विपदमिदं सूत्रम् । टा ङि इत्येतयोर्वचनयोर्वा अम् भवति । उप कुंभ द्विस्थाने उभयत्रापि ३-१ टा एकत्र अम् आदेशः । अन्यत्र वाशब्दस्य बहुलार्थत्वात्लुक् न किन्तु ( टेन । अ इ ए ) उपकुंभेन वा कर्त्रा कृतम् । कुंभस्य समीपेन कृतमित्यर्थः । चतुर्थ्यां तु उपकुंभं देहि कुंभस्य समीपाय देहि

इत्यर्थः । पंचम्याम् । अनत इति विशेषणात्पंचम्या अम् न भवति । अतः उपकुंभात् कुंभस्य समीपादानय। षष्ठयाम् उपकुंभं देशः । कुंभसंबंधिनः समीपस्य देशः प्रदेश इत्यर्थः । सप्तम्यां तु (वा टाङ्योः ) इति विकल्पेन अम् । पक्षे ( अ इ ए) उपकुंभम् उपकुंभे । द्वौ इति रूपद्वयम् । कुंभस्य समीपे निधेहि स्थापयेत्यर्थः ॥

अवधारणार्थे यावति च ॥ अवधारणार्थे यावच्छब्दे प्रयुज्यमाने सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । यावंत्यमत्राणि संभवंति तावतो ब्राह्मणानामन्त्रयस्वेति यावदमत्रमामंत्रयस्व । मक्षिकाणामभावो वर्तत इति निर्मक्षिकं वने वर्तते ॥

पुनरव्ययीभावं वक्तव्यरूपया फक्किकया निरूपयति । न केवलम् अव्यये पूर्वपदे एवाव्ययीभावः । किंत्ववधारणार्थे यावच्छब्देपि पूर्वपदे सति अव्ययीभावः अवधारणार्थे परिमाणे यावच्छब्दः ततोऽवधारणेऽर्थे यावच्छदे पूर्वपदे प्रयुज्यमाने योन्वयो विग्रहः सोऽव्ययीभावसंज्ञकः समासो भवति । च शब्दादभावार्थेपि अव्ययपूर्वकत्वे अव्ययीभावः समासः इति समाससंज्ञायाम् यावत् १–३ ( जश्शसोः० । नुमय० । नश्चा० )स्व० । अग्रे अमत्र १–३ ( जश्शसो० । नुम० । नोप० । ष्णर्नो० ) स्व० । यावंति यावत्संख्याकान्यमत्राणि पात्राणि भाजनानि संभवंति तावतस्तावत्संख्याकान् ब्राह्मणान् आमंत्रयस्व भोजनार्थं निमंत्रयस्वेति विग्रहं कृत्वा पदद्वयेऽपि ( समासप्रत्यययोः ) इति विभक्तिलोपः । यावत् अमत्र इति स्थिते ब्राह्मणानित्यत्र विशेषस्य द्वितीयाबहुवचनांतत्वात् द्वितीयाबहुवचनं शस् ( अतोऽमनतः ) इति शसः अम्–आदेशः ( अम्शः० । चपा० ) तस्य दः । यावदमत्रमिति पात्रसंख्यया ब्राह्मणानामंत्रयस्वेत्यर्थः । तथा मक्षिका ६–३ ( नुडामः । ष्णर्नो० ) स्व० । मक्षिकाणाममावः इति विग्रहे अभावार्थे पूर्वं निरः प्रयोगः । अत्राभावेपि अव्ययीभावसमासः ( समासप्रत्यययोः ) इति षष्ठीलोपः । नामसंज्ञाया स्यादिः १–१ अव्ययीभावस्य नपुंसकलिंगत्वात् ( नपुंसकस्य० ) इति ह्रस्वत्वम् ( अतोऽमनतः ) इति सेरम् ( अम्शः० । मोनु० ) निर्मक्षिकं वर्तते । अग्रे निर्मक्षिकं पश्य निर्मक्षिकं कृतमित्यादीनि द्वितीयादिपदोदाहरणानि ज्ञेयानि ॥ ॥ इत्यव्ययीभावः समासः ॥

अमादौ तत्पुरुषः ॥ द्वितीयायंते पूर्वपदे सति योन्वयः स तत्पुरुषसंज्ञकः समासो भवति । ग्रामं प्राप्तो ग्रामप्राप्तः । दात्रेण च्छिन्नं दात्रच्छिन्नम् । यूपाय दारु यूपदारु । वृकेभ्यो भयं वृकभयम् । राज्ञः पुरुषो

राजपुरुषः । अक्षेषु शौंडः अक्षशौंडः ॥ [ क्वचिदमाद्यंतस्य परत्वम् ] आहिताग्निः । भूतपूर्वः ॥

अथ तत्पुरुषसमासमाह । सूत्रम् ( अमादौ० ) इति । अम् आदिर्यस्याः सा अमादिः तस्या अमादौ ७-१ ( ङेरौ० ) ङित्वाट्टिलोपः । अग्रे तत्पुरुषः १-१ ( स्रो० ) अमादावित्यत्र जातावेकवचनम् । तेन अमाद्या द्वितीयाद्याः सप्तमीपर्यंताः षड्विभक्तयो ग्राह्या इति । यस्य पदस्यांते द्वितीयाद्या विभक्तयो भवंति तस्मिन्पदे पूर्वपदे सति योन्वयो विग्रहः स तत्पुरुषसंज्ञकः समासो भवति । अत्रान्वयशब्देनान्वयप्रतिपादको विग्रहो ग्राह्यः । तत्र प्रथमं द्वितीयांतस्य पूर्वपदस्योदाहरणम् । ग्राम २-१ अम् ( अम्शसो० । मोनु० ) प्राप्त १-१ ( स्रो० ) ग्रामं प्राप्त इति द्वितीयांते पूर्वपदे तत्पुरुषः ( समासप्रत्यययोः ) अमुस्योर्लोपः । नामसंज्ञायाम् । १-१ ( स्रो० ) ग्रामप्राप्तः इति सिद्धम् । अत्र द्वितीयातत्पुरुषः । दात्रशब्दात् साधने तृतीया ३-१ ( टे न । अ इ ए । ष्ठर्नो० ) छिन्न १-१ ( अतोम् । अम्शसोरस्य । मोनु० ) दात्रेण छिन्नमिति । साधने तृतीयांते पूर्वपदे तत्पुरुषः । पूर्ववद्विभक्तिलोपः । पुनरपि नामसंज्ञायां स्यादिः १-१ ( अतोऽम् । अम्श० । दात्रेण च्छिन्नमिति दात्राच्छिन्नं क्षेत्रम् इति । अत्र तृतीयातत्पुरुषः । एवं यूपाय यज्ञस्तंभाय दारु काष्ठं यूप ४-१ ( ङे अक् । ए अय् । सवर्णे० ) स्वर० । तादर्थ्ये चतुर्थी यूपाय दारु यूपदारु काष्ठं १-१ ( नपुंसकात्स्य० ) इति लुक् । ( समासप्रत्यययोः ) इति विभक्तिलोपः । अत्र चतुर्थीतत्पुरुषः । वृक ५-३ भ्यस् ( ए स्मि बहुत्वे ) भय १-१ ( अतोम् ) भयहेतौ पंचमी इति ५-३ । वृकेभ्यो भयमिति विग्रहे ( समासप्रत्यययोः ) इति विभक्तिलोपादि पूर्ववत् । ततस्तत्पुरुषस्य परपदप्रधानत्वात् । भयशब्दः क्लीबलिंगः १-१ ( अतोऽम् । अम्श० । ) अत्र पंचमीतत्पुरुषः । तथा राज्ञः पुरुष इत्यत्र राजन्शब्दात् संबंधे षष्ठी । राजन् ६-१ ( अल्लोपः० ) स्वर० । ( स्तोः श्चुभिः श्चुः ) जज्ञोर्ज्ञः । स्व० । अग्रे पुरुषः १-१ ( स्रो० ) राज्ञः पुरुष इति विग्रहे ( समासप्रत्यययोः ) इति विभक्तेर्लोपः । ( नाम्नो नो लोपशधौ ) इति राजन् इत्यत्र नकारलोपः । ततो नामसंज्ञायां स्यादिः १-१ ( स्रो० ) अत्र षष्ठीतत्पुरुषः । अक्ष ७-३ सुप् ( ए स्मि० । किला० ) अग्रे शौंडः १-१ ( स्रो० ) अक्षेषु पाशकेषु शौंडश्चतुरः । अत्र विषयार्थे सप्तमी ( समासप्रत्यययोः ) १-१ ( स्रो० ) अक्षशौंड इति सिद्धम् । सांप्रतं विशेषमाह ( क्वचिदमाद्यन्तस्य ) इति । तत्पुरुषसमासे वर्तमानस्य द्वितीयादिविभक्त्यंतस्य प्रथमांतस्य च पूर्वपदस्य परत्वमिति उत्तरपदत्वम् अग्रेवर्तित्वं भवति क्वचित्प्रयोगांतरे नतु सर्वत्रेत्यर्थः । उदाहरणमाह । अग्निपदात् ७-१ ( टेरौ० ) ङित्वाट्टिलोपः । स्व० । आहितः १-१ ( स्रो० ) अग्नौ आहित इति विग्रहे तत्पुरुषसमासे विभक्तिलोपे कृते अग्निपदमाहितपदस्याग्रे प्रयुज्यते ( सवर्णे० । स्रो० ) आहिताग्निरिति

स्मिन्विषये तत्पर इत्यर्थः। एवं पूर्वस्मिन्काले भूत इति विग्रहे सप्तमीप्रथमयोर्लोपे ( क्वचिदमाद्यंतस्य परत्वम् ) इति भूत इति पदस्याग्रे पूर्व इति पदं लिख्यते १-१ ( स्रो० ) भूतपूर्व इति सिध्यति। क्वचिदित्युक्तत्वात् अग्न्याहित इत्यपि भवति॥

[ समासे क्वचिदैकपद्यं णत्वहेतुः ।] शरवणम् । आम्रवणम् । त्रिणयनः । [ पानस्य वा ] सुराणां पानं सुरापाणं–सुरापानम् ॥

अथ समासे पुनः ऐकपद्यस्य कार्यांतरमाह। ( समासे क्वचिदैकपद्यं णत्वहेतुः ) समासविषये क्वचित्प्रयोगे पूर्वपदस्थात् षकाररेफऋवर्णरूपान्निमित्तादुत्तरपदस्थनकारस्य णत्वकरणे ऐकपद्यं हेतुः कारणं भवतीत्यर्थः। यथा आम्राणां वनम् आम्रवणम् शराणां वनं शरवणमित्युभयत्रापि षष्ठीतत्पुरुषसमासः। ( समासप्रत्यययोः ) इति विभक्तेर्लोपः। एकपदत्वे ( ष्ऋर्नो० ) इति पूर्वपदस्थात् व्यवहितरेफान्निमित्तादुत्तरपदवनसंबंधिनोपि नस्य णत्वम् १-१ ( अतोऽम् । अम्श० ) अत्र णत्वसंभवः। एवं शरवणम्। प्लक्षवणम्। खदिरवणम्। तथा त्रीणि नयनानि यस्य स त्रिनयन इत्यत्र क्वचिदिति कथनादेकपदेपि न णत्वम्। केचित्तु त्रिणयनः। अत्रापि विकल्पेन णत्वमिच्छंति णत्वप्रसंगाद्बहुव्रीहेरुदाहरणमिदम्। ( पानस्य वा ) इति। पानसंबंधिनो नकारस्य वा णत्व भवति। सुरायाः पानं सुरापाणं–सुरापानम् इति विकल्पेन णत्वम्। एवं क्षीरपानं–क्षीरपाणम्। क्वचिदिति शब्दप्रयोगानुसारेण णत्वे नित्यत्वं विकल्पोऽपवादश्च ज्ञेयः। प्रवणम्। अंतर्वणम्। पूर्वाह्णः। अपराह्णः। खुरणाः। खुरणसः शूर्पणखा। इत्यादौ नित्यं णत्वम्। दूर्वावनं–दूर्वावणम्। गिरिनदी–गिरिणदी। चक्रनितंबा–चक्रणितंबा। इत्यादौ विकल्पेन णत्वम्। इंद्रवाहना हरिभामिनी प्रियपूना परिपक्वानि। इत्यादौ ऐकपद्यात्प्राप्तस्यापि णत्वस्याऽपवादः। एवं लौकिकप्रयोगवशाज्ज्ञेयम् ॥

नञ् ॥ नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति। न ब्राह्मणोऽब्राह्मणः॥ ना॥ समासे सति नञोकारादेशो भवति नाकादिवर्जम् ॥

अथ पुनस्तत्पुरुषं सूत्रेणाह। सूत्रम्। नञ् ७-१ स्व०। एकपदमिदं सूत्रम्। यत्र नञ् इति निषेधवाचकमव्ययं पूर्वपदं भवति स नाम्नामन्वयो विग्रहस्तत्पुरुषः समासो भवति। न १-१ ( अव्य० ) सिलोपः। ब्राह्मण १-१ ( स्रो० ) न ब्राह्मण इति स्थिते। सूत्रम्। न ६-१ ( अव्य० ) अग्रे। अ १-१। सांके०। पश्चात् ( संयोगां०। सवर्णे दीर्घः सह ) ना इति सिद्धं द्विपदं सूत्रम्। समासे सति नञः अकारादेशो भवति तत्रापि नाकादीन्वर्जयित्वा। नास्ति अकं दुखं यस्मिन् स नाकः नागः नमुचिः नरवं नक्षत्रं नपुंसक नकुलः नगः नक्रः नभ्राट् नागत्यः नाराचः नाचिकेतः नापितः नमेरुः ननांदा नमस्वान् नारंगः नास्तिकः

नग्नः नभागः नपान्नवेदा नातिविस्तरा इत्यादयः शब्दा नाकादौ द्रष्टव्याः । एषु नञोऽकारादेशो न भवति । अनेन नकारस्याकारः । अब्राह्मण १-१ ( स्त्रो० ) अब्राह्मणः । ब्राह्मणादन्य इत्यर्थः ॥

**अन्स्वरे ॥** समासे सति नञोऽनादेशो भवति स्वरे परे । अश्वादन्योऽनश्वः । धर्माद्विरुद्धः अधर्मः । ग्रहणाभावः अग्रहणम् । तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते ॥

सूत्रम् । अन् १-१ ( हसे० ) स्वर० ७-१ । ( अ इ ए ) समासे कृते सति नञ् इत्यस्याव्ययस्य अन्यविरुद्धाभाववाचिनः स्वरे परे अन्-आदेशो भवति । अत्रापि नाकादिवर्जमिति योज्यम् । तदुदाहरणमाह । अश्व ५-१ ( ङसिरत् । सवर्णे० ) अन्य १-१ ( स्त्रो० ) धर्म ५-१ ( ङसिरत् । सवर्णे० ) विरुद्ध १-१ ( स्त्रो० ) ग्रहण ६-१ ( ङस्स्य ) अभाव १-१ ( स्त्रो० ) अश्वादन्यः धर्माद्विरुद्धः ग्रहणस्याभाव इति विग्रहत्रयम् । त्रिष्वपि पूर्वं नञ्प्रयोगः । उक्तार्थानामप्रयोग इति अन्यविरुद्धाभावानां लोपः ( समासप्रत्यययोः ) इति पंचमीषष्ठीलोपः अश्वशब्दे परे स्वरपरत्वात् ( अन् स्वरे ) इति नञोऽनादेशः । स्त्र० । शेषोदाहरणद्वये प्राक् स्वरत्वाभावे ( ना ) इति सूत्रेण नञः केवलोऽकारादेशः १-१ सर्वत्र उदाहरणद्वयं पुँल्लिंगे तृतीयं नपुंसकेष्वर्थेषु नञ् प्रयुज्यत इत्याह ( तदन्य० ) इति । तस्मादन्यस्तदन्यः। तस्माद्विरुद्धस्तद्विरुद्धः । तस्याभावस्तदभावः।एषु अर्थेषु नञ् प्रवर्तते । नञ्शब्दः पूर्वं प्रयुज्यत इति भावः । तदन्य इति अश्वादन्यः । तद्विरुद्ध इति धर्माद्विरुद्धः । तदभाव इति ग्रहणस्याभावः । एष्वर्थेषु उपसर्गरूपो नञ् भवति । तस्मिन्नपि पूर्वपदे तत्पुरुषसमासो भवतीत्यर्थः ॥ ॥ इति तत्पुरुषः ॥

**चार्थे द्वंद्वः ॥** समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । यत्रेश्वरं गुरुं च भजस्वेति प्रत्येकमेकक्रियासंबंधे समुच्चये समासो नास्ति। बटो भिक्षामट गां चानयेति क्रमेण क्रियाद्वयसंबंधेन्वाचये च समासो नास्ति । परस्परमसंबंधात् । इतरेतरयोगे समाहारे च चार्थे द्वंद्वः समासो भवति ॥

सांप्रतं द्वंद्वसमासो निरूप्यते । ( चार्थे द्वंद्वः ) चस्य अर्थश्चार्थः तस्मिन् ७-१ ( अ इ ए ) द्वंद्वः १-१ ( स्त्रो० ) द्विपदमिदं सूत्रम् । अथतत्सूत्रं व्याचिख्यासुश्चार्थान् चार्थेषु समाससंभवासंभवं चाह । समुच्चयः १ अन्वाचयः २ इतरेतरयोगः ३ समाहार ४ श्चेति चत्वारश्चार्थाः । तत्र कर्मद्वयस्य एकक्रियानिष्ठत्वं समुच्चयः १ कर्मद्वयेऽपि प्रत्येकं क्रियाद्वयेन संबंधोऽन्वाचयः २ पदद्वयेन संबंधो नास्तीति दर्शयति । तत्र ईश्वरं गुरुं च भजस्वेत्यत्र कर्मद्वयस्यैकक्रियानिष्ठत्वे समुच्चये समासो

नास्ति । अत्र चकारो भजनक्रियाया ईश्वरेण गुरुणा च संबंधं द्योतयति । इति एकक्रियाभिसंबंधश्चार्थस्तस्मिन् । तथा हे वटो भिक्षामट गां चानयेति अटनक्रियाया भिक्षा कर्म । आनयनक्रियायाः गौः कर्म । अत्र चकारः एकस्य वटोः आनयने च क्रियाद्वये संबंधं द्योतयति । एवमेकस्य कर्तुः कर्मद्वयसंबंधेऽन्वाचये च चार्थे समासो नास्ति । कुतः परस्परमसंबंधात् । अन्वययोग्यत्वाऽभावात् । नाम्नामन्वययोग्यतायामेव समासविधानात् । अत्र क्रियानिरोधात् नाम्नां परस्परसंबंधाभावात् समासो नास्तीत्यर्थः । यतः ईश्वरस्य गुरोश्च युगपद्भजनेऽसंबंधः। तथान्वाचये भिक्षाटनस्य गवामानयनस्य च परस्परमसंबंधात् समासो नास्ति इतरेतरयोगे समाहार च चार्थे संबंधसंभवात् द्वंद्वः समासो भवति । अन्योन्यं सापेक्षं द्वयोर्योगः एकक्रियाभिसंबंधः स इतरेतरयोगः बहूनां समुदायः समाहारः ॥

[ द्वंद्वेऽल्पस्वरप्रधानेकारोकारांतानां पूर्वनिपातो वक्तव्यः । ] पटुश्च गुप्तश्च पटुगुप्तौ । उक्तार्थानामप्रयोगः । अग्निश्च मारुतश्च अग्निमारुतौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । धवश्च खदिरश्च धवखदिरौ । स्त्री च पुरुषश्च स्त्रीपुरुषौ ॥

अथ द्वंद्वसमासे पदानां समानत्वात् कः शब्दः पूर्वं प्रयोज्यः कः पश्चात् प्रयोज्य इत्याशंक्याह ॥ [ द्वंद्वेऽल्पस्वर० ] इति । द्वंद्वे द्वंद्वसमासे अस्वावादितरेतरयोगे यदल्पस्वरं पदं समस्वरं वा पदं समस्वरे वा यत्प्रधानं पदं तथा इकारांतम् उकारांतं यत्पदं भवति तस्य पूर्वनिपातः प्राक्प्रयोगः कर्तव्यः । परं बहुष्वनियमः । अथ उकारांतोदाहरणमाह । पटु १-१ ( सो० ) च १-१ ( अव्य० । विसर्ज० । स्तोः श्चु० ) गुप्त १-१ ( सो० ) च १-१ ( अव्य० । विसर्ज० । स्तोः० ) पटुश्च गुप्तश्चेत्यत्र समस्वरत्वेपि उकारांतस्य पूर्वनिपातः ( समासप्र० ) इति प्रथमायाः सिलोपः । ततः उक्तार्थानामप्रयोगः उक्ता अर्था यैस्ते उक्तार्थाश्चकारादयस्तेषामप्रयोगोऽभावो लोप इत्यर्थः । इति चकारलोपः । पटुगुप्त इति स्यित्रे नामसंज्ञायां स्यादिः । इतरेतरयोगात् प्रथमाद्विवचनम् ( ओ औ औं ) पटुगुप्तौ कार्यं कुरुत इत्युक्तौ पटुः सहायो गुप्तस्य गुप्तः सहायः पटोरिति गम्यते इत्यन्योन्यापेक्षास्ति । एकस्याभावे तन्न क्रियते । एवमन्यत्रापि ज्ञेयम् । पटुगुप्तौ इत्यत्र पटुशब्दस्य उकारांतत्वात्पूर्वनिपातः । परं गुप्तपटुः इति न भवति एवमेव अग्निश्च मारुतश्चेति अग्निशब्दस्याल्पस्वरत्वादिकारांतत्वात्पूर्वं प्रयोगः पूर्ववद्विभक्तेश्चकारस्य च लोपः । ततः १-२ ( ओ औ औं ) तथा भोक्तृ १-१ ( स्तुरार् ) भोक्ता । यदादेशस्तद्वद्भवति इति न्यायात् ( सेरा ) ङित्त्वाट्टिलोपः । इत्याट्लोपः । स्व० । च १-१ ( अव्य० ) भोग्य १-१ ( सो० ) च १-१ ( अव्य० ) पश्चात ( विसर्ज० । स्तोः श्चु० ) भोक्ता च भोग्यश्चेति विग्रहे भोक्तुः प्रधान-

भूतत्वाद्भोक्तृशब्दस्य प्रथमं प्रयोगः । । भोक्ता पुरुषः । भोग्यः विषयादिः । भोक्तृ भोग्यस्य स्वामित्वात् प्रधानत्वम् । ततः प्राग्वद्विभक्त्यादिलोपः । भोक्तृभोग्य १-२ ( ओ औ औ ) एवं धवश्च खदिरश्च धवखदिरौ । इत्यत्र धवशब्दस्याल्पस्वरत्वात्प्रथमं प्रयोगः । स्त्री च पुरुषश्च स्त्रीपुरुषौ । अत्र पुरुषस्य प्रधानत्वेपि अल्पस्वरत्वात्स्त्रीशब्दस्य पूर्वनिपातः ॥

[ देवताद्वंद्वे-पूर्वपदस्य वा दीर्घो वक्तव्यः ] अग्नीषोमौ । इंद्राबृहस्पती [ अग्न्यादेः सोमादीनां षत्वं वक्तव्यम् । ]

" यत्र द्वित्वं बहुत्वं च स द्वंद्व इतरेतरः ।
समाहारः स विज्ञेयो यत्रैकत्वं नपुंसकम् " ॥ १ ॥

[ इतरेतरयोगे द्विवचनं च एकवद्भावो वा समाहारे वक्तव्यः ] शशाश्च कुशाश्च पलाशाश्च शशकुशपलाशाः-शशकुशपलाशम् । [अन्यादीनां विभक्तिलोपे कृते पूर्वस्य सगागमो वक्तव्यः ] अन्यश्च अन्यश्च अन्योन्यम् । परश्च परश्च परस्परम् ॥

अथ द्वंद्व एव विशेषमाह [ देवताद्वंद्वे० ] इति । देवतावाचकशब्दभवे द्वंद्वे समासे पूर्वपदसंबंधिनोऽन्त्यस्वरस्य वा दीर्घो वक्तव्यः । इति वाग्रहणात्प्रयोगांतरे न भवत्यपि । अथ देवतार्थोदाहरणमाह । अग्निश्च सोमश्चेति विग्रहे विभक्तिलोपे उक्तार्थानामप्रयोगे च अग्निसोम इति स्थिते देवताद्वंद्वे इति अग्निशब्दस्य इस्वरस्य दीर्घ ईकारः । द्वयोरपि देवत्वात् । अग्नीसोम इति स्थिते [ अग्न्यादेः सोमादीनां० ] इत्यादि । अग्न्यादेर्दीर्घाणामंत्यात्परेषां सोमादीनामाद्यसकारस्य षकारो भवति । ( किला० ) इत्यस्य सूत्रस्य न प्राप्तिः । सकारस्य अकृतत्वात् ॥ अग्नीसोम १-२ ( औ औ औ ) अग्नीषोमौ इति सिद्धम् । अत्र इकारांतस्य पूर्वत्वम् अग्न्यादेरित्यादिशब्दात् अग्निष्टोमः अग्निष्टुत् ज्योतिष्टोमः अयष्टोमः अंगुलिषंगः भीरुष्ठानं मातृष्वसा पितृष्वसा इत्यादौ षत्वम् । एवम् इंद्रश्च बृहस्पतिश्चेत्यत्र इंद्रशब्दस्याल्पस्वरत्वात् पूर्वनिपातः । विभक्तिलोपे उक्तार्थानामप्रयोगे च देवताद्वंद्वे इति इंद्रस्य दीर्घः । १-२ (औ यू ) इतीकारः (सवर्णे०) इंद्राबृहस्पती । एवं सूर्याचंद्रमसौ मित्रावरुणौ । उदाहरणान्युक्त्वा अग्न्यादेरिति वक्तव्यं दृश्यते तच्च प्रागेव व्याख्यातम् । सांप्रतमितरेतरयोगद्वंद्वस्य वचननियममाह। इतरेतरयोगे द्विवचनमिति । इतरेतरयोगे द्वन्द्वे द्विवचनं भवति पदद्वयात्मकत्वात् । लिंगनियमस्तु उभयपदप्रधानत्वेपि उत्तरपदलिंगप्रयोगो भवति । सांप्रतं समाहारद्वंद्वविशेषमाह [एकवद्भावो वा समाहारे वक्तव्यः ] समाहारे द्वंद्वे पदानां समासे कृते एकवद्भाव एकवचनं वा भवति।पक्षे बहुवचनं भवति। [एकवद्भावो

वा समाहारे वक्तव्यः ] इत्यत्र समुदायार्थप्राधान्यविवक्षायामेकवचनम् । अवयवार्थ-प्राधान्यविवक्षायां पक्षे बहुवचनमपि भवति । वाग्रहणात् एकमिव एकवत् एकवचनं तस्य भावः । पक्षे पदानां समाहारत्वात् । बहुत्वाद्बहुवचनमपि निपातानामनेकार्थत्वात् । वाग्रहणादेव कचिदितरेतरयोगेप्येकवद्भावो भवतीति विशेषः । द्वित्वमतंत्रमिति वचनाद्वा । समाहारोदाहरणं यथा । शश १-३ ( सव० । स्रो० ) च १-१ (अव्य० ) एवं कुश १-३ ( सव० । स्रो० ) च १-१ ( अव्य० ) पलाश १-३ ( सव० । स्रो० ) च १-१ ( अव्य० ) शशाश्च कुशाश्च पलाशाश्च इति विग्रहे अत्र पदद्वयाधिकपदात्मकत्वात्समाहारद्वंद्वः ( समासप्रत्यययोः ) इति विभक्तिलोपे उक्तार्थानां च प्रयोगे शशकुशपलाशस्थाने एकत्र समाहारबहुत्वम् १-३ । पलाशशब्दस्य वृक्षवाचित्वात् । पुंल्लिंगत्वम् १-३ ( सवर्णे० । स्रो० ) द्वितीयरूपे ( एकवद्भावो वा ) इत्येकवचनम् १-१ । सत्यपि पुंस्त्वे (एकत्वे द्विगुद्वन्द्वौ) इति वक्ष्यमाणसूत्रेण क्लीबलिंगता ( अतोऽम् । अम्शसोः० । ) साम्प्रतम् इतरेतरयोगेपि एकवद्भावोदाहरणमाह । अन्यश्च अन्यश्च इति विग्रहे तथा परश्च परश्चेति विग्रहे ( समासप्रत्यययोः ) इति उभयत्रापि विभक्तिलोपे उक्तार्थानां चाप्रयोगे अन्यअन्य इति परपर इति स्थिते सति अन्यादीनां शब्दानां समासे वर्त्तमानानां पूर्वपदवर्तिनां सगागम इति सकार आगमो वक्तव्य इति आदिभूतयोरन्यपरशब्दयोः सगागमः कित्वादंते । अन्यस् इति स्थिते ( स्रो० । अतोत्युः । उ ओ । पदो० ) अन्योन्य १-१ ( अतोऽम् ) अत्र पदांतताश्रयणीया ( स्रो० । पदो० ) तयोः अप्रधानभूतत्वात् ( इत्वन्यादेः ) इत्यपि न भवति । अन्योन्य इति सिद्धम् । पर अग्रे पर मध्ये सकारागमः । स्व० । परस्पर इत्यत्र वाचस्पत्यादित्वान्न विसर्गोपध्मानीयकार्यम् ( स्व० ) परस्परम् । उभयत्रापि पूर्वोक्तवाशब्देन एकवद्भाव इति १-१ ( एकत्वे द्विगुद्वंद्वौ ) इति क्लीबत्वात् ( अतोऽम्० । अम्श० । मोनु० ) अन्योन्यं परस्परमिति सिद्धम् । एवमादिशब्देन हरिश्चन्द्रादीन्युदाहरणानि । अन्योन्यादयः सहादिमध्ये पठिता इत्यनेन तेषाम् एकशेषो नेष्यते । केचित्तु अन्योन्यमित्यत्र अन्यश्च अन्यश्चेत्येकशेषात्समासं नेच्छंति किंतु ( कर्मव्यतिहारेऽन्यादीनां द्वित्वं वक्तव्यं समासवच्च बहुलम् ) तत्र पूर्वपदे प्रथमैकवचनम् उत्तरपदे द्वितीयैकवचनम् इति । अन्योन्यं परस्परं नमंति साधवः । क्षेमेंद्राचार्यस्तु ( अन्यादीनां विभक्तिलोपे सक् कर्मव्यतिहारे वक्तव्यः ) कर्मव्यतिहाराभावे तु अन्यश्च अन्यश्च अन्यौ इत्येकशेषसमासः इति व्याख्याति । प्रक्रियाकौमुद्यां तु कर्मव्यतिहारे सर्वनाम्नो द्वे स्तः समासवच्च बहुलम् । यदा तु समासवत्तदा प्रथमैकवचनं पूर्वपदस्य द्वितीयाद्येकवचनांतत्वं परपदस्य । अन्योन्यं विप्रा नमंति अन्योन्येन कृतं अन्योन्यस्मै ददाति अन्योन्यस्मात् गृह्णांति अन्योन्यस्य अन्योन्यस्मिन् । एवं परस्परम् ॥

**एकत्वे द्विगुद्वंद्वौ॥** एकत्वे वर्तमानौ द्विगुद्वंद्वौ नपुंसकलिंगौ भवतः॥

सांप्रतं लिंगविशेषमाह॥( एकत्वे० )इत्यादि सूत्रम्॥ एकस्य भावः एकत्वं तस्मिन् ७-१ ( अ इ ए ) द्विगुश्च द्वंद्वश्च द्विगुद्वंद्वौ १-२ ( ओ औ औ ) द्विपदं सूत्रम्। एकत्वे इति। एकवचने वर्तमानौ द्विगुद्वंद्वसमासौ नपुंसकलिंगौ भवतः। तत्र द्विगुसमासे नित्यमेकत्वमेव। तत्र आकारांतान्नित्यमीप्प्रत्ययस्तत्र स्त्रीलिंगत्वमेव। अकारांतवर्जितानां तु नपुंसकलिंगत्वमेव। द्वंद्वे तु इतरेतरयोगे द्विवचनमेव। पक्षे कुत्रचिदेकवचनमपि। तत्र यत्रैकवचनं तत्र नपुंसकलिंगमेव। द्विवचनं बहुवचनं तु यथासंभवं त्रिष्वपि लिंगेषु भवतीति भावः॥

**संख्यापूर्वो द्विगुः॥** संख्यापूर्वः समासो द्विगुर्निगद्यते। **समाहारेऽत ईप् द्विगुः॥** समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारांतादीप्प्रत्ययो भवति। दशानां ग्रामाणां समाहारो दशग्रामी। अकारान्तो द्विगुः स्त्रियां भाष्यते। पंचाग्नयः समाहृता इति पंचाग्नि। पचानां गवां समाहारः पंचगु। नपुंसकत्वाद्ध्रस्वत्वम्। त्रिफलेति रूढितः।

द्वंद्वस्यैकत्वे नपुंसकत्वं पूर्वं दर्शितम्। अथ क्रमाभावेपि प्रस्तुतत्वाद्द्विगुलक्षणमाह। सूत्रम्। ( संख्यापूर्वः० ) संख्या द्वित्रिचतुरादिका पूर्वा पूर्वपदवर्तिनी यस्य स संख्यापूर्वः १-१ ( सो० ) द्विगुः १-१ ( सो० ) संख्यावाची शब्दो यत्र पूर्वपदे भवति अग्रे समाहारवाचकत्वं च भवति स द्विगुरिति समासो भवति। तदेव सूत्रेणाह। सूत्रम्। ( समाहारेऽत ईप् द्विगुः ) समाहार ७-१ ( अ इ ए ) अत् ५-१। स्व०। ( सो०। एदो० ) अतः अग्रे ईप् १-१। पश्चात् ( आदवे० ) अग्रे द्विगुः १-१ ( सो० ) चतुष्पदमिदं सूत्रम्। समाहारेर्थे एकत्र करणेर्थे द्विगुः समासो भवति। यत्र पूर्वपदे संख्यावाचि पदं भवति तच्च समाहारार्थवाचकमेकीकरणार्थसूचकं च पदं भवति। स द्विगुः समास इत्यर्थः। तत इति तस्माद्द्विगुसमासात् आकारांतात् ईप्प्रत्ययो भवति पात्रादिवर्जम्।यद्यपि द्विगुसमासस्य प्राक् क्लीबलिंगत्वं प्रतिपादितं तथापि आकारांतात्परत ईप्प्रत्यये कृते स्त्रीत्वमेव। तत्र हि अदंतवर्जितानां क्लीबलिंगता। उदा०। दशन् ६-३ ( ष्णः ) इति नुडागमः।दशन् नाम् (नोपधायाः)इति शकारस्याकारस्य दीर्घः ( नाम्नो० ) स्व०। ( मोनु० )ग्राम ६-३ ( नुडामः। नामि ) इति दीर्घः( ष्नुर्नो०। मोनु० ) दशानां ग्रामाणां समाहार इति विग्रहे अत्र दश इति संख्यापूर्वपदं समाहारवाचकम्। अतो द्विगुसमाससंज्ञायामुभयत्रापि ( समासप्रत्यय-

योः ) इति आमो लोपः । दशन् ग्राम इति स्थिते ततः अकारांतत्वादीप् ( यस्य लोपः ) स्व० । दशग्रामी १-१ ( हसे० ) एवं त्रिलोकी पंचमूली । पंचन् १-३ जश्शसोर्लुक् । ( नाम्नो० ) अग्नि १-३ ( ए ओ जसि । ए अय् ) स्व० ( स्रो० ) पंचाग्नयः समाहृता एकत्र कृता इति विग्रहे विभक्तिलोपे ( नाम्नो० । सवर्णे० ) पचाग्नि । अत्र अदंतत्वाभावान्न ईप् । ततः समाहारस्यैकत्वात् ( एकत्वे द्विगुद्वंद्वौ ) इति वा क्लीबत्वे १-१ ( नपुंसकात्स्यमोर्लुक् ) पञ्चाग्नि इति सिद्धम् । तथा पंचानां गवां समाहार इति विग्रहे ( समासप्रत्यययोः)इति उभयत्रापि आमो लोपः । पंचन् गो १-१ ( नाम्नो० । नपुंसकस्य० ) इति ह्रस्वः । ओकारस्य उकारः ( ह्रस्वादेशे सन्ध्यक्ष० । नपुंसकात्स्यमो० ) अत्राप्यकारांतवर्जितत्वान्नेप् । पंचगु इति सिद्धम् । त्रि ६-३ ( नुडामः । त्रेरयङ् । ष्णनों० ) स्व० । ( मोनु० ) फल ६-३ (नुडामः । नामिनः० । मोनु० ) अग्रे समाहार इति पदम् । त्रयाणां फलानां समाहारः इति विग्रहे ( समासप्रत्यय० ) उक्तार्थानां० । ( आवतः स्त्रि० । आपः ) त्रिफला । ननु त्रिफला इत्यत्र संख्यापूर्वकत्वेपि द्विगुसमासे फलशब्दस्य अकारांतादीप्प्रत्ययः किं न क्रियते इत्याशंकायामाह । त्रिफला इति पदं रूढितो लोकप्रसिद्धितः सिद्धम् । "लक्षणेनोपपन्नस्य प्रयोगस्य कथंचन ॥ बहुशिष्टादृतत्वं हि रूढिरित्यभिधीयते" ॥ न तु नियतलक्षणोपपन्नम् इति । द्विगुसमासस्य । पात्रादिवर्जितत्वात् पंचानां पात्राणां समाहारः पंचपात्रम् । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । एवं चतुर्युगं चतुष्पथम् इत्यादावकारांतत्वेऽपि ईप् न भवति । त्रिलोकं त्रिलोकी । अत्र विकल्पेन ईप् ॥ इति द्विगुसमासः ॥ ॥

बहुव्रीहिरन्यार्थे ॥ अन्यपदार्थप्रधानो यः समासः स बहुव्रीहिसंज्ञको भवति । बहु धनं यस्य स बहुधनः । अस्ति धनं यस्य सः अस्तिधनः तस्य प्रधानस्यैकदेशो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानः । लंबौ कर्णौ यस्य स लंबकर्णः ॥

साम्प्रतं बहुव्रीहिसमासं निरूपयति । सूत्रम् ( बहुव्रीहिरन्यार्थे ) बहुव्रीहि १-१ (स्रो०) अन्यार्थे अन्यस्य अर्थः अन्यार्थस्तस्मिन् ७-१(अ इ ए)पश्चात्( नामिनो रः विसर्गः)इदं सूत्रम्-समासमध्यवर्तिपदापेक्षया अन्यपदस्यैव बाह्यपदस्यैवार्थः प्रधानो यस्य अर्थात् अन्यदेव पदं प्रधानं यत्र स बहुव्रीहिसंज्ञकः समासो भवति। बहु १-१(नपुंसका०) धन १-१ ( अतोम् । अम्शा० । मोनु० ) बहु प्रचुरं धनं यस्य इति विग्रहे अत्र समासस्थौ बहुधनशब्दौ ताभ्यां यस्येति पदम् अन्यत्पदं प्रधानं ततो बहुव्रीहिसमासः । समासंसंज्ञायामुभयत्रापि विभक्तिलोपः । यस्येत्यस्योक्तार्थानामप्रयोगः । बहु धन इति

स्थिते बहुव्रीहेर्वाच्यलिंगता । इति बहुव्रीहेरन्यपदप्रधानत्वात्परलिंगस्य नरशब्दस्य पुँल्लिंगत्वात् पुंस्त्वे १-१ ( स्रो० ) बहुधनः इति सिद्धम् । एवमस्तीत्येव धनं यस्य सोऽस्तिधनः । यदि वा अस्तीत्यव्ययं सत्तार्थवाचकम् ततोऽस्ति विद्यमानं धनं यस्येत्यस्तिधनः १-१ ( स्रो० ) अस्त्यर्थे बहुव्रीहिः । एवं तपोधनः । सधनः । द्वितीयार्थतान्यपदेषु प्रधानेषु बहुव्रीहिर्भवति यथा प्राप्तो राजा यं स प्राप्तराजा । ऊढा कन्या येन स ऊढकन्यः । दत्तं वस्त्रं यस्मै स दत्तवस्त्रः । उद्धृतः शल्यो यस्मात्तदुद्धृतशल्यं क्षतम् । वीतो गतो रागो यस्मात्स वीतरागः । धर्मिणो लोका यस्मिन्स धर्मिलोको ग्रामः । इत्यादि । इह बहुव्रीहिर्द्विधा । तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च बहुव्रीहिसमासः । तस्य लक्षणं ग्रन्थकार एवाह । तस्येति । तस्य प्रधानभूतस्य पुरुषादेः एकदेशोऽवयवभूता हस्तपादादयो यत्र विशेषणतया विशेषणत्वेन ज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः । तस्योदाहरणम् । लंबौ कर्णौ यस्य स लंबकर्ण इत्यत्र कर्ण इति नरस्य एकदेशः स एव समस्यमानविशेष्यभूतस्य नरादेर्विशेषणत्वेन ज्ञातोऽतस्तद्गुणसंविज्ञानो बहुव्रीहिः । चित्रा गावो यस्य स चित्रगुः । दीर्घकायः । अत्र कायस्य नरादेश्च ऐक्यत्वात् । एवं दीर्घग्रीवो महाभुज इत्यादयस्त्वतद्गुणसंविज्ञाने शब्दाः ॥

[ बहुव्रीहौ विशेषणसप्तम्यंतयोः पूर्वनिपातो वक्तव्यः ] चक्रपाणिः ॥

ननु लंबकर्ण इत्युदाहरणे लंब इत्यत्र अन्यपदार्थप्रधानत्वात्पदसाम्ये कर्ण इत्यत्र अन्यपदार्थप्रधानत्वात्पदसाम्ये कर्णलंब इति कथं न प्रयुज्यते इत्याह । ( बहुव्रीहौ० ) इति । बहुव्रीहिसमासे यद्विशेषणीभूतं पदं भवति यच्च सप्तम्यंतं पदं भवति एतयोः पदयोः पूर्वनिपातः प्रथमं प्रयोगो भवति । बहुव्रीहिरुपलक्षणत्वात्कर्मधारयेऽपि विशेषणस्यैव पूर्वनिपातो भवति । रक्तलतेत्यादौ संबंधं सत् व्यावर्तकं विशेषणम् । "विशेष्यं तु प्रधानं स्यात् स्वार्थस्यैव प्रकाशनात्" । यथा लंबकर्ण दीर्घग्रीव इत्यादि । सप्तम्यंतं तथा । ब्रह्मणि योनिरस्य स ब्रह्मयोनिः । अप्सु योनिरस्येत्यप्सुयोनिः । भाले लोचनं यस्य स भाललोचनः । भुवने कीर्तिर्यस्य स भुवनकीर्तिः । पद्मं नाभौ यस्य स पद्मनाभः ( टाडकाः ) इति क्रमत्ययः । चन्द्रमौलिः । शूलपाणिः । चक्रपाणिः । कपिध्वजः इत्यादौ सप्तम्यंतं पदम् ॥

[नञ्दुःसुभ्यः प्रजामेधयोरसुग्वक्तव्यः] अप्रजाः । सुप्रजाः । सुमेधाः । दुर्मेधाः । [ धर्मादन् ] सुष्ठु धर्मो यस्य स सुधर्मा । रूपवती भार्या यस्य स रूपवद्भार्यः ॥

सुष्ठु प्रजा यस्येति विग्रहे तथा दुष्टा मेधा यस्येति विग्रहे विभक्तिलोपः । सुप्रजा दुर्मेधा इति स्थिते ( नञ्दुःसुभ्यः प्रजामेधयोः० ) इति बहुव्रीहौ नञ्सुदुर्पूर्वयोः

प्रजामेधाशब्दयोरन्यार्थे वर्तमानयोः असुग् आगमो भवति । कित्त्वादंते । उकार उच्चारणार्थः । सुप्रजाः । सुप्रजसौ । सुप्रजसः । दुर्मेधाः । दुर्मेधसौ । दुर्मेधसः । एवम् अप्रजाः । अमेधाः । क्वचिदन्यत्रापि । मन्दमेधाः । अल्पमेधाः । तथा ( धर्मादन्) अन्यार्थे वर्तमानाद्धर्मशब्दादन् आगमो भवति । बहुव्रीहेरुदाहरणम् । सुष्ठु शोभनो धर्मो यस्येति विग्रहे सुधर्म इति स्थिते ततोऽनेन अन ( यस्य लोपः ) स्व० । १-१ ( नोपधायाः । इसे० । नाम्नो० ) सुधर्मा इति सिद्धम् । राजन्शब्दवत् । न वरम् । शसादौ मकारांतसंयुक्तत्वात् ( अल्लोपः स्वरे० ) इति न भवति ( धनुषश्च ) धनुःशब्दस्य अन् आदेशो भवति बहुव्रीहौ । शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा एवं पुष्पधन्वा । इत्यादि । रूपवती भार्या यस्य इति विग्रहे विभक्तिलोपेऽवशिष्टं रूपवतीभार्या इति ॥

**अन्यार्थे ॥** स्त्रीलिंगस्यान्यार्थे वर्तमानस्य परस्य ह्रस्वो भवति । **पुंवद्वा ॥** समासे सति समानाधिकरणे पूर्वस्य स्त्रीशब्दस्य पुंवद्वा भवति । पुंवद्भावादीपो निवृत्तिः॥वाग्रहणात् कल्याणीप्रिय इत्यादौ न भवति ।.कल्याणी प्रिया यस्यासौ कल्याणीप्रिय इति भवति ॥

सूत्रम् ( अन्यार्थे ) अन्यार्थे ७-१ ( अ इ प ) एकपदम् । स्त्रीलिंगस्य स्त्रीप्रत्ययांतस्य शब्दस्य अन्यार्थे परार्थे वर्तमानस्य ह्रस्वो भवति । उत्तरपदस्य इति शेषः । अन्यथा पूर्वपदे रूपवती इत्यादौ प्रसंगः । अतो भार्याशब्दस्य ह्रस्वः । रूपवतीभार्य इति स्थिते । सूत्रम् । पुंवत् १-१ ( अ०प० ) वा ३-१ ( अ०प० ) पश्चात ( चपा अने० ) तस्य दः । स्व० । द्विपदम् । समासे सति समानाधिकरणानाम् एकविभक्त्यंतानां विशेषणविशेष्यभावेन एकार्थनिष्ठत्वं समानाधिकरणत्वं तस्मिन् वर्तमानस्य पूर्वस्य पूर्वपदभूतस्य उक्तपुंस्कस्य स्त्रीलिंगस्य पुंवत् रूपं भवति । अनेन पुंवद्भावात् रूपवतीत्यत्र वर्तमानस्य ईपो निवृत्तिरतो रूपवद्भार्य इति स्थिते ( चपा अ० ) स्व० । १-१ ( स्रो० ) रूपवद्भार्यः इति सिद्धम् । न हि पुंवद्भावे केवलम् ईपो निवृत्तिः किंतु क्वचिदापोऽपि निवृत्तिः । शोभनभार्यः । दीर्घजंघः । रक्तलतेत्यादि । अयं वा शब्दो व्यवस्थितविकल्पं द्योतयतीत्याह । वा ग्रहणात् कल्याणीप्रिय इत्यादौ पुंवद्भावो न भवति । कल्याणी प्रिया यस्येति विग्रहे समानाधिकरणे उक्तपुंस्कस्य कल्याणीशब्दस्य न पुंवद्भावः । आदिशब्दात् वामोरूभार्यः पंचमीप्रिय इत्यादौ न पुंवद्भावः । मनोज्ञा सुभगा क्षांता चपला वामा वामना सचिवा श्यामा बाला तनया ब्राह्मणी दत्ता रसिका मैथिली इत्यादयः शब्दाः कल्याण्यादिषु ज्ञेयाः । तथा श्येन इवाचरतीति श्येनायते श्येनी इवाचरतीति श्येनायते । श्येनी इत्यत्र ईपो निवृत्तिः । श्येना इत्या-

दौ यङि। पंडितां मन्यते पंडितमानिनी। पट्व्या भावः पटुता पटुत्वम्। अल्पं देहि अल्पशः अल्पतरा अल्पतमा अनुकूलदेश्या अनुकूलदेशीया पंडिता पट्वी अल्पा अनुकूला इत्यादौ सर्वत्र पुंवद्भावः। प्रयोगानुसारेण पुंवद्भावो दर्शनीयः। अन्यार्थे वर्तमानस्येत्युक्तत्वात्। न केवलं बहुव्रीहाविति भावः। तेन ताशस्तरतमदेश्यदेशीयेषु प्रत्ययेषु परेष्वपि भवति। शुभ्राः रूप्या इत्यादौ न। वाग्रहणादेवेति ज्ञातव्यम्॥

गोः॥ गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति। पंच गावो यस्य स पंचगुः॥

सूत्रम्। गो ६-१ ( ङस्य ) इत्यकारलोपः ( स्रो० ) एकपदम्। अन्यार्थे परार्थे वर्तमानस्य सतः गोशब्दस्य ह्रस्वो भवति। गोशब्दस्य पुंस्त्रीलिंगत्वे विशेषसूचकमिदं सूत्रम्। पंचन् १-३ ( जश्शसोर्लुक् ) गो १-३ ( ओरौ। औ आव् ) स्व० ( स्रो०। नाम्नो० ) पंच गावो यस्य इति विग्रहे बहुव्रीहिसमासः ( समासप्रत्यययोः ) उभयत्रापि जस्लोपः। पंचन् गो इति स्थिते पूर्वं ( नाम्नो०। गोः ) इत्यनेन सूत्रेण ह्रस्वत्वे ओकारस्य उकारः १-१ ( स्रो० ) पंचगुरिति सिद्धम्॥

[संख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्याऽलोपो वक्तव्यः] सहस्रं पादाः यस्य स सहस्रपात्-सहस्रपाद्। शोभनौ पादौ यस्य स सुपात्। व्याघ्रस्य पादौ इव पादौ यस्य स व्याघ्रपात्। द्वौ पादौ यस्य स द्विपाद्। द्विपादौ। द्विपादः। द्विपादम्। द्विपादौ [ शसादौ स्वरे परे पदादेशश्च वक्तव्यः ] द्विपदः। द्विपदा। द्विपाद्भ्यामित्यादि॥

पुनर्विशेषमाह [संख्यासु०] इत्यादि। संख्या एकद्व्यादिका तद्वाचकः शब्दः तथा सु इत्यव्ययं शोभनार्थवाचकम्। व्याघ्रादयः शब्दा उपमार्थे मताः एते पूर्वे आदौ वर्तमानाः यस्य पादशब्दस्य तत्संबंधिनोऽकारस्य लोपो वक्तव्यः। बहुव्रीहौ सर्वविभक्तिषु परतः। सहस्र १-१ ( स्रो० ) ( अतोऽम्। अम्श० । मोनु० ) पाद १-३ ( सवर्णे०। स्रो० ) सहस्रं पादा यस्य इति विग्रहे शोभनौ १-२ पादौ १-२ यस्य सः। तथा व्याघ्र ६-१ ( टस्य ) पाद १-२ ( ओ औ औ ) इव १-१ ( अव्य० ) पाद १-२ ( ओ औ औ ) व्याघ्रस्य पादाविव पादौ यस्येति विग्रहे त्रयम्। सर्वत्रापि बहुव्रीहिसमासे ( समासप्र० ) इति विभक्तिलोपः। सहस्रपाद शोभनपाद व्याघ्रपाद इति स्थिते। द्वितीये ( उदादेः सादिः ) इति शोभनस्य सु आदेशः। व्याघ्रेत्यादौ ( वैयधिकरण्ये बहुव्रीहि०। इत्यादिना मध्यमपदभूतपादशब्दस्य लोपः। सर्वत्र [ संख्यासुव्याघ्रादेः।

इत्यादिना दकारमध्यस्याऽकारलोपः १-१ ( हसे० । वावसाने ) दस्य तः। सहस्रपात् । सुपात् । व्याघ्रपात् । सहस्रपादौ । सहस्रपादः । सहस्रपादम् । सहस्रपादौ । द्वौ पादौ यस्य स द्विपात् द्विपाद् । द्विपादौ । द्विपादः । द्विपादम् । द्विपादौ । शसादौ विशेषमाह । [शसादौ स्वरे परे पादशब्दस्य पदादेशो वक्तव्यः ] अनेन शसादौ स्वरादौ विभक्तौ परे पद् इति आदेशः। चकारादन्यत्रापि नपुंसके स्त्रीलिंगे ईपि परे तद्धिते च पद् आदेशः । कुंभपदी शतपदी सहस्रपदी एकपदी द्विपदी स्त्री । नदादित्वादीप् । द्विपदोऽपत्य द्वैपदः इत्यादौ पदादेशः। प्रकृते द्विपदः । द्विपदा । द्विपाद्भ्यामित्यादिशब्दाः । सहस्रपदः । सहस्रपदा । सहस्रपाद्भ्याम्। सहस्रपाद्भिः । भ्याम् भिस् इत्यादौ स्वरादित्वाभावान्न पदादेश [ संख्यासुव्याघ्रादि० ] इत्यादिशब्दात्कचिदन्यत्रापि पादशब्दस्याकारलोपः । गूढपात् ।-अपात् ॥

**टाडकाः॥** समासे सति ट अ ड क इत्येते प्रत्यया भवंति ।
"टश्च तत्पुरुषे ज्ञेयो ह्यकारो द्वन्द्व एव च ।
डकारश्च बहुव्रीहौ ककारोऽनियमो मतः" ॥

अचिंत्यो महिमा यस्यासावचिंत्यमहिमः। **नो वा ॥** नांतस्य पदस्य टेर्लोपो वा भवति यकारे स्वरे च परे । वाग्रहणात्कचिन्न भवति किंतु उपधालोपश्च । अह्नो मध्यं मध्याह्नः। कवीनां राजा कविराजः।टकारानुबंध ईबर्थः। कविराजी । राज्ञां पूः राजपुरम्। वाक्च मनश्च वाङ्मनसे । दक्षिणस्यां दिशि पंथाः दक्षिणापथः। अहश्च रात्रिश्च अहोरात्रः ॥ द्वौ वा त्रयो वा द्वित्राः । बहवो राजानो यस्यां सा बहुराजा नगरी । अत्र टिलोपे कृते ( आबतः स्त्रियाम् ) बहवः कर्तारो यस्य स बहुकर्तृकः ॥

अथ सर्वसमाससाधारणान्प्रत्ययानाह । सूत्रम् ( टाडकाः ) टश्च अश्च डश्च कश्च टाडकाः१-३(सवर्णे०।स्रो०)सिद्धम् एकपदम्। समासे सति बहुव्रीहौ तत्पुरुषे द्वंद्वे ट अ ड क एते चत्वारः प्रत्यया भवंति । यथासंभवं ...पार्थः । अक र. ककारश्च यथास्थित एव। तत्र प्रथम ... १-१ ( स्रो० ) महिमन् १-१ ( नोपधायाः। ...ति ) अचिंत्यो महिमा य येति विग्रहे बहुव्रीहिसमासे ...ति स्थिते ( टाडकाः ) इति टप्रत्ययः। अत्र सूत्रम् । न ...-१ ( अव्य० ) द्विपदम् । नकारांतस्य पदस्य टेर्लोपो

१ इत्ये... इत्येनी ३...

भवति यकारे स्वरे च परे । यथा राज्यम् । तथा स्वरे इति प्रस्तुतमेव । ततो महिमन् इत्यत्र अकारनकारयोर्लोपः । स्वर० १-१ ( स्रो० ) अचिंत्यमहिमः इति सिद्धम् । परं न बहुसंमतोयं प्रयोगः । किंतु अचिंत्यमहिमा इत्येव संमतः । वाग्रहणात्क्वचिट्टेर्लोपो न भवति । च पुनः यत्र टेर्लोपो न भवति तत्र उपधाया लोपो भवति । तस्योदाहरणं यथा अहन् ६-१ ( अल्लोपः स्वरे० ) स्व० ( स्रो० ) मध्य १-१ ( अतोऽम् । इवे । उ ओ ) अह्नो मध्यमिति विग्रहे षष्ठीतत्पुरुषसमासः ( समासप्रत्यययोः ) इति विभक्तिलोपे अहन् मध्य इति स्थिते । क्वचिद्भार्यतस्य पातमिति । मध्य अहन् इति स्थिते ( सवर्णे० ) वाग्रहणादुपधाया लोपः । स्वर० । १-१ ( स्रो० ) मध्याह्नः । एवं सायाह्नः । टप्रत्यये तु तत्पुरुषः । कवीनां ६-३ राजा १-१ इति विग्रहे तत्पुरुषे विभक्तिलोपे कविराजन् टप्रत्ययः ( नो वा ) इति टिलोपः । स्वर० ( स्रो० ) कविराजः । तथा टकारानुबंध ईवर्थं ईप्रत्ययार्थस्ततः ( ङ्घ्रिनः ) इतीप् ( यस्य लोपः ) स्व० । १-१ ( हसे० ) कविराजी । एवं महाराजः । राज्ञां ६-३ पूः १-१ तत्पुरुषे ( समासप्रत्यययोः ) इति विभक्तिलोपः । राजन् पुर् इति स्थिते अत्र अप्रत्ययः । स्व० १-१ ( अतोऽम् । सवर्णे० ) राजपुरम् । पूः शब्दस्य अदंतत्वे नपुंसकत्वात् वाच् ( चोः कुः । हसेपः० । स्रो० ) च १-१ अव्य० । मनस् नपुंसकत्वम् ( नपुंसकात्स्यमोर्लुक् । स्रो० ) च ( अव्य० ) वाक् च मनश्च इति विग्रहे द्वंद्वसमासे विभक्तिलोपः ( चोः कुः ) चस्य कः । वाक्मनस् ( वमे वमा वा ) कस्य ङः ( टाडकाः ) इति अप्रत्ययः । स्व० । १-१ ( ईमौ । अ इ ए ) वाङ्मनसे इति सिद्धम् । दक्षिणा ७-१ ( आम्ङेः ) इति ङेराम् । ( ङिर्वा यट । यटोच ) इति सक् आगमः पूर्वाकारस्य च अकारः । स्व० ( सवर्णे० ) पथिन् १-१ ( इतोत्पंचसु । थो न्थ् ) पन्थन् ( आ सौ । नश्चापदांते० । स्रो० ) दक्षिणस्यां पंथाः इति विग्रहे तत्पुरुषे ( समासप्र० ) इति विभक्तिलोपे पथिन् अप्रत्ययः ( नो वा ) इति टिलोपः इन्लोपः । स्वर० । १-१ ( स्रो० ) दक्षिणापथः इति सिद्धम् । केचिदत्र डप्रत्ययमेवेच्छंति । अहन् १-१ ( हसे० । अहः । स्रो० ) च १-१ ( अव्य० । विसर्ज० । स्तोः श्चु० ) रात्रि १-१ ( स्रो० ) च १-१ ( अव्य० ) अहश्च रात्रिश्चेति विग्रहे द्वंद्वे ( समासप्रत्यययोः ) अहन् रात्रि इति स्थिते ( अहः । स्रो० ) राज्यादिवर्जितत्वात् न रेफः किंतु ( इवे । उ ओ । टाडकाः ) इति डप्रत्ययः । टित्त्वाट्टिलोपः । स्व० । १-१ ( स्रो० ) अहोरात्रः इति सिद्धम् । द्वि १-२ ( त्यदा० । औ औ औं ) त्रि १-३ ( ए ओ जसि । ए अय् ) स्व० ( स्रो० ) द्वौ च त्रयश्च इति विग्रहे द्वन्द्वे विभक्तिलोपः ( टाडकाः ) इति डप्रत्ययः। टिलोपः । स्व० । १-३ ( सवर्ण० । स्रो० ) द्वित्राः । पेतन् १-३ अग्र ( जश्शसोर्लुक् । नाम्नो० ) पद्म १-१ ( जश्शसोः० । पो दः ।

वावसाने ) डस्य टः। पंच च षट् च इति विग्रहे द्वंद्वे विभक्तिलोपे पंचन् षष् ( टाडकाः ) इति डप्रत्ययः। डित्त्वाट्टिलोपः। स्व०। १-३ ( सवर्णे० । स्रो० । नाम्नो० ) पंचषाः। एवम् एकश्च द्वौ च एकद्वाः। बहु १-३ ( ए ओ जसि। ओ अव् ) स्व० ( स्रो० ) राजन् १-३ ( नोपधायाः ) स्व० ( स्रो० ) पश्चात् ( हवे। उ ओ ) बहवो राजानो यस्यामिति विग्रहे बहुव्रीहौ विभक्तिलोपे ( टाडकाः ) इति डप्रत्ययः। टिलोपः। स्व०। अत्र टिलोपे कृते ( आवतः स्त्रियाम् ) इत्याप् ( सवर्णे० ) १-१ ( आपः ) इति सेर्लोपः। बहुराजा एषा नगरी। बहवः कर्त्तारो यस्य स बहुकर्तृकः। बहु १-३ पूर्ववत्। कर्तृ १-३ ( ऋतुरार् ) स्व०। ( स्रो० ) बहवः कर्त्तारो यस्य इति विग्रहे बहुव्रीहिसमासे विभक्तिलोपे बहुकर्तृकः। ( टाडकाः ) इति कप्रत्ययः ( स्रो० ) बहुकर्तृकः प्रासादः ग्रंथो वा। अत्रातु स्त्रीलिंगेकारांतोकारांतऋकारांतेभ्यः उरश्शब्दाच्च नित्य एव कप्रत्यय इति ज्ञातव्यम्। सपत्नीकः। प्रियसीमंतिनीकः। सवधूकः फलितजंबूकः आरामः। नदीमातृको देशः। जीवत्पितृकः। व्यूढोरस्कः। ननु सपत्नी सवधूः जीवत्पिता व्यूढोरा इत्यादिप्रयोगा अशुद्धाः। एवमन्येपि प्रयोगाः। मैत्रस्य सखा मैत्रसखः। कंकणस्रजं मांसत्वचं वाक्त्विषं छत्रोपानहं द्विनावं द्विखारं ग्रामतक्षः पूर्वरात्रः अपरात्रः पुण्यरात्रः कृष्णभूमः पांडुभूमः द्विभूमः। उपदशाः। आसन्नविंशाः। बहुदातृकः। बहुलक्ष्मीकः। इत्यादयो यथासंभवं ज्ञेयाः॥ ॥ इति बहुव्रीहिसमासः॥

**कर्मधारयस्तुल्यार्थे** ॥पदद्वये तुल्यार्थे एकार्थनिष्ठे सति कर्मधारयसंज्ञकः समासो भवति। नीलं च तदुत्पलं च नीलोत्पलम्। रक्ता चासौ लता चेति रक्तलता। पुमांश्चासौ कोकिलश्चेति पुंस्कोकिलः। पुंस्ख्यातः [ पुंसः अवपरे खपे संयोगांतस्यालोपो वक्तव्यः ] नाम्नश्च कृतासमासः प्रादेरुपसर्गस्य नाम्नश्च कृदंतेन सह समासस्तत्पुरुषो भवति। प्रकर्षेण वादः प्रवादः। कुंभं करोतीति कुंभकारः। अपकृष्टो वादः अपवादः। **सहादेः सादिः** ॥ समासे सति सहादीनां सादिर्भवति॥ पुत्रेण सह वर्तते इति सपुत्रः। सहसंतिरसां सध्रिसमितिरयः। सहस्य सध्रिः। सध्यङ्। समः समिः। सम्यङ्। तिरसस्तिरिः। तिर्यङ्॥

सांप्रतं कर्मधारयं निरूपयति॥ सूत्रम् ( कर्मधारयस्तुल्यार्थे ) कर्मधारयः १-१ (स्रो०) तुल्यः सदृश अर्थादेक एव अर्थोऽभिधेयो वाच्यं प्रयोजनं यस्य स तुल्यार्थः।

तस्मिन् ७-१ ( अ इ ए ) पदद्वये इति पूर्वपद उत्तरपदे चैकार्यनिष्ठे एकार्य-संबंधपदद्वये एकवस्तुवाचके सति योऽन्वयः स कर्मधारयनामा समासो भवति। एकस्मिन्नर्थे निष्ठा स्थैर्यं प्रवृत्तिर्वा यस्य तत् एकार्यनिष्ठं तस्मिन्। उदा० नील१-१ ( अतोऽम् । अम्श० । मोनु० ) च १-१ ( अव्य० ) तद् १-१ ( नपुंसकात्स्य० । वावसाने ) उत्पलं १-१ (अतोऽम् । अम्श०) च १-१(अव्य०) एकार्यतायोतनाय चकारस्तच्छब्दश्च अयत्रा असौशब्दः आनीयते । नीलं च तदुत्पलं च इति विग्रहे अत्र नीलशब्दो विशेषणभूतः उत्पलशब्दश्च विशेष्यभूतः नीलं चेति विशेषणत्वात् पूर्वनिपातः । गुणद्रव्ययोराधाराधेयसंबंधित्वात् एकार्यनिष्ठत्वम् । ततः कर्मधारय-समासः ( समासप्रत्यययोः ) इति विभक्तिलोपः । उक्तार्थानामप्रयोगः । नील-उत्पल इति स्थिते ( उ ओ ) १-१ ( अतोऽम् । अम्श० ) नीलोत्पलम् । रक्ता चासौ लता च इति विग्रहे । रक्ता १-१ ( आपः ) च १-१ ( अव्य० ) अदस् १-१ ( त्यदा० । सौ सः । सेरी । ओ औ० ) लता १-१ ( आपः ) च १-१ ( अव्य० ) ततः समाससंज्ञा प्राग्वत् विभक्तिलोपश्च । रक्तलता ( पुंवद्वा ) इति पुंवद्भावादीपो निवृत्तिः । पूर्वपदस्य रक्ता इत्यस्य रक्त ततो रक्तलताशब्दात् प्रथमै-कवचने ( आपः ) पुंस्शब्दात् प्रथमैकवचने पुंस् १-१ ( पुंसोऽसुङ् ) सकारस्य अस् ( विशो नुम् ) पुमन्स् ( न्सम्महतोऽर्थो० ) इति दीर्घः ( हसे० । संयोगां-तस्य० ) इति सलोपः । पुमान् । च १-१ ( अव्य० ) पश्चात् ( नः सक् छते ) इति सकारागमः ( स्तोः श्चुभिः० । नश्चाप० ) अदस् १-१ ( त्यदा० । सौ सः । सेरी । ओ औ औ ) पश्चात् ( सवर्णे० ) कोकिल १-१ ( स्रो० ) च १-१ ( अव्य० ) पुमांश्चासौ कोकिलश्चेति विग्रहे पूर्ववत्कर्मधारयः समासः विभक्ति-लोपः । तत्र उक्तार्थानामप्रयोगः पुम्स्कोकिल इति स्थिते । ननु ( संयोगांतस्य० ) इति सकारलोपोऽत्र क्रियतां तत्राह ( पुंसः अवपरे रपे० ) इति । पुंस्शब्दस्य अवप्रत्याहारपरे खपप्रत्याहारे परे अलोपो भवति संयोगांतस्य सकारस्य अलोपो भवति । न लोपः अलोपः । तेन लोपो न भवतीत्यर्थः । ततो ( नश्चा० ) स्त० । पुंस्कोकिल इति सिद्धम् । एवं परमश्चासौ ईश्वरश्च परमेश्वरः । एवं महेश्वरः । महावीरः । महादेवः । पुनः विशेषमाह । सूत्रम् ( नाम्नश्च कृना० ) नामन् ६-१ ( अल्लोपः स्वरे ) स्त० । ( सोर्वि० ) च १-१ ( अव्य० ) पश्चात् ( विसर्ज० । स्तोः श्चु० ) कृत् ३-१ । स्त० । समासः १-१ ( स्रो० ) चतुष्पदं सूत्रम् । प्रादेरुपसर्गस्य तथा नाम्नश्च धातोः प्राक् प्रयुक्तस्य कृदन्तेन कृत्प्रत्ययांतशब्देन सह तत्पुरुषसंज्ञकः समासो भवति । चकारात् सहादयो गतिसंज्ञकाश्च ग्राह्याः । अथो-दाहरणम् । वद व्यक्तायां वाचि । वदप्रपूर्वः । प्रवदनं प्रवाद । प्रकृष्टो वादः प्रवादः ( घञ् भावे ) इति घञ्प्रत्ययः । ञित्वात् ( अत उपधायाः ) इति वृद्धिः । स्त० ( स्रो० ) प्रवादः १-१ अत्र प्रोपसर्गस्य कृदंतेन तत्पुरुषः तथा डुकृञ् करणे । कृ । कुंभपूर्वः । कुंभ अग्रे २-१ अम ( अम्श० । मोनु० ) कृ (वर्तमाने क्विप् । ग्रनादेरप्)

उ गुणः । कर उ इति स्थिते उकारस्य गुणः ओ । स्वर० । कुंभं करोतीति विग्रहे पश्चात् ( कार्येऽण् । समासप्रत्यययोः ) उभयत्रापि विभक्तिलोपः । कुंभ कृ अ इति स्थिते णित्वाद्वृद्धिः । कार । स० १-१ ( स्रो० ) अत्र कुंभशब्दस्य कृदंतेन सह तत्पुरुषः कुंभकारः । सूत्रम् ( सहादेः० ) सह आदिर्यस्य स सहादिस्तस्य ६-१ ( टिति । ङस्य ) इत्यकारलोपः ( स्रो० ) सादिः स आदौ यस्य स सादिः १-१ ( स्रो० ) द्विपदम् । समासे कृते सति सहादीनां सह सम् तिरस् इत्यादीनां पूर्वपदानां क्रमेण सभि सध्रि तिरि इत्यादय आदेशा भवंति । आदिशब्दादन्येऽप्यादेशा यथासंभवं भवंतीति भावः ॥ तत्रोदाहरणम् । सह १-१ ( अव्य० ) पुत्र ३-१ ( टेन । अ इ ए । ष्वर्नो० ) सह पुत्रेण अत्र ( नाम्नश्च ) इति चशब्दात्तत्पुरुषः । प्रक्रियामते तु बहुव्रीहिः । ( तेन सहेतितुल्ययोगे ) तुल्ययोगे सहेत्येततृतीयांतेन समस्यते स बहुव्रीहिः । विभक्तिलोपे सहस्य स आदेशः १-१ ( स्रो० ) आदिशब्दात्समानस्यापि सो भवतीति सूचितम् । तेन ज्योतिर्जनपदपिंडबंधुलोहितनाभिवेणीरात्रिगंधकुक्षिब्रह्मचारितीर्थ्यपत्नीपक्षेषु समानशब्दस्य स आदेशः । समानं ज्योतिर्यस्य स सज्योतिः । सजनपदः सपिंडः सबंधुः सलोहितः सनाभिः सवेणी सरात्रिः सगंधः सकुक्षिः सब्रह्मचारी सतीर्थ्यः समाना पत्नी सपत्नी सपक्षः समानपक्षः । रूपादिषु विकल्पेन समानशब्दस्य स आदेशः । समानं रूपं यस्य स सरूपः समानरूप इति वा । सवर्णः समानवर्णः सजातीयः समानजातीयः सगोत्रः समानगोत्रः संस्थानं समानस्थानं सधर्मा समानधर्मा सवयाः समानवयाः सनामा समाननामा इति यथाप्रयोगमूहनीयाः । अंचु गतिपूजनयोः अंच् सहपूर्वः सह १-१ ( अव्य० ) अंच् तिप् ( अप् कर्तरि ) इति अप् । सह अंचतीति विग्रहे कृदंतेन क्विप्प्रत्ययेन तत्पुरुषसमासः । ( क्विप् ) इति क्विप् । क्विपः सर्वापहारी लोपः । अंच् इत्यत्र ( नो लोपः ) इति नकारादेशरूपस्य अनुस्वारस्य लोपः ( सहादेः सादिः ) इति सहस्य सध्रि-आदेशः ( इ यं० ) सध्र्यच् १-१ ( अंचेः पंचसु नुम् ) इति नुमागमः ( स्तोः श्चु० ) नस्य ञ् ( हसे० । संयोगांतस्य० ) इति । चलोपे ( चोः कुः ) जस्य ङ् । सध्र्यङ् अग्रे प्रत्यच्शब्दवत् । एवं सम्पूर्वः अंच् समः समि आदेशः अग्रे क्विप्प्रत्ययादिकं पूर्ववत् । सम्यगञ्चति सम्यक् प्रकारेण अञ्चतीति सम्यङ् । एवं तिरस्पूर्वः अञ्च् तिरसः तिरि आदेशः ( इ यं स्वरे ) तिर्यङ् । द्वितीयाद्वित्वं यावत् प्रत्यच्वत् । शसादौ स्वरे तु तिरश्चादय आदेशा निपात्यंते उदच्शब्दस्य उदीच् इति निपातः शसादौ स्वरे इति । तिरश्चः । तिरश्चा । पूर्ववत् । एवं विष्वक् सर्वतः अञ्चतीति विष्वद्र्यङ् ( सहादेः सादिः ) इति विष्वक्स्थाने विष्वद्रि-आदेशः । देवम् अञ्चतीति देवद्र्यङ् ( सहादेः सादिः ) इति देवस्य देवद्रि-आदेशः । अमुम् अञ्चतीति अदद्र्यङ् । अमुम् इत्यस्य अदद्रि-आदेश इत्यादयो यथासंभवं ज्ञेयाः ॥

को कत् ॥कुशब्दस्य कुत्सितेपदर्थयोः वर्तमानस्य तत्पुरुषे कदादेशो भवति । कुत्सितम् अन्नं कदन्नम् । [ ईषदर्थे कोः का कव कदुष्णे] कोष्णं–कवोष्णं-कदुष्णम् । कालवणम् [ पुरुषे वा ] कापुरुषः कुपुरुषः [ पथ्यक्षयोः ] कोः कादेशः स्यात् । कुपथः । कापथः । कक्षः । काक्षः । ईषदर्थे च । ईषज्जलं काजलम् । दधोडैढौ स्याताम् ।षड्भिः अधिका दश षोडश । षड्भिः प्रकारैः षोढा। संख्यायाः प्रकारे धा [ षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च वा भवतीति वक्तव्यम् ] षोढा । षड्धा । षट् दंता यस्य सः षोडन् । षष् दन्त इति स्थिते दंतस्य दतृ । ऋ इत् । षस्य उत्वम् । दस्य डः । (ऋितो नुम्) षोडन् । बृहच्छब्दस्य सुडागमे तलोपश्च । बृहतां पतिः बृहस्पतिः । महच्छब्दस्य टेराकारः समानाधिकरणे । महादेवः । महेश्वरः । द्यौश्च भूमिश्च द्यावाभूमी । द्योशब्दस्य द्यावादेशः । जायाया जंभावो दंभावो निपात्यते । दंपती–जंपती । क्वचित् जायापती । आकृतिगणोयम् ॥

( कुत्सितेपदर्थयोः कोः कुशब्दस्य कदादयो वक्तव्याः ) कु १–१ ( अव्य० ) अन्न १–१ ( अतोऽम् ) कुत्सितमन्नम् इति विग्रहे अत्र व्याकरणांतरमते [illegible] तत्पुरुषः । स्वमते तु कर्मधारयः । कुशब्दस्य कत् ( चपा अबे० ) तस्य दः । स्वर० । कदन्न १–१ ( अतोऽम् । अम्शा० । ) एवं कदशनं कदध्वा सर्वत्र कुपूर्वः । कु १–१ ( अव्य० ) उष्ण १–१ ( अतोऽम् ) ईषदर्थे उष्णशब्दे परे कोः कु इत्यस्य कत् का कव एते त्रयः आदेशा भवंति । कु ईषदुष्णमिति विग्रहे एकत्र कत् । द्वितीये का तृतीये कव । कदुष्णम् । कोष्णम् । कवोष्णम् १–१ । सर्वत्र कुलशब्दवत् । लवणः कुपूर्वः । कु ईषल्लवणमिति विग्रहे ईषदर्थे कोः का । कालवणम् ( पुरुषे वा ) पुरुषशब्दे परे कु इत्यस्य वा कादेशो भवति । कुत्सितः पुरुषः कुपुरुषः । कापुरुषः । एवं कत्तृण कद्रथः कद्वदः कदध्वा कापथः काक्षः काग्निः कदग्निः इत्यादयः प्रयोगानुसारेण ज्ञेयाः । षषदशन् उभयत्रापि १–३ ( जश्श० । षो डः । वावसाने । समासप्रत्यययोः । ( ष्टुभिः ष्टुः ) दस्य डः ( सदादेः० ) इत्यनेन ष् इत्यस्य उः षोडशन् । १–३ ( जश्श० । नाम्नो० ) षड्भिरधिका दश षोडश ।

१ ( कोः कदादि ) इत्यन्यत्र पुस्तके पठः । २ षड्दंताः क्वचित् ।

यद्वा षट् च दश चेति विग्रहे विभक्तिलोपे ( सहादेः सादिः ) इति षकारस्योकारो दस्य डः । इति वर्णविकारो जातः । यदि वा षोडशानां संख्यापूरणः षोडशः ( एकादशादिर्डः ) डित्वाट्टिलोपः । स्वर० । १-१ देवशब्दवत् षट् दंता अस्य स षोडन् । ( दंतस्य दतृ ) इति पूर्वं दतस्य दतृ इति आदेशः । ऋकारो नुमागमार्थः । ततः ( ष्टुभिः ष्टुः ) दस्य डः । षषः । षोडन् १-१ सु ( व्रितो नुम् । हसे० । संयोगांत० । षो डः ) यद्वा ( सहादेः सादिः ) इति षस्य उः ( टाडकाः ) इति डप्रत्ययः । टिलोपः । स्वर० ( स्रो० । पो डः ) यद्वा षट् ददा तीति षोडः ( नाम्नः० ) इति डप्रत्ययः विभक्तिलोप. ( सहादेः सादिः ) इति षस्य उत्वम् । दस्य डः ( उ ओ । पो डः ) तथा षष्-संख्यायाः प्रकारे धाप्रत्ययः । षड्भिः प्रकारैः षोढा । यद्वा षट् धा प्रकारा यस्य षोढा ( ष्टुभिः ष्टुः ) इति धस्य ढः ( सहादेः सादिः ) इति षोढा इत्यव्ययम् । तथोक्तम् [ षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वक्तव्यम् ] इति । बृहतां पतिः बृहस्पतिः बृहस्पतिः अत्र ( सहादेः सादिः ) इति तकारस्य सकारः । केचिदत्र बृहस्पतिरिति न पठंति । वाचस्पत्यादिषु साधितत्वात् । अथवा बृहत्याः पतिः बृहता पतिः बृहस्पतिः ( सहादेः सादिः ) अनेन बृहती इत्यस्य बृहस् आदेशः । महाश्चासौ ईश्वरश्च अत्र ( सहादेः सादिः ) इति महच्छब्दस्य महा इत्यादेशः ( अ इ ए ) महेश्वरः । महादेवः । महामाया । महात्मा । द्यौभूमि ( औरी ) द्यौश्च भूमिश्च द्यावाभूमी । अत्र ( सहादेः० ) इति द्यौ इत्यस्य द्यावा इत्यादेशः । ततः १-२ ( औ यू ) ई ( सवर्णे० ) एवं दयितापति जायापतिः । दयिता च पतिश्च दंपती । जाया च पतिश्च जंपती । दयिताजाययोः क्रमेण दम् जम् इत्येतावादेशौ भवतः । उभयत्रापि १-२ ( औ यू । सवर्णे० ) दंपती २ । दंपतीभ्याम् ३ । दंपत्योः २ । एवं जंपती । प्रक्रियामते तु जायाया जंभावदंभावौ वा निपात्यौ । ननु स्वच्छंदमादेशाः कथं क्रियते इत्याशंकायामाह । आकृतिगणोयम्यादृशी आकृतिः आकारः प्रयोगस्य दृश्यते तादृश एव प्रयोगः निपात्यते तादृश एवादेशः क्रियते अस्मिन्गणे इति आकृतिगण कथ्यते । लक्ष्यानुसारेण सूत्रस्य प्रवृत्तिः । सिद्ध शब्दाकारमुपलभ्य तदनुसारेणादेशविधानमित्यर्थः ॥

अलुक् क्वचित् ॥ क्वचित्समासे कृदन्ते तद्धितेऽपि विभक्तेरलुग्भवति । कृच्छ्रान्मुक्तः । स्तोकान्मुक्तः । अप्सु योनिरस्येति अप्सुयोनिः । उरसि लोमानि यस्यासौ उरसिलोमा । हृदि स्पृशतीति हृदिस्पृक् । कंठे कालो यस्यासौ कंठेकालः । वाचोयुक्तिः । दिशोदंडः । पश्यतोहरः । वनेचर इत्यादि ॥ [ समानाधिकरणे

शाकपार्थिवादीनां मध्यमपदलोपो वक्तव्यः । ] शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥

पुनर्विशेषमाह । सूत्रम् । अलुक् १–१ ( हसे० ) कचित् १–१ ( अप्य० ) कचिदिति । समासे कृदंते तद्धितप्रत्ययेऽपि परे पूर्वपदविभक्तेरलुक् लोपो न भवतीत्यर्थः । तद्धितप्रत्यये यथा । आमुष्यायणः । इत्यादौ विभक्तेरलुक् । समासे तु दर्शयति । कृच्छ्र ५–१ ( ङसिरत् । सवर्गे० ) मुक्त १–१ ( स्रो० । नमे नमा वा ) तस्य नः । कृच्छ्रान्मुक्त इति विग्रहे अत्र तत्पुरुषसमासः । अत्र पूर्वपदविभक्तेरलुक् । उत्तरपदविभक्तेस्तु ( समासप्रत्यययोः ) इति लुक् । पुनः १–१ ( स्रो० ) कृच्छ्रात् मुक्तः कृच्छ्रान्मुक्तः इति । एवं स्तोकान्मुक्तः । तथा अप्सुयोनिः । अप् ७–३ । स्व० । योनि १–१ ( स्रो० ) अप्सु पानीयेषु योनिर्यस्येति बहुव्रीहिः । अत्र सप्तमीबहुवचनस्य अलुक् केवलमुत्तरपदस्य सेर्लुक् । उरस् ७–१ । स्व० । लोमन् १–३ ( जश्शसोः० । नोपधायाः । नाम्नो० ) स्व० । उरसि लोमानि यस्येति विग्रहे पूर्वपदसप्तम्या अलुक् उत्तरपदस्य जसो लुक् । पुनः १–१ ( नोप० । हसे० । नाम्नो० ) उरसिलोमा । एवं हृद् ७–१ स्व० । स्पृश् संस्पर्शने हृद्पूर्वः हृदि स्पृशतीति विग्रहे तत्पुरुषसमासः । क्विप्–प्रत्ययः क्विपः सर्वापहारी लोपः १–१ ( दिशाम् ) इति शस्य कः ( हसेपः० ) अत्र कचिदिति वचनात् कृदन्तेऽपि हृदि इति सप्तम्या विभक्तेरलुक् । एवं कंठे ७–१ कालः १–१ । वाचो ६–१ युक्तिः १–१ । दिशो ६–१ दंडः १–१ । पश्यतो ६–१ हरः १–१ । दास्याः ६–१ पुत्रः १–१ । एतेषु यथासंभवं विभक्तेरलुक् । कंठे इत्यत्र सप्तमी अन्यत्र षष्ठी । एवं स्तंबेरमः । कर्णेजपः । युधिष्ठिरः । ( अम्बादेः० ) इति षत्वम् । आत्मनेपदम् । परस्मैपदम् । देवानांप्रियः दिवस्पतिः वास्तोष्पतिः इत्यादावलुक् । एकविभक्त्यंतानां पदानां विशेषणविशेष्यभावेन एकार्थनिष्ठत्वं समानाधिकरणम् । तत्र वर्तमानानां शाकपार्थिवादीनां शब्दानां मध्यमपदस्य द्वयोः पदयोर्मध्यवर्तिनः पदस्य लोपो वक्तव्यः । केचित्तु उत्तरपदलोप इति पठंति ते पूर्वपदात् उत्तरपदस्य लोपमिति व्याचक्षते । अथवा प्रथमसमासापेक्षया उत्तरपदस्येति व्याख्यांति परं शाकप्रियपार्थिवादीनामित्यत्रोपस्यापि पदस्यानिरूपितत्वाचत्र संमतम् । पुनश्चित्यम् । शाकप्रियपार्थिव इति स्थिते । शाकः प्रियो यस्य स शाकप्रियः शाकप्रियश्चासौ पार्थिवश्चेति विग्रहे अत्र एकविभक्तिकत्वेन समानाधिकरणम् । ततो मध्यमपदस्य प्रियशब्दस्य लोपः । शाकपार्थिव इति स्थिते १–१ ( स्रो० ) तथा देवपूजको ब्राह्मणः देवान्पूजयतीति देवपूजकः । देवपूजकश्चासौ ब्राह्मणश्चेति विग्रहे पूर्ववद्विभक्तिलोपे मध्यमपदस्य पूजकस्य लोपः । देवब्राह्मणः १–१ ( स्रो० ) प्राग्वत् ॥

आदेश्च द्वंद्वे ॥ द्वंद्वे समासे पूर्वपदस्य लोपो भवति । चकार-ग्रहणाद्विकल्पेन । माता च पिता च पितरौ । शिष्यमाणो लुप्य-मानार्थाभिधायी । श्वश्रूश्च श्वशुरश्च श्वशुरौ । दुहिता च पुत्रश्च पुत्रौ ॥

पुनराह सूत्रम् ( आदेश्च द्वंद्वे ) इति । आदि ६-१ । च १-१ । द्वंद्व ७-१ त्रिपदमिदं सूत्रम् । आदिशब्दस्य अजहल्लिंगत्वात् पदविशेषणत्वेपि पुंस्त्वम् । द्वंद्वे द्वंद्वसमासे इतरेतरयोगे आदिपदस्य लोपो भवति । चकारात् कुत्रचिन्न तु सर्वत्र । मातृ १-१ ( सेरा० ) डित्स्वाट्टिलोपः । ऋलोपः । स्व० । च १-१ ( अव्य० ) पितृ १-१ पूर्ववत् ( स्रो० ) च १-१ ( अव्य० ) माता च पिता च इति विग्रहे द्वंद्वसमासे ( समासप्रत्यययोः ) इति विभक्तिलोपे उक्तार्थानामिति चलोपे मातृपितृ ( आदेश्च द्वंद्वे ) इति मातृशब्दस्य लोपः । इतरे-तरयोगे द्विवचनम् । १-२ ( पंचसु ) इति अर् । स्व० । पितरौ । एवं श्वश्रूश्वशुरौ । श्वश्रूश्च श्वशुरश्च इति विग्रहे विभक्तिलोपे ( आदेश्च द्वंद्वे ) इति श्वश्रूपदलोपः । श्वशुर १-२ ( ओ औ औ ) एवं दुहितृपुत्रौ दुहिता च पुत्रश्चेति विग्रहे विभक्तिलोपे आदिभूतस्य दुहितृशब्दस्य लोपः । पुत्र १-२ । ( ओ औ औ ) चकारो बहुलार्थस्तेन कुत्रचिन्न तु सर्वत्र । यथा धवखदिरौ इत्यादौ लोपो न । चकारात्पक्षे मातापितरौ श्वश्रूश्वशुरौ इत्यपि भवति ॥

[ ऋतां द्वंद्वे ] द्वंद्वे समासे पूर्वपदस्य ऋकारस्य वाकारो वक्तव्यः । माता च पिता च मातापितरौ ॥

पुनर्विशेषमाह ( ऋतां० ) इति । ऋत् ६-३ । स्व० द्वंद्वे ७-१ ( अ इ ए ) ऋतामिति । ऋकारांतशब्दानां द्वंद्वे पूर्वं यत्पदं तत्संबंधिनः ऋकारस्य आकारो वा भवति । माता च पिता च अत्र विभक्तिलोपे मातृशब्दस्य ऋकारस्य आ । माता-पितृ १-२ ( पंचसु ) स्व० । मातापितरौ । एवं पितापुत्रौ दुहितापुत्रौ होतापो-तारौ । इत्यादि । पक्षे पूर्वपदलोपे पितरौ । वाग्रहणादेव मातरपितरावित्यपि ॥

[ द्वंद्वे सर्वादित्वं वा ] द्वंद्वे समासे सर्वादित्वं वा भवति । वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे वर्णाश्रमेतराः । वैयधिकरण्ये बहु-व्रीहौ मध्यमपदलोपश्च । कुमुदस्य गंध इव गंधो यस्य सः कुमुद-गंधिः । ( उपमानाच्च ) उपमानात्परस्य गंधशब्दस्याकारस्येकारो भवति । हंसस्य गमनमिव गमनं यस्याः सा हंसगमना ॥

( द्वन्द्वे सर्वादित्वं वा ) द्वन्द्वे समासे सर्वादीनां शब्दानां सर्वादित्वं सर्वादिकार्यं वा भवति । भवति वा न भवतीत्यर्थः । उदा० । वर्णाश्रमेतरे वर्णाश्रमेतराः । द्विस्थाने। वर्णा ब्राह्मणादयः । आश्रमा ब्रह्मचर्यादयः । इतरे शूद्रवृषलादयः । ततो वर्णाश्च आश्रमाश्च इतरे च समाहारद्वन्द्वस्ततो विभक्तिलोपे उभयत्रापि १–३ एकत्र सर्वादित्वात् ( जसी । अ इ ए) आदौ ( सवर्णे० ) आश्रम अग्रे इतर ( अ इ ए ) यत्र सर्वादित्वं न तत्र १–३(सवर्णे० । स्रो०) वैयाधिकरण्ये इति भिन्नविभक्त्यंतानां पदानां भिन्नार्थनिष्ठत्वं वैयधिकरण्यम् । यद्वा भिन्नविभक्त्यंतत्वे सति भिन्नार्थप्रतिपादकद्वारा एकस्मिन्नर्थे वृत्तिर्व्यधिकरणं तस्य भावो वैयधिकरण्यं तस्मिन् वर्तमाने सति बहुव्रीहि-समासे मध्यमपदलोपो वक्तव्यः । कुमुद ६–१ ( ङस्य ) गंध १–१ ( स्रो० ) इव १–१ ( अव्य० ) गंध १–१ ( स्रो० ) कुमुदस्य गंध इव गंधो यस्येति विग्रहे अत्र कुमुदस्येति षष्ठ्यंतम् । शेषाणि प्रथमांतानि ( समासप्रत्यययोः ) इति विभक्तिलोपे ( उक्तार्थानां० ) इति इव लोपे कुमुदगंधगंध इति स्थिते अत्र मध्यमपदस्य गंधस्य लोपः । पश्चान्मध्यमपदलोपश्चेति चकाराद्गंधादेः इप्रत्ययः ( यस्य लोपः ) स्व० । १–१ । ( स्रो० ) कुमुद्गंधिः । तथैव हंसस्य ६–१(ङस्य)गमन १–१(अतोऽम् । अम्श० । ) इव १–१ ( अव्य० ) गमनम् १–१ पूर्ववत् । हंसस्य गमनमिव गमनं यस्या इति विग्रहे बहुव्रीहिः( समास० )उक्तार्थानामप्रयोगः।हंसगमनगमन इति स्थिते मध्यमपदस्य गमनस्य लोपः । पश्चात् ( आवतः स्त्रियाम्) १–१ ( आपः ) हंसग-मना । समासश्चतुर्द्धा । नित्य १ अनित्य २ लुक् ३ अलुक् ४ भेदात् ॥

**दिक्संख्ये संज्ञायाम्॥** दिग्वाचकसंख्यावाचकशब्दौ संज्ञायां विषये परपदतुल्यार्थे समस्येते स समासस्तत्पुरुषो भवति ।अविग्रहो नित्य-समासः । अन्यस्त्वस्वपदविग्रहोऽपि । दक्षिणाग्निः सप्तग्रामाः ॥

इति समासप्रक्रिया समाप्ता ।

अथ नित्यसमासमाह ( दिक्संख्ये० ) इति । दिक्संख्ये १–२ संज्ञायाम् ७–१ दिग्वाचकं संख्यावाचकं च पदं संज्ञायां वाच्यमानायां तुल्यार्थेन एकार्थेन उत्तरपदेन सह अविग्रहं विग्रहरहितं समस्यते समासश्च तत्पुरुषो भवति । तत्र समासश्च नित्यो भवति । अथ नित्यानित्यसमासस्वरूपमाह । अविग्रहो नित्यसमासः । यो नित्यसमासः स विग्रहरहितः असमस्यमानपदविग्रहो भवति । परपदविग्रहोऽप्यपिशब्दात् स्वपदविग्रहो भवति । अस्वपदविग्रहो यथा । स्त्रियमधिकृत्य अत्राधिकृत्येति परपदेन विग्रहः । न त्वस्वपदत्वादस्वपदम् । अथवा बहु धनं यस्य सः अत्र यस्येति परपदेन विग्रहोपि भवति । अस्व-पदविग्रहो यथा । अश्वादन्य इत्यप्यस्वपदविग्रहः।तथा ग्रामं प्राप्तः इत्यादौ स्वाभ्यां विग्रहः मध्यवर्तिभ्यां पदाभ्यां विग्रहः । अथ नित्यसमासोदाहरणम् । यथा।

दक्षिणाग्निरिति अग्निभेदः । 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः' । इति दिग्वाची दक्षिणाशब्दः । एकार्थेन अग्निना परपदेन समस्यते समासश्च तत्पुरुषः । नित्यत्वाद्विग्रहो न क्रियते । तथा सप्तग्रामा इत्यत्र सप्तनशब्दः संख्यावाचकः एकार्थेन ग्रामपदेन समसितः अत्र विग्रहं विनापि नित्यस्तत्पुरुषसमासः । नित्यं पदद्वयात्मकत्वात्समासरूपमेव पदमित्यर्थः । दक्षिणाग्निरिति । अग्निभेदनामवाची शब्दः सप्तग्रामा इति । "पूर्वेऽव्ययेऽव्ययीभावोऽमादौ तत्पुरुषः स्मृतः । चकारबहुलो द्वन्द्वः संख्यापूर्वो द्विगुः स्मृतः ॥ १ ॥ यस्य येन बहुव्रीहिः स चासौ कर्मधारयः । इति किंचित्समासानां षण्णां लक्षणमीरितम्" ॥ २ ॥

इति चंद्रकीर्तिविरचितायां सुबोधिकायां समासदीपिका समाप्ता ।

## अथ तद्धितप्रक्रिया १७.

अथ तद्धितो निरूप्यते । **अपत्येऽण्** ॥ नाम्नोऽपत्येर्थेऽण्प्रत्ययो भवति। उपगोरपत्यमिति वाक्ये उपगोः अण् इति स्थिते ( समासप्रत्यययोः ) इति षष्ठीलोपः । णकारो वृद्ध्यर्थः। **आदिस्वरस्य ञ्णिति वृद्धिः** ॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परतः । उकारस्य औकारो वृद्धिः ॥

अथ तद्धितो निरूप्यते । अथेति । समासकथनानंतरं तद्धितस्तद्धितसंज्ञकः प्रत्ययो निरूप्यते कथ्यत इत्यर्थः । तस्मै समासाय हितः यदि वा तेभ्यः पूर्वोक्तेभ्यः नामादिभ्य. अर्थांतरप्रकाशनेन हितस्तद्धितः स निरूप्यते कथ्यत इत्यर्थ.।यद्यपि तद्धितसंज्ञकाः प्रत्यया बहवः संति तथापि जात्यभिप्रायेणैकवचनम्। सूत्रम् । ( अपत्ये० ) न पतति पिता यस्मात्तदपत्यं तस्मिन् अपत्ये७ १(अइ ए)अण् १ १(इतो०नाम्नो०)इति अपत्ये पुत्रपौत्रादिसंताने शिष्यप्रशिष्यादिसंताने वा वाच्ये सति नाम्न• अण्प्रत्ययो भवति । अत्रापि नामशब्देन पदमेव विवक्षितम्। अन्यथा अविभक्ति नामेत्युच्यमाने उपगोरिति षष्ठ्यंतात् अण् प्रत्ययो न स्यात् । यद्वा उपगुशब्दात्प्रथमम् अण् प्रत्ययः । ततः षष्ठीं दत्त्वा विग्रहः कार्य• । उदा० । उपगुशब्दात् अपत्येर्थे अण्प्रत्ययः। ततः उपगु ६-१ ( ङिति । टस्य ) इत्यकारलोप ( स्रो० ) उपगोरपत्यमिति वाक्ये विग्रहे सति तद्धितेपि विग्रहो अन्यथायोग्यत्वे सत्येव भवति। तेन वस्त्रमुपगोरित्यादौ न उपगुनाम्नः तापसस्यापत्यं संतानः पुत्रादिरिति विग्रहे कृते । ( समासप्रत्यययोः ) इति विभक्तिलोपे उक्तार्थानामिति अपत्यशब्दे लुप्ते उपगु अण् इति स्थिते णकारो वृद्ध्यर्थं । इवर्णश्च । वृद्धिकरणे सूत्रम् । ( आदिस्वर० ) आदिश्चासौ स्वरश्च आदिस्वरस्तस्य ६-१ ( टस्य )ञ्णिति ञ् च ण् च ञ्णौ तौ इतौ यस्य स ञ्णित्

तस्मिन् ञ्णिति ७-१ स्व० । वृद्धि १-१ ( स्रो० ) त्रिपदमिदं सूत्रम् । स्वराणां तद्धितप्रत्ययांतपदसंबंधिनां सर्वस्वराणां मध्ये यः आदिस्वरस्तस्य ञ्णिति ञिति णिति च तद्धिते प्रत्यये परे वृद्धिर्भवति । अनेन उकारस्य औकारो वृद्धिः ( आरै औ वृद्धिः ) इत्युक्तत्वात् । औपगुम् इति स्थिते ॥

**वोऽव्यस्वरे ॥** उकारस्य ओकारस्य चाव् भवति यकारे स्वरे च परे । औपगवः । वासिष्ठः । गौतमः ॥

सूत्रम् । उश्च ओश्च वो । वो ६-२ ( सांके० ) अव् १-१ ( हसे० ) यश्च स्वरश्च यस्वरं तस्मिन् ७-१ ( अ इ ए ) त्रिपदं सूत्रम् । अंत्यस्य उवर्णस्य ओकारस्य च अव् भवति तद्धितसंबंधियकारे स्वरे च परे । उकारस्य अव् । गव् । स्व० औपगव ( कृत्तद्धितसमासाश्च ) इति नामसंज्ञायाम् १-१ ( स्रो० ) उपगुर्नाम कश्चिन्मुनिस्तस्य अपत्यम् औपगवः । स्त्री अपत्यं चेत्तर्हि औपगवी । एवं वसिष्ठस्यापत्यं वासिष्ठः । अण्प्रत्ययः । अत्र वकारस्थिताकारस्यादिस्वरस्य वृद्धिराकारः ( यस्य० ) स्व० । एवं गोतमस्यापत्यं गौतम इत्यत्राण्निमित्ता वृद्धिः । ओकारस्य औकारः १-१ ( स्रो० ) सर्वत्र तद्धिते विकल्पानुवृत्तिर्ज्ञेया इति स्वायंभुव इत्यादौ अवादेशो न ॥

**ऋ उरणि ॥** ऋकारस्य उर् भवति अणि परे [ षषो णो वाच्यो मातरि ] षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ॥

सूत्रम् । ऋ ६-१ ( सांके० ) उर् १-१ ( हसे० ) अण् ७-१ स्व० । अण्प्रत्यये परे मातृशब्दसंबंधिन ऋकारस्य उर् भवति । षष् मातृ । षष् ६-३ ( ष्णः ) इति नुट् ( षो डः । धुभिः धुः ) स्व० ( मोनु० ) मातृ ६-३ ( नुडामः । नामि ) षण्णां मातॄणामपत्यमिति विग्रहे अथवा षट् च ताः मातरश्चेति विग्रहे ( समासप्रत्यययोः ) इति विभक्तिलोपः । षष् मातृ इति स्थिते ( आदिस्वरस्य० ) इति वृद्धिः ( षो डः । वावसाने ) डस्य टः ( ञमे ञमा वा ) टस्य णः । यद्वा ( षषो णो वाच्यो मातरि ) इति केचित् । यथा ( क्वचिज्जवानामपि ञमा दृष्टव्याः ) इति केचित् ( ऋ उरणि ) इति उर् । स्व० ( स्रो० ) षाण्मातुरः कार्तिकेय इत्यर्थः । एवं द्वयोः मात्रोरपत्यमिति विग्रहे उभयत्रापि द्वि ६-२ ( त्यदादेः० । आयतः० । टीसोरे । ए अय् ) स्व० । मातृ ६-२ ( ऋ रम् । स्रो० । अपत्येऽण् ) ञित्त्वाद्वृद्धिः । द्वि इत्यस्य द्वै ( ऋ उरणि ) इति उर् । स्व० १-१ ( स्रो० ) द्वैमातुरः गणेशः । एवं भाद्रमातुरः । द्वावपि सतीसुतवाचकौ । "सत्यास्तु तनये षाण्मातुरवद्भाद्रमातुरः" । इत्यादि अणंताः । अन्यत्रापि अण्प्रत्ययो भवति । यतः "रागान्नक्षत्रयोगाच्च समूहात्सास्य देवता । तद्वेत्त्यधीते तस्येदमेवमादिष्वणिष्यते" ॥ १ ॥ रागाद्यथा । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । नक्षत्रयोगात् । पुष्येण युक्तः

कालः पौषः। समूहात्। नराणां समूहो नारम्। स्त्रीणां समूहः स्त्रैणम्। सास्य देवतार्थे। इन्द्रो देवतास्येति ऐन्द्रम्। तद्वेत्ति वा अधीते इत्यस्यार्थे। व्याकरणमधीते वेद वा वैयाकरणः। तस्येदमित्यस्यार्थे। देवदत्तस्येदं दैवदत्तम्। सुवर्णस्येदं सौवर्णम्। इत्याद्यर्थेष्वण्प्रत्ययः स्यात्। तदग्रे यथास्थाने साधयिष्यति ॥

**अत इञनृपेः ॥** अकारांतान्नाम्नोऽनृपिशब्दादपत्येऽर्थे इञ्प्रत्ययो भवति ( यस्य लोपः ) देवदत्तस्यापत्यं दैवदत्तिः। श्रीधरस्यापत्यं श्रैधरिः। दशरथस्यापत्यं दाशरथिः। पुरंदरस्यापत्यं पौरंदरिः। रावणस्यापत्यं रावणिः ॥

अथ अपत्यार्थे प्रत्ययांतरमाह। सूत्रम्। अत् ५-१ स्व० ( स्रो० ) इञ् १-१ ( इसे० ) पश्चात् ( आद्वे० ) अनृषिः न ऋषिः अनृपिः तस्मात् ५-१ ( डिति ) इनीकारस्य एकारः ( ङस्य ) इत्यकारलोपः ( स्रो० ) पूर्व स्व०। त्रिपदम्। ऋषिवाचकशब्दवर्जितादकारांतान्नाम्नोऽपत्येऽर्थे इञ् प्रत्ययो भवति अणोऽपवादः। अत्र ञकारो वृद्ध्यर्थः। उदा०। देवदत्तस्यापत्यम् इञ्प्रत्ययः ञकारो वृद्ध्यर्थः। देवदत्त ( आदिस्वरस्य० ) इति वृद्धिः। दै ( यस्य लोपः ) स्व० १-१ ( स्रो० ) दैवदत्तिः। एवं श्रीधरस्यापत्यं श्रैधरिः। अत्र इञ्प्रत्यये श्री इत्यस्य श्रै इति वृद्धिः। तथा दशरथस्यापत्यं दाशरथिः अत्र वृद्धिकार्ये दस्य दा। पुरंदरस्यापत्यं पौरंदरिः। अत्र उकारस्य औकारो वृद्धिः। एवं रावणिः [ बाह्वादेश्च ] बाह्वादेस्तु अकारातस्याऽभावेपि इञ् वक्तव्यः। बाहविः। द्वापरिः। आग्निः। शार्म्मिः। सर्वत्र तद्धिते विकल्पानुवृत्तिरस्त्येव तेन वासुदेवः। शैवः। वैदेहः। इत्यादौ इञ् न स्यात्। [ व्यासवरुडसुधातृनिपादचंडालादंतस्य चाऽकः ] एभ्योऽपत्ये इञ् तद्योगे चैषामंतस्य अक् आदेशः। वैयासकिः। वारुडकिः। सौधातकिः। नैषादकिः। चवकिः। चांडालकिः ॥

**ण्यायनणेयण्णीया गर्गनडात्रिस्त्रीपितृष्वस्रादेः ॥** गर्गादेर्नडादेरत्र्यादेः स्त्रीलिंगात्पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवंति अपत्येऽर्थे। गर्गस्यापत्यं गार्ग्यः। वत्सस्यापत्यं वात्स्यः। नडस्यापत्यं नाडायनः। चरस्यापत्यं चारायणः। अमुष्यापत्यम् आमुष्यायणः। अत्रेरपत्यम् आत्रेयः। कपेरपत्यं कापेयः। गंगाया अपत्यं गांगेयः। मह्या अपत्यं माहेयः। पैतृष्वस्रीयः। मातृष्वस्रीयः ॥

सूत्रम् ( ण्यायनणेयण्णीया० ) ण्यश्च आयनण् च एयण् च णीयश्च ण्यायनणे-

यणीयाः । १-३ ( सवर्णे० ) गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च गर्गनडात्रिस्त्रीपितृष्वसारस्ते आदौ यस्य स गर्गनडात्रिस्त्रीपितृष्वसादिस्तस्मात् ५-१ ( डिति । डस्य ) इत्यकारलोपः ( स्रो० ) द्विपदमिदं सूत्रम् । द्वंद्वांते श्रूयमाणं पदं प्रत्येकं संबध्यत इत्यादिशब्दस्य प्रत्येकं योगस्तेनापत्येऽर्थे गर्गादेर्ण्यः । नडादेरायनण् । अत्र्यादेः स्त्रीलिंगाच्च एयण् । पितृष्वस्रादेः णीयः । सर्वत्र णकारो वृद्धयर्थः । एयणीययोर्वृद्धयर्थमादौ प्रयुक्तो णकारोऽणंतत्वनिरासमूचकः । अणंतत्वाभावादीवृनिषेधः । गर्ग । वत्स । गर्गस्यापत्यं वत्सस्यापत्यमिति विग्रहे ण्यण् । णित्त्वाद् वृद्धिः । गार्ग वात्स ( यस्य लोपः ) उभयत्रापि स्व० (स्रो०) गार्ग्यः । वात्स्यः । स्त्र्यपत्यं चेत् गार्ग्या । वात्स्या । नडस्यापत्यं नाडायनः । आयनण् प्रत्ययः णित्त्वाद्वृद्धिः ( यस्य लोपः ) । स्व० १-१ एवं चरस्यापत्यं चारायणः । स्त्रियां नाडायनी । चारायणी । अदस् ६-१ ( त्यदा० । दस्य मः । ङस्य । माद् । क्वि० ) अमुष्यापत्यमिति विग्रहे आयनणप्रत्ययः णित्त्वाद्वृद्धिः । आ ( अलुक् क्वचित् ) इति षष्ठ्या विभक्तेर्न लोपः । ( यस्य लोपः ) स्व० । १-१ ( स्रो० ) आमुष्यायणः । अस्यार्थः । " स्यादामुष्यायणो मुख्यपुत्रः प्रख्यातपुत्रकः " । इति । अत्रेरपत्यम् आत्रेयः । एयणप्रत्ययः आदिवृद्धिः ( यस्य० ) स्व० १-१ ( स्रो० ) एवं कपेरपत्यं कापेयः । अणंतत्वादीप् । आत्रेयी । कापेयी । गंगायाः अपत्यं गांगेयः । मह्याः अपत्यं माहेयः । एवं वैनतेयः । सैंहिकेयः । काद्रवेयः । पितुः स्वसा पितृष्वसा । मातुः स्वसा मातृष्वसा [ मातृपितृभ्यां स्वसुः सकारस्य षत्वं वक्तव्यम् ] पितृष्वसृ ६-१ ( ऋतो ट उः ) डित्त्वाट्टिलोपः । अमे अपत्य १-२ ( अतोऽम् ) पितृष्वसुरपत्यं पैतृष्वस्रीयः । एवं मातृष्वस्रीयः । उभयत्रापि णीयः प्रत्ययः । पितृशब्दस्य इकारस्य ऐकारो वृद्धिः । मातृशब्दे न वृद्धिः । वृद्धेरेव सद्भावात् । एवं स्वसुरपत्यं स्वस्रीयः । अत्र ( णितो वा ) इति विकल्पान्न वृद्धिः ॥

लुग्बहुत्वे क्वचित् ॥ अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदृष्यनृषिविषये लुग् भवति । गर्गाः । वसिष्ठाः । अत्रयः । विदेहाः ॥

अथ स्यादौ विषये तद्धितप्रत्ययांतानां बहुवचने साधनविधिमाह । लुग् १-१ ( हसे० ) बहुत्व ७-१ ( अ इ ए ) क्वचित् १-१ ( अव्य० ) त्रिपदम् । अपत्यर्थे उत्पन्नस्य अणादेःप्रत्ययस्य बहुवचने सति क्वचिदिति ऋषिवाचकशब्दविषये अनृषिवाचकविषये वा लुग्भवति न स्त्रियाम् । तत्र ण्यप्रत्ययस्य यथा । गार्ग्यः । गार्ग्यौ । बहुवचने गार्ग्य अस् इति स्थिते ( लुग्बहुत्वे० ) इति ण्यप्रत्ययस्य लुक् । निमित्ताभावे नैमित्तिकस्याप्यभाव इति वृद्धेरभावः । गर्ग अस् इति स्थिते ( सवर्णे० । स्रो० ) गर्गाः । अमेऽपि गार्ग्यम् । गार्ग्यौ । गर्गान् । गार्ग्येण । गार्ग्याभ्याम् । गर्गैः । एवं सर्वत्र

१ गणः । २ बहुः ।

बहुवचने ण्यप्रत्ययलुक् । एवं वासिष्ठ. । वासिष्ठौ । बहुवचने वसिष्ठ १-३ अत्र अणो लोपः । निमित्ताभावे० इति वृद्धेरप्यभाव. । वसिष्ठ अस् ( सव० । स्रो० ) वसिष्ठाः। आत्रेय १-१ एयण् लोपः । आत्रि अस् ( ए ओ ज० । ए अय् ) स्व० ( स्रो० ) आत्रेयः । आत्रेयौ । अत्रयः । आत्रेयम् । आत्रेयौ । अत्रीन् इत्यादिरूपाणि । वैदेह १-३ अणो लोपः । वृद्धेरप्यभावः । विदेह अस् ( सव० । स्रो० ) विदेहाः । एवं राघवः । राघवा । रघवः ॥

देवतेदमर्थे ॥ देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवंति । इंद्रो देवताऽस्येति ऐंद्रं हविः । सोमो देवतास्येति सौम्यम् । देवदत्तार्थमिदं वस्त्रं दैवदत्तम् ॥

सूत्रम् । ( देवतेदमर्थे ) देवता च इदं च देवतेदमौ तयोरर्थो देवतेदमर्थस्तस्मिन् ७-१ । ( अ इ ए ) एकपदमिदं सूत्रम् । देवता स्वामित्वेन अधिष्ठापकः तस्यार्थे । इदमर्थाते । अस्येदं वस्तु अस्मिन्नर्थेपि उक्ता अणादयः प्रत्यया भवंति । इंद्रो देवताऽस्येति वाक्ये अत्र देवतार्थे अण् प्रत्ययः । णित्त्वाद् वृद्धिः । ऐंद्र ( यस्य० ) स्व० १-१ ( अतोऽम् । अम्श० ) ऐंद्रं हविः । इंद्रार्थे कल्पितं घृतमित्यर्थः । सोमो देवता अस्येति वाक्ये अत्र देवतार्थे ण्यप्रत्यय. ( आदिस्वरस्य० ) इति वृद्धिः । सौ ( यस्य० ) स्व० १-१ कुलशब्दवत्सौम्यम् देवदत्तार्थमिदम् अत्र इदमर्थे अण् । वृद्धिः । दैवदत्तम् । ( यस्य० ) स्व० । १-१ कुलशब्दवत् । एवम् आग्नेयम् वायव्यम् पित्र्यम् । इति देवतार्थे । अथ इदमर्थे नद्या अयं नादेयः । इत्यादि । देवतेदमा इत्युक्तेपि सिद्धौ अर्थग्रहणादन्यत्राप्यर्थे च उक्ताः प्रत्यया भवंति । यथा उदुंबराणि संत्यस्मिन्देशे औदुंबरो देशः । एवं बादरः इत्यादि ज्ञेयम् ॥

क्वचिद्द्वयोः ॥ पूर्वपदोत्तरपदयोः क्वचिद्वृद्धिर्भवति । आग्निमारुतं कर्म । सुहृदो भावः सौहार्दम् । [ अत्र भावे अण् वक्तव्यः ] ॥

अथ वृद्धिविशेषमाह । क्वचित् १-१ ( अव्य० ) द्वि १-२ ( त्यदा० । ओसि । ए अय् ) स्व० । ( स्रो० ) पूर्व ( चपा अ० ) क्वचिदिति क्वचित्प्रयोगांतरे पूर्वपदादेः स्वरस्य उत्तरपदादेः स्वरस्य च द्वयोरपि वृद्धिर्भवति । यथा अग्निमरुत् अग्निश्च मरुच्च अग्निमरुतौ तयोरिदं कर्म । इदमर्थेऽण् । यद्वा [ कर्मण्यप्यण् वक्तव्यः ] ( क्वचिद्द्वयो. ) इति अग्निमरुतोरुभयोरप्याद्यस्वरस्य वृद्धि. । स्व० । १-१ कुलशब्दवत् । आग्निमारुतम् एतत्कर्म । सुहृद् । सु शोभनं हृद् हृदयं यस्य स सुहृद् सुहृदो भावः [ अत्र भावेऽण् वक्तव्यः ] पश्चात् ( क्वचिद्द्वयोः ) इति सुहृद् इत्यत्र उकारऋकारयोरपि वृद्धिः । सौहार्द ( रहाद० ) जर० । स्व० । १-१ कुलशब्दवत् । सौहार्दम् । [ अत्र भावेऽण् वक्तव्यः ]

इति वक्तव्यबलादनुक्तेऽपि अण् । एवं सुभगस्य भावः सौभाग्यम् । एवं परस्त्रिया अपत्यं पारस्त्रैणेयः ॥

णितो वा ॥ उक्ताः प्रत्यया विषयांतरे णितो वा भवंति।अजो गौर्यस्यासौ अजगुः शिवः। तस्येदं धनुराजगवम्—अजगवंवा। कुमुदस्य गंध इव गंधोऽस्येति कुमुदगंधिः । तस्यापत्यं स्त्री कौमुदगंध्या । ( आवतः स्त्रियाम् ) इत्याप्प्रत्ययः । श्वशुरस्यायं ग्रामः श्वाशुर्यः। विष्णोरिदं वैष्णवम् । गव्यम् । कुल्यम् [ चतुरश्चलोपः]चतुर्शब्दस्य चकारलोपो भवति ण्यणीययोः परतः । तुर्यः । तुरीयः । [ अन्यस्य दक् ] अन्यशब्दस्य दक् आगमो भवति ईयप्रत्यये परतः । अन्यदीयम् । अर्धजरतीयम् ॥

अथ प्रयोगानुसारेण वृद्धेरभावमाह । सूत्रम् । णित् १–३ स्वर० ( स्त्रो० ) वा ३–१ ( अव्य० । ह्वे । उ ओ । ) उक्ता अणादयः प्रत्यया विषयांतरे कार्यांतरे अर्थांतरे वा णितो णकारानुबंधा णित्संज्ञका वा भवंति । वा भवंतीत्यत्र वाशब्दो व्यवस्थावाचकः । बहुलार्थकः । तेन एतेषु परेष्वादिस्वरस्य क्वचिन्नित्यं वृद्धिः। क्वचिद्वृद्धेरभावोऽपीत्यर्थः । क्वचिद्विकल्पः । उदा० । अजगुः अजोऽजन्मा गौर्वृषभो यस्य स अजगुः शिवः ( गोः ) इति गोशब्दस्य ह्रस्वः । अजगुः । द्विस्थाने । अजगोरिदं धनुः । अत्र इदमर्थेऽण् । उभयत्रापि । परत्र वृद्धिः । आ । अन्यत्र न वृद्धिः । ( वोऽयस्वरे ) अव् । स्वर० । १–१ कुलवत् । आजगवमजगवं वा धनुः । अत्र वा वृद्धिः । कुमुदस्य गंध इव गंधो यस्य स कुमुदगंधिः वयधिकरणे बहुव्रीहौ मध्यमपदलोपः ( गन्धादेरिः । यस्य० ) स्व० । कुमुदगन्धिस्तस्यापत्यमिति वाक्ये ( ण्यायनणेयण्णीयाः० ) इति अपत्येर्थे ण्यः । अत्राद्यस्योकारस्य नित्यं वृद्धिः। कौ ।(यस्य०) स्व० १–१ स्त्रीत्वात् ( आवतः स्त्रियाम् ) इत्याप् । अत्र नित्यं वृद्धिः । कौमुदगंध्या । एवं श्वशुरस्यायमिति वाक्ये इदमर्थे ण्यप्रत्ययः । वृद्धिः ( यस्य० ) स्वर० । १–१ श्वाशुर्यो ग्रामः । विष्णु । विष्णोरिदमिति वाक्ये अणप्रत्ययः । वृद्धिः । वं ( वोऽयस्वरे ) स्व० । १–१ कुलवत् । केचित् विष्णोः स्वरूपं वैष्णवमिति पठंति इदमर्थस्य पूर्वं प्रणीतत्वाद्विष्णोरिदमिति न पठंति । एवं गोरिदं घृतादि गव्यम् । इदमर्थे ण्यप्रत्ययः ( वोऽय० ) गव्यम् । कुलवत् । कुले भवं कुल्यम् ( कारकात्० ) इति ण्यप्रत्ययः । य । अत्र प्रयोगद्वये वृद्धेरभावः ( यस्य० ) युष्मद् अस्मद् । तवेदं ममेदमिति विग्रहे इदमर्थे णीयः ( त्वन्मदेकत्वे ) त्वद् मद् । क्वचिदपदांतेपि पदांतताश्रयणात्

( चपा अ० ) स्व० १-१ ( अतोऽम् ) तवेदं त्वदीयम् । ममेदं मदीयम् । अत्रापि न वृद्धिः । एवं तस्येदं-तदीयम् । यस्येदं-यदीयम् । एतस्येदं-एतदीयम् । अत्र णीयप्रत्ययो न णित् । ( चतुरश्चलोपश्च ) इति । चतुर्शब्दसंबंधिनश्चकारस्य लोपो भवति ण्यणीयप्रत्यययोः परयोः । इत्यनेनोभयत्रापि चलोपः । चतुर्णां संख्यापूरणः अयं तुर्यः तुरीयः । अत्र पूरणार्थस्य इदमर्थांतःपातित्वात् इदमर्थे ण्यणीयप्रत्यययोः अत्रापि न णित्त्वम् । ( अन्यस्य दुक् ) अन्यशब्दस्य णीयप्रत्यये परे दुगागमो भवति । ककारः स्थाननियमार्थः । अकार उच्चारणार्थः । अन्यः । अन्यस्येदमिति विग्रहे इदमर्थे णीयप्रत्ययः । ईय । दुगागमः । स्व० । अन्यदीयम् । अन्यत्रापि दुगागममिच्छंति । अन्यदर्थः । अन्यद्रागः । अन्यदाशीः । अन्यदुत्सुकः । अन्यद्भाविः । अन्यदाशाः । अन्यदास्थाः । इत्यादि अर्द्धजरती । अर्द्धजरत्याः अर्द्धवृद्धायाः स्त्रियाः इदं वस्त्रादि अर्द्धजरतीयम् । इदमर्थे णीयप्रत्ययः (यस्य०) स्व० १-१ कुलवत् । गव्यमित्यारभ्योक्तप्रयोगेषु न वृद्धिः ॥

**कारकात्क्रियायुक्ते॥** कारकादप्येते प्रत्यया भवंति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । कौसुंभम् । मथुराया आगतस्तत्र जातो वा माथुरः । ग्रामे भवो ग्राम्यः । धुरं वहतीति धुर्यः-धौरेयः ॥

सूत्रम् । कारक ५-१ ( ङसिरत् । सवर्णे० ) क्रियायुक्ते क्रियया युक्तं क्रियायुक्तं तस्मिन् ७-१ ( अइए ) द्विपदम् । कारकात् कर्तृकर्मकरणसंप्रदानापादानाधारलक्षणादपि एतेऽणादयः प्रत्यया भवंति क्रियासहिते कर्तरि कर्मणि च वाच्ये सति । षट् कारकाणि संति । ततः कारकेभ्यः इति वक्तव्ये कारकादित्येकवचनं जात्यभिप्रायेण । कुंकुम ३-१ ( टेन । अ इ ए ) कुंकुमेन रक्तं वस्त्रमिति विग्रहे अत्र कुंकुमेनेत्यत्र करणं कारकम् । तथा रंजनरूपक्रियासहितं वस्त्रं कर्म । तच्चात्राभिधेयम् । अतोऽण् ( समासप्रत्यययोः ) इति तृतीयालोपः । उक्तार्थानामप्रयोगः । णित्त्वात् वृद्धिः ( यस्य० ) कौंकुमम् । कुसुंभेन रक्तं वस्त्रं कौसुंभम् । मांजिष्ठम् । मथुरा ५-१ ( ङितां यट् । सवर्णे० ) मथुराया आगतस्तत्र जातो वा इति वाक्ये अत्र अपादानं कारकम् ( विश्लेषावधौ० ) इति पंचमी । आगमनक्रियायुक्तो नरः कर्ता अभिधेयस्ततोऽण् प्रत्ययः । ( आदिस्व० । यस्य० ) स्व० । माथुरः । एवं ग्रामे भवो ग्राम्यः । अत्र भवनक्रियायुक्ते कर्तरि अभिधेये ग्रामे इत्यधिकरणकारकात् ण्यप्रत्ययः । ( यस्य० ) स्व० । १-१ ( स्रो० ) । धुर् २-१ द्वितीयाने धुरं वहतीति धुर्यो धौरेयो वा । एकत्र ण्यप्रत्ययः । तत्र वाग्रहणान्न वृद्धिः । अन्यत्र एयण् । तत्र वृद्धिः धौ । स्व० । उभयत्रापि १-१ धुर्यः ( र्वोर्वि० ) इति ( तद्धितयकारे नेति वक्तव्यम् ) तेन धुर्यः इत्यत्र

दीर्घत्वाभावः । प्रक्रियामते तु ( नभकुर्छुराम् ) इति दीर्घत्वनिषेधः । धौरेयः । अत्र वहनक्रियाश्रये कर्त्तरि अभिधेये धुरमिति कर्मकारकात् एयण् प्रत्ययः । एवम् आत्मने हितः आत्मनीनः । विश्वजनाय हितः विश्वजनीनः । अत्र संप्रदानकारकाद्वक्ष्यमाणः ईनप्रत्ययः ॥

केनेयेकाः॥क ईन इय इक इत्येते प्रत्यया भवंति भवाद्यर्थेषु।णित्त्वं चैषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः—कर्णाटको वा । ग्रामादागतस्तत्र जातो वा । ग्रामीणः । सध्रीचीनः । समीचीनः । तिरश्चीनः । [ यलोपश्च ] क्वचिद्यकारलोपो भवति । कन्याया जातः कानीनः । पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भवः पौषीणः। [ इयो वा ]क्षत्त्रात् भवः क्षत्त्रियः—क्षात्त्रः।शुक्रो देवतास्येति शुक्रियम् । इंद्रस्य इदं इंद्रियम् । अक्षैर्दीव्यतीत्याक्षिकः । शाब्दिकः । वेदे भवा वैदिकी स्तुतिः ऋक् वा । तार्किकः ॥

सूत्रम् ( केनेयेकाः ) कश्च ईनश्च इयश्च इकश्च केनेयेकाः १–३ ( सवर्णे० । स्रो० ) एकपदम् ( नाम्नो० ) भवाद्यर्थेषु उत्पन्नागताद्यर्थेषु इदमर्थे च वाच्ये सति क ईन इय इक एते चत्वारः प्रत्यया भवंति । णित्त्वं चैषामिति । एषां कादीनां प्रत्ययानामणित्त्वेऽपि वैकल्पिकं णित्त्वं व्यवस्थितविकल्पेन णित्त्वं भवति ( णितो वा ) इत्युक्तत्वात् । तेन क्वचित्प्रयोगे विकल्पेन वृद्धिः । क्वचिन्नित्यं वृद्धिः । क्वचित्सर्वथापि वृद्धिर्न भवतीति भावार्थः । कर्णाटे कर्णाटदेशे भवः कार्णाटकः—कर्णाटको वा । उभयत्रापि कप्रत्ययः । एकत्र वृद्धिः । अन्यत्र न वृद्धिः । १–१ ( स्रो० ) अत्र भवार्थे कप्रत्ययः । ग्राम । ग्रामादागतस्तत्र जातो वा ग्रामीणः । आदिशब्दात् अत्र आगमार्थे ईनप्रत्ययः । ( यस्य० । ष्कर्णो० ) । १–१ सध्र्यच् । सध्र्यङ् । एवं सध्रीचीनः । अथवा सध्रीचि भवः सध्रीचीनः अत्र स्वार्थे ईनप्रत्ययः । भवार्थे वा ईनः । वर्णविश्लेषे सध्रि अंच् ( अंचेर्दीर्घश्च ) इति अलोपः । इकारस्य च ई दीर्घः । स्व० । १–१ एवं सम्यङ् । एवं समीचीनः । यद्वा । समीचि भवः समीचीनः । सम्यच् ईनप्रत्ययः । ( अंचेर्दीर्घश्च ) समीच् । स्व० । १–१ प्रयोगद्वयेऽपि वैकल्पिकत्वान्न वृद्धिः । एवं तिरश्चि भवस्तिरश्चीनः । तिर्यंच् ईनप्रत्ययः (तिरश्चादयः) इति तिरश्च् आदेशः । स्व० १–१ ( स्रो० ) यलोपश्च । तद्धितप्रत्यये परे नाम्नामुपधाभूतस्य यकारस्य लोपो भवति । कन्या१–१ कन्यायां भवः कानीनः । ईनप्रत्ययः कल्पितणित्त्वाद् वृद्धिः ( यस्य० ) यलोपश्च । अनेन यकारलोपः । कानीनः १–१ ।

ननु कन्यायाः कथमपत्यं संभवति । नैवम् । देवतामुनिमाहात्म्यात् कन्याया अपत्य घटते । कानीनो द्वैपायनमुनिः । एवं पुष्या । पुष्येण युक्ता रात्रिः पौर्णमासी वा पौषी । अत्र ( कारकात्० ) इति अण् । वृद्धिः । पौ ( यस्य० ) यलोपश्च । स्व० ( त्रण ईप् ) पुनः ( यस्य० ) स्व० । १-१ ( हसे० ) पौषी । यकारलोपप्रसंगादिदमुदाहरणम् । अन्यत्रापि यलोपमाह । "मत्स्यस्य यस्य स्त्रीकारे ईपि वाऽगस्त्यसूर्ययोः । तिष्यपुष्ययोर्नक्षत्रे अणि यस्य विभंजना" ॥ मत्सी । अगस्त्यस्यायम् आगस्तीयः । अगस्त्यस्येयं दिक् आगस्ती । सूर्यस्यायं सौर्यः । तत्र भवः सौरीयः सौर्यस्येयं दिक् सौरी । तिष्येण युक्तः कालस्तैषः । पुष्येण युक्तः कालः पौषः । इत्यादि । क्षतात्महाराात् त्रायते इति क्षत्रम् । क्षत्राद्भवः क्षत्रस्यापत्यं वा क्षत्रियः । अत्र इय् ( यस्य० ) स्व० । १-१ ( अतोऽम् ) पक्षेऽण् । क्षात्रः । एवं शुक्राद्भवं शुक्रियम् । यद्वा शुक्रो देवता अस्येति वा शुक्रियम् । तथा इंद्राद्भवमिंद्रियम् । तथा इंद्रस्यात्मनः प्रत्यक्षज्ञानकारणम् इंद्रियम् । क्षत्रियम् । शुक्रियम् । अत्र प्रयोगत्रयेपि विकल्पनात्सर्वथापि न वृद्धिः । अक्षैः पाशकैर्दीव्यति आक्षिकः । अत्र ( कारकात् ) इति क्रीडनार्थे इकप्रत्ययः । भवादित्वाद्वा णित्त्वं चैषाम् । इति णित्त्वं वृद्धिश्च ( यस्य० ) स्व० । १-१ ( स्रो० ) शब्दमधीते वेत्ति वा शाब्दिकः । वेदे भवा वैदिकी स्तुतिः ऋक् वा । इक्प्रत्यये ( इकण् ) इति णित्त्वाश्रयणादर्णवत्वे ( त्रण ईप् । यस्य० ) १-१ ( हसे० ) वैदिकी । एवं शास्त्रेण जयतीति शास्त्रिकः । धनुषा जयतीति धानुष्कः । भवता प्रोक्तं भवतः इदं वा भावत्कम् ॥

**त्यतनौ** ॥ किमादेरव्ययादेर्भवाद्यर्थे च त्यतनौ प्रत्ययौ भवतः । कुत्रभवः कुत्रत्यः । कुतस्त्यः । ततस्त्यः । अद्यभवः अद्यतनः । ह्योभवः ह्यस्तनः । श्वोभवः श्वस्तनः । सदाभवः सदातनः । सनातनः [ दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः ] दाक्षिणात्यः । पाश्चात्त्यः । पौरस्त्यः ॥

सूत्रम् ( त्यतनौ ) त्यश्च तनश्च त्यतनौ १-२ ( ओ औ औ ) एकपदम् । किमादेरव्ययादेश्चेति । किमादेर्भवाद्यर्थे त्यप्रत्ययो भवति तथैव अव्ययादेस्तनः । अव्ययपदस्याध्याहारात् किमादिरप्यव्ययं गृह्यते । भवाद्यर्थे इत्यत्र आदिशब्दादागतस्य ग्रहणम् । कुत्र भवः कुत्रत्यः । अत्र किमोऽव्ययाद्भवे अर्थे त्यप्रत्ययः एवं तत्र भव इति तत्रत्यः । ततोऽव्ययात् । अत्र भवः अत्रत्यः । इत्यत्र इदमो अव्ययम् । तथा कुतो भवः कुत आगतो वा कुतस्त्यः । अमा सह भवो अमात्यः । इह भव इहत्यः । इत्यादिरूपाण्यूह्यम् । अद्य भवः अद्यतनः । अत्र अद्यादेर्भवार्थे तनप्रत्ययः । ह्यो गतदिने भवा ह्यस्तनः । श्व आगामिदिने भवतीति श्वस्तनः । सदाभवः सदातनः । सना नित-

तरं भवतीति सनातनः। एवं दोषातनम्। सायंतनम्। चिरंतनम्। पुरातनम्। प्राक्तनम्। इत्यादि। [ दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः ] दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः॥

**स्वार्थेपि॥** उक्ताः वक्ष्यमाणाश्च प्रत्ययाः स्वार्थेपि भवंति। देवदत्त एव दैवदत्तकः। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। चोर एव चौरः। ( भागरूपनामभ्यो धेयः ) भागधेयम्। रूपधेयम्। नामधेयम्॥

सूत्रम् ( स्वार्थेऽपि ) स्वस्य अर्थः स्वार्थस्तस्मिन् ७-१ ( अ इ ए ) अपि १-१ ( अव्य० ) पूर्वोक्ता अणादयः केनेयेकाश्च प्रत्ययाः स्वार्थे अपत्याद्यर्थवर्जितेपि मूलार्थे एव भवंति। देवदत्त एव देवदत्तकः। अत्र स्वार्थे कः। चतुर्वर्णाः। चत्वार एव वर्णा इति वाक्ये ण्यप्रत्ययः वृद्धिः। जल० ( यस्य लोपः ) स्व० । १-१। कुलवत्। चातुर्वर्ण्यम्। चोर एव चौरः। स्वार्थे अण् ( यस्य० ) वृद्धिः। द्वितीय एव द्वैतीयिकः। तृतीय एव तार्तीयिकः। त्रयो लोका एव त्रैलोक्यम्॥

*[ अणीनयोर्युष्मदस्मदोस्तवकादिः ]* अण् च ईनश्च अणीनौ तयोः परतः युष्मदस्मदोः यथासंख्येन तवकममकौ आदेशौ भवतः।एकत्वे तवकममकौ। द्वित्वबहुत्वयोर्युष्माकास्माकौ।तव इदं तावकम्।मम इदं मामकम्। तावकीनः। मामकीनः। यौष्माकः। आस्माकः। यौष्माकीणः। आस्माकीनः॥

[ अणीनयोः० ] इत्यादि वक्तव्यरूपम्। युष्मदस्मादित्येतयोः अणप्रत्यये ईनप्रत्यये च परे तवकादिरादेशो भवति। आदिशब्दाद्द्विवचनबहुवचनयोर्विषये युष्मदस्मदोर्युष्माकास्माकौ आदेशौ भवतः। तत्र युष्मद् एकत्वे अणीनयोः परयोस्तवकादेशः। द्वित्वे बहुत्वे च युष्माकः। अस्मदश्च एकत्वे ममकादेशः। द्वित्वे बहुत्वे च अस्माकः। युष्मद् अस्मद्। तवायं तावकः। ममायं मामकः। उभयत्रापि इदमर्थे अण्। एकस्य तवकः। द्वितीयस्य ममकः। णित्वात् ( आदिस्वरस्य० ) इति वृद्धिः ( यस्य लोपः ) १-१ ( सो० ) पुनः युष्मद् अस्मद्। तवायं तावकीनः। ममायं मामकीनः। भवाद्यर्थे इति। आदिशब्दात् इदमर्थेऽपि ईनप्रत्ययः वृद्धिश्च ( यस्य० ) स्व०। सिद्धम्। युष्मद् अस्मद्। युवयोः युष्माकं वा अयं यौष्माकीणः। आवयोः अस्माकं वा अयम् आस्माकीनः। द्वाभ्यामण्। द्वाभ्यामीनः। युष्मदो युष्माकः आदेशः। अस्मदश्च अस्माकः। वृद्धिः। यौष्माकः। आस्माकः। सर्वत्र ( यस्य० ) यौष्माकीण इत्यत्र अयमत्याद्दारकवर्गपवर्गान्तरात् ( ष्नो० )॥

वत्तुल्ये ॥ तुल्ये सादृश्यार्थे वत्प्रत्ययो भवति ।चंद्रेण तुल्यं चंद्रवन्मुखम् । घटेन तुल्यं घटवत् उदरम् । पटवत् कम्बलम् ॥

सूत्रम् । वत् १-१ ( हसे० ) तुल्य ७-१ सदृशत्वस्यार्थे उपमानार्थे वाच्ये वत्प्रत्ययो भवति । चंद्र । चंद्रेण तुल्यं सदृशं चंद्रवत् । वत्प्रत्ययः । ( क्त्वाद्यंतं वा ) इति वत्प्रत्ययांतस्य अव्ययसंज्ञा । ततः १-१ (अव्य०) एवं घटेन तुल्यं घटवत् । ( सार्वविभक्तिकाद्वत ) इत्येके । यथा-घटवत् वेणुकरंडे तिष्ठति किं निर्मलं नीरम् । अत्र घटवत् पटवत् इति सप्तम्यंताद्वत् । गिरिवत्तुंगो गजः । इत्यादौ गुणतुल्यत्वेऽपि वत् । राजेव वर्त्तते राजवत् । देवमिव भवंतं पश्यामि इति देववत् । राज्ञेव व्यवहृतमनेन राजवत् । ब्राह्मणायेव देवदत्ताय ददाति ब्राह्मणवत् । पर्वतादिव आसनादवरोहति पर्वतवत् । ब्राह्मणस्येव वृत्तमस्येति ब्राह्मणवत् । मथुरायामिव पाटलिपुत्रे प्रासादाः मथुरावत् । एवं यथाप्रयोगं ज्ञेयम् ॥

भावे तत्वयणः॥शब्दस्य प्रवृत्तिनिमित्तं भावः तस्मिन्भावे त त्व यण् इत्येते प्रत्यया भवंति । ब्राह्मणस्य भावो ब्राह्मणता । तांतस्य नित्यं स्त्रीलिंगत्वादसमाहारे ता च । [ त्रैगुणश्च ] त्रेता । जनता । तयणौ नपुंसकलिंगौ भवतः। ब्राह्मणत्वम् । ब्राह्मण्यम् । सुमनसो भावः सौमनस्यम् । सौभाग्यम् । विदुषो भावः वैदुष्यम् [ कर्मण्यपि यण् वक्तव्यः]ब्राह्मणस्य कर्म ब्राह्मण्यम्।राज्ञ इदं कर्म राज्यम्-राजन्यम्। नो वा॥ नांतस्य टेर्लोपो भवति यकारे स्वरे च परे। इति टिलोपः ॥

सूत्रम्। भावे ७-१ ( अ इ ए ) तत्वयण् तश्च त्वश्च यण् च तत्वयण् १-३ स्व०। ( स्रो० ) अथ सूत्रं व्याचिख्यासुः प्रथमं भावशब्दं व्याचष्टे । शब्दस्य प्रवृत्तिनिमित्तं भावः । येन शब्दस्य प्रवृत्तिः प्रवर्त्तनं संपद्यते भवति तत्प्रवृत्तिनिमित्तम् । ततो यच्छब्दस्य ब्राह्मणादेः प्रवृत्तेः कारणं स एव भावः। जातिद्रव्यगुणक्रियाभिः शब्दस्य प्रवृत्तिनिमित्तं भाव इत्युच्यते तस्मिन् भावेर्थे त त्व यण् इत्येते त्रयः प्रत्यया भवंति । उदा० । ब्राह्मणस्य भाव इति विग्रहे अत्र ब्राह्मण इति जातिरूपशब्दस्य यो भावो यजनादिक्रियानिष्ठत्वलक्षणः स ब्राह्मणशब्दप्रवृत्तिनिमित्तमतस्तप्रत्ययः । अत्र तप्रत्ययांतं नाम स्त्रीलिंगम् । त्व यण् इत्येतदंतं नपुंसकलिंगं तत्र तांतस्य नित्यं स्त्रीलिंगे वर्त्तमानत्वात् ( आवतः स्त्रियाम् ) इत्याप् । स्त्रीलिंगाधिकारात् पुनर्विशेषं वक्तव्येनाह [ समाहारे ता च ]समाहारेऽपि तप्रत्ययो भवति । चशब्दाचस्मिन् परे त्रैगुणः । तप्रत्य-

यांतश्च आवंत इत्यर्थः । कश्चित्तु ( समाहारेतश्च ) इति पश्चात् ( आवतः स्त्रियाम् ) त्रि–त्रयाणां समाहारस्त्रेता । अत्र तामत्यये कृते त्रेर्गुणः । १–१ ( आपः )सेर्लोपः। जन–जनानां समाहारो जनता । एवं यणप्रत्यये ब्राह्मणस्य भावो ब्राह्मण्यम् १–१ ( अतोऽम् ) सुमनस्–सुमनसो भावः सौमनस्यम् । द्रव्यम् । अत्र यण् वृद्धिः । सौ । स्व० । १–१ ( अतोम् ) सुभग–सुभगस्य भावः सौभाग्यम् । अत्र गुणः । अत्र यणप्रत्यये ( क्वचिद्द्वयोः ) इति सु भग इत्युभयोर्द्वयोर्वृद्धिः ( यस्य० ) स्व० । ( अतोम् ) विद्वस्–विदुषो भावो वैदुष्यम् । अत्र क्रिया यण् वृद्धिः । वै ( वसोर्व उः) स्व० ( किलॢ० ) संस्य पः । स्व० । कुलवत् एवं विद्वत्ता । विद्वत्त्वम् । ( वसां रसे । खसे च० ) स्व० । सर्वत्र तद्धितविकल्पानुवृत्तिः । तेन यूनो भावो यौवनम्–रमणीयस्य भावो रमणीयकम्–रामणीयकम् । वृद्धस्य भावो वार्द्धकम् । चपलस्य भावश्चापलम् । इत्यादौ अण्प्रत्ययोपि भवति । ( कर्मण्यपि० )कर्मार्थेपि यणप्रत्ययो वक्तव्यः । ब्राह्मणस्य कर्म ब्राह्मण्यम् । सुगमम् । राजन्–राज्ञ इदं कर्म राज्यम् । राजन्यं च । उभयत्रापि कर्मणि यण् एकत्र ( नो वा ) इति टिलोपः । राज् । स्व० । अन्यत्र न टिलोपः । स्व० । उभयत्रापि १–१ कुलवत् । जातावपि यण् । राज्ञो जातीयः राजन्यः । अपिशब्दात् मुनेः मौनम् । कर्मणि साधुः कर्मण्यः । सभायां साधुः सभ्यः । यशसे हितं यशस्यम् ॥

लोहितादेर्डिदिमन् ॥ लोहितादेर्भावेर्थे इमन्प्रत्ययो भवति स च डित् । डित्वाट्टिलोपः । लोहितिमा । अणोर्भावः अणिमा । लघोर्भावो लघिमा । महतो भावो महिमा । ऋ र इमनि॥ ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । बहोर्भाव इति विग्रहे । बहोर्लोपो भू च बहोः ॥ बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बहोः स्थाने भू चादेशः । भूमा ॥

सूत्रम् । ( लोहितादे० ) लोहित आदिर्यस्य स लोहितादिस्तस्मात् ५–१ ( डिति । ह्रस्य )इत्यलोपः ( स्नो० ) डिदिमन् १–१ ( ह्सेपः० ) लोहितादेर्नाम्नो भावेऽर्थे इमन्प्रत्ययो भवति स च डित्संज्ञकः । परम् ( अनेकस्वरात् डिदिति वक्तव्यम् ) तेन भूमा इत्यत्र एकस्वरे टिलोपो न । उदा० । लोहितस्य रक्तस्य भाव इति विग्रहे इमन्प्रत्ययः डित्वाट्टिलोपः ( डिति टेः ) स्व० । १–१ ( नोपधायाः । ह्से० । नाम्नो० ) एवम् अणोर्भावः अणिमा । तथा लघोर्भावो लघिमा । एवं महतो भावो महिमा । राजन्शब्दवत् । ऋ ६–१ ( सांके० ) र १–१ इमनि ७–१ पृथुमृदुदृढकृशइत्यादीनां नाम्नाम् आदेर्ऋकारस्य इमनि प्रत्यये परे र आदेशो भवति । पृथु–पृथोर्भाव इति विग्रहे अनेन ऋस्थाने रः । टिलोपः । पूर्ववत् प्रथिमा ।

एवं मृदोर्भावो म्रदिमा । दृढस्य भावो द्रढिमा । कृशस्य भावः क्रशिमा । हसादेर्लघोश्च ऋकारस्येति व्याख्येयम् । तेन कृष्णिमा । ऋजिमा इत्यादौ रकारो न भवति । सर्वत्र तद्धिते विकल्पानुवृत्तिरिति । लोहितता । लोहितत्वम् । लौहित्यम् । अणुता । अणुत्वम् । लघुता । लघुत्वम् । पृथुता । पृथुत्वम् । मृदुता । मृदुत्वम् । कृशता । कृशत्वम् । दृढता । दृढत्वम् । इत्यादि भवति । सूत्रम् । बहु ५-१ ( डिति । डस्य ) इति अलोपः ( स्रो० ) लोपः १-१ पश्चात् ( नामिनो० ) भू १-१ (सांके० ) पश्चात् ( हवे । उओ ) च १-१ ( अव्य० ) बहु ६-१ ( डिति । डस्य ) इत्यकारलोपः ( स्रो० ) पंचपदम् । बहुशब्दात्परेषामिमन्प्रत्ययादीनां संबंधिन इकारस्य लोपो भवति बहुशब्दस्य च भू इत्ययमादेशो भवति । अत्र इमनादीनामिति आदिशब्दात् इमन् इष्ठ ईयस् इत्येते प्रत्यया गृह्यन्ते । यद्यपि ईयस्-ईकारोऽस्ति कारग्रहणेन केवलग्रहणमिति न्यायस्तथापि भू चादेश इत्यत्र चकारान्न दोषः । केचित्तु इमनादीनामादेर्लोपो भवतीत्येवं व्याख्यंति । अन्ये तु इमनादीनामिवर्णस्य लोपमिति व्याख्यंति । बहु । बहोर्भाव इति विग्रहे लोहितादित्वाड्डिदिमन् । एकस्वरत्वाट्टेरलोपः ( बहोर्लोपो० ) इति इकारलोपः । बहोर्भूः आदेशः । पूर्ववत् । सि ( नोपधा० । हसे० । नाम्नो० ) भूमा ॥

**अस्त्यर्थे मतुः ॥** नाम्नो मतुःप्रत्ययो भवति अस्यास्मिन्वास्तीति एतस्मिन्नर्थे । उकारो नुमीब्विधानार्थः ( उितो नुम् ) गोमान् । गोमती । श्रीमान् । श्रीमती । **अइकौ च मत्वर्थे ॥** मत्वर्थे अइकौ प्रत्ययौ भवतः । वैजयंती पताका अस्य अस्मिन् वा वैजयंतः प्रासादः । माया विद्यते अस्य अस्मिन् वा मायिकः ॥

सूत्रम् । ( अस्त्यर्थे० ) अस्तेर्धातोरर्थोऽस्त्यर्थस्तस्मिन् ७-१ ( अ इ प ) मतु १-१ ( स्रो० ) अस्यास्ति स्वेन आस्ति अस्मिन्विषये वा इदमस्ति इत्येतस्मिन्नर्थे तद्धितान्नाम्नो मतुप्रत्ययो भवति । अत्र मतुप्रत्यये उकारः ( उितो नुम् ) इति नुमविधानार्थस्तथा ( उ्रितः ) इति ईब्विधानार्थश्च । गौरस्यास्तीति द्वितीये स्त्रीविशेषणे गौरस्यास्तीति उभयत्रापि मतुः । मत् । आद्ये १-१ ( उितो नुम् ) मनत् ( अत्वसोः सौ दीर्घः ) मानत् ( हसे० । संयोगां० ) गोमान् । द्वितीये ( उ्रितः ) इति ईप् । स्व० । १-१ ( हसे० ) गोमती । नपुंसकलिंगे तु गोमत् । एवं श्रीमान् । श्रीमती । नित्ययोगातिशयप्रशस्तादिविशिष्टे अस्त्यर्थे मतुरिति केचित् । तन्मते नित्यं श्रीरस्त्यस्येति श्रीमान् । अतिशयिता प्रीतिरस्यास्तीति प्रीतिमान् । प्रशस्ता धीरस्त्यस्येति धीमान् । किंच सूत्रम् ( अइकौ च मत्वर्थे ) अश्च इकश्च अइकौ १-२ मतोः अर्थो मत्वर्थस्तस्मिन् मत्वर्थे ७-१ यद्यपि समासे संधिर्निश्चयेन स्यात्तथाप्यत्र स्पष्टार्थत्वात् ( अइकौ० ) इत्यत्र संधिर्न

कृतः । क्वचित्तु ( एको च मत्वर्थे ) इत्येन दृश्यते । मत्वर्थे इति मतुप्प्रत्ययार्थे अर्थात् अस्त्यर्थे एव नाम्नः अइकौ इत्येतौ प्रत्ययौ भवतः। वैजयंती नाम पताका ध्वजो विद्यते अस्मिन् प्रासादे इति विग्रहे अप्रत्ययः ( यस्य० ) इवे इलोपः। स्व० । १–१ ( स्रो० ) वैजयंतः प्रासादः। तथा माया। माया अस्त्यस्येति मायिकः पूर्ववत् इकप्रत्ययः ( यस्य० ) स्व० । मायिकः। क्वचिदप्रत्ययो णिदपि । प्रज्ञा अस्यास्तीति प्राज्ञः । श्रद्धा अस्यास्तीति श्राद्धः ॥

**मांतोपधाद्वत्विनौ** ॥ मकारांतान्मकारोपधादकारांतादकारोपधाच्च वत्विनौ प्रत्ययौ भवतोऽस्त्यर्थे । धनवान्। धनी। छत्री । दंडी।दृषद्वती भूमिः। किंवान् । शमी । ( तडिदादिभ्यश्च )तडिदादिभ्यः शब्देभ्यो वतुप्रत्ययो भवति । तडित्वान् ॥

सूत्रम् [ मांतोपधात्० ] मश्च अश्च मा । अत्र ( सवर्णे० ) अंतश्च उपधा च अंतोपधे मौ अंतोपधे यस्य स मांतोपधस्तस्मात् ५–१ पुनः पूर्वम् ( सवर्णे० ) अग्रे वत्विन् । वतुश्च इन् च वत्विनौ १–२ स्व० । पूर्वम् ( चपा अबे जबाः ) द्विपदमिदम् । मकारांतान्मकारोपधाच्च तथा अकारांतादकारोपधाच्च । यद्वा अवर्णातात् अवर्णोपधाच्च नाम्नोऽस्त्यर्थे वतु इन् एतौ द्वौ प्रत्ययौ भवतः । इन्प्रत्ययस्तु अकारांतादेव भवत्यस्त्यर्थे । प्रथमं मांतोदाहरणम् । किम् । किमस्यास्तीति वाक्ये अत्र वतुः । वत् । क्वचित्पदांतताश्रयणात् ( मोनु० ) १–१ ( ञिनो नु० । अत्वसोः० । हसे० । संयो० ) किंवान् । लक्ष्मी । लक्ष्मीरस्यास्तीति लक्ष्मीवान् । अत्र मकारोपधात् वतुः । ( नाम्न्यादिभ्यः ) इति ऊर्मिमान् भूमिमान् इत्यादौ मांतोपधत्वेऽपि न वतुप्रत्ययः । किंतु मतुप्रत्ययः । एवं शम । शमोऽस्यास्तीति शमी । अत्र मकारोपधत्वात् अकारांतत्वाच्च इन् । एवं भानि नक्षत्राणि संत्यस्येति भवान् चंद्रः । यद्वा भानि नक्षत्राणि संत्यस्मिन् इति भवान् आकाशः । अत्र अकारांतात् वतुः । एवं मालावान् । दयावान् । अत्र आकारांतात् वतुः । धनच्छत्रदंडाः । धनमस्यास्तीति धनी । छत्रमस्यास्तीति छत्री । दंडोऽस्यास्तीति दंडी । एषु सर्वत्र इन् अकारांतेभ्यः ( यस्य० ) स्व० । त्रिष्वपि १–१ ( इनां शौ सौ ) इति दीर्घः । ( हसे० । नाम्नो० ) दृषद् । दृषदः संत्यस्यामिति दृषद्वती । अकारोपधत्वाद्वतुः । उकारानुबंधत्वात् ( ऋित्वः ) इति ईप् ( क्वचिद्वतौ दीर्घः ) क्वचिद्वतुप्रत्यये परे दीर्घत्वमपि भवति । यथा अमरावती । पद्मावती । भृगावती । पुष्करावती । कुसुमावती । भोगावती । अहावती । पुष्पावती । क्वचिन्मतुप्रत्ययेपि दीर्घत्वम् । यथा । हनूमान् । सांप्रतं मांतोपधत्वं विनापि वतुप्रत्ययं वक्तव्येनाह ( तडिदादि-

भ्यश्च ) इति । तडिदादिभ्यो मांतोपवत्वरहितेभ्योपि वतुप्रत्ययो भवति । चकारात् तडित् इत्यत्र चपस्य जवत्वं न भवति । तडिदस्यास्मिन्वास्तीति तडित्वान् । एवं विद्युत् अस्यास्मिन वास्तीति विद्युत्वान् । उभयत्रापि वतुप्रत्ययो भवति । पूर्ववत् । एवं सरस्वान् । मरुत्वान् । समिध्वान् । चकारात् राजन्वान् । राजन्वती सौराज्ये । उदधौ उदन्वान् । एतौ निपात्यौ । तथा चूडासिध्मादेश्च लप्रत्ययः । चूडाऽस्त्यस्येति चूडालः । सिध्मलः । मांसलः । अंसलः । इत्यादि । ऐश्वर्ये स्वश-ब्दादामिन् । स्वम् ऐश्वर्यमस्त्यस्येति स्वामी ॥

[ एतत्कियत्तद्भ्यः परिमाणे वतुः ] यत्तदोरा॥यत्तच्छब्दयोराभवति । [ किमःकिर्यश्च ] किंशब्दस्य किरादेशो भवति वतौ परे । चकारात् प्रत्ययस्य वकारस्य यकारादेशो भवति । यावान् । तावान्।कियान् । आइश्चैतदो वा॥वतुप्रत्यये परे एतच्छब्दस्य आ इश् इत्येतावादेशौ भवतः।गुरुः शिचेति शित्वात्कृत्स्नस्य आ इति गुरुस्तथापि चकारादे-तस्यैव टेराकारादेशो भवति न कृत्स्नस्य।यस्मिन्पक्षे इशादेशस्तस्मिन् पक्षे प्रत्ययस्य वकारस्य यकारादेशो भवति । एतावान्।इयान्[तुंदा-देरिलः ] तुंदादेरिलप्रत्ययो भवति अस्त्यर्थे । तुंदिलः[औन्नत्ये दंता-दुरः ] दंतुरः। (स्वाम्याद्यर्थे)स्वामी[गंधादेरिः] सुगंधिः। आमगंधिः। [ श्रद्धादेर्लुः]श्रद्धादेर्गणाल्लुप्रत्ययो भवति।श्रद्धा अस्यास्तीति श्रद्धा-लुः । कृपालुः ।[अस्मायामेधास्रग्भ्योऽस्त्यर्थे विनिर्वक्तव्यः]तपस्वी । मायावी।मेधावी । स्रग्वी । [वाचो ग्मिनिः] वाग्मी[आलाटौ कुत्सि-तभाषिणि] वाचालः ।वाचाटः[ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः] ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः । कविदेशीयः । [ प्रशंसायां रूपः ] प्रशस्तो वैयाकरणो वैयाकरणरूपः । [ पाशः कुत्सायाम् ] कुत्सितो वैयाकरणो वैयाकरणपाशः [ भूतपूर्वे चरट्] दृष्टचरः । दृष्टचरी । [ प्राचुर्यविकारप्राधान्यादिषु मयट् ] अन्नं प्रचुरं यस्मिन्नन्नमयो यज्ञः।मृन्मयो घटः। स्त्रीमयो जाल्मः । अमृत-मयश्चंद्रः।[तदधीते वेद वेत्यत्राण् वक्तव्यः] व्याकरणमधीते वेद वेति वैयाकरणः । शोभनोऽश्वः स्वश्वः तं वेदेति सौवश्वः ॥

( एतत्किं० ) इत्यादि । एतद् किम् यद् तद् इत्येतेभ्यः शब्देभ्यः परिमाणेऽर्थे वतुप्रत्ययो भवति । उकार उच्चारणार्थः । नुमोंविधानार्थः । यद् । तद् । यत् परिमाणमस्य यावान् । तत्परिमाणमस्य तावान् । परिमाणे वतुः ( यत्तदोरा ) यद् तद् इत्येतयोष्टेराकारो भवति परिमाणेऽर्थे वतौ परे इत्यर्थः । यावत् । तावत् । उभयत्रापि १–१ ( भितो नु० । अत्वसोः० । हसे० । संयो० ) इति लोपः । सिद्धम् । स्त्रीलिंगात् यावती । नपुंसके यावत् । किम् । किं परिमाणमस्येति कियान् ( एतत्किं० ) इत्यादिना वतुप्रत्ययः ( किमः किर्यश्च ) वतुप्रत्यये परे किम्शब्दस्य कि इत्यादेशः कृत्स्नस्य भवति वतोर्वकारस्य च यकारो भवति । अनेन किमः किः वस्य च यः । चकारात् गुरुः शिच्चेति । गुरुत्वं विनापि सर्वस्य किरादेशः १–१ पूर्ववत् । एतत् ६–२ उभयत्रापि वतुप्रत्ययः ( आइश्चैतदो वा ) वतुप्रत्यये परे एतच्छब्दस्य आ इश् इत्येतावादेशौ भवतः । ( गुरुः शिच्च० ) इति न्यायात् कृत्स्नस्य आ इति गुरुस्तथापि चकारग्रहणादंतस्यैव टेराकारादेशो न कृत्स्नस्य । इश् इति शित् ( गुरुः शिच्च० ) इति शित्वात्सर्वस्य एतद् इत्यस्यादेशः वाग्रहणात् यत्र इशादेशः तत्र वकारस्य यकारः अन्यत्र न । एतावत् इयान् १–१ पूर्ववत् ( भितो० । हसे० । संयो० ) एतावान्–इयान् । ( तुंदादेरिलः ) तुंदादेः शब्दादस्त्यर्थे इलप्रत्ययो भवति । तुंदमस्यास्तीति तुंदिलः । इलप्रत्ययः ( यस्य० ) स्व० । १–१ । एवम् उदरिलः । फेनिलः ( औन्नत्ये दंतादुरः ) दंतशब्दात् औन्नत्ये उच्चत्वे अर्थे उरप्रत्ययो भवति । उन्नता उच्चा दंताः अस्येति दंतुरः । ( श्रद्धादेर्लुः ) श्रद्धादेर्नाम्नोऽस्त्यर्थे लुप्रत्ययो भवति । श्रद्धा दया कृपा । श्रद्धा अस्यास्तीति श्रद्धालुः । दया अस्यास्तीति दयालुः । कृपा अस्यास्तीति कृपालुः । सर्वत्र लुप्रत्ययः १–१ ( स्रो० ) ( अस्मायामेधा० ) इत्यादि । अस् इति ( वचादेरस् ) इत्युणादिसूत्रोक्तोऽसप्रत्ययस्तदंतान्नाम्नः पुनः मायामेधास्रज-शब्देभ्यश्च अस्त्यर्थे विनिः प्रत्ययो वक्तव्यः । इकार उच्चारणार्थः । तपस् । तप संतापे इत्यस्याऽसंतस्य रूपम् । विन् । तपोऽस्यास्तीति तपस्वी । दंडिन्शब्दवत् । १–१ ( इनां शौ सौ । हसे० । नाम्नो० ) एवं यशस्वी । एवं मायाऽस्यास्तीति मायावी । मेधा बुद्धिरस्त्यस्येति मेधावी । स्रक् मालाऽस्यास्तीति स्रग्वीति । ( दिशाम् ) इति कत्वम् । स्रज इत्यत्र अंतर्वर्तिनीं विभक्तिमाश्रित्य पदांतताश्रयणात् ( चोः कुः ) जस्य गः । १–१ सिः । पूर्ववत् । ( वाचो ग्मिनिः ) वाच्शब्दात् ग्मिनिः प्रत्ययो भवति अस्त्यर्थे । गकारानुबंधः मकारत्वनिषेधार्थः[१] । तेन ( ञमे ञमा वा ) इति न भवति । वाच् । प्रशस्ता वागस्यास्तीति वाग्मी । ग्मिन्प्रत्ययः ( चोः कुः ) पदांतताश्रयणात् । ( चपा० ) कस्य गः । स्व० । दंडिन्शब्दवत् । गोरपि अस्त्यर्थे ग्मिनिः । गावो विद्यंतेऽस्येति गोमी । ( आलाटौ कुत्सितभा-

१ ञमत्वप्रतिषेधार्थं ।

पिणि ) आलश्च आटश्च आलाटौ । १–२ बहुभाषिणीत्येके । कुत्सितं भाषत इत्येवंशीलः कुत्सितभाषी तस्मिन् अभिधेये वाच्शब्दात् आल आट इत्येतौ प्रत्ययौ भवतः। वाच् । कुत्सिता वागस्येति वाचालः । वाचाटः । एकत्र आलः । अन्यत्र आटः । ( स्व० ) १–१ ( स्रो० ) ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः । स्तोकमात्रमपरिसमाप्तौ अपरिपूर्णत्वे किंचिन्न्यूनत्वे वाच्ये नाम्नः कल्प देश्य देशीय इत्येते त्रयः प्रत्यया भवंति । सर्वज्ञ पटु कवि । ईषदपरिसमाप्तः अपरिपूर्णः सर्वज्ञः सर्वज्ञकल्पः । ईषदपरिसमाप्तः पटुः पटुदेश्यः । पटुदेशीयः । ईषदपरिसमाप्तः कविः कविदेशीयः । त्रिषु क्रमेण कल्पदेश्यदेशीयप्रत्ययाः । ( प्रशंसायां रूपः ) प्रशंसायां श्लाघायां वाच्यमानायां रूपप्रत्ययो भवति । वैयाकरणः । प्रशस्तो वैयाकरणो व्याकरणस्य पाठी वैयाकरणरूपः । केचिदत्र कुत्सायां पाशः इत्यपि पठंति । तन्मते कुत्सितः पाषंडः पाषंडपाशः । एवं भिषक्पाशः । इत्युदाहरणम् ( भूतपूर्वे चरट् ) पूर्वं भूत इति दर्शनादिक्रियया तत्समयात्प्रागिवषयीभूतो भूतपूर्वः तस्मिन्नर्थे चरट्प्रत्ययो भवति । दृष्ट । पूर्वं दृष्ट इति विग्रहे अत्र दर्शनक्रियाया वर्तमानकालात्प्रागपि दृष्टत्वात् स्मृतिज्ञानेन विषयीभूतत्वात् भूतपूर्वोऽतश्चरट् । उभयत्रापि टकारः ईवर्थः । एकत्र पुंसि देववत् । अन्यत्रापि टित्त्वादीप् ( ष्णितः । यस्य० ) स्व० । नदीवत् ( प्राचुर्यविकारप्राधान्यादिषु मयट् ) प्रचुरस्य भावः प्राचुर्यम् । विकारोऽवस्थांतरापादनम् । प्राधान्यं मुख्यत्वं तथा आदिशब्दान्निर्वर्तनस्वरूपपुरीषावयवेषु च एष्वर्थेषु नाम्नो मयट् प्रत्ययो भवति । उदाहरणानि । यत्र १–१ अन्नं प्रचुरं अस्त्यस्मिन्निति अन्नमयो यज्ञः । अत्र प्राचुर्येर्थे मयट् । टित्त्वादीप् । अन्नमयी स्थाली । मृद् ६–१ मृदो विकारो मृन्मयः । अत्र विकारे मयट् । ( वावसाने ) दस्य तः ( प्रमे जमा० ) तस्य नः । स्वर० । यद्वा ( क्वचिज्जशानामपि प्रमा दृष्टव्याः ) इति दस्य नः । स्व० । मृन्मयो घटः । स्त्री प्रधानास्येति स्त्रीमयो जाल्मः मूर्खः अविचार्यकारी इत्यर्थः । अमृतेन निर्वृत्तोऽमृतमेव स्वरूपं यस्य वा सोऽमृतमयश्चंद्रः । अत्र निर्वर्तनार्थे मयट् । गोः पुरीष गोमयम् । शरस्यावयवाः शरमयाः वाणाः । ( तदधीते० ) इत्यादि । तच्छास्त्रादि । तच्छास्त्रमधीते पठति तद्वेद जानाति वा इत्येतस्मिन्नर्थे अण् प्रत्ययो वक्तव्यः । उदाह० । व्याकरण २–१ व्याकरणमधीते पठति अथवा वेद जानाति वैयाकरणः । स्वश्व २–१ । शोभनोऽश्वः स्वश्वस्तं वेदेति सौवश्वः पुरुषः । व्याकरण २ स्वश्व २ । एकत्राध्ययनज्ञानार्थेण् । अन्यत्र वेदेत्यर्थेऽण् । णकारो वृद्ध्यर्थः ॥

न संधिय्वोर्युट् च॥ संधिजौ य्वौ संधिय्वौ तयोः संधिजयोर्यकारवकारयोः संनंधिनः स्वरस्य वृद्धिर्न भवति। किंतु तयोर्युडागमो भवति। इट् उट् इत्येतावागमौ भवतः । वर्णविश्लेषं कृत्वा यकारात्पूर्वमि-

कारः। वकारात्पूर्वमुकारः। स्वरहीनं परेण संयोज्यम् । पश्चात् ( आदिस्वरस्य ञ्णिति वृद्धिः ) वैयाकरणः। सौवश्वः ॥

नन्वत्र स्वपदे वृद्धिराकारः क्रियतां तत्राह सूत्रम्। न १-१ ( अ०प० ) संधिय्वोः एतस्य समासो वृत्तावेव विहितः यथा संधिजौ य्वौ संधिय्वौ तयोः संधिय्वोः ६-२ स्व०(स्रो०) इट् च उट् च युट् १-१ (द्वसे०) च १-१ (अ०प०) पूर्वम् ( नामिनो-रः)जल०।चतुष्पदम्। संधिजातयोर्यकारवकारयोः संबंधिनः स्वरस्य वृद्धिर्न भवति। अत्र य्वोः इत्यत्र वि आङ् उपसर्गयोर्योगे संधिजो यकारस्तत्संबंधी स्वरश्च आकारः स च वृद्धिरूप एव। अतो न तस्य वृद्धिकार्यं किंतु य्वोर्यकारवकारयोर्युडागमः तत्संबंधी स्वर आकारः स च वृद्धिरूपः। एतस्य णित्त्वाद्वृद्धिसंभवेऽपि प्रस्तुतसूत्रेण वृद्धिनिषेधः। किंतु य्वोर्यकारवकारयोर्युडागमो भवति। युडागमः इति कोऽर्थः। तदेव विवृणोति। इट् उट् इत्येतावागमौ भवतः। टिस्वादादौ। ननु कथं संश्लिष्टस्य यकारस्य वकारस्य च इट् उट् इत्येतौ आगमौ भवत इत्याह। व्य् आस इति वर्णविश्लेषवियोजनामसंयोगेनोच्चारणं कृत्वा यकारात्पूर्वमिकारः कर्तव्यः। वकारात्पूर्वमुकारः कर्तव्यः। स्व०। वियास इति जातम्। पश्चात् ( आदिस्वरस्य ञ्णिति० ) इति वृद्धिः। वैयासः ( यस्य० ) स्व० ( स्रो० ) वैयाकरणः। सौवश्वः। इति सिद्ध्यति। अन्यः। अत्राप्यर्थे स्वस्ति आह इति सौवस्तिकः। द्वारे नियुक्त इति दौवारिकः। एवम् ऐतिहासिकः। पौराणिकः। स्वस्येदं सौवम्। त्रिपक्षस्येदं त्रैपक्षम्। व्यर्थस्य भावो वैयर्थ्यम्। इत्यादि ॥

( इतो जातार्थे ) लज्जा जाता अस्य लज्जितः। पंडितः। तृपितः ॥

( इतो जातार्थे ) इतः १-१ जातार्थे ७-१ जातार्थे उत्पन्नार्थे इतप्रत्ययो भवति। उदा०। लज्जा जाताऽस्येति लज्जितः। जातार्थे इतप्रत्ययः ( यस्य० ) स्व० ( स्रो० ) एवं पुष्पितः फलितो वा वृक्षः। तारकितं नभः। पुलकितः। कंदलितः। कंटकितः। क्षुधितः ॥

तरतमेयस्विष्ठाः प्रकर्षे ॥ अतिशयेऽर्थे तर तम ईयसु इष्ठ इत्येते प्रत्यया भवंति ॥ अतिशयेन कृष्णः कृष्णतरः। कृष्णतमः।शुक्लतमः [ ईयस्विष्ठौ ङिताविति वक्तव्यौ ]( ङिति टेर्लोपः) उकारो नुमीव्विधानार्थः। (न्सम्महतो धौ दीर्घः०) अतिशयेन लघुः लघीयान्। पापीयान्।लघीयसी।पापीयसी।लघिष्ठः। पापिष्ठः।(गुर्वादेरिष्ठेमन्नीयस्सु गरादिष्टचलोपश्च) गुरु प्रिय स्थिर स्फिर उरु बहुल वृद्ध दीर्घ प्रशस्य बाढ युवन् अल्प स्थूल दूर अंतिकानां क्रमेण गर प्र स्थ स्फ वर

वंहि ज्या द्राघ श्र साध यव कन स्थव दव नेद एते आदेशा भवंति। अतिशयेन गुरुर्गरीयान् गरीयसी गरिष्ठः । गुरोर्भावः गरिमा । प्रेष्ठः प्रेयान् । स्थविष्ठः स्थवीयान्।ईलोपो ज्याशब्दादीयसः ।।ज्याशब्दादुत्तरस्य ईयस्प्रत्ययस्य ईकारस्य लोपो भवति । ज्यायान् ज्येष्ठः । अतिशयेन दीर्घो द्राघीयान् द्राघिष्ठः । अतिशयेन प्रशस्यः श्रेयान् श्रेष्ठः । ( बहोरिष्ठेपि ) भूयिष्ठः भूयान् ॥

सूत्रम् । तरश्च तमश्च ईयसुश्च इष्ठश्च तरतमेयस्विष्ठाः १–३ ( सव० । स्रो० ) प्रकर्षे ७–१ ( अ इ ए ) प्रकर्षे अतिशयार्थे नाम्नस्तर तम इयसु इष्ठ इत्येते चत्वारः प्रत्यया भवंति । इष्ठः प्रत्ययः ठांतः । कृष्ण २ अतिशयेन कृष्णः श्यामः कृष्णतरः कृष्णतमः । एकत्र तरप्रत्ययः । एकत्र तमप्रत्ययः । १–१ ( स्रो० ) एवं शुक्लतरः । शुक्लतमः [ ईयस्विष्ठौ० ] इति ईयसु इष्ठ इत्येतौ प्रत्ययौ डिरसंज्ञौ वक्तव्यौ । लघु ३ । अतिशयेन लघुर्लघीयान् । अतिशयेन लघुः स्त्री लघीयसी । अतिशयेन लघुर्लघिष्ठः । सूत्रद्वये ईयसुः । तृतीये इष्ठ० । [ ईयस्विष्ठौ डितौ० ] इति डित्वादुकारलोपः । स्व० । आद्ये १–१ उकारानुबंधत्वात् ( ञितो नुम् ) इति नुमागमः । ( न्सम्म हतो० । इसे० । संयोगां० ) द्वितीये ( ग्रञित० ) स्व० । १–१ ( इसे० ) लघीयसी । तृतीये इष्ठप्रत्ययः । डित्वाट्टिलोपः । स्व० । १–१ ( स्रो० ) लघिष्ठः । पाप ३ । अत्र पापशब्दः पापयुक्तस्य नरस्य वाचको न पापस्य । यतः पापशब्दस्य व्याकरणांतरेषु इन्प्रतिषेधोऽस्तीति यथा । ( नो पापदरिद्राभ्यामिन् । छंदसि तु भवति ) अतः अतिशयेन पापः पापवान्पुरुषः इति पापीयान् । स्त्री चेत् पापीयसी । उभयत्रापि ईयसु । डित्वाट्टिलोपः । स्व० । आद्ये १–१ लघीयसवत् । द्वितीये ( ग्रञितः ) इति ईप् । पुनः अतिशयेन पापः पापिष्ठः पापवान् पुरुषः । इष्ठप्रत्ययः । डित्वाट्टिलोपः । स्व० । १–१ ( स्रो० ) पापिष्ठः ( गुर्वादेरिष्ठेमन्नीयस्सु गरादिष्टचलोपश्च ) गुर्वादेः शब्दस्य इष्ठ इमन् ईयसु इत्येतेषु गर इत्यादय आदेशा भवंति । गुरु १ प्रिय २ स्थिर ३ स्थूल ४ प्रशस्य ५ वृद्ध ६ दीर्घ ७ बहुल ८ दूर ९ अंतिकाऽल्पा १० नां ११ क्रमेण गर् १ प्र २ स्थ ३ स्थव ४ श्र ५ ज्या ६ द्राघ् ७ वंह् ८ दव् ९ नेद् १० कनाः ११ एते आदेशा भवंति । टेश्च अलोप इति । लोपो न भवतीत्यर्थः । गुरु ३ । एकत्र ईयसु अन्यत्र इष्ठ । तृतीये भावेर्थे लोहितादेर्डिदिमन् सर्वत्र । गुरु इत्यस्य गर् । अत्र ( ईयस्विष्ठौ० ) इति डित्वेपि निषेधकथनाट्टेर्न लोपः । अतिशयेन गुरुर्गरीयान् गरिष्ठः । तृतीये गुरोर्भावो गरिमा । इमन् । स्व० । १–१ राजन्–शब्दवत् । स्त्री चेत् गरीयसी । प्रिय २ अति-

शयेन प्रियः प्रेयान्-प्रेष्ठः । ईयस् इष्ठ । उभयत्रापि ( गुर्वादेः० ) इत्यादिना प्रियस्य प्र इति आदेशः ( अ इ ए ) स्त्री चेत्प्रेयसी । एवं स्थिर इत्यस्य स्थः । अतिशयेन स्थिरः स्थेयान्-स्थेष्ठः । स्थेयसी । स्थिरस्य भावः स्थेमा । स्थूलस्य स्थव । अतिशयेन स्थूलः स्थवीयान्-स्थविष्ठः । प्रशस्यस्य श्र आदेशः । अतिशयेन प्रशस्यः श्रेयान्-श्रेष्ठः । श्रेयसी । वृद्ध २ अतिशयेन वृद्धो ज्यायान्-ज्येष्ठः । स्त्री चेत् ज्यायसी । वृद्धस्य ज्या आदेशः । एकत्र ( ईलोपो ज्याशब्दादीयसः । बहोश्च) ज्याशब्दात् बहुशब्दाच्च परस्य ईयसः प्रत्ययस्य ईकारस्य लोपो वक्तव्यः । १-१ ( प्रितो नु० । न्तम्महतो धौ० । हसे० । संयो० ) अन्यत्र इष्ठप्रत्ययः ( अ इ ए ) दीर्घः । अतिशयेन दीर्घो द्राघीयान् । द्राघिष्ठः । द्राघीयसी । दीर्घस्य द्राघ आदेशः । अतिशयेन बहुलः बंहीयान् । बंहिष्ठः । बंहीयसी । अतिशयेन दूरः दवीयान्-दविष्ठः । स्त्री चेद्दवीयसी । अतिशयेन अंतिकः नेदीयान्-नेदिष्ठः । नेदीयसी । अतिशयेन लघुः लघियान्-लघीष्ठः । लघीयसी । युवा अल्पो वा कनीयान्-कनिष्ठः। कनीयसी । पाणिनीये तु ( युवाऽल्पयोः कनन्यतरस्याम् ) अतिशयेन युवा अल्पो वा कनीयान्-कनिष्ठः । पक्षे यविष्ठः । अल्पिष्ठः ( अंतिकबाढयोर्नेदसाधौ ) अतिशयेन अंतिकः नेदीयान्-नेदिष्ठः । अतिशयेन बाढः साधीयान्-साधिष्ठः । गुरु १ स्फिर २ वृद्ध ३ तृप्राणां ४ क्रमेण गर १ स्फ २ वर्ष ३ त्रपः ४ स्युः ( विन्मतोर्लुक् ) विनो मतुपश्च लुक् स्यात् इष्ठेयसोः परयोः । अतिशयेन स्रग्वी स्रजिष्ठः-स्रजीयान् अतिशयेन त्वग्वान् त्वचिष्ठः-त्वचीयान् । एवमन्येपि यथासंभवं ज्ञेयाः । क्वचित्तु स्थूल १ दूर २ युवन् ३ ह्रस्व ४ क्षिप्र ५ क्षुद्राणाम् ६ अंत्याः यरलवाः सस्वरा एव लोप्याः । पूर्वस्य च गुणः इष्ठेयसोः परयोः । स्थविष्ठः-स्थवीयान् । दविष्ठः२यविष्ठः३ ह्रस्वस्य गुणासंभवः ह्रसिष्ठः २ क्षेपिष्ठः । बहु । अतिशयेन बहुर्भूयान्।अत्र ईयस्प्रत्यये ( बहोर्लोपो० ) इत्यादिना भूआदेशः । चकारात्( इमनादीनां० ) इति बहुवचनत्वात् ईकारस्य लोपः । अथवा (बहोश्च) इति कथनादीकारलोपः । पुनः बहु इष्ठप्रत्ययः ( बहोर्लोपः० ) इति उकारलोपः । बहोश्च भू-आदेशः । ततः ( बहोरिष्ठे यिः) बहुशब्दात् इष्ठप्रत्यये परे यिर्भवति । इति इकारस्वरस्य यकारागमो भवति । उक्तं च प्रक्रियायाम् ( इष्ठस्य इट् च ) अत्र बहोर्भू आदेशो यदादेशस्तद्वद्भवति इति बहुवत् । तथा इष्ठस्य इकारे लुप्तेपि एकदेशविकृतमनन्यवद्भवतीति न्यायात् न विरुद्धम्।भूयिष्ठः। अत्र केचिद्बहुशब्दादिष्ठसंबंधिनः इकारस्यापि इत्येव व्याचक्षते । तदसंगतम् । इकारलोपस्य प्रधानत्वात् । भूइत्यादेशस्तु इकारलोपादृते दुःसाधः पुनश्चिन्त्यम् ॥

[ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे — किमोऽव्ययादाख्याताच्च तरतमयोराम् वक्तव्यः] कुतस्तरां परमाणवः । कुतस्तमां तेषां प्रारंभकत्वम् । उच्चैस्तरां गायति । पचति-

तराम् । पचतितमाम् । [ अव्ययसर्वनाम्नामकच् प्राक्टेः ]उच्चकैः । यकः । सकः । सर्वकः ॥

[ किमोऽव्ययात्० ] इति । किम् इति अव्ययरूपात्किमः किम्-शब्दसंबंधिनोऽव्ययात् अन्यस्मादपि उच्चैरित्यादिकादव्ययात् आख्यातसिद्धात् भ्वादिरूपाद्भवति पचतीत्यादिरूपात् स्वार्थे अतिशयार्थे वा तरतमप्रत्ययौ भवतः । तस्मात्पुरतः आमप्रत्ययो भवति। उदा० । कुत इति तत्रादिगणः । किमः पंचम्यंतस्य निपातरूपमव्ययं तस्मात्तरप्रत्ययस्तमप्रत्ययश्च । उभयत्रापि आम् । कुतस्तरां परमाणवः । प्रादुर्भवंतीत्यध्याहारः । तथा तेषां परमाणूनां कुतस्तमामारंभकत्वं परमाणुद्वययोगेन द्व्यणुकाद्युत्पादकत्वं कुतः कुतोमूलोत्पत्तिरित्यर्थः । उच्चैस्तरां गायति इत्यव्ययम् । केचित्तु केवलात्किम एव प्रत्ययात्तरतमयोराम् इति व्याचक्षते । चशब्दात् उच्चैर्नीचैरव्यययोरपीति । तथा डुपचष् पाके । पच् तिप् ( अप् कर्त्तरि ) स्व० । पचति । अग्रे स्वार्थे तरस्तमश्च तस्माच्च आम् । पचतितराम् पचतितमाम् । एवं पठ व्यक्तायां वाचि । पठ पूर्ववत् । पठतितमाम् । एतदाख्यातिकम् ॥

परिमाणे दघ्नादयः ॥ परिमाणेऽर्थे दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवंति । जानुदघ्नं जलम् । शिरोद्वयसम् । पुरुषमात्रम्[द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ ] कतरो भवतोः काण्वः । कतमो भवतां तान्त्रिकः । भवतोर्यतरस्तार्किकस्तत्तर उद्गृह्णातु [ संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः ] द्वितीयः । [त्रेः संप्रसारणम्]तृतीयः । (षट्चतुरोः स्थट्)षष्ठः। चतुर्थः[पंचादेर्मट्] पंचमः । सप्तमः । अष्टमः । नवमः । [एकादशादेर्डट् ]एकादशः ॥

( परिमाणे दघ्नादयः ) इति । ऊर्ध्वप्रमाणार्थे दघ्नट् द्वयसट् मात्रट् इत्येते त्रयः प्रत्यया भवंति । वक्ष्यमाणमेतदुदाहरणम् । जानु । जानु परिमाणमस्य जानुदघ्नम्। अत्र परिमाणे दघ्नट्प्रत्ययः । जानुपरिमितं जलमित्यर्थः । तथा पुरुष । पुरुषः प्रमाणमस्येति पुरुषमात्रम् । तथा शिरस् । शिरः परिमाणमस्य शिरोद्वयसम्।टकारानुबंधत्वात् ( ट्टिढाणञ्० ) इतीप् । तेन ऊरुद्वयसी । ऊरुदघ्नी । शिरोद्वयसी । गजपतिद्वयसी । इत्यादि । द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ । व्याख्या। द्वयोर्मध्यात् बहूनां मध्यात् एकस्य निर्द्धारणे पृथक्करणे जात्यादिपरिप्रश्ने च किमादिभ्यः त्रिषु शब्देषु डितौ तरतमौ भवत इत्यर्थः । किम् । बहूनां द्वयोर्वा मध्ये क इति

कतरः । कतमः । अत्र निर्द्धारणं पृथक्करणं तस्यार्थे डतरः । डित्वाट्टिलोपः । स्व० । कतरो भवतोः काण्वः क इति कतरः । भवतोर्द्वयोर्मध्ये काण्वः कथगोत्रीयः काण्ववंशीयः कः । तथा किम् । डतमः । पूर्ववत् । कतमो भवतां मध्ये तांत्रिकः शास्त्रविदित्यर्थः । सैद्धांतिकस्तु तांत्रिकः । यद् तद् उभयत्रापि डतरः टिलोपः । स्व० ( सवर्णे० ) ( स्रो० ) भवतोर्द्वयोर्मध्ये यतरस्तार्किकस्ततर उद्गृह्णातु ब्रवीतु इति भावः । चकारात् एकशब्दात् अन्यशब्दादपि डतरडतमौ वक्तव्यौ । एकतरः । एकतमः । अन्यतरः । अन्यतमः । ( संख्येय० ) इति । संख्यातुं योग्यः सख्येयः । द्वयोस्त्रयाणां वा मध्ये योऽत्यः संख्येयो गणनायां प्रस्तुतः संख्यापूरणस्तस्य विशेषेण अवधारणे अर्थे कथित इत्यस्मिन्नर्थे परिच्छेदे द्वित्रिशब्दाभ्यां तीयप्रत्ययौ भवति । [ त्रेः संप्रसारणं च वक्तव्यम् ] त्रिशब्दस्य संप्रसारणम् । रेफस्य ऋकारः । द्वि त्रि । द्वयोः संख्यापूरणो द्वितीयः । एकस्यापेक्षयाऽपरः सख्येयः तस्य विशेषेण परिच्छेदः क्रियत इति द्विशब्दात्तीयप्रत्ययः । अन्यत्र तु त्रयाणां संख्यापूरणत्वेन विशेषावधारणे तत्रापि तीयः तस्मिंश्च परे त्रेः संप्रसारणम् । यकारस्य सस्वरस्य संप्रसारणमिकारः । वकारस्य उकारः । रेफस्य ऋकारः सस्वरस्य च । दीर्घस्वरयुक्तस्य च दीर्घेकारादिरिति संप्रसारणं वक्तव्यम् । अत्र त्रिशब्दे रेफस्य ऋकारः । द्वितीयः । तृतीयः । ( षट्चतुरोस्थट् ) इति षष् चतुर् इत्येतयोः संख्येयविशेषावधारणे संख्यापूरणेऽर्थे थट् प्रत्ययो भवति । षष् । षण्णां संख्यापूरणः षष्ठः । थट् प्रत्ययः ( ष्टुभिः ष्टुः ) थस्य ठः । स्व० । १–१ ( स्रो० ) चतुर्णां संख्यापूरणश्चतुर्थः । थट्प्रत्ययः । जल० । टित्वादीप् । षष्ठी । चतुर्थी । चतुर्णां संख्यापूरणः तुर्यः तुरीयः इति पूर्वमेवोक्तम् ( पंचादेर्मट् ) पंचादेर्नाम्नो दशपर्यंतात्संख्येयविशेषावधारणे मट्प्रत्ययो भवति । पंचानां संख्यापूरणः पंचमः । मट् प्रत्ययः ( नाम्नो० ) पंचमः । एवं सप्तमः । अष्टमः । नवमः । दशमः । इति ( एकादशादेर्डः ) टकारानुबंधत्वमप्राप्यनुवर्तनीयम् । एकादशन् इत्यादेः अष्टादश यावत्संख्येय विशेषावधारणे संख्यापूरणेऽर्थे डः प्रत्ययो भवति । विकल्पेन मट्प्रत्ययोऽपीति केचित् । एकादशन् एकादशानां संख्यापूरण एकादशः । डप्रत्ययः अत्र डित्त्वाट्टिलोपः । स्व० । १–१ ( स्रो० । सहादेः सादिः ) इति एकस्य । एका इत्यादेशः । प्रक्रियामते तु (आन्महतः०)इति योगविभागादात्वम् । देवशब्दवत् । एकत्वात् । प्राय एकवचनमेव । एवं द्वादशः । त्रयोदशः ( द्वित्र्यष्टानां द्वात्रयोष्टाः ) इति द्विशब्दस्य द्वा इत्यादेशः । अष्टन् इत्यस्य अष्टा इत्यादेशः। चतुर्दशः। पंचदशः । षोडशः ( सहादेः सादिः ) इति षस्य उः दस्य डः । (उ ओ) सप्तदशः । अष्टादशः। एकोनविंशतिः । अत्र डप्रत्यये कृते निपातनात् तिसहितस्य टेरकारस्य लोपः । स्व० । एकोनविंशतितमः । तथा स्त्रीत्वे विंशतितमी इत्यपि भवति । द्वितीये डः प्रत्ययः । "डानुबंधेंत्यस्वरादेर्लोपस्तेर्विंशतरोपि" इत्यनेन सह टिलोपः । पूर्वं ति इत्यस्य लोपः ।

पश्चाट्टेर्लोपः । स्वं० । विंशः । तथा प्रक्रियायाम् ( तिर्विंशतेर्डिति ) विंशतिशब्दस्य तेः लोपः स्यात् डिति परे । यद्वा केचित्तु टिलोपे कृते पुनः ( हलादेरीषाद्वौ ) इति टिलोपमिच्छन्ति । केचित्तु टिलोपे कृते ( सहादेः सादेः ) इति विंशति इत्यस्य विंश इत्यादेशमिच्छंति । केचित्तु वाग्रहणादेव ( पचादेर्मः ) इति मप्रत्ययमपीच्छंति । तन्मते विंशतितमः इत्यपि स्यात् । एवं एकविंशतितमः एकविंशः । द्वाविंशतितमः द्वाविंशः । त्रयोविंशतितमः त्रयोविंशः । द्वात्रिंशत्तमः द्वात्रिंशः । त्रयस्त्रिंशत्तमः त्रयस्त्रिंशः । चत्वारिंशत्तमः चत्वारिंशः । पंचाशत्तमः पंचाशः । एवं षष्टितमः । एकषष्टिः । इत्यादि ज्ञेयम् । अत्र ग्रन्थांतरेष्वेतानि वक्तव्यानि संति । द्विन्यष्टानां द्वात्रयोष्टा भवंति ( प्राक् शतादनशीतेर्वा ) शतात् प्राक् शत यावत् अनशीतेः अशीतिशब्दं वर्जयित्वान्यत्र यत्र द्वित्रिअष्टशब्दाः संति तत्र क्रमेण द्वा त्रयः अष्टा एते आदेशा भवंति । यथा । द्वादशः। त्रयोदशः। अष्टादशः ( चत्वारिंशदादौ वा ) चत्वारिंशदादिषु शब्देषु परेषु द्विन्यष्टानां द्वात्रयोष्टा वा भवंति। द्विचत्वारिंशत् । द्वाचत्वारिंशत् । त्रिचत्वारिंशत् त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत् अष्टाचत्वारिंशत्। द्विपंचाशत् द्वापंचाशत् । त्रिपंचाशत् त्रयःपंचाशत् । अष्टपंचाशत् अष्टापंचाशत् । एवं द्विषष्टिः द्वाषष्टिः । द्विसप्ततिः द्वासप्ततिः । द्विनवतिः द्वानवतिः । अनशीतिरिति विशेषणात् द्व्यशीतिः द्व्यशीतितमः । त्र्यशीतिः । अष्टाशीति । अत्र द्वात्रयोष्टा न भवंति । शतादेर्नित्यं तमट् प्रत्ययः स्यात् । शततमः । एकादशादेरधिकार्थात् सप्तम्यर्थे शते सहस्रे च डमत्ययः । एकादश अधिका यस्मिन् तत एकादशशतम् । एवं द्वादश त्रयोदश एकविंशतिशतम् इत्यादि ज्ञेयम् । शतादेरित्यादिशब्दात् शततमः । एकशततमः । मासतमः । अर्धमासतमः । संवत्सरतमः इत्यादि ज्ञेयम् । शतादीनि संख्योपयोगानि लोकादवगंतव्यानि ॥

[ कतिकतिपयाभ्यां थः ] कतिथः । कतिपयथः । [ संख्यायाः प्रकारे धा ] द्विधा। त्रिधा । चतुर्धा । पञ्चधा । [ गुणेऽण् च ] द्वेधा।त्रेधा। द्वैधम् । त्रैधम् [ क्रियाया आवृत्तौ कृत्वस् ]पंचकृत्वः। सप्तकृत्वः। [द्वित्रिभ्यां सुः ] द्विरुक्तम् । त्रिरुक्तम् [ बह्वादेः शस् ] बहुशः । शतशः । [ तयायडौ संख्याया अवयवार्थे ] द्वितयम् । त्रितयम् । द्वयम् । त्रयम् ॥ [ शेषा निपात्याः कत्यादयः ]का संख्या येषां ते कति ॥ ॥ इति तद्धितप्रक्रिया संपूर्णा ॥

इति श्रीमदनुभूतिस्वरूपाचार्यकृतसारस्वतस्य
प्रथमा वृत्तिः संपूर्णा ॥

( संख्यायाः प्रकारे धा ) संख्यावाचिनो नाम्नः प्रकारेर्थे धाप्रत्ययो भवति । द्विप्रकार इति । द्वौ प्रकारौ अस्येति वा द्विधा । त्रिधा । चतुर्धा । पंचधा । षोढा इत्यादि । ( गुणोऽण् च ) धाप्रत्यये परे द्वित्रिशब्दयोर्गुणो भवति अण् च वा भवति इकारस्य ए गुणः । द्वेधा । त्रेधा । १-१ ( क्त्वार्थंतं च ) इति । ( अव्ययाद्विभक्तेर्लुक् ) तथा धाप्रत्ययात्स्वार्थेऽण्प्रत्ययो भवति । णकारो वृद्ध्यर्थः । द्विधा । त्रिधा । उभयत्रापि अण् वृद्धिः ( यस्य लोपः ) गायत्र्याद्यण् इति नपुंसके १-१ ( अतोम् ) द्वैधम् । त्रैधम् ( क्रियाया आवृत्तौ कृत्वस् ) क्रियायाश्चलनगमनकरणादिकाया आवृत्तौ तत्संख्यापरावृत्तेन पौनःपुन्ये वारंवारार्थे पंचसप्तादिसंख्यायाः कृत्वस् इति प्रत्ययो भवति । पंचन् । पंच वारान् इति पंचन् कृत्वस्प्रत्ययः ( नाम्नो० ) प्रथमैकवचनं सि ( अव्य० । स्रो० ) पंचकृत्वः । सप्तकृत्वः । त्रिः सप्तकृत्वः । कतिकृत्वः । इत्यादीन्युदाहरणानि ( द्वित्रिभ्यां सुः ) द्वित्रिशब्दाभ्यां क्रियाया आवृत्तौ सुप्रत्ययो भवति । उकार उच्चारणार्थः । द्वौ वारौ इति द्विः । त्रीन्वारान् इति त्रिः । सुप्रत्यये कृते १-१ ( अव्य० । स्रो० ) अग्रे उक्तमिति ( नामिनो रः ) स्व० । एवं द्विर्भुंक्ते । द्वौ वारौ इत्यर्थः । त्रिरधीते । त्रिः । त्रीन् वारान् अधीते पठतीत्यर्थः । चतुः स्वपिति इत्यपि क्वचित् दृश्यते [ एकस्य सुप्रत्ययसहितस्य सकृदादेशो वक्तव्यः ] सकृत् एकवारम् । ( बह्वादेः शस् ) बह्वादेर्नाम्नो वारंवारार्थे संख्यायां वा शस् प्रत्ययो भवति । बहु । बहून् वारान् इति बहुशः । अथवा बहवः एव बहुशः । कोटिः संख्या येषां ते कोटिशः । शस् प्रत्ययः ( अव्य० ) एवं शतशः । सहस्रशः । लक्षशः । कोटिशः । अनेकशः । भूरिशः । गणशः । कतिशः इत्यादीनि ( तयायटौ संख्यायामवयवार्थे ) अवयवार्थे संख्यायां वाच्यमानायां तयट् अयट् इत्येतौ प्रत्ययौ भवतः । तत्र तयट् संख्यावाचिनः शब्दात् संभवति अयट् द्वित्रिशब्दाभ्यामेव । द्वि त्रि । उभयत्र तयट् । क्लीबे द्वितयं त्रितयं चतुष्टयम् । अयडित्यत्र डकारष्टिलोपार्थः । इति द्वितयम् । द्वौ अवयवौ यस्य समुदायस्य तत् द्वितयम् । यद्वा द्वावेव द्वयम् । त्रय एव त्रयम् । त्रयोऽवयवा यस्येति त्रयम् । एवं द्वयम् द्वि त्रि । अयट् प्रत्ययः ( यस्य० ) स्व० । १-१ ( अतोऽम् ) स्त्रीलिंगे द्वितयी । त्रितयी । चतुष्टयी । द्वयी । त्रयी [ उभयशब्दादप्ययट् वक्तव्यः ] उभौ अवयवौ अस्येत्युभयः । टित्त्वादुभयी । ( यस्य लोपः ) ( अल्पे शमीकुटीशुंडाभ्यो रः ) अल्पार्थे लघ्वर्थे वाच्ये शमी कुटी शुंडा इति त्रिभ्यः शब्देभ्यः रप्रत्ययो भवति । अल्पा शमी शमीरः । अल्पा कुटी कुटीरः । अल्पा शुंडा शुंडारः ( स्त्रीपुंसोर्नण्स्नणौ ) स्त्रीपुंसोः शब्दयोः क्रमेण नण्स्नणौ प्रत्ययौ भवतः अपत्याद्यर्थे । णकारो वृद्ध्यर्थः । स्त्रीषु भवः स्त्रिया अपत्यं स्त्रीणां समूहो वा स्त्रैणम् । पुंसि भवः पुंसोऽपत्यं पुंसां समूहो वा पौंस्नम् । तत्र स्त्रैण-

मित्यत्र नण् । णित्त्वात् वृद्धिः ( ष्णुर्नो० ) तथा पुंसः स्नणप्रत्ययः । णत्त्वाद्वृद्धिः । पौंस्नम् ( संयोगांतस्य० )इति सलोपः । १–१ । क्लीबे ( अतोऽम् । अम्श० ) अथोपसंहारमाह । ( शेषा निपात्याः कत्यादयः ) इति । शेषाः अत्र व्याकरणेऽनुक्ता ग्रन्थांतरेषु च उदाहृताः शब्दाः कति कतिपय कतिथ कतिपयथ याति तति अन्येपि विंशत् त्रिंशत् चत्वारिंशत् पंचाशत् षष्टि सप्तति अशीति नवति शत इत्यादयः शब्दाः निपात्याः निपातसिद्धाः प्रयोगानुसारेण साध्याः ॥ ॥ इति चन्द्रकीर्तिविरचितायां सुबोधिकायां तद्धितदीपिका ॥

सुबोधिकायां स्वकृतायां सूरिश्रीचन्द्रकीर्तिभिः ॥
स्यादीनां प्रक्रिया पूर्णा बभूवेयं मनोहरा ॥ १ ॥
तेषामेव हि सच्छिष्यो हर्षकीर्त्योह्वपाठकः ॥
लिखनोपक्रमं चास्याः प्रपेदे प्रीतमानसः ॥ २ ॥

इति श्रीनागपुरीयतपागच्छाऽधिराजभट्टारकश्रीचन्द्रकीर्तिसूरिकृतायां सारस्वतटीकायां प्रथमा वृत्तिः सम्पूर्णा ॥

---

१ कीर्तिस्तपोधनः पा० ।

इति सचन्द्रकीर्त्ति-सारस्वतस्य प्रथमा वृत्तिः ।




पुस्तकमिलनेका ठिकाना–खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालय, खेतवाडी–बंबई.

॥ श्रीः ॥

# सारस्वतोत्तरार्द्धम्।

( चन्द्रकीर्तिः )

नागपुरनगरस्थतपागच्छाधिराजभट्टारकश्रीचन्द्रकीर्त्तिसूरि

विरचितया सुबोधिका ( चन्द्रकीर्ति )

नाम्न्या टीकया समलङ्कृतम्।

शास्त्रिभिः संशोधितं च.

तच्च

**क्षेमराज श्रीकृष्णदास**

इत्यनेन

**मुम्बय्यां**

स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितम्।

संवत् १९६६, शके १८३१

# विद्वुषामभ्यर्थना.

अत्रास्माकं मुद्रणालय ऋग्वेदादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोपपुराणानि धर्मशास्त्र—कर्मकाण्ड—व्याकरण न्याय—योग-सांख्य—मीमांसादिशास्त्रीयग्रन्थाः काव्य—नाटक-चम्पू-प्रहसन व्यायोग सट्टकाऽऽख्यायिकादिग्रंथाः सहस्रनामाद्यनेकस्तोत्रग्रन्थाश्च विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रितास्ते योग्यमूल्येन क्रय्याः सन्ति । तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

पुस्तक मिलनेका ठिकाना—
खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम्-प्रेस, बम्बई

॥ श्रीः ॥

अथ

# सारस्वतप्रक्रियोत्तरार्धम्-

चन्द्रकीर्तिटीकोपेतम् ।



## ( द्वितीयावृत्तिः )

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

अथ भ्वादयः ।

लक्ष्मीनृसिंहौ प्रणिपत्य काश्यां बुधांश्च पद्माकरभट्टमुख्यान् ॥
सारस्वतीयां च तिबादिवृत्तिं क्रमाल्लिखेयं गणपप्रसादात् ॥ १ ॥

सारस्वतीं सदा भक्तवांछितार्थविधायिनीम् ॥
सद्वाग्विलाससंदोहदोहां कामदुघामिव ॥ १ ॥
नत्वा नागपुरीयाह्वतपोगणविभूषणम् ॥
श्रीराजरत्नसूरिं चाख्यातव्याख्या विधीयते ॥ २ ॥

अथ ग्रन्थकारः मंगलपूर्वाणि मंगलमध्यानि मंगलांतानि शास्त्राणीति वचनात् मंगलं विधाय ग्रंथारंभं प्रतिजानीते ॥

अथाख्यातप्रत्यया निरूप्यंते॥

(धातोः) वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ।

अथाख्यातेत्यादि । अथेति संज्ञासंधिविभक्तियुष्मदस्मत्स्त्रीप्रत्ययकारकसमासतद्धितलक्षणाधिकाराष्टककथनानंतरम् आख्यातं नाम व्याकरणस्य नवमोऽधिकारः स्तस्य प्रत्यया निरूप्यंते कथ्यंते । आख्यायते कथ्यंते अर्थात् निष्पाद्यन्ते भ्वादीनां रूपाणि येन तदाख्यातम् । अथवा आख्यांति आचक्षते कर्तृव्यापारमित्याख्याताः । प्रतीयते ज्ञायतेऽर्थो येभ्यस्ते प्रत्ययाः । आख्यातसंज्ञकाः प्रत्ययाः-आख्यातप्रत्ययाः। तत्र प्रथममधिकारसूत्रम् ।(धातोः)धातोरिति पंचम्येकवचनान्तं पदम् । वक्ष्यमाणा इति। वक्ष्यन्ते कथयिष्यन्ते ये ते वक्ष्यमाणाः। अतःपरं ये वक्ष्यंते प्रत्ययास्ते धातोरेवाग्रे ज्ञेया न नाम्नः । अत्र प्रत्ययशब्देन प्रायो विभक्तयो ज्ञेयाः । तदधिकाराद्यादृयाऽपि प्रत्यया धातोरेव ज्ञेयाः । तांश्च यथाधिकारं ग्रंथकृदेव वक्ष्यति ॥ अथ कोऽसौ धातुरित्यत आह-

**( भ्वादिः ) भूसत्तायामित्यादिशब्दो धातुसंज्ञो भवति । स च त्रिविधः । आत्मनेपदी परस्मैपद्युभयपदी चेति ॥**

सूत्रम् ( भ्वादिः ) भूः आदिर्यस्यासौ भ्वादिः १–१ ( स्रो० ) भूधातुः सत्तायां विद्यमानार्थे वर्त्तते इत्येवमादिर्यः शब्दो वर्णसमुदायात्मको धातुपाठेऽभिहितः स धातुसंज्ञो भवति । विभक्तिप्रत्ययरहितः केवलो भ्वादिर्धातुसंज्ञो भवति । तत्क्रमश्च धातु पाठादवगन्तव्यः । इह ग्रन्थगौरवभयान्न लिख्यते । दधात्यर्थमिति धातुः । स चेति । स धातुस्त्रिविधः । तिस्रो विधाः प्रकारा यस्य स त्रिविधः पदभेदात्त्रिप्रकारः । आत्मनेपदम् अष्टादशसु वक्ष्यमाणेषु विभक्तिवचनेषु अन्त्यनववचनात्मकं विद्यते यस्य स आत्मनेपदी एध् वृद्धावित्यादिः १ ॥ तथा परस्मैपदं वक्ष्यमाणवचनेषु आद्यं नववचनात्मकं विद्यते यस्य स परस्मैपदी भू सत्तायामित्यादिः २ ॥ तथा उभये परस्मैपदात्मनेपदे विद्येते यस्य स उभयपदी । पचति करोतीत्यादिः ३ ॥ यद्यपि निविशादेरिति सूत्रेण केषाञ्चिद्धातूनां पदविपर्ययो भवति, तथाप्यत्र स्वभावेन पदत्रयेण त्रिविधत्वमुक्तम् ॥ अथ प्रथममात्मनेपदं येभ्यो भवति तान् दर्शयति–

**( आदनुदात्तङितः ) अनुदात्तेतो ङितश्च धातोरात् । इत्यात्मनेपदं भवति ॥**

सूत्रम् ( आदनुदात्तेति ) । आत् १–१ ( हसेपः ) अनुदात्तश्च ङ् च अनुदात्तङौ तौ इतौ यस्य सोऽनुदात्तङित् तस्मात् अनुदात्तङितः ५–१ । द्विपदं सूत्रम् । अनुदात्तेत् इति धातुपाठे योऽभिहितः धातुः स अनुदात्तेत्संज्ञकः कल्पितः । एध् वृद्धौ इत्यादिक । तथा ङित् ङकारानुबन्धः शीङ् स्वप्ने इत्यादिकः ततोऽनुदात्तेतो ङितश्च धातोः आत् इति शब्देन आत्मनेपदं भवतीत्यर्थः ॥

**( ञित्स्वरितेत उभे ) ञितः स्वरितेतश्च धातोरुभे । इत्यात्मनेपदपरस्मैपदे भवतः ॥ आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्परस्मैपदं प्रयोक्तव्यम् । अन्वर्थत्वात् ॥**

अथोभयपदिनां लक्षणमाह–सूत्रम् (ञित्स्वरितेत इत्यादि) ञकार इत् यस्य स ञित् यश्च स्वरितेत्संज्ञको धातुपाठे उक्तः । ञिच्च स्वरितेच्च ञित्स्वरितेत् तस्मात् ञित्स्वरितेतः ५–१ उभे १–२ (ईऔ । अइए) द्विपदं सूत्रम् । ञितो धातोर्डुदाञ् दाने डुकृञ् करणे वृञ् वरणे इत्यादेः प्रसिद्धात्तथा स्वरितेत इति यस्य धातोर्धातुपाठे स्वरितेत् इति संज्ञा कल्पितास्ति तस्मात् डुपचष् पाके इत्यादेर्धातुपाठोक्तात् धातुगणात् । उभे इति । आत्मनेपदपरस्मैपदे द्वे अपि भवतः ॥ अथ ग्रन्थकार एवोभयपदिनां धातूनां पदप्रयोगादिक्षामाह–आत्मगामि चेदिति । चेद्यदि उभयपदिनां धातूनां क्रियायाः

फलम् आत्मगामि भवति तदात्मनेपदं प्रयोज्यम् । यथा आत्मार्थं पचते । परार्थं पचति । तथा च । यथा "जगतः पितरौ वन्दे" इत्यत्र वन्दनलक्षणक्रियायाः फलस्यात्मगामित्वात्कालिदासकविर्वन्दे इत्यत्रात्मनेपदं प्रयुक्तवान् । तथा यद्यपि "सारस्वतीमृजुं कुर्व्वे इत्यत्र पठनस्य परगामित्वात्परस्मैपदं युज्यते । तथापि तत्पाठनादुत्पन्नं पुण्यलक्षणं फलं कर्तृगाम्येवेत्यवधार्यात्मनेपदं प्रयुक्तम । परगामीति । चेद्यदि क्रियायाः फलं परगामि भवति । तदोभयिनां धातूनां परस्मैपदं भवति । यथा प्रक्रियाकौमुद्याम् । कुर्म्म इत्यत्र करोतेर्धातोः परस्मैपदं ग्रन्थस्य शिष्यानुशिष्यपठनपाठनलक्षणस्य फलस्य परगामित्वात्प्रयुक्तम् । एवमन्यदपि यथासम्भवमूह्यम् ॥ एतत्पदद्वयस्य प्रयोजनं कुत इत्यत आह-अन्वर्थादिति । आत्मने परस्मै इति द्वयोर्नाम्नोरनुगतार्थत्वात् । यादृशं नाम तादृश एवार्थः । यथा आत्मनिमित्तमात्मनेपदं परनिमित्तं परस्मैपदमित्यर्थः । तस्मात् इदं त्वात्मगामीत्यादिपदप्रयोगकथनमुभयपदिनामेवावगन्तव्यं नान्येषाम् । असार्व्वत्रिकश्चायं विधिः ॥

**( परतोऽन्यत् ) पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति । इति परस्मैपदम् ॥**

अथ परस्मैपदप्रयोगमाह-सूत्रम् ( परतोऽन्यत् ) परतः ६-१ तस्प्रत्ययान्तम्, अन्यत् १-१ अन्यशब्दस्य नपुंसकलिङ्गपदप्रयोगः ( त्वन्यादेः ) द्विपदमिदं सूत्रम् । पूर्व्वोक्तेत्यादि । पूर्व्वोक्तानि यानि सूत्रद्वयोक्तनिमित्तानि तत्रानुबन्धरहिताद्धातोः परस्मै पदं भवति । स च धातुपाठात् ज्ञेयः ॥

**( नव पम् ) तिवादीनामष्टादशसंख्याकानामाद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति ।( पराण्यात् )पराणि नववचनान्यात्मनेपदानि भवंति ॥**

अथ विभक्तिषु परस्मैपदात्मनेपदयोर्वचनसंख्यामाह-सूत्रम ( नव ) १-३( जश्शसोर्ङुरु ) पम् १-१ द्विपदं सूत्रम् । तिवादीनामिति । वर्त्तमानविधिगर्भावनाशीःप्रेरणानद्यतनपरोक्षाद्यतनीर्यश्वस्तनार्थमविपर्य्यक्रियातिपत्तिभूतार्थलक्षणानां दश विभक्तीनां यान्यष्टादशाऽष्टादश वचनानि तेषां मध्ये आद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति तानि परस्मैपदिभ्यो धातुभ्यः प्रयुज्यंते । पराणि तिवादीनामेव पराणि नववचनेभ्य उत्तराणि ते आते अन्ते इत्यादीनि नव वचनानि आत्मनेपदसंज्ञानि भवन्ति । तथात्र केषुचित्पुस्तकेषु पराण्यात् इति सूत्रं दृश्यते तत्र पराणि १-३ आत्१-१द्विपदम् । पराणि नववचनानि आत्मनेपदसंज्ञानि भवंतीति वृत्तिः सुगमा ॥

**(वर्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे)॥**

**( भ्वादिः ) भूसत्तायामित्यादिशब्दो धातुसंज्ञो भवति । स च त्रिविधः । आत्मनेपदी परस्मैपद्युभयपदी चेति ॥**

सूत्रम् ( भ्वादिः ) भूः आदिर्यस्यासौ भ्वादिः १-१ ( स्रो० ) भूधातुः सत्ताया विद्यमानार्थे वर्त्तते इत्येवमादिर्यः शब्दो वर्णसमुदायात्मको धातुपाठेऽभिहितः स धातुसञ्ज्ञो भवति । विभक्तिप्रत्ययरहितः केवलो भ्वादिर्धातुसंज्ञो भवति । तत्क्रमश्च धातु पाठादवगन्तव्यः । इह ग्रन्थगौरवभयान्न लिख्यते । दधात्यर्थमिति धातुः । स चेति । स धातुस्त्रिविध' । तिस्रो विधाः प्रकारा यस्य स त्रिविधः पदभेदात्त्रिप्रकारः । आत्मनेपदम् अष्टादशसु वक्ष्यमाणेषु विभक्तिवचनेषु अत्यनववचनात्मक विद्यते यस्य स आत्मनेपदी एध् वृद्धावित्यादिः १ ॥ तथा परस्मैपद वक्ष्यमाणवचनेषु आद्य नववच नात्मक विद्यते यस्य स परस्मैपदी भू सत्तायामित्यादिः २ ॥ तथा उभये परस्मैपदा त्मनेपदे विद्येते यस्य स उभयपदी । पचति करोतीत्यादिः ३ ॥ यद्यपि निविशादे रिति सूत्रेण केषाञ्चिद्धातूना पदविपर्ययो भवति, तथाप्यत्र स्वभावेन पदत्रयेण त्रिवि धत्वमुक्तम् ॥ अथ प्रथममात्मनेपदं येभ्यो भवति तान् दर्शयति-

**( आदनुदात्तङितः ) अनुदात्तेतो ङितश्च धातोरात् । इत्यात्मनेपदं भवति ॥**

सूत्रम् ( आदनुदात्तेति )। आत् १-१ ( हसेपः ) अनुदात्तश्च ङ् च अनुदात्तङौ तौ इतौ यस्य सोऽनुदात्तङित् तस्मात् अनुदात्तङितः ५-१ । द्विपद सूत्रम् । अनुदात्तेत् इति धातुपाठे योऽभिहितः धातुः स अनुदात्तेत्सञ्ज्ञकः कल्पितः । एध् वृद्धौ इत्यादिक । तथा ङित् ङकारानुबन्धः शीङ् स्वप्ने इत्यादिकः ततोऽनुदात्तेतो ङितश्च धातोः आत् इति शब्देन आत्मनेपद भवतीत्यर्थः ॥

**( ञित्स्वरितेत उभे ) ञितः स्वरितेतश्च धातोरुभे। इत्यात्मनेपदपरस्मैपदे भवतः ॥ आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्परस्मैपदं प्रयोक्तव्यम् । अन्वर्थत्वात् ॥**

अथोभयपदिना लक्षणमाह-सूत्रम्(ञित्स्वरितेत इत्यादि) ञकार इत् यस्य स ञित् यश्च स्वरितेत्सञ्ज्ञको धातुपाठेउक्तः। ञिच्च स्वरितेच्च ञित्स्वरितेत् तस्मात् ञित्स्वरितेतः५-१ उभे १-२ (ईमौ।अइए) द्विपदं सूत्रम्। ञितो धातोर्डुदाञ् दाने डुकृञ् करणे वृञ् वरणे इत्यादेः प्रसिद्धात्तथा स्वारितेत इति यस्य धातोर्धातुपाठे स्वरितेत् इति सञ्ज्ञा कल्पितास्ति तस्मात् डुपचष् पाके इत्यादेर्धातुपाठोक्तात् धातुगणात् । उभे इति । आत्मनेपदपरस्मैपदे द्वे अपि भवतः ॥ अथ ग्रन्थकार एवोभयपदिना धातूना पदप्रयोगशिक्षामाह-आत्मगामि चेदिति । चेयादि उभयपदिना धातुना क्रियायाः

फलम् आत्मगामि भवति तदात्मनेपदं प्रयोज्यम्। यथा आत्मार्थं पचते। परार्थं पचति। तथा च। यथा "जगतः पितरौ वन्दे" इत्यत्र वन्दनलक्षणक्रियायाः फलस्यात्मगामित्वात्कालिदासकविर्वन्दे इत्यत्रात्मनेपदं प्रयुक्तवान्। तथा यद्यपि "सारस्वतीमृजुं कुर्वे इत्यत्र पठनस्य परगामित्वात्परस्मैपदं युज्यते। तथापि तत्पाठनादुत्पन्नं पुण्यलक्षणं फलं कर्तृगाम्येवेत्यवधार्यात्मनेपदं प्रयुक्तम्। परगामीति। चेद्यदि क्रियायाः फलं परगामि भवति। तदोभयिनां धातूनां परस्मैपदं भवति। यथा प्रक्रियाकौमुदीम्। कुर्म्म इत्यत्र करोतेर्धातोः परस्मैपदं ग्रन्थस्य शिष्यानुशिष्यपठनपाठनलक्षणस्य फलस्य परगामित्वात्प्रयुक्तम्। एवमन्यदपि यथासम्भवमूह्यम्॥ एतत्पदद्वयस्य प्रयोजनं कुत इत्यत आह–अन्वर्थादिति। आत्मने परस्मै इति द्वयोर्नाम्नोरनुगतार्थत्वात्। यादृशं नाम तादृश एवार्थः। यथा आत्मनिमित्तमात्मनेपदं परनिमित्तं परस्मैपदमित्यर्थः। तस्मात् इदं त्वात्मगामीत्यादिपदप्रयोगकथनमुभयपदिनामेवावगन्तव्यं नान्येषाम्। असार्व्वत्रिकश्चायं विधिः॥

## (परतोऽन्यत्) पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति। इति परस्मैपदम्॥

अथ परस्मैपदप्रयोगमाह–सूत्रम् (परतोऽन्यत्) परतः ६–१ तस्प्रत्ययान्तम्, अन्यत् १–१ अन्यशब्दस्य नपुंसकलिङ्गपदप्रयोगः (त्वन्यादेः) द्विपदमिदं सूत्रम्। पूर्व्वोक्तेत्यादि। पूर्व्वोक्तानि यानि सूत्रद्वयोक्तनिमित्तानि तैरनुनन्यर्गहिताच्च धातोः परस्मै पदं भवति। स च धातुपाठात् ज्ञेयः॥

## (नव पम्) तिबादीनामष्टादशसंख्याकानामाद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति।(पराण्यात्)पराणि नववचनान्यात्मनेपदानि भवंति॥

अथ विभक्तिषु परस्मैपदात्मनेपदयोर्वचनसंख्यामाह–सूत्रम् (नव) १–३ (जश्शसोर्लुक्) पम् १–१ द्विपदं सूत्रम्। तिबादीनामिति। वर्त्तमानविधिप्रार्थनाशीःप्रेरणानद्यतनपरोक्षार्थाशीरर्थश्वस्तनार्थभविष्यत्क्रियातिपत्तिभूतार्थलक्षणानां दश विभक्तीनां यान्यष्टादशाष्टादश वचनानि तेषां मध्ये आद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति तानि परस्मैपदिभ्यो धातुभ्यः प्रयुज्यंते। पराणि तिबादीनामेव पराणि नववचनेभ्य उत्तराणि ते आते अन्ते इत्यादीनि नव वचनानि आत्मनेपदसंज्ञानि भवन्ति। तथात्र केषुचित्पुस्तकेषु पराण्यात् इति सूत्रं दृश्यते तत्र पराणि १–३ आत् १–१ द्विपदम्। पराणि नववचनानि आत्मनेपदसंज्ञानि भवंतीति वृत्तिः सुगमा॥

## (वर्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे)॥

( भ्वादिः ) भूसत्तायामित्यादिशब्दो धातुसंज्ञो भवति । स च त्रिविधः । आत्मनेपदी परस्मैपद्युभयपदी चेति ॥

सूत्रम् ( भ्वादिः ) भूः आदिर्यस्यासौ भ्वादिः १-१ ( सो० ) भूधातुः सत्तायां विद्यमानार्थे वर्त्तते इत्येवमादिर्यः शब्दो वर्णसमुदायात्मको धातुपाठेऽभिहितः स धातुसंज्ञो भवति । विभक्तिप्रत्ययरहितः केवलो भ्वादिर्धातुसंज्ञो भवति । तत्क्रमश्च धातुपाठादवगन्तव्यः । इह ग्रन्थगौरवभयान्न लिख्यते । दधात्यर्थमिति धातुः । स चेति । स धातुस्त्रिविधः । तिस्रो विधाः प्रकारा यस्य स त्रिविधः पदभेदात्त्रिप्रकारः । आत्मनेपदम् अष्टादशसु वक्ष्यमाणेषु विभक्तिवचनेषु अंत्यनववचनात्मकं विद्यते यस्य स आत्मनेपदी एध् वृद्धावित्यादिः १ ॥ तथा परस्मैपदं वक्ष्यमाणवचनेषु आद्यं नववचनात्मकं विद्यते यस्य स परस्मैपदी भू सत्तायामित्यादिः २ ॥ तथा उभये परस्मैपदात्मनेपदे विद्येते यस्य स उभयपदी । पचति करोतीत्यादिः ३ ॥ यद्यपि निविशादेरिति सूत्रेण केषांचिद्धातूनां पदविपर्ययो भवति, तथाप्यत्र स्वभावेन पदत्रयेण त्रिविधत्वमुक्तम् ॥ अथ प्रथममात्मनेपदं येभ्यो भवति तान् दर्शयति-

( आदनुदात्तङितः ) अनुदात्तेतो ङितश्च धातोरात् । इत्यात्मनेपदं भवति ॥

सूत्रम् ( आदनुदात्तेति ) । आत् १-१ ( हसेपः ) अनुदात्तश्च ङ् च अनुदात्तङौ तौ इतौ यस्य सोऽनुदात्तङित् तस्मात् अनुदात्तङितः ५-१ । द्विपदं सूत्रम् । अनुदात्तेत् इति धातुपाठे योऽभिहितः धातुः स अनुदात्तेत्संज्ञकः कल्पितः । एध् वृद्धौ इत्यादिकः । तथा ङित् ङकारानुबन्धः शीङ् स्वप्ने इत्यादिकः ततोऽनुदात्तेतो ङितश्च धातोः आत् इति शब्देन आत्मनेपदं भवतीत्यर्थः ॥

( ञित्स्वरितेत उभे ) ञितः स्वरितेतश्च धातोरुभे । इत्यात्मनेपदपरस्मैपदे भवतः ॥ आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्परस्मैपदं प्रयोक्तव्यम् । अन्वर्थत्वात् ॥

अथोभयपदिनां लक्षणमाह-सूत्रम् (ञित्स्वरितेत इत्यादि) ञकार इत् यस्य स ञित् यश्च स्वरितेत्संज्ञको धातुपाठे उक्तः । ञिच्च स्वरितेच्च ञित्स्वरितेत् तस्मात् ञित्स्वरितेतः ५-१ उभे १-२ (ईमौ । अइए) द्विपदं सूत्रम् । ञितो धातोर्डुदाञ् दाने डुकृञ् करणे वृञ् वरणे इत्यादेः प्रसिद्धात्तथा स्वरितेत इति यस्य धातोर्धातुपाठे स्वरितेत इति संज्ञा कल्पितास्ति तस्मात् डुपचष् पाके इत्यादेर्धातुपाठोक्तात् धातुगणात् । उभे इति । आत्मनेपदपरस्मैपदे द्वे अपि भवतः ॥ अथ ग्रन्थकार एवोभयपदिनां धातूनां पदप्रयोगशिक्षामाह-आत्मगामि चेदिति । चेयादि उभयपदिनां धातूनां क्रियायाः

फलम् आत्मगामि भवति तदात्मनेपदं प्रयोज्यम्। यथा आत्मार्थं पचते। परार्थं पचति। तथा च। यथा "जगतः पितरौ वन्दे" इत्यत्र वन्दनलक्षणक्रियायाः फलस्यात्मगामित्वात्कालिदासकविर्वन्दे इत्यत्रात्मनेपदं प्रयुक्तवान्। तथा यद्यपि "सारस्वतीमृजुं कुर्वे इत्यत्र पठनस्य परगामित्वात्परस्मैपदं युज्यते। तथापि तत्पाठनादुत्पन्नं पुण्यलक्षणं फलं कर्तृगाम्येवेत्यवधार्यात्मनेपदं प्रयुक्तम्। **परगामीति।** चेद्यदि क्रियायाः फलं परगामि भवति। तदोभयिनां धातूनां परस्मैपदं भवति। यथा प्रक्रियाकौमुदीम्। कुर्म्म इत्यत्र करोतेर्धातोः परस्मैपदं ग्रन्थस्य शिष्यानुशिष्यपठनपाठनलक्षणस्य फलस्य परगामित्वात्प्रयुक्तम्। एवमन्यदपि यथासम्भवमूह्यम्॥ एतत्पदद्वयस्य प्रयोजनं कुत इत्यत आह—अन्वर्थादिति। आत्मने परस्मै इति द्वयोर्नाम्नोरनुगतार्थत्वात्। यादृशं नाम तादृश एवार्थः। यथा आत्मनिमित्तमात्मनेपदं परनिमित्तं परस्मैपदमित्यर्थः। तस्मात् इदं त्वात्मगामीत्यादिपदप्रयोगकथनमुभयपदिनामेवावगन्तव्यं नान्येषाम्। असावार्थिकश्चायं विधिः॥

## ( परतोऽन्यत् ) पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति। इति परस्मैपदम्॥

अथ परस्मैपदप्रयोगमाह—सूत्रम् ( परतोऽन्यत् ) परतः ६–१ तस्प्रत्ययान्तम्, अन्यत् १–१ अन्यशब्दस्य नपुंसकलिङ्गपदप्रयोगः ( इत्वन्यादेः ) द्विपदमिदं सूत्रम्। पूर्वोक्तेत्यादि। पूर्वोक्तानि यानि सूत्रद्वयोक्तनिमित्तानि तत्रानुबन्धरहिताद्धातोः परस्मैपदं भवति। स च धातुपाठात् ज्ञेयः॥

## ( नव पम् ) तिबादीनामष्टादशसंख्याकानामाद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति॥( पराण्यात् )पराणि नववचनान्यात्मनेपदानि भवंति॥

अथ विभक्तिषु परस्मैपदात्मनेपदयोर्वचनसंख्यामाह—सूत्रम् ( नव ) १–३ ( जश्शसोः शिः ) पम् १–१ द्विपदं सूत्रम्। तिबादीनामिति। वर्त्तमानाविधिसंभावनाशीःअर्थानद्यतनपरोक्षश्वस्तनीआशीर्भविष्यन्त्यनद्यतनार्थभविष्यत्क्रियातिपत्तिभूतार्थलक्षणानां दश विभक्तीनां मध्ये प्रत्येकमष्टादश वचनानि तेषां मध्ये आद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति तानि परस्मैपदिभ्यो धातुभ्यः प्रयुज्यंते। पराणि तिबादीनामेव पराणि नववचनानि चरमाणि ते आते अन्ते इत्यादीनि नव वचनानि आत्मनेपदसंज्ञानि भवन्ति। तथात्र केषुचित्पुस्तकेषु पराण्यात् इति सूत्रं दृश्यते तत्र पराणि १–३ आत् १–१ द्विपदम्। पराणि नववचनानि आत्मनेपदसंज्ञानि भवंतीति वृत्तिः॥

( वर्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे )॥

प्रारब्धोऽपरिसमाप्तश्च वर्तमानः तस्मिन्नभिधेये तिबादयः प्रत्यया भवन्ति । अस्य तिबादेः पाणिनीयानां लडिति संज्ञा ॥

अथाख्यातविभक्तीना मध्ये सर्ववैयाकरणसमयप्रतिपालनार्थ वर्तमानविभक्तिप्रयोगसूत्रमाह–( वर्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् परस्मैपदानि । ते आते अन्ते से आथे ध्वे ए वहे महे ) एतानि आत्मनेपदानि । सर्वाण्यप्येतानि । प्रथमैकवचनान्तानि साङ्केतिकानि । एवमेकोनविंशतिपदं सूत्रम् । अथ वृत्तिकारो वर्तमान इति पदं व्याचष्टे–प्रारब्धेति । कश्चित्कालः क्रियायाः प्रथमक्षणे एव लग्नः स प्रारब्धः स यावत् अपरिसमाप्तः अपरिपूर्णस्तावद्वर्त्तमान इत्युच्यते । प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो कर्तुर्व्यापारो वा वर्त्तमानस्तस्मिन् उक्तलक्षणे वर्तमाने कालेऽभिधेये वाच्यमाने सति धातोस्तिबादयो महेपर्यन्ता अष्टादश प्रत्यया विभक्तिलक्षणा भवति, प्रयुज्यन्ते इत्यर्थः । तत्र तिबादयो मस्पर्य्यंताः परस्मैपदसंज्ञाः । तेआदयो महेपर्यंता आत्मनेपदसंज्ञाः । अथ प्रथान्तरे एतेपामेवाष्टादशवचनाना सज्ञान्तरमाह–अस्येति । पाणिनीयानाम् आचार्याणाम्–पाणिन्युक्तग्रन्थपाठिना वा मते अस्य तिबादेरष्टादशसंख्यस्य प्रत्ययगणस्य लट् इति सज्ञा ज्ञेया । वर्त्तमाने लट् १, विध्यर्थादिषु लिङ् २, आशीःप्रेरणयोर्लोट् ३, अनद्यतने लङ् ४, परोक्षे लिट् ५, आशिषि लिङ् ६, श्वस्तने लुट ७, भविष्यति लृट् ८, क्रियातिपत्तौ लृङ् ९, भूते लुङ् १० इति दश लकाराः ॥

( नाम्नि च युष्मदि चास्मदि च भागैः ) नामादिषूपपदेषु प्राप्तेषु सत्सु त्रिभिर्भागैरेते प्रत्यया भवन्ति । ते च त्रयो भागा यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति । नाम्नि प्रयुज्यमाने च शब्दादप्रयुज्यमानेऽपि प्रथमपुरुषः । युष्मदि मध्यमः । तथैवास्मद्युत्तमः ॥ भू सत्तायाम् ।

एतेपामेव प्रत्ययाना त्रित्रिवचनविभागभेदेन पुरुषसज्ञामाह–सूत्रम् ( नाम्नि च युष्मदि च अस्मदि च भागैः ) सप्तपदं सूत्रम् । नामादिष्विति । देवः । देवौ । देवाः । अथवा । सः । तौ । ते । इति नाम । त्वम् । युवाम् । यूयम् । इति युष्मद् । अहम् । आवाम् । वयम् । इति अस्मद् । नामयुष्मदस्मल्लक्षणेषु पदेषु उपपदेषु समीपे प्रयुज्यमानेषु परस्मैपदिनामात्मनेपदिना च प्रत्येक त्रिभिर्भागैश्छेदैः कृत्वा एते उक्ता वक्ष्यमाणाश्च प्रत्यया भवन्ति । तत्र । तिप् १ तस २ अन्ति ३, इति परस्मैपदे, ते १, आते २, अन्ते ३, इत्यात्मनेपदे प्रथमपुरुषसज्ञा ॥ १ ॥ सिप् १, थस् २, थ ३,

से १, आथे २, ध्वे ३ इति परस्मैपदात्मनेपदयोर्मध्यमपुरुपसंज्ञा २ ॥ मिप् १ वस् २ मस् ३ इति परस्मैपदे। ए १ वहे २ महे ३ इति आत्मनेपदे उत्तमपुरुपसंज्ञा ३ ॥ अथ नामादिपु प्रथमादिपुरुपप्रयोगशिक्षामाह—**नाम्नीति**। नाम्नि सामान्यलक्षणे प्रयुज्यमाने उच्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुपो भवति। युष्मदस्मदोश्च प्रयोगेऽप्रयोगे मध्यमपुरुपोत्तमपुरुपौ भवतः। ते च त्रयो भागाः यथाक्रमं प्रथमम-ध्यमोत्तमसंज्ञा भवन्ति। तेपां ग्रन्थेपूदाहरणानि प्रदर्श्यन्ते। प्रयुज्यमाने यथा। चम्पू-कथायाम्—"जयति गिरिसुतायाः कामसंतापवाहिन्युरसि रसनिपेकश्चान्दनश्चन्द्र-मौलेः" इति। यदि वा—'तं संतः श्रोतुमर्हन्ति'। तथाऽप्रयुज्यमाने यथा रत्नमाला-याम्—"शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदामरम्"।

इत्यत्र बुधा इत्यप्रयुज्यमानेऽपि नाम्नि आहुरिति प्रथमपुरुपप्रयोगः। तथा युष्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि मध्यमपुरुपः। यथा कुमारसंभवे—"त्वं पितॄणामपि पिता देवानामपि देवता॥ परतोऽपि परश्चासि विधाता वेधसामपि॥ १॥" इति प्रयु-ज्यमाने मध्यमपुरुपप्रयोगः। अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमपुरुपः। प्रयु-ज्यमाने यथा। "तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवंदे भग्रहैः काल-मीशम्"। अप्रयुज्यमाने यथा। 'मंदः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्' इत्यादि॥

## (कर्तरि पं च) परस्मैपदं कर्तरि भवति। चकारादात्मनेपदम-पि। तत्र भूइत्येतस्मात्परस्मैपदिनोऽविकरणात्कर्तरि तिबादयो योज्यन्ते। तत्रैकत्वविवक्षायां प्रथमपुरुपैकवचने भू तिप् इति स्थिते। पकारः पित्कार्यार्थः।

अथ परस्मैपदप्रयोगशिक्षामाह-(कर्तरि पं च) त्रिपदम्। पम इति परस्मैपदं तिप् तस् अन्ति इत्यादिनवलक्षणं कर्तरि कर्तृक्तावेव भवति। न केवलं परस्मैपदं किंतु आत्मने पदमपि कर्तृक्तौ भवति। अयं भावः परस्मैपदिनां धातूनां कर्तरि परस्मैपदं भवति। आत्मनेपदिनामात्मनेपदं भवति। उभयपदिनां तु उभे अपि आत्मनेपदपर-स्मैपदे भवतः। यथा 'जयंति सन्तः' इति परस्मैपदम्। 'तदनु च विजयन्ते' इत्या-त्मनेपदम्। 'सारस्वतीमृजुं कुर्वे' इत्यत्र करोतेर्धातोरात्मनेपदम्। 'प्रक्रियाकौमुदीं कुर्मः' इति परस्मैपदम्। एवमन्यत्राप्यूह्यम्। कर्मोक्तौ तु आत्मनेपदमेव भवति। अत्र प्रथमं यदुक्तं भ्वादिरिति सूत्रेण भूइत्यादीनां धातुसंज्ञा प्रतिपादिता तेन भूवा-तोर्दशानामपि लकाराणां प्रयोगं चिकीर्षुः प्रथमं वर्तमानार्थविभक्तिप्रयोगं दर्शयति—तत्रेति। तेपु परस्मैपद्यात्मनेपद्युभयपदलक्षणेपु धातुपु भूसत्तायामित्यादिर्धातुरुदात्त-त्वात्परस्मैपदी वर्तते। स चाविकरणो भवति। विक्रियतेऽनेनास्यान्तरं भजते धातुर्ने-

नेति विकरणम् । यथा प्रकृतिप्रत्ययार्थाभिधानेन सहापो विकरणम् । यद्वा । प्रकृति-प्रत्ययांतःपाती गणविभागकारकः प्रत्ययो विकरणं स चापूकर्त्तरीत्याद्याख्यातोक्तः प्रत्ययस्तद्विकरणमुच्यते । अब् विकरणं यस्यासौ अब्विकरणस्तस्मात्परस्मैपदिनोऽब्वि-करणाच्च तिनादयः परस्मैपदार्था नव प्रत्यया योज्यन्ते । इह हि धातवो दशधा । तत्राब्विकरणा भ्वादयः १, लुग्विकरणा अदादयः २, लुग्विकरणा अपि द्विरुक्ता ह्वा-दयः ३, यविकरणा दिवादयः ४, नुविकरणाः स्वादयः ५, नम्विकरणा रुधादयः६, उब्विविकरणास्तनादयः ७, अविकरणास्तुदादयः ८, नाविकरणाः क्र्यादयः ९ स्वार्थेऽन्यंताश्चुरादयः १० । तेषु भूधातुरब्विकरणस्तस्मात्तिवादयः प्रयोज्यन्ते । भूसत्तायाम् । अयं धातुः 'सत्तायां विद्यमानार्थे भवनार्थे परस्मैपदी' ( परतोऽन्यत् ) सूत्रात् । अकर्मकोऽयम् । भृङ् प्राप्तौ आत्मनेपदी । सकर्मकोऽयम् । द्वयोर्धात्वो रूपाणि निगद्यन्ते । तत्रादौ परस्मैपदिनो रूपाणि कथ्यन्ते । पश्चादात्मनेपदिनः । भूधातो-स्तिवादयो नव विभक्तयो भवन्ति । भूप्रथमपुरुषैकवचनं तिप् । अत्र पकारः पित्का-र्यार्थः, पित्कार्यं च ।( अपित्तादिर्ङित् । अवादावीप्पित्तिस्सिम। ओरौ )इत्यादि ।तदर्थोऽयं पकारः । भू ति इति स्थिते ।

**( अप् कर्तरि ) धातोरप्प्रत्ययो भवति कर्तरि विहितेषु त्यादिषु चतुर्षु दिप्पर्यन्तेषु परतः । पकारो विकरणभेदज्ञापनार्थो गुणार्थश्च । प्रकृतिप्रत्ययान्तः पतति यः प्रत्ययः स विकरणः ।**

सूत्रम् । (अप्) १-१ ( कर्त्तरि ) ७-१ द्विपदम् । धातोरिरिति भ्वादेर्धातोः प्रत्यया-न्ताच्च धातोः कर्त्तरि अप्प्रत्ययो भवति । तिवादिषु दिबाद्यन्तेषु चतुर्षु वर्तमानार्थ-विधिसंभावनार्थाशीःप्रेरणार्थानद्यतनार्थलक्षितेषु चतुर्षु प्रत्ययगणेषु परेषु सत्सु अप्रत्ययोभवतीत्यर्थः । अप् इत्यत्र पकारो विकरणभेदज्ञापनार्थः । यतोऽत्रापप्रत्य-योऽवशिष्यते ( तुदादेरः ) इत्यत्राप्यकारोऽवशिष्यते । इत्थं अप्प्रत्ययस्यान्तरं न लक्ष्यते । अतः प्रत्ययभेदज्ञापनार्थमयं पकारः । पित्कार्यार्थश्च । भू अति इति स्थिते ।

**( गुणः ) धातोरन्त्यभूतस्य नामिनो गुणो भवति ।अवादेशः भवति । द्व्यर्थविवक्षायां तस् ।**

सूत्रम् ( गुणः ) १-१ ( स्रो० ) धातोः धातुसंबंधिनोऽन्त्यभूतस्य नामिनः इवर्णो-वर्णसवर्णानां गुणः संज्ञासध्युक्तो भवति । क्वचित्पिति परे इति दृश्यते तदनि-यतम् । पितं विनापि विभराचकृतुरित्यादौ गुणस्य दृश्यमानत्वात् । भो अति इति

स्थिते। अवादेशश्चेति ( ओ अव् ) स्वरहीनं०। भवति इति सिद्धम्। द्व्यर्थविवक्षायां द्वयोर्वाच्यमानयोः सतोः प्रथमपुरुषद्विवचनं तस्। भू तस्। ( अप्कर्त० ) भू अ तस् इति स्थिते (गुणः)

( अपित्तादिर्ङित् ) पकारेतंतादिकं च विहायान्यः प्रत्ययो ङित्संज्ञो भवति। अन्य इति किम्। इडामायवर्जितो दशलकारान्तःपाती ङित्। आदिशब्दात्सीसिग्रहणम् ॥

ननु अप्प्रत्ययं विनापि गुणः क्रियतां तदर्थं सूत्रमाह-(अपित्तादि०)प् इत् यस्यासौ पित् त् आदिर्यस्यासौ तादिः। पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः १-१ङ् इत् यस्यासौ ङित् १-१ द्विपदम्। पकारानुबन्धं तिप् उप् प्रत्ययादिकम्। ता। तारौ। तारस्। इत्यादिश्वस्तनार्थप्रत्ययं च विहाय त्यक्त्वा योऽन्यः प्रत्ययः स ङकारानुबन्धं विनापि आख्याते ङित्संज्ञो भवति। पकारेतं तादिकं चेति आदिशब्दात्सिसयोर्ग्रहणम्। तेन भूतार्थे सिप्रत्यये परे अवर्तिष्ट अदर्शयत् इत्यादौ गुणः। तथा आशिषि सीट्प्रत्यये परे चेषीष्ट स्तोसीष्टेत्यादौ गुणः ॥

( क्ङित्यद्व्युसि ) किति ङिति च परे धातोर्गुणो भवति द्व्युसं वर्जयित्वा। कृतद्विर्वचनस्य उसि परे तु गुणो भवति। ततो ङित्त्वात्तसि गुणप्रतिषेधेऽप्प्रत्ययनिमित्तो गुणो भवत्येव ( स्रोर्विसर्गः ) भवतः। बह्वर्थविवक्षायां भव अन्ति इति स्थिते ( अदे ) अकारस्य लोपो भवति अकारे एकारे च परे। अदे इत्यत्र अकारैकारौ तिवादिप्रत्ययस्येत्यर्थः। भवन्ति। भवसि। भवथः। भवथ।

अथ ङित्प्रयोजनमाह-सूत्रम् ( क्ङित्यद्व्युसि ) कश्च ङ्श्च क्ङौ तौ इतौ यस्य स क्ङित् तस्मिन् क्ङिति ७-१ द्विरिति द्विरुक्तो धातुः। द्वेः द्विरुक्तस्य धातोः उस् द्व्युस् तस्मादन्योऽद्व्युस्। तस्मिन् अद्व्युसि ७-१ द्विपदं सूत्रम्। किति पिति व्यतिरिक्ते णवादौ यक्प्रत्ययादौ च ङिति तादिवर्जिते प्रत्यये यङ्प्रत्ययादौ च परे धातोर्नामिनो गुणो न भवति। तत्रापि विशेषमाह-द्व्युसमित्यादि। द्वेर्द्विरुक्तस्य धातोः उस् द्व्युस् तं द्व्युसं वर्जयित्वाऽन्यत्र गुणो न भवतीत्यर्थः। कृतद्विर्वचनादिति अप्प्रत्ययस्य लुकि कृते भ्वादेर्धातोर्द्विरुक्तात्कृतद्वित्वात्परस्य योऽन्स्थाने उसादेशो विहितः तस्मिन्परे सति ङित्त्वेपि गुणो भवतीत्यर्थः। ततोऽत्र प्रस्तुते भूधातौ तस्य ङित्त्वात्तसि परे गुणप्रतिषेधेपि अप्प्रत्ययनिमित्तो गुणो भवत्येव। गुणे कृते ( ओ अव् ) स्व०

( स्रो० ) भवतः इति सिद्धम् । बह्वर्थानां बहूनां वक्तुमिच्छा यत्र क्रियते तत्र बहुवचने भू अन्ति इति स्थिते ( अप्कर्त्त० । गुणः । ओ अव् ) ( स्वर० ) भव अंति इति जातम् । सूत्रम् । अच्च एच्च अदे तस्मिन् ७–१ सांके० । अकारस्य त्यादिप्रत्ययस्थे अकारे एकारे च परे लोपो भवति । अनेन वमध्यस्थितस्याऽप्प्रत्ययसंबंधिनोऽकारस्य लोपः । स्वर० । भवन्ति इति प्रथमपुरुषस्य वचनत्रयसाधनम् । एवं भवसि । भवथः । भवथ । इति मध्यमपुरुषे वचनत्रयसाधना । उत्तमपुरुषवचनत्रयेऽपि अप्प्रत्यये नामिनो गुणे च कृते ( ओ अव् ) स्व० । भवमि । भववः। भवमः । इति स्थिते-

( व्मोरा ) अकारस्य आत्वं भवति वकारे मकारे च परे । भवामि भवावः भवामः । स राजा धार्मिको भवति । त्वं साधुर्भवसि । अहमात्मविद्भवामि । इत्यादि प्रयोक्तव्यम् ।

सूत्रम् । व्च मूच व्मौ तयोर्व्मोः ७–२ आ १–१ सांके० । प्रत्ययसंबन्धिनोऽकारस्य तिबादेर्वकारे मकारे च परे आत्वं भवति । आनेनाऽपोकारस्य आकारः । भवामि । भवावः । भवामः । इति सिद्धम् । अथ ग्रंथकारः उक्तिप्रयोगमाह-स राजा धार्म्मिको भवति । अत्र राजा इति कर्तृपदम् । भवतीति क्रियापदम् । धातोः कर्म्मनिरपेक्षत्वात् अकर्म्मकत्वं धार्म्मिक इति विशेषणपदम् । एवं तौ राजानौ धार्म्मिको भवतः । ते राजानो धार्म्मिका भवन्ति । त्वं साधुर्भवसि । युवां साधू भवथः । यूयं साधवो भवथ । अहम् आत्मविद्भवामि । आवाम् आत्मविदौ भवावः । वयम् आत्मविदो भवामः । इत्यादि उक्तिवाक्यं प्रयोज्यम् ॥

( अव्यवधानाच्च पुरुषविशेषः ) यस्य क्रियापदेन व्यवधानं नास्ति ततः पुरुषविशेषः । अत्र व्यवधानं सूत्रस्थं ग्राह्यं न तु वाक्यस्थम् । सूत्रक्रमेण पुरुषप्रयोगो भवति । साधू स च त्वं च भवथः । अहं, त्वं स च पण्डिता भवामः । भूङ् प्राप्तौ आत्मनेपदी । तस्मात्तेप्रभृतीनि नव वचनानि प्रयोज्यानि । अप्गुणावः । भवते ।

अथ पुरुषभेदमाह–नामयुष्मदस्मदां द्वयोस्त्रयाणां वा युगपत् प्रयोगे कस्य पुरुषस्य क्रियापदं भवतीत्यत आह–, सूत्रम् ( अव्यवधानाच्चेति ) अव्यवधानात् पुरुषविशेषः । अव्यवधानाच्च पुरुषक्रियाभिः सहाऽव्यवधानादन्तरराहित्यात् प्रथममध्यमोत्तमानां क्रमेण पुरुषविशेषः, चकारात् क्रियाभिर्व्यवधानादन्तरसाहित्यात् उत्तममध्यमप्रथमाना व्युत्क्रमेण पुरुषविशेषः मध्यमप्रथमयोर्मध्यमः, उत्तममध्यमयोरुत्तमः । उत्तम-

मध्यमप्रथमेषूत्तमः । एवं सर्वल्लकारेषु ज्ञेयम् । स च त्वं च भवथः, इति क्रमव्युत्क्रमेण पुरुषविशेषः । अहं स च भवावः । अहं च त्वं च भवाव । अहं च त्वं च स च भवामः । इति व्युत्क्रमोऽप्येवमेव ज्ञातव्यः ॥ १ ॥ ( अव्यवधानात् अंतररहितात् क्रियायाः सामीप्यात् पुरुषविशेषः प्रयोक्तव्यः ) प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाणां विशेषः स्यात् । अयमर्थः । नामयुष्मदस्मदां पुरुषत्रयाणां मध्ये द्वयोस्त्रयाणां वा युगपत्प्रयोगे सति यत्क्रियायाः समीपस्थं पदं तस्यैव पदस्य पुरुषो भवति । तस्यैव पुरुषस्य क्रियापदं प्रयोज्यम् । यथा साधू स च त्वं भवथः इति । अत्र स च त्वं च इत्यत्र युष्मदः क्रियासमीपवर्त्तित्वात् क्रियाया मध्यमपुरुषः । नामयुष्मदोः प्रयोगात् द्विवचनम् । स च त्वं च साधू भवतः । अत्र नाम्नः क्रियायाः समीपवर्त्तित्वात्प्रथमपुरुषद्विवचनस्य प्रयोगः । एवं स च त्वं च अहं च साधवो भवामः इत्याद्यपि ज्ञेयम् । व्याकरणान्तरे तु युगपद्वचने परः पुरुषाणाम् अन्यत्र द्वययोगे त्रययोगे च पराश्रयमेव वचनं न तु क्रियायाः सामीप्येऽप्यादिमपुरुषवचनम्, इति वर्त्तमाने साधना । भूङ् प्राप्तौ । ङित्वादात्मनेपदी । तस्माद्धातोः तेप्रभृतीनि नव वचनानि प्रयोज्यानि । ( अप् कर्त्तरि । गुणः । ओ अव् ) भवते । भू आते इति स्थिते । ( अप् कर्त्तरि । गुणः । ओ अव् ) भव् आते इति स्थिते ।

**( आदाथ इः ) अकारात्परस्यात्–आथ्संबन्धिन आकारस्य इकारो भवति । भवेते, भवन्ते । भवसे, भवेथे, भवध्वे । ( अदे ) भवे, भवावहे, भवामहे । स श्रियं भवते ॥**

सूत्रम् । ( आदाथ इः ) आत् ५–१ ( सांके० ) आत् च आथ् च आदाथ् तस्य आदाथः ६–१ इः १–१ ( स्रो० ) आदौ ( सव० ) मध्ये ( आदये लोपश्च ) त्रिपदं सूत्रम् । अकारात्परस्य आते आथे आताम् आथाम् इति वर्त्तमाना आशीःप्रेरणाऽनद्यतनप्रथमपुरुषमध्यमपुरुषद्विवचनस्याकारस्य इकारादेशो भवति । अनेन आते इत्याकारस्य इकारः ( अ इ ए ) भवेते । भू अन्ते इति स्थिते ( अप् कर्त्तरि । गुणः । ओ अव् । (अदे) भवन्ते । भवसे । भू आथे इति स्थिते ( अप् कर्त्तरि गुणः । ओ अव् । आदाथ इः ) अनेन आकारस्य इकारः ( अ इ ए ) भवेथे । भवध्वे । भू ए इति स्थिते ( अप् कर्त्तरि । गुणः । ओ अव् । अदे ) भवे । ( व्मोरा )भवावहे । भवामहे । स पुरुषः श्रियं लक्ष्मीं भवते । इति उदाहरणम् ।

**( विधिसंभावनयोः यात् याताम् युस् यास् यातम् यात याम् याव याम ईत ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि ) विधिः कर्तव्यार्थोपदेशः । संभावनं कल्पनमूहस्तत्र**

यादादयः प्रत्यया भवन्ति । लिङिति चैषां संज्ञा पाणिनीयानाम् ॥

अथ द्वितीयलकारमाह-( विधिसंभावनयोः० ) इत्यादि सूत्रम् । विधिश्च संभावनं च विधिसंभावने तयोर्विधिसंभावनयोः ७-२ । शेषाण्यष्टादशापि पदानि प्रथमैकवचनान्तानि, एवमेकोनविंशतिपदं सूत्रम् । अथ विधिसंभावनयोरिति पदं व्याचष्टे । विधिरित्यादि । कर्त्तव्यः कर्तुं योग्यो योऽर्थः तस्योपदेशः शिक्षा स कर्त्तव्यार्थोपदेशः । अथवाऽज्ञातस्य वस्तुनो ज्ञापनं विधिः । कर्त्तव्यार्थोपदेशो यथा । विप्रो वेदमधीते । अज्ञातज्ञापनं प्रातःकृत्यादिशिक्षारूपम् । सर्वोऽप्ययं विधिः । तथा संभावनं कल्पनं विचारणमुच्यते । तस्य पर्यायान्तरम् । ऊह इति वितर्क इत्यर्थः । ततो विधौ संभावने च यादादयोऽष्टादश प्रत्ययाः । परस्मैपदात्मनेपदभेदेन भवन्ति । एषां यादादीनामष्टादशानां पाणिनीयव्याकरणपाठकानां मते लिङ् इति संज्ञा । तत्र प्रथमपुरुषैकवचने भूयात् इति स्थिते ( अप्कर्त्त० ) ( गुणः० ) ( ओ अव् ) ( स्वरही० ) भवयात् इति स्थिते ।

( या ) अकारात्परो या इर्भवति । ( अ इ ए ) भवेत् । भवेताम् ।

सूत्रम् ( या ) १-१ ( सांके० ) अकारात्परो विधिसंभावनसंबंधी प्रत्ययस्य यो या इति वर्णः स इर्भवति । अनेन या इत्यस्य इकारः ( अइ ए ) भवेत् । अग्रे प्रथमपुरुषबहुवचनोत्तमपुरुषैकवचनं वर्जयित्वा सर्वत्र या इत्यस्य इकारः ( अइ ए ) भवेताम् । बहुवचने भव युस् इति स्थिते ।

( युस इट् ) अकारात्परस्य युस इडागमो भवति । भवेयुः । भवेः । भवेतम् । भवेत ।

सूत्रम् ( युस० ) ६-१ इट् १-१ द्विपदं सूत्रम् । अकारात्परस्य युस् इत्येतस्य वचनस्य इडागमो भवति । टित्त्वादादौ ( अ इ ए )भवेयुः । भवेः । भवेतम् । भवेत । सर्वत्र ( या० ) इतीकारः उत्तमपुरुषैकवचने भव याम् इति स्थिते ।

( यामियम् ) अकारात्परो यामियं भवति । भवेयम् । भवेव । भवेम । शिष्यो गुरुशुश्रूषको भवेदिति विधिः । भवेदसौ वेदपारगो ब्राह्मणत्वादिति संभावनम् । भवेत । भवेयाताम् । भवेरन् । भवेथाः । भवेयाथाम् । भवेध्वम् । भवेय । भवेवहि । भवेमहि । अहं हरिभक्तिं भवेय ॥

सूत्रम् याम् ६–१ इयम् १–१ अकारात्परस्य याम् इति वचनस्य इयम् इत्यादेशो भवति । गुरुत्वात्सर्वस्यादेशः (अ इ ए) भवेयम् । द्वित्वबहुत्वयोः (या० ) इतीकारः । भवेव, भवेम । इति सिद्धम् । अथोदाहरणमाह–शिष्यो गुरुशुश्रूषको भवेदिति विधिः। अत्र शिष्यस्य गुरुशुश्रूषारूपः कर्त्तव्यार्थः अस्योपदेशो विधिः । शिष्येण गुरुशुश्रूषा कर्त्तव्येत्युपदिश्यते । ततोऽत्र विधौ यादादयः । तथासौ ब्राह्मणो ब्राह्मणत्वाद्वेदपारगो भवेत् इति । संभावने संभवेऽर्थे यादादयः प्रत्ययाः स्युः । ब्राह्मणत्वेन वेदपारगत्वं संभाव्यते इत्यर्थः । एवमन्यान्यप्युदाहरणानि ज्ञेयानि । तथात्मनेपादिनो भूङ्धातोरीतादीनि नव वचनानि प्रयोज्यानि । भू ईत इति स्थिते ( अप् कर्त्तरि । गुणः । ओ अव् ) ( स्वरहीनम्० ) ( अ इ ए ) भवेत । भवेयाताम् । भवेरन् । अन्यानि रूपाणि मूले सन्ति । तानि अनेनैव प्रकारेण साध्यानि । अहं हरिभक्तिं भवेयेत्युदाहरणम् । समाप्तोऽयं लिङ्लकारः ॥

## ( आशीःप्रेरणयोः तुप् ताम् अन्तु हि तम् त आनिप् आवप् आमप् ताम् आताम् अन्ताम् स्व आथाम् ध्वम् ऐप् आवहैप् आमहैप् ) अप्राप्तप्रार्थनमाशीः परस्येष्टार्थाशंसनं वा प्रेरणं प्रवर्तनं तत्र तुवादयः प्रत्यया भवन्ति । एषां संज्ञा लोट् ।

अथ लोट्लकारः कथ्यते । सूत्रम् । (आशीःप्रेरणयोः०)आशीश्च प्रेरणं च आशीःप्रेरणे तयोः आशीःप्रेरणयोः ७–२ शेषाणि तुवादीनि आमहैप्पर्यन्तान्यष्टादश पदानि प्रथमैकवचनान्तानि साङ्केतिकानि एवमेकोनविंशतिपदं सूत्रम् । आशिषं प्रेरणं च व्याचष्टे । अप्राप्तस्य वस्तुनः स्वयं प्रार्थनं मे इदं वस्तु भवतु इत्याशीः । परस्यान्यजनस्य वा इष्टाशंसनं वाञ्छितार्थकथनं वा आशीरुच्यते । तथा 'हे सौम्येदं कार्यं कुरु' इति यत्प्रवर्त्तनं तदेव प्रेरणम् । तत्र आशिषि प्रेरणे च तुवादय आमहैप्पर्यन्ता अष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां च तुवादीनां पाणिनीयमते लोट् इति संज्ञा कथ्यते । तत्र परस्मैपदिनो भूधातोस्तुवादयो नव प्रत्यया भवंति । भू तुप् इति स्थिते । ( अप् कर्त्तरि । गुणः । ओ अव् ) ( स्वरहीनं० ) पकारः पित्कार्यार्थः । भवतु भू तुप् इति स्थिते ।

## ( तुह्योस्तातङ्ङाशिषि वा वक्तव्यः ) भवतु भवतात्, भवताम्, भवन्तु ।

सूत्रम् ( तुह्यो० ) तुश्च हिश्च तुही तयोः तुह्योः । आशीःप्रेरणे तुप् हि इत्येतयोर्वचनयोराशिष्यर्थे वाच्यमाने तातङ् इत्यादेशो वा भवति । ङकारो ङित्कार्यार्थः ।

गुणनिषेधार्थस्तनुतादित्यादौ । न त्वन्त्यादेशार्थः । अत्र तु अप्प्रत्ययनिमित्तो गुणो भवत्येव । अकार उच्चारणार्थः । गुरुत्वात्सर्वस्य तात् इति, तेन प्रथमपुरुषैकवचने रूपद्वयम् । अनेन सूत्रेण भू तात् इति जाते ( अप्कर्त्तरि० । गुणः । ओ अव् ) (स्वरहीनं०) भवतात् । भवताम् । भव अन्तु इति स्थिते (अदे) अनेनाकारस्य लोपः । भवन्तु । मध्यमपुरुषैकवचने । भव हि इति स्थिते ।

( अतः ) अकारात्परस्य हेर्लुग्भवति । न तु तातङः । तातङिति ङित्करणं गुणवृद्धिप्रतिषेधार्थं न त्वन्त्यादेशार्थम् । भव, भवतात् । भवतम् । भवत । भवानि । भवाव । भवाम । आयुष्मान् भवतु भवान् । अध्ययनायोद्यतो भव सौम्य ! भवताम् । भवेताम् । भवन्ताम् । भवस्व । भवेथाम् । भवध्वम् । भवै । भवावहै । भवामहै । हरिं भजस्व त्वम् ॥

सूत्रम् (अतः) ५-१ अकारादुत्तरस्य हि इति वचनस्य लुग्भवति । न तु तातङः । अनेन हेर्लुक् । भव इति सिद्धम् । द्वितीयरूपे तुह्योरिति तातङादेशः । भवतात् । भवतम् । भवत । उत्तमपुरुषवचनत्रयेऽपि (सवर्णे०) भवानि । भवाव । भवाम । अथोदाहरणम् । भवान् आयुष्मान् भवतु दीर्घायुर्भवतु इत्याशीः । भवन्तौ आयुष्मन्तौ भवताम् । भवन्त आयुष्मन्तो भवन्तु । अत्र यद्यपि भवच्छब्दो युष्मद्वाची तथापि सामान्येन नामरूपत्वात्प्रथमपुरुषप्रयोगः । हे सौम्य त्वम् अध्ययनाय पठनाय उद्यतः सावधानो भव । अत्र प्रेरणे मध्यमपुरुषैकवचनप्रयोगः । एवमन्यदप्युदाहरणं ज्ञेयम् । तथात्मनेपदिनो भूङ्धातोस्तामादयो नव प्रत्यया भवन्ति । भू ताम् इति स्थिते ( अप्कर्त्तरि । गुणः । ओ अव् ) ( स्वरहीनं० ) भवताम् भव आताम् इति स्थिते । ( आदाथ इः ) अनेनाकारस्य इकारः । भवेताम् ( अदे ) भवन्ताम् । भवस्व । ( आदाथ इः ) भवेथाम् । भवध्वम् ( ए ऐ ऐ ) भवै ( सवर्णे दीर्घः० ) भवावहै । भवामहै । हरिं भजस्व त्वम्, इत्युदाहरणम् ।

( अनद्यतनेऽतीते दिप् ताम् अन् सिप् तम् त अमिप् व म, तन् आताम् अन्त थास् आथाम् ध्वम् ई वहि महि ) अतीतायाः रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमयामद्वयं सोऽद्यतनस्ततोऽन्योनद्यतनस्तस्मिन्ननद्यतनेऽतीते काले दिबादयः प्रत्यया भवन्ति । एषां संज्ञा लङ् ॥

दि सि मि इत्येतेषामिकार उच्चारणार्थः। तनो नकार इण्तन्य कर्तरीति विशेषणार्थः। ( वावसाने ) इति दकारस्य तकारः।

अथ लङ्लकारः कथ्यते। सूत्रम् ( अनद्यतने० इत्यादि ) अद्यभवोऽद्यतनस्तदन्योऽनद्यतनः। तस्मिन् ( अनद्यतने ) ७-१ ( अतीते ) ७-१ अग्रे दिवादीन्यष्टादश पदानि। प्रथमैकवचनान्तानि साङ्केतिकानि। एवं विंशतिपदं सूत्रम्। अथ वृत्तिकारोऽनद्यतनेऽतीते इति पदं व्याचष्टे। अतीताया इति वर्त्तमानदिनात् प्राक् अतीताया गताया रात्रेः अन्त्ययामद्वयात् अर्वाक् वर्त्तमानदिनं संयोज्य यावत् आगामिन्या आसन्नवर्तिन्या रात्रेः प्रथममहरद्वयं सोऽष्टमहरप्रमाणः कालोऽद्यतन इत्युच्यते। गतरात्रेः पश्चिमप्रहरद्वयं सकलो दिवसः आगामिन्या रात्रेः पूर्वं प्रहरद्वयं सोऽद्यतनः। ततोन्यः कालोऽनद्यतनः। स च अनद्यतनो द्विधा अतीताऽनागतभेदात्। तत्रातीते गतेऽनद्यतने काले वाच्यमाने सति धातोः दिवादयो महिपर्यन्ताः परस्मैपदात्मनेपदभेदेनाष्टादश प्रत्यया भवन्ति। एषां चाष्टादशानां पाणिनीयमते लङ् इति संज्ञा अनद्यतने लङ् इति। दिसिमीत्यादि, तत्र दिप् सिप् अमिप् इत्येतेषां पकारः पित्कार्यार्थः। इकार उच्चरणार्थः। तेन द् स् अम् इत्येव शिष्यते। आत्मनेपदे तन् इति वचनस्य नकारः इण् तन्यकर्त्तरीति सूत्रार्थः। परस्मैपदिनो भूधातोर्दिवादयो नव प्रत्ययाः भवन्ति। भू दिप् इति स्थिते ( अप्कर्त्तरि। गुणः। ओ अव् ) ( स्वरहीनम्० ) प्रथमपुरुषैकवचने ( वावसाने ) अनेन दस्य तः। भवत् इति जाते।

( दिवादावट् ) दिवादौ परे धातोरडागमो भवति। अभवत्। अभवताम्। अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम। ह्योऽभवत्त्वत्पुत्रः। अभवत। अभवेताम्। अभवन्त। अभवथाः। अभवेथाम्। अभवध्वम्। अभवे। अभवावहि। अभवामहि। स राज्यमभवत॥

सूत्रम् ( दिवादावट् ) दिप् आदिर्यस्यासौ दिवादिः-तस्मिन् दिवादौ ७-१ अट् १-१ मध्ये ( औ आव् ) द्विपदम् दिवादौ प्रत्यये परे सति धातोः अट् इत्यागमो भवति टित्त्वादादौ। अभवत्-अभवद्। अभवताम्। बहुवचने। अदे इत्यकारलोपः ( स्वर० ) अभवन्। मध्यमपुरुषैकवचने ( सो० ) अभवः। अभवतम्। अभवत। उत्तमपुरुषैकवचने ( अदे ) इत्यकारलोपः ( स्वर० ) अभवम्। द्वित्वबहुत्वयोः( म्वोरा ) अभवाव। अभवाम। अथोदाह०-ह्यः अतीतदिने पूर्वेद्युः तव पुत्रोऽभवत्। एवं ह्यः

तव पुत्रावभवताम् । ह्यः तव पुत्रा अभवन् । ह्यस्त्वं अभवः । ह्यो युवामभवतम् । ह्यो यूयमभवत । ह्योऽहमभवम् । ह्यः आवामभवाव । ह्यो वयमभवाम । इत्यादीन्युदाहरणानि योज्यानि । तथात्मनेपदिनो भूड्धातोस्तनादयो नव प्रत्यया भवन्ति । भू तन् इति स्थिते । ( अप् कर्तरि ) ( गुणः ) ( ओ अव् ) ( दिवादावट् ) तनों नकारः ( इण् त० ) अभवत ( आदाथइः ) ( अ इ ए ) ( अभवेताम् ) अभवन्तः । अभवथाः। अभवेथाम् । अभवध्वम् (अ इ ए) अभवे । अभवावहि । अभवामहि । स पुरुषो राज्यमभवत ॥ इत्युदाहरणम् ॥ समाप्तोऽयं चतुर्थो लकारः ॥ ४ ॥

( परोक्षे णप् अतुस् उस् थप् अथुस् अ णप् व म ए आते इरे से आथे ध्वे ए वहे महे) ॥ धातोः परोक्षेऽतीते काले णवादयः प्रत्यया भवन्ति । एषां संज्ञा लिट् ।

अथ णवादिविभक्तिषट्कं कर्तरि कर्त्रुक्तौ प्रणीयते-प्रदर्श्यते इत्यर्थः । सूत्रम् (परोक्षे ) ७-१ अक्षेभ्यः परोऽगोचरः परोक्षस्तस्मिन् परोक्षे । क्वचिदमाद्यन्तस्य परत्वमिति परशब्दस्यादौ प्रयोगः । अक्षशब्दस्य परत्वम् । परःशब्दोऽत्र सान्तो निपातो गृह्यते । परार्थवाचको न परशब्दः यथा अह्लुक् क्वचित् । प्रक्रियामते तु पारस्करादित्वात् सुडागमः । णवादीन्यष्टादशापि पदानि साङ्केतिकमर्थमेकवचनान्तानि । एवमेकोनविंशतिपद सूत्रम् । परोक्षे इन्द्रियागोचरे अतीते गते काले णवादयोऽष्टादश प्रत्ययाः । परस्मैपदात्मनेपदभेदेन भवन्ति । एषा पाणिनीयमते लिट् इति संज्ञा ।

( णादिः कित् ) अपिण्णादिः किद्भवति ।

( णादिः कित् ) अपित् णादिः कित् भवति । कित्त्वात् गुणाभावः। अथ भूधातोः परस्मैपदप्रक्रिया प्रदर्श्यते ॥ भू णप् इति स्थिते-णो वृद्ध्यर्थः। पकारोऽपित्कार्यार्थः। भू अ इति स्थिते ।

( द्विश्च ) णवादिसंयोगे धातोर्द्विवचनम् ।

सूत्रम्-( द्विश्च ) १-१ अव्ययं च द्विपद णवादिसंयोगे सति धातोर्द्विवचनं द्वित्वं भवति ।

( सस्वरादिर्द्विरद्विः ) सस्वराद्योऽवयवोऽद्विरुक्तो द्विर्भवति । भू भू णप् इति स्थिते । णकारो वृद्ध्यर्थः । पकारः पित्कार्यार्थः ।

सूत्रम् ( सस्वरादिर्द्विरद्विः ) ॥ त्रिपदं सूत्रम् । सस्वरः अद्विरुक्तः आद्यावयवः द्विर्भवति भू भू अ इति स्थिते ॥

( आभ्वोर्णादौ ) आ अश्च भूश्च अभ्वौ तयोः पूर्वस्याकारस्य भूशब्दस्य च आकारो भवति णादौ सति । ( ह्रस्वः ) पूर्वसंबन्धिनो दीर्घस्य ह्रस्वो भवति ।

सूत्रम् ( आभ्वोर्णादौ ) ॥ आ १-१ अश्च भूश्च अभ्वौ तयोः । अभ्वोः ६-२ ण आदिर्यस्यासौ णादिः तस्मिन् णादौ ७-१ आदौ ( सवर्णे दीर्घः सह ) द्वितीये । ( नामिनो रः ) त्रिपदं सूत्रम् । णादौ परे द्वित्वे कृते सति पूर्वस्य द्विरुक्तरूपस्य अकारस्य तथा भूधातुसंबन्धिन ऊकारस्य च आकारादेशो भवति । यद्यप्यासेत्यादौ आकारकरणं विनैव सिद्धिस्तथापि व्यानशे आनञ्ज आनर्च इत्यादिसिद्ध्यर्थमाकारत्वमिति पूर्वस्य भू इत्येतस्य भा । भा भू अ इति जाते ॥ सूत्रम् ( ह्रस्वः ) १-१ एकपदम् पूर्वसम्बन्धिनः दीर्घस्य ह्रस्वो भवति पूर्वस्य ह्रस्वः ।

( झपानां जबचपाः ) पूर्वसंबधिनां झपानां जबाश्चपाश्च भवन्ति । झढधघभानां जडदगबा भवंति । खफछठथानां चटतकपा भवन्ति ॥

( झपानां जबचपाः ) झपानां ६-३ । जबाश्च चपाश्च जबचपाः १-३ पूर्वसम्बन्धिनां झपानां जबाः भवन्ति । झढधघभानां जडदगबा भवन्ति खफछठथानां चटतकपा भवन्ति इत्यनेन सूत्रेण भकारस्य बकारो जातः । पुनश्च बभू अ इति जाते ।

( भुवो वुक् ) भुवो वुगागमो भवति णादौ स्वरे परे । बभूव । बभूवतुः । बभूवुः ।

सूत्रम् ( भुवः ) ६-१ ( वुक् ) १-१ भूधातोः णवादौ स्वरे परे वुगागमो भवति कित्वादन्ते उकार उच्चारणार्थः । वुग्विधानसामर्थ्यादेव गुणवृद्धी न भवतः ( स्वरहीनं० ) बभूव । बभूव तुः । बभूवुः । बभूव् थ इति स्थिते ।

( क्रादेर्णादेः ) डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् संवरणे । द्रु गतौ । श्रु श्रवणे । स्नु प्रस्रवणे । ष्टुञ् स्तुतौ । कृसृभृवृद्रुश्रुस्नुस्तु इत्येतस्मात्परस्य वसादेर्णादेर्गणस्येट् न भवत्यन्यस्माद्भवतीति नियमादनिटोऽपीडागमः । यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति न्यायादिटोऽपि णवाद्यन्तत्वेन थपि वुक् । बभूविथ । बभूवथुः । बभूव ।

वभूव । वभूविव । बभूविम । बलिर्बलवान् बभूव । बभूवे बभूवाते । बभूविरे । बभूविषे । बभूवाथे ।

सूत्रम्- क्रादेः क्र आदिर्यस्यासौ क्रादिस्तस्मात् क्रादेः ५-१ ( णादेः ) ६-१ द्विपदं सूत्रम् । डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः। वृञ् वरणे । द्रु गतौ । श्रु श्रवणे । ष्टुञ् स्तुतौ । इत्येतेभ्यो धातुभ्यः परस्य । वसप्रत्याहारादेर्णादिगणस्य । वसप्रत्याहारः आदौ यस्य स वसप्रत्याहारादिस्तस्य वसप्रत्याहारादेः । थप् व म । से ध्वे वहे महे । इति प्रत्ययस्येडागमो न भवति । यथा चकर्थ । ससर्थ । बभर्थ । दुद्रोथ । शुश्रोथ । तुष्टोथ । इत्यादौ इडागमो न भवति । अन्यस्माद्धातोस्तु इडागमो भवति । यतो निषेधः प्राप्तिपूर्वको भवतीति । एभ्यो धातुभ्य इडनिषेधेऽन्यस्माद्धातोः इट् भवतीति नियमः । इति भूधातोः णवादिषु स्वरादिव्यतिरिक्तेषु थकारवकारमकारेषु इडागमो भवति ( स्वर० ) बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम । बलिर्नलिराजा बलवान् बभूव । एवं रामलक्ष्मणौ बलवन्तौ बभूवतुः । पाण्डवा बलवन्तो बभूवुः । त्वं बलवान् बभूविथ । इत्युदाहरणम् । इति लिट्लकारस्य परस्मैपदम् । अथात्मनेपदं लिख्यते । बभूवे । बभूवाते । बभूविरे । बभूविषे । बभूवाथे । एतेषु रूपेषु पूर्वोक्तसूत्रेणेव सिद्धिः ॥ बभूविध्वे इति जाते सति,

( नामिनोऽचतुर्णां धो ढः ) नाम्यन्ताद्धातोरुत्तरस्य तिवादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्लिटोश्च धस्य ढो भवति । अत्र ( सेटो हलाद्वेति वक्तव्यम् ) बभूविध्वे-बभूविढ्वे । बभूवे। बभूविवहे बभूविमहे । रामो राज्यं बभूवे ॥

सूत्रम् ( *नामिनोऽचतुर्णां धो ढः* ) *नाम अस्यास्तीति नामी तस्य नामिनः* ५-१ । अचतुर्णाम् ६-३ । धः ६-१ । ढः १-१ । नामी अन्ते यस्य सः नाम्यन्तः तस्मात् नाम्यन्तात् धातोरुत्तरस्य तिवादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्लिटो धस्य ढकारो भवति । अनेन सूत्रेण धकारस्य ढकारो जातः । अत्र अस्मिन् सूत्रे ( सेटो हलाद्वेति वक्तव्यम् ) अस्यार्थः-इटा सह वर्तमानः सेट् तस्मात् सेटः ५-१ हलात् वा भवति इति विकल्पेन धस्य ढो भवति । अतो बभूविध्वे-बभूविढ्वे । इति रूपद्वयं जातम् । बभूवे । बभूविवहे । बभूविमहे ॥ रामो राज्यं बभूवे ॥ भूधातोर्लिट्लकारः समाप्तिमगमत् ॥ एवं पञ्च लकारा उक्ताः ॥

( आशिषि, यात् यास्ताम् यासुस् यास् यास्तम् यास्त यासम् यास्व यास्म सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम् सीय सीवहि सीमहि ) धातोराशिषि यादादयो भवन्ति । एषां संज्ञा लिङ् ॥

अथ षष्ठो लकारः प्रारभ्यते ॥ सूत्रम् ( आशिषि० ) ७–१ । अग्रे यादादीन्यष्टादश पदानि प्रथमैकवचनान्तानि साङ्केतिकानि । एकोनविंशतिपदं सूत्रम् ॥ धातोः केवलायामाशिषि अप्राप्तप्रार्थनालक्षणायां परस्येष्टार्थशंसनलक्षणायां वाच्यमानायां यादादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । पाणिनीयानां मते एषां संज्ञा लिङ् । भूधातोः परस्मैपदित्वात् नव यादादयः प्रत्यया भवन्ति ॥

( आशीर्वादादेः पं किदिति वक्तव्यम् ) ततो गुणाभावः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म । स श्रीमान् भूयात् । भू सीष्ट इति स्थिते ॥

सूत्रम् ( आशीर्वादादेरिति ) आशीर्वादादेः पं परस्मैपदं कित् भवति इति वक्तव्यम् । कित्त्वात् गुणाभावः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥ स पुरुषः श्रीमान् लक्ष्मीवान् भूयात् । इत्युदाहरणम् । एवं तौ श्रीमन्तौ भूयास्ताम् । ते श्रीमन्तो भूयासुः ॥ भूङ् प्राप्तौ इति धातोरात्मनेपदित्वात् सीष्टादयो नव प्रत्यया भवन्ति । भू सीष्ट इति स्थिते । (गुणः) भो सीष्ट इति जाते ।

( सिसतासीस्यपामिट् ) धातोः परेषां सि-स-ता-सी-स्यप्-इत्येतेषामिडागमो भवति । गुणावादेशौ । षत्वम् । भविषीष्ट । भविषीयास्ताम् । भविषीरन् । भविषीष्ठाः । भविषीयास्थाम् । भविषीध्वम् । सीव्यवधानेऽपि ढत्वम् । भविषीढ्वम् । भविषीय । भविषीवहि । भविषीमहि । त्वं हरिभक्तिं भविषीष्ठाः ।

सूत्रम् ( सिसतासीस्यपामिट् ) सिश्च सश्च ता च सीश्च स्यप् च सिसतासीस्यपः तेषाम् । सिसतासीस्यपाम् ६–३ । इट् १–१ । द्विपदं सूत्रम् । सिः ( भूते सिः ) स इति, इच्छार्थः सः। तादिः,श्वस्तन्यामष्टादशको गणः । सी,सीष्ट सीयास्तामित्यादिः। आशीर्यात्मनेपदे नवको गणः। स्यप्, भविष्यत् क्रियातिपत्त्योः। धातोः परेषाम् इत्ये-

तेषां प्रत्ययानामिडागमो भवति । टित्वादाद्दौ । अत्र प्रथमं सीयादिकस्याङित्त्वाद् गुणं विधाय तत इडागमः। अथवा इडागमे कृतेऽपि टित्त्वे सति ङित्त्वाभावात् गुण-करणे न दोषः ( ओ अव् । किलात्० ) भविषीष्ट । भविषीयास्ताम् । भविषीरन् । भविषीष्ठाः । भविषीयास्थाम् । भविषीध्वम् । सीव्यवधानेऽपि ढत्वं भवेत् । भविषीढ्वम्। भविषीय । भविषीवहि । भविषीमहि । त्वं हरिभक्तिं भविषीष्ठा इत्युदाहरणम् । इत्यात्मनेपदिनो रूपाणि । समाप्तिमगमत्षष्ठो लकारः ॥ ६ ॥

अथ सप्तमो लकारः प्रारभ्यते ।

(श्वस्तने,ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस्, ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ) श्व आगतेऽह्नि भाविन्यर्थे तादयो भवन्ति । एषां संज्ञा लुट् ॥

इङ्गुणावः। भविता । भवितारौ । भवितारः। भवितासि। भवितास्थः । भवितास्थ। भवितास्मि । भवितास्वः । भवितास्मः । श्वस्ते हरिः प्रत्यक्षो भविता । भविता । भवितारौ । भवितारः । भवितासे । भवितासाथे। भविताध्वे । भविताहे । भवितास्वहे। भवितास्महे । श्वो हरिं भवितासे ॥

( श्वस्तने० ) श्वो भवः श्वस्तनस्तस्मिन् श्वस्तने । ७–१ । ता । तारौ । तारस् । इत्याद्यष्टादश पदानि साङ्केतिकानि प्रथमैकवचनान्तानि । इत्येकोनविंशतिपदं सूत्रम्। धातोः श्व आगामिदिने भाविनि कालेऽर्थे तादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपद-भेदेन भवन्ति । एषां पाणिनीयानां मते लुट्संज्ञा । प्रथमं परस्मैपदिनो धातो रूपाणि। भू ता इति स्थिते । ( गुणः ) सूत्रम् ( सिसतासीस्यषामिट् ) इत्यनेन सूत्रेण इट् । (ओ अव )। भविता । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ। भवितास्मि । भवितास्वः । भवितास्मः । श्वः प्रातःकाले तव हरिः प्रत्यक्षो भविता । अथात्मनेपदिनो भूङ् धातो रूपाणि पूर्वोक्तेनैव सूत्रेण साधितव्यानि । भविता । भवितारौ । भवितारः । भवितासे । भवितासाथे । भविताध्वे–भविताद्ध्वे । भविताहे । भवितास्वहे । भवितास्महे । इति रूपाणि । श्वो हरिं भविता इत्युदाहरणम् । एतेषामुदाहरणानि विस्तरभयान्न लिखितानि । लुट्लकारोऽयं समाप्तिं प्राप्तः ॥ समाप्तोऽयं सप्तमो लकारः ॥ ७ ॥

अथाष्टमो लकारः प्रारभ्यते।

( त्यादौ भविष्यति स्यप् ) धातोर्भविष्यति काले स्यप् प्रत्ययो भवति तिवादिष्वष्टादशसु परेषु। अस्य संज्ञा लृट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः। कल्किर्धर्मप्रवर्तको भविष्यति। भविष्यते। भविष्येते। भविष्यन्ते। भविष्यसे। भविष्येथे। भविष्यध्वे। भविष्ये। भविष्यावहे। भविष्यामहे। सावर्णी राज्यं भविष्यते।

सूत्रम् ( त्यादौ भविष्यति स्यप् )। त्यादौ ७–१। भविष्यति ७–१। स्यप् १–१। त्रिपदं सूत्रम्। भविष्यति इति भविष्यन् तस्मिन् भविष्यति काले धातोः तिवाद्यष्टादशसु परस्मैपदात्मनेपदवचनेषु परेषु स्यप् प्रत्ययो भवति। पकारः पित्कार्यार्थः। पाणिनीयानां मते अस्य लृट् इति संज्ञा। भू तिप् इति स्थिते। ( त्यादौ भविष्यति स्यप् ) अनेन सूत्रेण स्यप् प्रत्ययः। ( सिसतासीस्यपा० )। अनेन सूत्रेणेट् ( गुणः ) इति सूत्रेण गुणः ( ओ अव् ) इति सूत्रेण अव् ( किलात्० ) इति सूत्रेण सकारस्य षकारः पूर्वोक्तेन सूत्रेण भविष्यति इति रूपं सिद्धम्। अत्रान्यानि सूत्राणि पूर्वोक्तानि ज्ञेयानि। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः। कल्किर्नामेश्वरस्यावतारो धर्मप्रवर्तको भविष्यति इत्युदाहरणम्। इति परस्मैपदिनो रूपाणि कथितानि। अथात्मनेपदिनो रूपाणि कथ्यन्ते। पूर्वोक्तेनैव सूत्रेणात्मनेपदिनोऽपि रूपाणि सिद्ध्यन्ति। भविष्यते। भविष्येते। भविष्यन्ते। भविष्यसे। भविष्येथे। भविष्यध्वे। भविष्ये। भविष्यावहे। भविष्यामहे। सावर्णिर्मनू राज्यं भविष्यते। इत्युदाहरणम्। इत्यात्मनेपदिनो रूपाणि। समाप्तोऽयं लृट्लकारः। समाप्तिं प्राप्तोऽयमष्टमो लकारः॥ ८॥

अथ नवमो लकारो निगद्यते।

( स्यप् क्रियातिक्रमे )। धातोः क्रियाया अतिक्रमे कुतश्चिद्वैगुण्यादनिष्पत्तौ सत्यां दिवादिपरः स्यप्प्रत्ययो भवति। भविष्येऽर्थे क्वचिद्भूतेऽपि। अस्य संज्ञा लृङ्। अडागमः। अभविष्यत्–अभविष्यद्। अभविष्यताम्। अभविष्यन्। अभविष्यः।

अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । यदि सुवृष्टिः सुराज्यं चाभविष्यत्तदा सुभिक्षमभविष्यत् । अभविष्यत । अभविष्येताम् । अभविष्यन्त । अभविष्यथाः । अभविष्येथाम् । अभविष्यध्वम् । अभविष्ये । अभविष्यावहि । अभविष्यामहि । यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत् ॥

सूत्रम् ( स्यप् क्रियातिक्रमे ) । द्विपदं सूत्रम् । स्यप् । १–१ । क्रियातिक्रमे । ७–१ । क्रियाया अतिक्रमोऽभवनं क्रियातिक्रमः तस्मिन् क्रियातिक्रमे क्रियायाः कर्तृव्यापाररूपाया धात्वर्थलक्षणायाः कार्यस्य वातिक्रमे कुतश्चित्कारणात् अनिष्पत्तौ असिद्धौ सत्यां धातोर्दिवादिषु विभक्तिषु परतः स्यप् प्रत्ययो भवति ॥ पाणिनीयानां मते एषां लृङ् इति संज्ञा । भू दिप् इति स्थिते । अनेन सूत्रेण स्यप्प्रत्ययः । (सिसतासीस्यपाम्) । अनेन सूत्रेणेडागमः । ( गुणः ) इत्यनेन सूत्रेण गुणः ( ओ अव् ) । इति सूत्रेणाव् । ( किलात्० ) इति सूत्रेण सकारस्य षकारः । ( वावसाने ) अनेन तकारस्य दकारो भवति । ( दिवादावट्० ) इति सूत्रेणाडागमो भवति ( स्वरहीनं० ) अभविष्यत् । अभविष्यताम् । अभविष्यन् । ( अदे ) इति सूत्रेणाकारस्य लोपः कार्यः प्रथमपुरुषस्य बहुवचने । अभविष्यः । अभविष्यतम् । अभविष्यत । ( अदे ) अभविष्यम् । ( व्मोरा ) । अभविष्याव । अभविष्याम । अथोदाहरणम् । यदि सुवृष्टिः सुराज्यं च अभविष्यत् तदा सुभिक्षमभविष्यत् । इति परस्मैपदिनो भूधातो रूपाणि । अथात्मनेपदिनो भूङ्धातो रूपाणि कथ्यन्ते । तेषामनेनैव सूत्रेण सिद्धिः । अभविष्यत । अभविष्येताम् । अभविष्यन्त । अभविष्यथाः । अभविष्येथाम । अभविष्यध्वम् । अभविष्ये । अभविष्यावहि । अभविष्यामहि । यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत् । समाप्तिं गतो नवमोऽयं लृङ् लकारः । अस्येतराण्युदाहरणानि न दर्शितानि विस्तरभयात् ॥

अथ दशमो लकारः प्रारभ्यते ।

( भूते सिः ) धातोर्भूतमात्रे काले सिः प्रत्ययो भवति । दिवादिपरः । अस्य संज्ञा लुङ् । इकारः सेरिति विशेषणार्थः । अभूस् त् इति स्थिते ।

सूत्रम ( भूते ) ७–१ । ( सिः ) । १–१ । धातोर्भूतमात्रे तत्कालोत्पन्नमात्रे अतीते कालेऽयं सिप्रत्ययो भवति दिवादौ परे । इकारः सेरिति विशेषणार्थः । अस्य पाणिनी-

यानां मते लुङ् इति संज्ञा। भू दिप् इति स्थिते। ( भूते सिः )। अनेन सूत्रेण सिप्रत्ययः। इकारः सेः। ( दिवादावट् ) अनेनाडागमः ( वावसाने ) अनेन दकारस्य तकारः। पूर्वोक्तसूत्रैः अभूस् त् इति जातम्।

( दादेः पे ) परस्मैपदे परे अपित्दाधास्थेण्भूपिबतिभ्यः परस्य सेर्लोपो भवति।

तत्र सूत्रम् ( दादेः ५-१। पे ७-१ ) आपित् दा धा, स्था इण् भू, पा पाने इत्येतेभ्यः परस्य भूतार्थस्य सेर्लोपो भवति परस्मैपदविषये।

( शाच्छासाघ्राधेटो वेति वक्तव्यम् )। (भुवः सिलोपो लुग्वाच्यः ) ( लुकि न तन्निमित्तम् )। लुकि सति तन्निमित्तं कार्यं न स्यात्। तेन गुणेड्वृद्धयो न। अभूत्। अभूताम्।

सूत्रम् ( शाछेति )। शाछा सा घ्रा धेट् एभ्यो धातुभ्यः सिलोपो वा भवति इति वक्तव्यम्। ( भुवः )। ६-१। इदं सूत्रमस्ति। भूधातोः सिलोपो लुग् वाच्यः। लुकि न तन्निमित्तम्। तेन गुणेड्वृद्धयो न भवन्ति। अभूत्। अभूताम्। बहुवचने अभू अन् इति स्थिते।

( भुवः सिलोपे स्वरे वुग्वक्तव्यः )। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम। अभूद् वृष्टिः। आत्मनेपदे। सिः इड् गुणावो पत्वम् ष्टुत्वम् अट्। अभविष्ट। अभविषाताम्।

सूत्रम् ( भुवः ) ५-१ भूधातोः सिलोपे कृते सति स्वरे परे आमि अनि च वुगागमो भवति। ककारो गुणप्रतिषेधार्थः। स्थाननियमार्थश्च। उकार उच्चारणार्थः। इति अनि वकारागमः 'स्वरहीनम्०' अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम। इति परस्मैपदिनो भूधातो रूपाणि। अभूत् वृष्टिरित्युदाहरणम्। अथात्मनेपदिनो भूङ्-धातो रूपाणि कथ्यन्ते। आत्मनेपदे सिः इट् गुणावौ पत्वं ष्टत्वम् अट् एते भवन्ति। अभविष्ट। अभविषाताम्। अभविष् अन्त इति स्थिते।

( आतोऽन्तोऽदनतः ) आत आत्मनेपदस्यान्त इत्येतस्याद्भवति अकारादुत्तरस्य न भवति। अभविषत। अभविष्ठाः। अभविषाथाम्।

सूत्रम् ( आतोऽन्तोऽदनतः ) आतः । ६-१ । अंतः । १-१ । अत् । १-१ । अत् अकारः न अत् अनत् तस्मात् अनतः । ५-१ । आद्ये पदद्वये ( अतोऽत्युः । उ ओ । एदो० ) । तृतीये ( चपा अबे जबाः ) चतुष्पदं सूत्रम् । आत्मनेपदसंबन्धिनः प्रथमपुरुषबहुवचनस्य अन्ते इत्यस्यात् भवति । अन्ते इत्यस्याते इति भवति अन्ताम् इत्यस्याताम् अन्त इत्यस्यातो भवतीति भावः । परम् अकारादुत्तरस्य न भवति । अनेनान्ते इत्यस्याते कृते । 'स्वरहीनम्' । अभविषत । अभविष्ठाः । अभविषाथाम् । अभविस् ध्वम् इति स्थिते ।

( ध्वे च सेर्लोपः ) ध्वे परे सेर्लोपो भवति । वा सस्य द इति केचित् । अभविध्वम्-अभविद्ध्वम् । अभाविपि । अभविष्वहि । अभविष्महि । देवदत्तो राज्यमभविष्ट ॥

सूत्रम् ( ध्वे च सेर्लोपः ) ध्वे । ७-१ । च अव्ययम् । सेः । ६-१ । लोपः । १-१ । ध्वे परे सति सेर्लोपो भवति । अभविध्वम् । वा सस्य दकारो भवति । इति केचित्केषांचिदाचार्याणां मतेन सकारस्य दकारो भवति । 'स्वरहीनम्' । अभविध्वम्-अभविद्ध्वम् । अभविपि । अभविष्वहि । अभविष्महि । इत्यात्मनेपदिनो रूपाणि । देवदत्तो राज्यमभविष्टेत्युदाहरणम् ॥

( माङि लुङेव वक्तव्यः ) । सर्वलकारापवादः ।

सूत्रम् ( माङि ) माङि प्रयुज्यमाने लुङ्लकार एव वक्तव्यः । सर्वलकारापवादो भवति ।

( मेऽटः ) माशब्दे प्रयुज्यमाने अटो लोपो भवति । मा हर्यभक्तो भवान् भूत् ।

सूत्रम् ( मेऽटः ) इदं सूत्रमस्ति । मे ७-१ । अटः ६-१ । द्विपदम् । निषेधार्थमाशब्दे प्रयुज्यमाने दिवादिनिमित्तोत्पन्नस्याटोऽडागमस्य लोपो भवति । अनेन सूत्रेणाटो लोपो भवति । मा हर्यभक्तो भवान् भूत् । इत्यादिप्रयोगसिद्धिः ।

( स्मयोगे भूतार्थता वक्तव्या ) ।

सूत्रम् ( स्मयोगे भूतार्थता वक्तव्या ) स्पष्टमिदं सूत्रम् द्वितीय सूत्रम्-

( मास्मयोगे लङ् च ) । मा स्म भवत । मा स्म भूत् । चिती संज्ञाने । ईकार ईदित्कार्यार्थः । पूर्ववत्तिवादयः ( अप् कर्तरि )

सूत्रम् ( मास्मयोगे लङ् च ) स्पष्टम् । च पुनः मा स्म इत्येतयोः द्वयोः योगे लङ्लकारो भवतीत्यर्थः । मा स्म भवत् । इत्युदाहरणम् । द्वितीयसूत्रस्य । मा स्म

भूत् । इत्युदाहरणम् । प्रथमसूत्रस्यास्ति इति भू सत्तायाम् इत्यस्य भूङ् प्राप्तौ इत्यस्य च रूपाणि दर्शितानि । तत्र भूधातुः परस्मैपदी ज्ञातव्यः ( परतोऽन्यत् ) इति सूत्रात् । भूङ्धातुरात्मनेपदी ज्ञातव्यः ङित्त्वात् । परस्मैपदिनः परस्मैपदानि भवन्ति । आत्मने पदिन आत्मनेपदानि भवन्तीति ज्ञातव्यम् । अत्र बहुस्थले संविर्न कृतः । बालानां सुखेन बोधकरत्वात् । समाप्तोऽयं दशमो लकारो लृङ् ॥ १० ॥ इति द्वयोर्धात्वो रूपाणि ॥ अथ भ्वादिगणः प्रारभ्यते । तत्रादौ परस्मैपदप्रक्रिया कथ्यते 'चिती संज्ञाने' ईकार ईदित्कार्यार्थः । पूर्ववत् तिबादयो भवन्ति ( अ कर्तरि ) अनेनाप् । चित् अप् तिप् इति जाते ।

(उपधाया लघोः ) धातोरुपधाया लघोर्नामिनो गुणो भवति । चेतति । चेततः । चेतन्ति । १ । चेतेत् । चेतेताम् । चेतेयुः ।२ । चेततु-चेततात् । चेतताम् । चेतन्तु । ३ । अचेतत् । अचेतताम् । अचेतन् । ४ । द्वित्वम् ॥ चिचेत । कित्त्वाद्गुणाभावः । चिचिततुः । चिचितुः । चिचेतिथ । चिचितथुः । चिचित । चिचेत । चिचितिव । चिचितिम ।५। कित्त्वाद्गुणाभावः । चित्यात् । चित्यास्ताम् । चित्यासुः । ६ । चेतिता । चेतितारौ । चेतितारः । ७ । चेतिष्यति । चेतिष्यतः । चेतिष्यन्ति । ८ । अचेतिष्यत् । अचेतिष्यताम् । अचेतिष्यन् । ९ । चित् सित् इति स्थिते । ( सिसता० ) इतीट् ।

सूत्रम् ( उपधाया लघोः ) उपधायाः ६-१ लघोः ६-१ द्विपदं सूत्रम् । धातोरुपधाभूतस्य लघोर्नामिनः वृद्धिवर्जिते प्रत्यये परे गुणो भवति । पकारः पित्कार्यार्थः 'स्वर०' लट् । चेतति । चेततः । चेतन्ति । चेतसि । चेतथः । चेतथ । चेतामि । चेतावः । चेतामः । लिङ् । चेतेत् । चेतेताम् । चेतेयुः । चेतेः । चेतेतम् । चेतेत । चेतेयम् । चेतेव । चेतेम । लोट् । चेततु-चेततात् । चेतताम् । चेतन्तु । चेत-चेततात् । चेततम् । चेतत । चेतानि । चेताव । चेताम । लङ् । अचेतत् । अचेतताम् । अचेतन् । अचेतः । अचेततम् । अचेतत । अचेतम् । अचेताव । अचेताम । लिट् । ( द्विश्च । स स्वरादिर्द्विरुक्तः ) चि चित् णप् इति स्थिते । णकारपकारावितौ ( गुणः ) 'स्वरहीनं०' चिचेत । कित्त्वाद्गुणाभावः । चिचिततुः । चिचितुः । चिचेतिथ । चिचितथुः । चिचित । चिचेत । चिचितिव । चिचितिम । लिङ् । चित्यात् । चित्यास्ताम् । चित्यासुः । चित्याः । चित्या-

स्तम् । चित्यास्त । चित्यासम् । चित्यास्व । चित्यास्म । लुट् । चेतिता । चेतितारौ । चेतितारः । चेतितासि । चेतितास्थः । चेतितास्थ । चेतितास्मि । चेतितास्वः । चेतितास्मः । लृट् । चेतिष्यति । चेतिष्यतः । चेतिष्यन्ति । चेतिष्यसि । चेतिष्यथः । चेतिष्यथ । चेतिष्यामि । चेतिष्यावः । चेतिष्यामः । लृङ् । अचेतिष्यत् । अचेतिष्यताम् । अचेतिष्यन् । अचेतिष्यः । अचेतिष्यतम् । अचेतिष्यत । अचेतिष्यम् । अचेतिष्याव । अचेतिष्याम । लुङ् । चित् सि दिप् इति स्थिते ( सिसता० ) अनेन इट् । चित् इट् सि दिप् इति जाते ।

**( सेः ) विद्यमानात्सिशब्दात्परयोर्दिस्योरीडागमो भवति ॥ ( इट ईटि ) इट उत्तरस्य सेर्लोपो भवति ईटि परे। अचेतीत् । अचेतिष्टाम् ।**

सूत्रम् ( सेः ) । ५–१ । सिशब्दात् परयोर्दिस्योरीडागमो भवति । अनेनेट् तदा–चित् इट् सि ईट दिप् इति जातम् । तत्र सूत्रम् ( इट ईटि ) । इटः । ५–१ । ईटि । ७–१ । इट् उत्तरस्य सेरीटि परे लोपो भवति । इति दिस्योर्विषये सिलोपः। अनेन सूत्रेण सिलोपः कार्यः । तदा चित् इट् ईट् दिप् इति जाते । टकारः टित्कार्यार्थः । दि सि मि । पकारः पित्कार्यार्थः । तदा–चित् इ ईट् इति स्थिते ( गुणः । सवर्णे०) 'स्वरहीनं०' 'दिवादावट् । वावसाने ) एभिः पूर्वोक्तैः सूत्रैः अचेतीत् इति रूपं सिद्धं भवति । अचेतीत् । अचेतिष्टाम । अचेति सि अन् इति स्थिते ।

**( स्याविदः ) विद्यमानात्सेराकान्ताद्विदश्चोत्तरस्यान उस् भवति । अचेतिषुः । अचेतीः । अचेतिष्टम् । अचेतिष्ट । अचेतिषम् । अचेतिष्व । अचेतिष्म । च्युतिर् आसेचने । इरनुबन्ध ईरितो वेति विशेषणार्थः । उच्चरितप्रध्वंसो ह्यनुबन्धः । च्योतति । च्योतेत् । च्योततु । अच्योतत् । च्युत् णप् द्वित्वम् ।**

सूत्रम् ( स्याविदः ) । ५–१ । एकपदं सूत्रम् । सेः भूतार्थोत्पन्नात् आकारान्तात् दा इत्यादेः विद् ज्ञाने इत्यस्माद्धातोश्च परस्य अन उस् भवति । अनेनान उस् जातः ' स्वरहीनं०' 'स्रोर्विसर्गः ) अचेतिषुः । अचेतीः । अचेतिष्टम् । अचेतिष्ट । अचेतिषम् । अचेतिष्व । अचेतिष्म । समाप्तिं प्राप्तोऽयं धातुः । ' च्युतिर् आसेचने ' इह अनुबन्धोऽस्ति ( इरितो वा ) इति सूत्रस्य विशेषणार्थः । उच्चरितप्रध्वस्तो ह्यनुबन्धो भवति । पूर्ववत् तिवादयः ( उपधाया लघोः ) अनेन गुणः लट् । च्योतति । च्योततः । च्योतन्ति । लिङ् । च्योतेत् । च्योतेताम् । च्योतेयुः । लोट् । च्योततु–

च्योततात्। च्योतताम्। च्योतन्तु। लङ्। अच्योतत्। अच्योतताम्। अच्योतन्। सुगमत्वात्। एतेषां विवेचनं न कृतम्। लिट्। च्युत् णप् इति स्थिते। (द्विश्च) च्युत् च्युत् णप् इति जाते।

( पूर्वस्य हसादिः शेषः ) पूर्वस्यादिर्हसः शिष्यते अन्यो लुप्यते। चुच्योत। चुच्युततुः। चुच्युतुः। चुच्योतिथ। चुच्युतथुः। चुच्युत। चुच्योत। चुच्युतिव। चुच्युतिम। च्युत्यात्। च्योतिता। च्योतिष्यति। अच्योतिष्यत्। अच्योतीत्। अच्योतिष्टाम्। अच्योतिषुः। अच्योतीः। अच्योतिष्टम्। अच्योतिष्ट। अच्योतिषम्। अच्योतिष्व। अच्योतिष्म।

सूत्रम् ( पूर्वस्य हसादिः शेषः )। पूर्वस्य। ६-१। हसयोर्हसानां वा संयुक्ताना-मुतासंयुक्तानामादिः। १-१। हसादिः शेषः। अथवा हस इति पृथक्पदं सांकेतिकं प्रथमैकवचनान्तम्। द्विर्वचने कृते सति पूर्वरूपस्य संयोगे सति आदिमो हसः शिष्यते रक्ष्यतेऽन्यो द्वितीयो लुप्यते। अनेन यकारतकारयोर्लोपः कार्यः। तदा च्यु च्युत् णप्। इति जाते। ( गुणः। उपधाया लघोः। ) 'स्वरहीनं०।' णकारः। पकारः। चुच्योत। चुच्युततुः। चुच्युतुः। चुच्योतिथ। चुच्युतथुः। चुच्युत। चुच्योत। चुच्युतिव। चुच्युतिम। लिङ्। च्युत्यात्। च्युत्यास्ताम्। च्युत्यासुः। लुट्। च्योतिता। च्योतितारौ। च्योतितारः। लृट्। च्योतिष्यति। च्योतिष्यतः। च्योतिष्यन्ति। लङ्। अच्योतिष्यत्। अच्योतिष्यताम्। अच्योतिष्यन्। लुङ्। अच्योतीत्। अच्योतिष्टाम्। अच्योतिषुः। अस्य धातोर्लुङ्लकारे सेरपवादो ङप्रत्ययो विकल्पेन भवति। तद्विधायकं सूत्रम्।

( इरितो वा )। इरितो धातोर्वा ङः प्रत्ययो भवति दिवादिपरः परस्मैपदे। सेरपवादः। ङकारो गुणप्रतिषेधार्थः। अच्युतत्। अच्युतताम्। अच्युतन्। अच्युतः। अच्युततम्। अच्युतत। अच्युतम्। अच्युताव। अच्युताम। श्च्युतिर् क्षरणे। श्च्योतति। श्च्योतेत्। श्च्योततु। अश्च्योतत्। द्वित्वम्।

( इरितो वा ) इर् इत् यस्य स इरित् तस्मात् इरितः। ५-१। द्विपदं सूत्रम्। च्युतिर्। रुधिर्। भिदिर्। छिदिर्। दृशिर्। रुदिर्। स्कन्दिर् इत्यादिरिग्लुब-न्धात् धातोर्भूतेऽर्थे दिवादौ परे वा ङप्रत्ययो भवति। ङकारो गुणप्रतिषे-

धार्थः । ङप्रत्ययोऽयं परस्मैपदे भवेन्मूल उक्तत्वात् यस्मिन्पक्षे ङप्रत्ययस्तस्मिन्पक्षे सेरभावः । अनेन ङप्रत्ययः । ( दिवादावद् ) 'स्वरहीनं०' अच्युतत् । अच्युतताम् । अच्युतन् । अच्युतः । अच्युततम् । अच्युतत । अच्युतम् । अच्युताव । अच्युताम । समाप्तोऽयं धातुः । श्च्युतिर् क्षरणे । पूर्ववत् तिवादयो भवन्ति । लट् । श्च्योतति । श्च्योततः। श्च्योतन्ति । लिङ् । श्च्योतेत् । श्च्योतेताम् । श्च्योतेयुः। लोट् । श्च्योततु । श्च्योतात् । श्च्योतताम्। श्च्योतन्तु । लङ् । अश्च्योतत्। अश्च्योतताम्। अश्च्योतन्। लिट् । (द्वित्वं) श्च्युत् श्च्युत् णप् इति स्थिते ।

## ( शसात् खपाः ) । द्विवचने कृते यत्पूर्वरूपं तस्य शसादुत्तराः खपाः शिष्यन्ते न शसाः । इति चकारशेषः । चुश्च्योत । चुश्च्युततुः । चुश्च्युतुः । श्च्युत्यात्–श्च्योतिता ॥ श्च्योतिष्यति । अश्च्योतिष्यत् । अश्च्युतत्–अश्च्योतीत् ॥ मन्थ विलोडने । मन्थति । मन्थेत् । मन्थतु । अमन्थत् । ममन्थ ।

( शसात् खपाः ) । शसात् । ५–१ । खपाः १–३ द्विपदं सूत्रम् । संयोगपूर्वस्य धातोर्द्वित्वे कृते सति यत्पूर्वरूपं द्वित्वसंबन्धि तस्य शसखपसंयोगे सति शसादुत्तरा अग्रे वर्तमानाः खपाः शिष्यन्ते रक्ष्यन्ते न शसाः । आदौ वर्त्तमानाः शसा लुप्यन्त इत्यर्थः । अनेन शकारस्य लोपः कार्यः। पुनः पूर्वस्य हसादिः शेषः इति सूत्रेण तकारस्य लोप कार्यः। ( गुणः।) 'स्वरहीनं०' चुश्च्योत । चुश्च्युततुः। चुश्च्युतुः। चुश्च्योतिथ। चुश्च्युतथुः। चुश्च्युत । चुश्च्योत। चुश्च्युतिव । चुश्च्युतिम। मधु चुश्च्योतेत्युदाहरणम् । लिङ् । श्च्युत्यात् । श्च्युत्यास्ताम् । श्च्युत्यासुः। लुट् । श्च्योतिता। श्च्योतितारौ । श्च्योतितारः। लृट । श्च्योतिष्यति । श्च्योतिष्यतः। श्च्योतिष्यन्ति । लृङ् । अश्च्योतिष्यत् । अश्च्योतिष्यताम् । अश्च्योतिष्यन् । लुङ् । अस्मिँल्लकारे साधनं तु पूर्ववत् । अश्च्योतीत् । अश्च्योतिष्टाम् । अश्च्योतिषुः। समाप्तोऽयं धातुः। मन्थ विलोडने । लट् । मन्थति । मन्थतः । मन्थन्ति । लिङ् । मन्थेत् । मन्थेताम् । मन्थेयुः। लोट् । मन्थतु–मन्थतात् । मन्थताम् । मन्थन्तु । लङ् । अमन्थत् । अमन्थताम् । अमन्थन् । लिट् । ममन्थ । ममन्थ् अतुस् इति स्थिते ।

## ( नो लोपः ) धातोरुपधाभूतस्य नकारस्य लोपो भवति किति ङिति च परे । इत्युपधानकारलोपे प्राप्ते ।

सूत्रम् ( नो लोपः ) नः । ६–१ । लोपः । १–१ । द्विपदं सूत्रम् । धातोरुपधाभूतस्य नकारस्य अर्थात् नकारस्थानीयानुस्वारस्य किति ङिति च परे लोपो भवति ।

अत्र लोपाधिकारे नकारस्यादेशरूपस्यानुस्वारस्य लोपः। अनेन सूत्रेण नकारस्य लोपे प्राप्ते सति।

( ऋसंयोगाण्णादेरकित्त्वं वाच्यम् )। तेन नलोपाभावः। ममन्थतुः। ममन्थुः। ममन्थिथ। ममन्थथुः। ममन्थ। ममन्थ। ममन्थिव। ममन्थिम।

( ऋसंयोगात् ) इदं वार्त्तिकम्। ऋश्च संयोगश्च ऋसंयोगं तस्मात् ऋसंयोगात्। ५-१। ण आदिर्यस्य स णादिः तस्य णादेः। कितो भावः कित्त्वं न कित्त्वम् अकित्त्वम्। १-१। वाच्यम्। १-१। ऋकारान्तात् संयोगान्तात् धातोश्च णादेरकित्त्वं वाच्यम्। अस्य धातोः संयोगत्वात्। अनेन सूत्रेण नकारस्य लोपाभावो भवति। 'स्वरहीनं०'। 'स्रोर्विसर्गः'। ममन्थतुः। ममन्थुः। वार्त्तिकम्।

( केचित्संयोगाद्वेति वक्तव्यम् )। ममन्थतुः। ममन्थुः। नलोपः। मथ्यात्। मन्थिता। मन्थिष्यति। अमन्थिष्यत्। अमन्थीत्। अमन्थिष्टाम्। अमन्थिषुः। पुथि लुथि माथि कुथि हिंसासंक्लेशनयोः।

केचिदार्याः संयोगात् धातोर्णादेः कित्त्वं वा वक्तव्यमिति वदन्ति। अनेन णादेर्विकल्पेन कित्त्वम्, तदा-ममन्थतुः ममन्थुः इदृशानि रूपाणि भवन्ति। लिट्। न लोपः। मथ्यात्। मथ्यास्ताम्। मथ्यासुः। लुट्। मन्थिता। मन्थितारौ। मन्थितारः। लृट्। मन्थिष्यति। मन्थिष्यतः। मन्थिष्यन्ति। लृङ्। अमन्थिष्यत्। अमन्थिष्यताम्। अमन्थिष्यन्। लुङ्। अमन्थीत्। अमन्थिष्टाम्। अमन्थिषुः। समाप्तोऽयं धातुः। पुथि लुथि मथि कुथि एते धातवो हिंसासंक्लेशनयोः भवन्ते।

( इदितो नुम् ) इदितो धातोर्नुमागमो भवति। कुन्थति। कुन्थेत्। कुन्थतु। अकुन्थत्। द्वित्वम्।

सूत्रम् ( इदितो नुम् )। इत् इत् यस्य स इदित् तस्मात् इदितः। ५-१ नुम्। ५-१। द्विपदं सूत्रम्। इदितो धातोर्लस्त्वापि लकारेषु नुमागमो भवति। पूर्ववत् तिवादयः। इदितो नुम्। मित्वात् ।( नश्चापदान्ते )। लट्। कुन्थति। लिङ्। कुन्थेत्। लोट्। कुन्थतु। लङ्। अकुन्थत्। लिट्। कुन्थ णप् इति स्थिते। ( द्विश्च )। पूर्वस्य हलादिः शेषः। कुकुन्थ णप् इति जाते।

( कुहोश्चुः )। पूर्वसंबन्धिनोः कवर्गहकारयोश्चुत्वं भवति। वर्गचतुर्थो हस्य सवर्णः। चुकुन्थ। चुकुन्थतुः। चुकुन्थुः। चुकु-

न्थिथ । चुकुन्थथुः । चुकुन्थ । चुकुन्थ । चुकुन्थिव । चुकुन्थिम। लघूपधत्वाभावान्न गुणः ।

सूत्रम् ( कुहोश्चुः ) । कुश्च ह् च कुहौ तयोः कुहोः ६–२ चुः १–१ द्विपदं सूत्रम् । द्वित्वे कृते सति पूर्वसम्बन्धिनोर्द्वित्वसंबन्धिनोः कवर्गहकारयोश्चवर्गादेशो भवति । ननु कवर्गस्य चवर्गो यथासङ्ख्यं भवति परं हकारस्य चवर्गत्वं कथं क्रियते–अत्रोच्यते- मातृकापाठे, शषसह इत्यत्र हकारस्य चतुर्थस्थानवर्तित्वात् हकारस्य चुत्वे झकारो भवति । अथवा–वर्गचतुर्थो हस्य सवर्ण इति वचनात् चवर्गमध्ये हस्य सवर्णो झो भवति । अनेन कवर्गस्य चवर्गो भवति । 'स्वरहीनं०' । चुकुन्थ । चुकुन्थतुः । चुकुन्थुः। लिङ् । ( नो लोपः ) इति सूत्रेण नकारस्य लोपे प्राप्ते सति ।

( इदितो नलोपाभावो वाच्यः ) कुन्थ्यात् । कुन्थिता । कुन्थिष्यति । अकुन्थिष्यत् । अकुन्थीत्।अकुन्थिष्टाम् । अकुन्थिषुः। पिधु गत्याम् । उकार उच्चारणार्थः ।

वार्तिकम् ( इदितः ) इदितो धातोः किति ङिति च परे नलोपस्याभावो वाच्यः। कुन्थ्यात् । लघूपधत्वाभावात् गुणाभावो भवति । लुट् । कुन्थिता । लृट् । कुन्थिष्यति । लङ् । अकुन्थिष्यत् । लुङ् । अकुन्थीत् । पुथि लुथि मथि इति त्रयाणां धातूनां सुगमत्वाद्रूपाणि न लिखितानि । पिधु गत्याम । उकार उच्चारणार्थः ।

( आदेः ष्णः स्नः ) षोपदेशस्य णोपदेशस्य च धातोरादौ वर्तमानयोः षकारणकारयोः सकारनकारौ भवतः । 'सेक्सृप्सृ स्तृसृज्स्तृस्त्यान्ये दन्त्याजन्तसादयः ॥ एकाचः षोपदेशाः ष्वष्क्स्विद्स्वद्स्वञ्जस्वपास्मिङः'॥ सेकृ गतौ । सृप्लृ गतौ । सृ गतौ । स्तृ आच्छादने । सृज् विसर्गे । स्तॄ आछादने । स्त्यै ष्टै शब्दसंघातयोः । एभ्योऽन्ये दन्त्याजन्तसादयः । एकाचः षोपदेशा दन्त्याजन्तसादयः । 'दन्ते भवः दन्त्यः दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ यस्य स दन्त्याजन्तः स चासौ सश्च दन्त्याजन्तसः स आदिर्येषां ते दन्त्याजन्तसादयः । दन्त्यः केवलदन्त्यः न तु दन्तोष्ठजोऽपि । ष्वष्कादीनां पृथग्ग्रहणात् । ष्वष्क् गतौ । ञिष्विदा गात्रप्रक्षरणे । स्वद् आस्वादने। स्वञ्ज्

परिष्वङ्गे । ञिष्वप् शये । ष्मिङ् ईषद्धसने । एते षोपदेशाः ॥
णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्कनॄनृतः ॥ नर्द गतौ ।
नट नर्तने । नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु । टुनदि
समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽन्ये
णोपदेशाः ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ॥
सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥ १ ॥

सूत्रम् ( आदेः ष्णः स्नः ) । आदेः ६-१ ष्णः ६-१ स्नः १-१ षः उपदेशे यस्य स षोपदेशः । ण उपदेशे यस्य स णोपदेशः । षोपदेशस्य णोपदेशस्य च धातोरादौ वर्त्तमानयोः षकारणकारयोः सकारनकारौ भवतः । यथासङ्ख्यम् । षोपदेशस्य णोपदेशस्य च धातोर्लक्षणं मूलोक्तमेव ज्ञेयम् । अस्या विस्तरभयान्न लिखितम् ।

( नामधातुष्ठैष्वष्काष्ठिवां षः ) सो नेति वाच्यम् । गुणः ।
सेधति । निपूर्वः ।

तथा च षत्वनिषेधकं सूत्रम् ( नामधातुरिति ) नामधातुष्ठैष्वष्काष्ठिवाम् ६-३ षकारस्य सकारो न भवति इति वाच्यम् ( गुणः ) लट् । सेधति । यदा निपूर्वोऽयं धातुः स्यात् तदा कीदृशं रूपं कार्यम् ।

( प्रादेश्च तथा तौ सुनमाम् ) । प्रादेरुपसर्गात्परेषां स्वादीनां
नमादीनां च धातूनां सकारनकारयोस्तौ पूर्वभाविनावेव
षकारणकारौ भवतः षत्वणत्वनिमित्ते सति । निषेधति ।
सेधेत् । सेधतु । अड्व्यवधानेऽपि षत्वम् । न्यषेधत् । द्वित्वव्यवधानेऽपि षत्वम् । निषिषेध । सिषिधतुः। सिषिधुः । सिषेधिथ । सिध्यात् । सेधिता । सेधिष्यति । असेधिष्यत् । असेधीत्। असेधिष्टाम्। असेधिषुः। षिधू शास्त्रे माङ्गल्ये च । ऊकार
इड्विकल्पार्थः । सेधति । सेधेत् । सेधतु । असेधत् । सिषेध ।
सिध्यात् ।

तदर्थं सूत्रम् ( प्रादेश्च तथा तौ सुनमाम् ) । प्र आदिर्यस्य स प्रादिः तस्य प्रादेः ५-१ च तथा तौ १-२ सुनमाम् ६-३ पञ्चपदं सूत्रम् । प्रादेरुपसर्गात्परेषां

स्वादीनां षुञ् अभिषवे, षोऽन्तकर्मणि, ष्टुञ् स्तुतौ, ष्टुभ् स्तम्भे, षिञ् बन्धने, षञ्ज संगे, ष्वञ्ज परिष्वङ्गे- इत्यादीनां नमादीनां च णम् प्रह्वत्वेशब्दे च णीञ् प्रापणे, टुनदि समृद्धौ, णिदि कुत्सायाम्, इत्यादीनां धातूनां यौ सकारनकारौ तयोः क्रमेण तौ पूर्वभाविनौ एव पूर्वावस्थायां वर्त्तमानौ षकारणकारौ एव भवतः । तथा तेष्वेवेत्यादि । तथेति सूत्रोक्तं पदं तस्यार्थः । तेष्वेव निमित्तेष्विति । अत्रायं भावः । सकारस्य षकारनिमित्तानि कवर्गेलक्षणानि । नकारस्य णत्वनिमित्तानि षकाररेफऋवर्णाः । अत्रप्रत्याहारकवर्गपवर्गव्यवधानानि च ततो यद्युपसर्गान्ते कवर्गस्येत्प्रत्याहारस्य च योगो भवति तदा तस्मात्परस्य सकारस्य षकारो भवति । यदा चोपसर्गे षकाररेफऋवर्णानामन्यतमो भवति नकारस्य वा प्रत्याहारकवर्गपवर्गान्तरं च भवति तदा नकारस्य णकारो भवति । अत्रोपसर्गे इत्प्रत्याहारोऽस्ति तेन सेधतेः सकारस्य षकारो भवति । निषेधति । लिङ् । सेधेत् । लोट् । सेधतु । लङ् । अड्व्यवधानेऽपि षत्वं भवति न्यषेधत् इति प्रयोगदर्शनात् । यदा निपूर्वस्तदा न्यषेधत् । तदभावे असेधत् । लिट् । द्वित्वव्यवधानेऽपि षत्वं नास्ति व्याख्यानेन प्रयोजनं तदभावेऽपि प्रयोगसिद्धेः। निषिषेध । निपूर्वे सति । तदभावे सिषेध । लिङ् । सिध्यात् । लुट् । सेधिता । लृट् । सेधिष्यति । लृङ् । असेधिष्यत् । लुङ् । असेधीत् । समाप्तोऽयं धातुः । षिधू शास्त्रे माङ्गल्ये च । ऊकार इड्विकल्पार्थः । (आदेः ष्णः स्नः) पूर्ववत् तिवादयः । सेधति । सेधेत् । सेधतु । असेधत् । लिट् । सिषेध । सिध्यात् । सिधू ता इति स्थिते ।

( ऊदितो वा ) । ऊदितो धातोः परस्य वसादेरिड्वा भवति ।

सूत्रम् ( ऊदितो वा ) ऊत् इत् यस्य स ऊदित् तस्मात् ऊदितः ५--१ वा ऊदितो धातोः परस्य वसादेः प्रत्ययस्य वा इडागमो भवति ।

( स्वृसूतिसूयतिधूञ्रधादीनामिड्वा वक्तव्यः ) । स्वृ शब्दोपतापयोः । षूञ् प्राणिगर्भविमोचने । षूङ् प्रसवे । धूञ् कम्पने । रध् हिंसायाम् । नश् अदर्शने । तृप् प्रीणने । दृप् हर्षविमोचनयोः। द्रुह् जिघांसायाम्। मुह् वैचित्त्ये। ष्णुह् उद्गिरणे। स्निह् प्रीतौ । एते रधादयः । सेधिता । पक्षे ।

द्वितीयं सूत्रम् ( स्वृसूति० ) स्वृसूतिसूयतिधूञ् इत्यादीनां धातूनां वा इडागमो वक्तव्यः । वसादेः । प्रत्ययस्यैवेति शेषः । धातवस्तु मूले दर्शिताः । अनेन सूत्रेण वा इट् । सेधिता । सिध् ता इति स्थिते ।

( तथोर्धः ) । दधातिं विना झभान्ताद्धातोः परयोस्तकारथकारयोर्धकारादेशो भवति । झबे जबाः । सेद्धा । सेधिष्यति–से-

त्स्यति। असेधिष्यत्–असेत्स्यत्। असेधीत्। असेधिष्टाम् असेधिषुः। इडभावे।

सूत्रम् (तयोर्धः) तश्च थ् च तथौ तयोः तयोः ६–२ धः १–१ द्विपदं सूत्रम्। दधातिं वर्जयित्वा झभान्तात् धातोः परयोस्तकारथकारयोर्धकारादेशो भवति सुगम मिदं सूत्रम्। अस्याधिकं व्याख्यानं नास्ति। अनेन तकारस्य धकारः (झबे जबाः) प्रथमधकारस्य दकारः। 'स्वरहीनम्०' (गुणः) सेद्धा। सेद्धारौ। सेद्धारः। सेद्धासि। सेद्धास्थः। सेद्धास्थ। सेद्धास्मि। सेद्धास्वः। सेद्धास्मः। लृट्। सेधिष्यति–सेत्स्यति। (खसे चपा झसानाम्) लृङ्। असेधिष्यत्। असेत्स्यत्। लुङ् असेधीत्। असेधिष्टाम्। असेधिषुः। इडभावे अ सिध् सि ईद् दिप् इति स्थिते॥

(अनिटो नामिवतः) नामिवतोऽनिटो धातोः परस्मैपदे परे सिप्रत्यये वृद्धिर्भवति। चपत्वम्। सेः। असैत्सीत्। असैद्धाम् (प्रत्ययलोपे प्रत्ययलक्षणं कार्यं भवति)।

सूत्रम् (अनिटो नामिवतः) अनिटो नामिवतः नास्ति इट् यस्य सः अनिट् तस्यानिटः ६–१ नामी अस्यास्ति इति नामिवान् तस्य नामिवतः ६–१ द्विपदं सूत्रम्। नामिवतो नाम्युपधस्य (नैकस्वरादनुदात्तात्) इति सूत्रेणोक्तात् अनिटो धातोः सम्बन्धिनो नामिनः परस्मैपदविषये सिप्रत्यये परे वृद्धिर्भवति। अनेन वृद्धिः। परं पूर्ववत् (खसे०) असैत्सीत्। असैध् सि ताम् इति स्थिते॥

(झसात्) झसादुत्तरस्य सेर्लोपो भवति झसे परे। असैत्सुः। असैत्सीः। असैद्धम्। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। खद् स्थैर्ये हिंसायां च। खदति। खदेत्। खदतु। अखदत्।

सूत्रम् (झसात्) ५–१ एकपदं सूत्रम्। झसादुत्तरस्य सेर्लोपो झसे परे भवति। अनेन सेर्लोपः कार्यः (प्रत्ययलोपे प्रत्ययलक्षणं कार्यं भवति) इति न्यायात्। वृद्धिर्भवति (तयोर्धः।झबे जबाः) 'स्वरहीनं०' असैद्धाम्। असैत्सुः। असैत्सीः। असैद्धम्। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। खद् स्थैर्ये हिंसायां च। पूर्ववत्। तिवादयः। खदति। खदेत्। खदतु। अखदत्। खद् खद् णप् इति स्थिते 'पूर्वस्य हसादिः शेषः। ख खद् णप् इति जाते॥

(अत उपधायाः) धातोरुपधाया अकारस्य वृद्धिर्भवति ञिति णिति च परे। चुत्वम्। चखाद। चखदतुः। चखदुः। चखदिथ चखदथुः। चखद।

सूत्रम् ( अत उपधायाः ) अतः ६-१ उपधायाः ६-१ धातोरुपधाया अकारस्य वृद्धिर्भवति ञिति णिति च परे ।( कुहोश्चुः )। चखाद । चखदतुः । चखदुः। चखदिथ । चखदथुः चखद ।

**( णलुत्तमो वा णिद्वक्तव्यः ) चखाद-चखद। चखदिव। चखदिम । खद्यात् । खदिता । खदिष्यति । अखदिष्यत् ।**

( णलुत्तमो० ) उत्तमो णल् वा णित् वक्तव्यः । तेन वृद्धेर्विकल्पो भवति । चखाद- चखद । चखदिव । चखदिम । खद्यात् । खदिता । खदिष्यति । अखदिष्यत् । अखदीत् इति स्थिते ।

**( णित्पे ) परस्मैपदे परे सिर्णिद्भवति । (अत उपधायाः ) इति वृद्धिः। अखादीत् । अखादिष्टाम् । अखादिषुः ।**

सूत्रम् ( णित्पे ) ण इत् यस्य स णित् १-१ पे ७- १ द्विपदं सूत्रम् । पे परस्मैपदे परे सिर्णित् भवति । अनेन सेर्णित्त्वात् ( अत उपधायाः ) इति सूत्रेण वृद्धिः । अखादीत् । अखादिष्टाम् । अखादिषुः । वृद्धिविकल्पकरम्।

**(हसादेर्लघ्वकारोपधस्य वा वृद्धिः सेटि सौ वाच्या )अखदीत् । गद व्यक्तायां वाचि । गदति ।**

सूत्रम् ( हसादेः० ) हस आदिर्यस्य स हसादिस्तस्य हसादेः । लघुश्चासौ अकारश्च लघ्वकारः लघ्वकार उपधायां यस्य स लघ्वकारोपधस्तस्य लघ्वकारोपधस्य हसादेर्लघ्वकारोपधस्य च धातोर्वा वृद्धिः सेटि सौ वाच्या। अनेन वृद्धिविकल्पो भवति। अखदीत् । अखदिष्टाम् । अखदिषुः । सुगमोऽयं धातुः समाप्तः। गद् व्यक्तायां वाचि । गदति ।

**( उपसर्गस्थ-निमित्तान्नेर्गदादौ णत्वं वाच्यम् ) गद्-नद्-पत् पद्-स्था-अपित्-दा-धा, मा-सो-हन्-या-वा-द्रा-प्सा-वप्-वह्-चि-शम्-दिह्-एते गदादयः । गद् व्यक्तायां वाचि । णद् अव्यक्ते शब्दे । पत्लृ पतने । पद गतौ । ष्ठा गतिनिवृत्तौ । डुदाञ् दाने । डुधाञ् धारणपोषणयोः। माङ् माने। षोऽन्तकर्मणि । हन् हिंसागत्योः । या प्रापणे । वा गतिगन्धनयोः । द्रा कुत्सायां गतौ च । प्सा भक्षणे । टुवप् बीजतन्तुसन्ताने । वह् प्रापणे । चिञ् चयने । शम् उपशमे । दिह उपचये । प्रणिगदति। गदेत्।गदतु।अगदत्।(कुहोश्चुः)जगाद। जगदतुः।जगदुः।**

जगदिथ। जगदथुः। जगद। गद्यात्। गदिता। गदिष्यति। अगदिष्यत्। अगादीत्–अगदीत्। रद् विलेखने। रदति। रदेत्। रदतु। अरदत्। रराद।

( उपसर्गस्थनिमित्तात् ) उपसर्गस्थनिमित्तात् नेर्गदादौ णत्वं वाच्यम्। गदाद्यस्तु मूले उक्ताः सन्ति। त एव ज्ञातव्याः। अतोऽनेन नकारस्य णकारो भवति। प्रणिगदति। गदेत्। गदतु। अगदत्( कुहोश्चुः ) अनेन गकारस्य जकारः ( अत उपधायाः ) जगाद। जगदतुः। जगदुः। गद्यात्। गदिता। गदिष्यति। अगदिष्यत्। अगादीत्। हसादेः। अगदीत्। रद् विलेखने। रदति। रदेत्। रदतु। अरदत्। ररद। रद् अतुस् इति स्थिते।

(लोपः पचां कित्ये चास्य)। पचादीनां लिट्यनादेशादीनां किति णादौ सति पूर्वस्य लोपः। असंयुक्तहसयोर्मध्यस्थस्याकारस्यैकारः। रेदतुः। रेदुः

सूत्रम् ( लोपः पचां कित्ये चास्य ) लोपः १–१ पचां ६–३ किति ७–१ ए १–१ च अ० अस्य ६–१ पदपदमिदं सूत्रम्। येषां धातूनां द्विवचनस्य (कुहोश्चुः। झपानां जबचपाः ) इति जवादिरादेशो न भवति तेषां पचादीनां पच्सहशानां पत् पद् चल् चर् तन् मन् इत्यादीनां पूर्वस्य द्वित्वस्य किति णादौ सति लोपो भवति। एक एव हसो यस्य सः। यद्वा एकश्च एकश्च एकौ एकौ असंयुक्तौ केवलौ संयोगरहितौ पूर्वापरौ हसौ यस्य स एकहसस्तस्य एकहसस्य। असंयुक्तहसमध्यस्थस्याकारस्य च एकारो भवति। मूले तु न संयुक्तौ असंयुक्तौ असंयुक्तौ च तौ हसौ च असंयुक्तहसौ तयोरसंयुक्तहसयोः। पूर्वव्याख्यानं चन्द्रिकानुसारेण, इदं तु मूलानुसारेण; चकारात् उक्तनिमित्ताभावेऽपि तृ फल्–भज्–त्रप्–सध्–ग्रन्थ्–दम्भानामेत्वपूर्वलोपौ भवतः। तथा जॄष् भ्रम् त्रस् फण् राज् भ्राश् भ्राज् भ्लाश् स्यन् राध् एतेषां विकल्पेन एत्वपूर्वलोपौ भवतः–इति सूत्रम्। अनेन पूर्वरकारस्य लोपश्च धातोरकारस्यैकारो भवति। 'स्वरहीनं०' रेदतुः। रेदुः। र रद् थप् इति स्थिते। (सिसता०) अनेनेट्। ररद्इ थप् इति जाते।

(सेटि थपि एत्वपूर्वलोपौ वक्तव्यौ) रेदिथ। रेदथुः। रेद। रराद–ररद। रेदिव। रेदिम। रद्यात्। रदिता। रदिष्यति अरदिष्यत्। अरादीत्। अरादिष्टाम्। अरादिषुः। अरदीत्॥ णद् अव्यक्ते शब्दे। ( आदेः ष्णः स्नः ) नदति। नदेत्। नदतु। अन-

दत् । प्रपूर्वः ( प्रादेश्च ) इति णत्वम् । प्रणदति । गदादित्वात् प्रणिनदति । ननाद । नेदतुः । नेदुः । नेदिथ । नेदथुः । नेद । ननाद-ननद । नेदिव । नेदिम । नद्यात् । नदिता । नदिष्यति । अनदिष्यत् । अनादीत् । अनादिष्टाम् । अनादिषुः । अनदीत् । अनदिष्टाम् ॥ अर्द गतौ याचने च । अर्दति । अर्देत् । अर्दतु । आर्दत् । द्वित्वे कृते ( आभ्वोर्णादौ० ) आ अर्द इति स्थिते ।

( सेटि थपि ) । वार्तिकम् । सेटि थपि परे एत्वपूर्वलोपौ वक्तव्यौ । अनेनैत्वपूर्वलोपौ स्तः 'स्वरहीनं०' रेदिथ । रेदथुः । रेद । रराद-ररद । रेदिव । रेदिम । लिङ् । रद्यात् । रदिता । रदिष्यति । अरदिष्यत् । अरादीत् । हसादेः । अरदीत् ॥ समाप्तोऽयम् ॥ णद् अव्यक्ते शब्दे । पूर्ववत् तिवादयः । (आदेः ष्णः स्नः) नदति । अन्यानि रूपाणि सुगमत्वान्न लिखितानि । लिट्लकारे ( लोपः पचा किल्ये चास्य ) अनेनैत्व पूर्वलोपौ कार्यौ । ननाद । नेदतुः । यदा प्रपूर्वोऽस्य धातुस्तदा ( प्रादेश्च० ) अनेन सूत्रेण नकारस्य णकारः । प्रणदति इति रूप भवति । प्रपूर्वत्वे सति यदा निपूर्वः स्यात् तदा गदादित्वात् नेर्णत्व भवति । प्रणिनदति । इति रूपं सिद्ध भवति। नद्यात् । नदिता । नदिष्यति । अनदिष्यत् । अनादीत् । हसादेः । अनदीत् । सोऽनादीत् इत्युदाहरणम् ॥ अर्द् गतौ याचने च । अर्दति । अर्देत् । अर्दतु । आर्दत् । लट्लकारस्य रूपे ( स्वरादेः परः ) अनेन वक्ष्यमाणेन सूत्रेण द्वितीयोऽडागमो भवति । अर्द् णप इति स्थिते । द्वित्वम् । द्वित्वे कृते सति । आभ्वोर्णादौ इति सूत्रेण पूर्वस्याकारस्याकारो भवति । तदा आ अर्द् णमिति जाते ।

( नुगशाम् ) अश्नोतेर्ऋकारादिधातूनां संयोगान्ताकारादिधातूनां च पूर्वस्य नुगागमो भवति णादौ सति । आनर्द । आनर्दतुः । आनर्दुः । आनर्दिथ । आनर्दथुः । आनर्द । आनर्द । आनर्दिव । आनर्दिम । अर्द्यात् । अर्दिता । अर्दिष्यति । आर्दिष्यत् । आर्दीत् । आर्दिष्टाम् । आर्दिषुः ॥ इदि परमैश्वर्ये । इन्दति । इन्देत् । इन्दतु ।

सूत्रम ( नुगशाम ) नुक् १-१ अशाम् ६-३ अशूङ् व्याप्तौ । अत्रच अयं अर्द् ऋच्छ इत्यादीनां धातूनां द्विर्भावे कृते सति णवादौ परे पूर्वस्य द्विरस्य नुगागमो

भवति । ककारः स्थानविल्यर्थः । कित्वादन्ते । उकार उच्चारणार्थः । अनेन सूत्रेण द्वयोर्मध्ये नुगागमो भवति । ' स्वरहीनं० ' । आनर्द । आनर्दतुः । आनर्दुः । सर्वाणि रूपाणि मूले सन्ति । अर्थात् । अर्दिता । अर्दिष्यति । ( स्वरादेः ) आर्दिष्यत् । आर्दीत् । इदि परमैश्वर्ये । पूर्ववत् तिबादयः । ( इदितो नुम् ) इति अनेन नुम् । इन्दति । इन्देत् ॥ इन्दतु । ऐन्दत् इति जाते ।

( स्वरादेः ) स्वरादेर्धातोर्द्वितीयोऽडागमो भवति दिबादौ परे । ( अ इ ए ) ( ए ऐ ऐ ) ऐन्दत् । इन्द् णप् इति स्थिते ।

( स्वरादेः ) स्वर आदिर्यस्य स स्वरादिः तस्य स्वरादेः ६–१ स्वरादेर्धातोर्द्वितीयोऽडागमो भवति । अनेन द्वितीयोऽडागमः ।( ए ऐ ऐ ) ऐन्दत् । ऐन्दताम् । ऐन्दन् । ऐन्दः । ऐन्दतम् । ऐन्दत । ऐन्दम् । ऐन्दाव । ऐन्दाम । अस्य धातोर्लिट्लकारे विशेषोऽस्ति । इन्द् णप् इति स्थिते ।

( कासादिप्रत्ययादाम् कस्भूपरः ) । कास् आस् दय् अय् नाम्यादिगुरुमद्धात्वनेकस्वरधातुभ्यः प्रत्ययान्ताच्च णबादौ परे आम् प्रत्ययो भवति । स च कस्भूपरः प्रयोक्तव्यः । काशृ दीप्तौ । आस् उपवेशने । दय् दानगतिहिंसादानेषु । अय् गतौ । एते कासादयः ।

( विद् दरिद्रा कास् काश् जागृ उष् एभ्यो वाम् ) विद् ज्ञाने। दरिद्रा दुर्गतौ । काश् विकचने । जागृ निद्राक्षये । उष् दाहे । एते विदादयः। इन्दां कृ णप् इति स्थिते कृ इत्येतस्य द्वित्वम्।

सूत्रम् । ( विद् दरिद्रा० ) विद दरिद्रा कास् काश् जागृ उष् एभ्यो वाम् प्रत्ययो भवति । इन्द आम् कृ णविति जाते । ' स्वरहीनम्० ' । इन्दाम् कृ णविति जाते ( द्विश्च ) । कृ इत्यस्य द्वित्वम्। इन्दाम् कृ कृ णविति जाते ।

( रः ) पूर्वसंबन्धिन ऋकारस्याकारो भवति । चुत्वम् ।

सूत्रम् ( रः ) । ऋ ६-१ साकेतिकम्। अः १-१ । द्विपदं सूत्रम् । द्वित्वे कृते सति पूर्वसंबन्धिन ऋकारस्य अकारादेशो भवति । अनेन ऋकारस्याकारः । तदा इन्दाम् क कृ णप् इति जाते । ( कुहोश्चुः )। अनेन सूत्रेण ककारस्य चकारः। तदा इन्दाम् च कृ णप् इति स्थिते ।

( धातोर्नामिनः ) धातोरन्त्यभूतस्य नामिनो वृद्धिर्भवति ञिति णिति च परे । इन्दाञ्चकार। इन्दाञ्चक्रतुः। इन्दाञ्चक्रुः । क्रादित्वान्नेट्। इन्दाञ्चकर्थ । इन्दाञ्चक्रथुः । इन्दाञ्चक्र । इन्दाञ्चकार इन्दाञ्चकर। इन्दाञ्चकृव। इन्दाञ्चकृम । इन्दामास।इन्दामासतुः। इन्दामासुः । इन्दामासिथ। इन्दाम्बभूव । इन्द्यात् । इन्दिता । इन्दिष्यति । ( स्वरादेः० ) । ऐन्दिष्यत् । ऐन्दीत् । ऐन्दिष्टाम् ऐन्दिषुः । ऐन्दीः। ऐन्दिष्टम् । ऐन्दिष्ट । ऐन्दिषम् । ऐन्दिष्व । ऐन्दिष्म ॥ णिदि कुत्सायाम् । निन्दति ।

सूत्रम् ( धातोर्नामिनः ) धातोः ६-१ नामिनः ६-१ द्विपद सूत्रम् । धातोः अन्त्यभूतस्य नामिनः ञिति णिति च प्रत्यये परे वृद्धिर्भवति । अनेन वृद्धिस्तदा इन्दाम् च कृ आर् णप् इति जाते ( नश्चापदान्ते ) ' स्वरहीनम्० ' तदा इन्दाञ्चकार इति रूप सिद्ध भवति । एवमन्यान्यपि रूपाणि सिद्ध्यन्ति। किति णादौ गुणवृद्धी न भवतः । किं तु ( रः ) इत्यस्य सूत्रस्य प्राप्तिः । इन्दाञ्चकार । इन्दाञ्चक्रतुः । इन्दाञ्चक्रुः । ( क्रादेर्णादेः ) इति सूत्रे कृधातोरिड्निषेधात् इडागमो न भवति पित्त्वात् गुणो भवति । इन्दाञ्चकर्थ । इन्दाञ्चक्रथुः । इन्दाञ्चक्र । इन्दाञ्चकार ( णदुत्तमः ) इति सूत्रेण वा णित् तेन वा वृद्धिर्भवति । इन्दाञ्चकर । इत्यत्र गुणो भवत्येव वा। इन्दाञ्चकृव। इन्दाञ्चकृम । यदा अस्धातोरनुप्रयोगस्तदा इन्दाम् अस् णप् इति स्थिते द्वित्वसूत्रेण अकारस्य द्विर्भावः । ( आम्वोणादौ ) ' सवर्णेदीर्घः । '

'स्वरहीनं०' इन्द्यामास । इन्द्यामासतुः । इन्द्यामासुः । इन्द्यामासिथ । यदा भूधातोरनुप्रयोगस्तदा इन्द्याम् भू णप् इति जाते । ( नश्चापदा० ) पुनश्च बभूव इति रूपं यथा सिद्धं भवति तथैव रूपं कार्यम् । इन्द्याम्बभूव । इन्द्यात् । इन्दिता । इन्दिष्यति । ( स्वरादेः ) ऐन्दिष्यत् । ऐन्दीत् ॥ णिदि कुत्सायां पूर्ववत् । 'इदितो नुम्' निन्दति । यदायं धातुः प्रपूर्वः स्यात् तदा प्रनिन्दति इति स्थिते ॥

( निसनिक्षनिन्दामुपसर्गाण्णत्वं वा वाच्यम् ) प्रणिन्दति । प्रनिन्दति । निन्देत् । निन्दतु । अनिन्दत् । निनिन्द । निन्द्यात् निन्दिष्यति । अनिन्दिष्यत् । अनिन्दीत् ॥ णिक्ष चुम्बने । प्रणिक्षति । निक्षेत् निक्षतु । अनिक्षत् । निनिक्ष । निक्ष्यात् । निक्षिता । निक्षिष्यति । अनिक्षिष्यत् । अनिक्षीत ॥ उख गतौ । ओखति।ओखेत्। ओखतु। औखत् । द्वित्वे उपधागुणे च कृते ।

सूत्रम् ( निसनिक्षनिन्दामु० ) । निसनिक्षनिन्दां धातूनामुपसर्गात् उपसर्गस्थनिमित्तात् णत्वं वा वाच्यम् । अनेन णत्वम् । प्रणिन्दति । प्रनिन्दति । निन्देत् । निन्दतु । अनिन्दत् । अत्र (उपधाया लघोः) इति सूत्रस्य प्राप्तिरेव नास्ति । उपधाया-मिकाराभावात् । निनिन्द । निन्द्यात् । निन्दिता । निन्दिष्यति । अनिन्दिष्यत् । अनिन्दीत् । अस्य रूपाणि मूले सन्ति तथापि लिखितानि । णिक्ष चुम्बने । निक्षति । ( निसनिक्षनिंदामु० ) । अनेन सूत्रेण णत्वम् । प्रणिक्षति । अन्यानि रूपाणि सुगमत्वान्न लिखितानि ॥ उख गतौ । गुणः । ओखति । ओखेत् । ओखतु । औखत् । अत्र ( स्वरादेः ) इत्यनेन सूत्रेण द्वितीयोऽडागमो भवति । उख् णप् इति स्थिते । (द्विश्च । गुणः) उ ओख णप् इति जाते ।

( असवर्णे स्वरे पूर्वकारोकारयोरियुवौ वक्तव्यौ ) उवोख । ( सवर्णे दीर्घः ) ऊखतुः । ऊखुः । उवोखिथ । उख्यात् । ओखिता । ओखिष्यति । औखिष्यत् । औखीत् ॥ अञ्चु गतिपूजनयोः। अञ्चति (नुगशाम्) आनञ्च। आनञ्चतुः आनञ्चुः ।

सूत्रम् ( असवर्णे स्वरे० ) । असवर्णे स्वरे परे सति पूर्वयोः इकारोकारयोः इयुवौ यथासंख्येन वक्तव्यौ । अनेन सूत्रेण उकारस्य उव् जातः । 'स्वरहीनं०' उवोख । असवर्णस्वराभावान्नोव् । ( सवर्णदीर्घः सह ) । ऊखतुः । ऊखुः । उवोखिथ । उख्यात् । ओखिता । ओखिष्यति । ( स्वरादेः ) औखिष्यत् । औखीत् ॥ अञ्चु

गतिपूजनयोः । अञ्चति । अञ्चेत् । अञ्चतु ( स्वरादेः ) आञ्चत् । अ अञ्च णप् इति जाते ( आभ्वोर्णादौ । नुगशाम् ) 'स्वरहीनं०' आनञ्च । आनञ्चतुः । आनञ्चुः । पूजायाम् ।

## ( पूजायामञ्चेर्नलोपाभावो वाच्यः ) अञ्च्यात् । गतौ तु अच्यात् । अञ्चिता । अञ्चिष्यति । आञ्चिष्यत् । आञ्चीत् । आछि आयामे । आञ्छति । आनाञ्छ । ( आञ्छतेर्नुग्वेति केचित् )। आञ्छ । आञ्छयात् । आञ्छिता । आञ्छिष्यति । आञ्छिष्यत् । आञ्छीत् ॥ हुर्छा कौटिल्ये । ( य्वो र्वि हसे ) इति दीर्घः । हूर्छति ( कुहोश्चुः ) । वर्गचतुर्थो हस्य सवर्णः । ( झपानां जबचपाः ) जुहूर्छ । अहूर्छीत् ॥ वज गतौ । वजति । वजेत् । वजतु अवजत ।

( पूजायामञ्चेर्धातोर्नकारस्य लोपाभावो वाच्यः ) । अञ्च्यात् । गतौ तु ( नो लोपः ) इति सूत्रेण नकारस्य लोपो भवति । अच्यात् । अञ्चिता । अन्यानि सुगमानि । अञ्चिष्यति ( स्वरादेः ) आञ्चिष्यत् । आञ्चीत् । आछि आयामे ( इदितो नुम् । आञ्छति । आञ्छेत् । आञ्छतु । ( स्वरादेः ) आञ्छत् । आ आञ्छ णप् इति जाते । ( नुगशाम )। अनेन नुक् 'स्वरहीनं०' आनाञ्छ । आनाञ्छतुः । आनाञ्छुः । आञ्छेर्धातोर्नुगशामिति सूत्रेण विहितो नुग् वा भवतीति केचिदाचार्या वदन्ति । तदा ( द्विश्च ) । सवर्णदीर्घः । आञ्छ । आञ्छतुः । आञ्छुः । आञ्छयात् । आञ्छिता । आञ्छिष्यति । ( स्वरादेः ) आञ्छिष्यत् । आञ्छीत् ॥ हुर्छा कौटिल्ये । पूर्ववत् तिवादयः । हुर्छ अ तिप् इति स्थिते । ( य्वो र्वि हसे ) अनेन दीर्घः । 'स्वरहीनं०' । हूर्छति । हूर्छेत् । हूर्छतु । अहूर्छत् । 'हु हुर्छ णप्' इति स्थिते ( कुहोश्चुः ) वर्गचतुर्थो हस्य सवर्णः । अनेन हकारस्य झकारो भवति ( झपानां जबचपाः ) अनेन झकारस्य जकारः। ( य्वो र्वि हसे ) अनेन दीर्घः 'स्वरहीनं०' जुहूर्छ । जुहूर्छतुः । जुहूर्छुः । हूर्छ्यात् । हूर्छिता । हूर्छिष्यति । अहूर्छिष्यत् । अहूर्छीत् ॥ वज गतौ । पूर्ववत् । वजति । वजेत् । वजतु । अवजत् । व वज् णप् इति जाते । लोपः पचां किंत्ये चास्य । अनेन सूत्रेण णपपूर्वलोपे प्राप्ते सति ।

## ( शमदववादिगुणभूताकाराणां नेत्वपूर्वलोपौ वक्तव्यौ ) । शसु हिंसायाम् । दद दाने । शशास । शशसतुः । ददाद । ददतुः ।

ववाज । ववजतुः। ववजुः । ववाजिथ । अवाजीत्-अवजीत् । व्रज गतौ । व्रजति। व्रजेत् । व्रजतु । अव्रजत् । वव्राज । वव्रजतुः। वव्रजुः । व्रज्यात । व्रजिता । व्रजिष्यति। अव्रजिष्यत् ।

( शस्० ) शस्-दद्-वादिगुणभूताकाराणां किति णवादौ परे एत्वपूर्वलोपौ न वक्तव्यौ । अनेनास्यैत्वपूर्वलोपनिषेधः । किन्तु (अत उपधायाः) अनेन सूत्रेण वृद्धिः। ववाज । ववजतुः । ववजुः । ववजिथ । वज्यात् । वजिता । वजिष्यति । अवजिष्यत्। अवाजीत् । हसादेः । अवजीत् । व्रज् गतौ । व्रजति । अन्यानि सुगमानि । लुङ् लकारे वृद्धिविकल्पे ।

( वदिव्रज्योः सौ नित्यं वृद्धिः ) अव्राजीत् । अज् गतौ क्षेपणे च । अजति । अजेत् । अजतु । आजत् ।

सूत्रम् ( वदिव्रज्योः० ) वदिव्रज्योर्धात्वोः सौ परे नित्यं वृद्धिर्भवति । अनेनास्य वृद्धिविकल्पाभावः। अव्राजीत् । अज् गतौ क्षेपणे च । अजति । अजेत् । अजतु । स्वरादेः । आजत् ।

(अजेरार्धधातुके वी वक्तव्यः वसादौ वा ) एतच्च विभक्तिचतुष्टयं सार्वधातुकं परमार्धधातुकसंज्ञं पाणिनीयानाम् । द्वित्वम् । वृद्धिः । विवाय ।

सूत्रम् ( अजेरार्धधातुके० ) अजेर्धातोरार्धधातुके विषये वी वक्तव्यो वसादौ परे वा भवति । सार्वधातुकार्धधातुकयोर्लक्षणं मूले उक्तम् । अनेन वीरादेशः । वी णप् इति स्थिते । ( द्विश्च । ह्रस्वः ) वि वी णविति जाते । धातोर्नामिनः । अनेन सूत्रेण वृद्धिर्भवति । स्वरहीनं० । विवाय । वि वी अतुस् इति स्थिते ।

( नुधातोः ) विकरणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ भवतः स्वरे परे । अनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ । विव्यतुः । विव्युः ।

सूत्रम् ( नुधातोः ) । नुश्च धातुश्च नुधातुस्तस्य नुधातोः ६-१ स्वादेर्नुरिति स्वादेरुत्पन्नस्य नु इति विकरणस्य तथा धातोरिति । इवर्णान्तोवर्णान्तधातोः संबन्धिन इवर्णस्य उवर्णस्य इयुवौ भवतः । इवर्णस्य इय् उवर्णस्य उव् । अत्रापि विशेषमाह-अनेके यादि । तु पुनः । अनेकस्वरः संयोगपूर्वरहितश्च यो धातुर्भवति तत्संबन्धिनोरिवर्णोवर्णयोर्यकारवकारावेव भवतः । एवभूतस्य नुविकरणसंबन्धिन उवर्णस्यापि वत्वम् । तु शब्दात् क्वचिदेकस्वरस्यापि यकारः । यथा वदन्ति क्वचिदनेकस्व

रस्थापि इय्। यथा-ईयतुः। (ख्वोर्धातोः )ख्वौ वा ) इति सूत्रद्वयेन केवलस्य ईकारस्य च ऊकारस्य इयादिकार्यम्। अत्र तु नुधातोरित्यनेन सूत्रेण सर्वत्र इवर्णस्य उवर्णस्य च इयादिकार्यं भवति। इति विशेषः। अनेन सूत्रेणानेकस्वरस्यासंयोगपूर्वस्यास्येकारस्य यकारो भवति। विव्यतुः। विव्युः ( गुणः ) विवयिथ।

( स्वरान्तान्नित्यानिटःस्थपो वेट् ) विवयिथ-विवेथ। आजिथ। विव्यथुः। विव्य। विवाय-विवय। विव्यिव-आजिव। विव्यिम-आजिम। वीयात्।

( स्वरांतात्० ) स्वरांतात् नित्यानिटो धातोः थपो वा इट् भवति। अनेनास्य वेट् भवति ( गुणः ) विवेथ। विव्यथुः। विव्य। विवाय। विवय। विव्यिव। विव्यिम। वीयात्। अज् ता इति स्थिते। अजेरार्धधातुके। अनेन वीरादेशः। तदा वी ता इति स्थिते।

( नैकस्वरादनुदात्तात् )। एकस्वराद्धातोर्धातुपाठेऽनुदात्त इत्येवं पठितादिडागमो न भवति।

सूत्रम् ( नैकस्वरादनुदात्तात् ) न (अ० ) एक एव स्वरो यस्य स नैकस्वरस्तस्मात् नैकस्वरात् ५-१ अनुदात्तात् ५-१ त्रिपदं सूत्रम्। यो धातुः एकस्वरात्मकः धातुपाठेऽनुदात्त इति संज्ञकः कथितस्तस्मात् परेषां पूर्वोक्तानां सिसतासीस्यपाम् इडागमो न भवति। उदात्ताः सेट् एष्टव्याः। तथाऽनुदात्ता अनिट् एष्टव्याः। अनुदात्ता धातवो धातुपाठात् ज्ञेयाः। अत्रानिट्कारिकाऽस्ति। तस्याः श्लोकाः सन्ति।

## अथानिट्कारिकाश्लोकाः।

अनिट् स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः॥ अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि॥ १॥ गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः॥ इति स्वरान्ता निपुणैः समुच्चितास्ततो हसान्तानपि सन्निबोधत॥ २॥ शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी॥ रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे॥ ३॥ यमिर्मान्तेष्वनिडेक इष्यते रमिर्दिवादावपि पठ्यते मनिः॥

नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ॥ ४ ॥ दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ॥ इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ॥ लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥ रुधिः सराधियुधिबन्धिसाधयः क्रुधिः क्षुधिः शुध्यतिबुध्यती व्यधिः ॥ इमे तु धान्ता दश चानिटो मतास्ततः परं सिध्यतिरेव नेतरे॥ ॥७॥ शिपिं पिपि शुष्यति पुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ॥ इमान्दशैवोपदिशन्त्यनिड्विधौ गणेषु पान्तान्कृपिकर्षती तथा ॥ ८ ॥ तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ॥ स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ९ ॥ अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यतिखिदीन् ॥ तुदिं नुदिं विद्यविनत्तिवपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥ १० ॥ पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ॥ त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजि विद्धयनिट्स्वरान् ॥ ११ ॥

इत्यनिट्काकारिश्लोकाः।

वेता—अजिता। वेष्यति—अजिष्यति। आजिष्यत्—अवेष्यत् आजीत्। (धातोर्नामिनः) (सेः) अवैषीत्। ष्टुत्वम्। अवैष्टाम। अवैषुः॥ क्षि क्षये। क्षयति। क्षयेत्। क्षयतु। अक्षयत्। चिक्षाय (नुधातोः)। चिक्षियतुः।

तथा चाकारान्ताः सर्वेऽप्यनिटो दरिद्रावर्जम्। भू सत्तायाम्। रु शब्दे। स्नु प्रस्रवणे। क्ष्णु तेजने। शीङ् स्वप्ने। यु मिश्रणे। णु शब्दे। टुक्षु शब्दे। टु ओश्वि गतिवृद्ध्योः। डीङ्

विहायसा गतो। श्रिञ् सेवायाम्। वृञ् संभक्तौ। वृञ् संवरणे। इत्येतद्वर्जम् अन्ये इवर्णोवर्णान्ताः धातवोऽनिटो ज्ञेयाः। टुओश्वीर् गतिवृद्ध्योः। श्रिञ् सेवायाम्। एतौ द्वौ वर्जयित्वा इकारान्ताः सर्वेऽप्यनिटः। ईकारान्तेषु शीङ् स्वप्ने। डीङ् विहायसा गतौ। एतौ द्वौ वर्जयित्वान्ये सर्वेऽप्यनिटः। उकारान्तेषु यु रु स्नु णु क्ष्णु टुक्षु ऊर्णुञ् एतान् सप्त धातून् वर्जयित्वाऽन्ये सर्वेऽप्यनिटः। ऊकारान्ताः सर्वेऽपि सेटः। न कोऽपि अनिट्। ऋकारान्तेषु वृङ् वरणे। वृञ् संभक्तौ। जागृ निद्राक्षये। एतान् त्रीन् धातून् वर्जयित्वाऽन्ये सर्वेऽप्यनिटः। एकारान्ताः षडेवानिटः। ऐकारान्ताः सर्वेऽप्यनिटः। ओकारान्ताः पञ्चैवानिटः। औकारान्तो धातुः कोऽपि नास्ति। अथ व्यञ्जनान्ता कथ्यन्ते। तथात्रानिट्त्वाधिकारात्कातंत्रसूत्राणि लिख्यन्ते। शकेः कात् नेट्। पचि वचि सिचि रिचि वमुचेश्चात्। मच्छेः छात्। युजि रुजि भुजि भञ्जि त्यजि भ्राजि यजि मस्जि सजि निजि विजिर् ष्वंजेर्जात्। अदि तुदि नुदि क्षुदि स्विदि स्वद्यति विन्दति छिदि भिदि हदि सदि पदि खिदेर्दात्। राधि रुधि क्रुधि क्षुधि बन्धि साधि शुध्यति बुध्यति युधि वधि व्यधेर्धात्। हनिमन्यतेर्नात्। आपि तपि तिपि स्वपि वपि क्षिपि छुपि लुपि लिपि सृपेः पात्। यभिरभिलभिभ्यो भेभ्यः। यमि रमि मनि नमि गमेर्मात्। रिशि रुशि क्रुशि लिशि विशि दिशि दशि स्पृशि मृशि दंशेः शात्। त्विषि पुष्यति कृषि श्लिष्यति द्विषि रिषि विषि मिषि सिषि सुषि शुषि तुषि दुषेः षात्। वसि घसेः सात्। दहि दिहि दुहि मिहि मुहि रुहि लिहि नहि वहेर्हात्। च गहि गुहेः सने एभ्यो धातुभ्यः सिसतासीस्यपामिट् इति सूत्रेण इडागमो न भवति। अत्र सर्वत्र कात् अस्य पदस्य ककारात् इत्यर्थः कार्यः। इति धातवोऽनिटः। एतेषामर्था धातुपाठादवगन्तव्याः। अनेन सूत्रेण च व्याख्यानेन वीरादेशस्य इड्निषेधो भवति। गुणः। वेता। आजिता। वेष्यति। आजिष्यति। स्वरादेः। आजिष्यत्। अवेष्यत्। आजीत्। आजिष्टाम्। आजिषुः ( धातोर्नामिनः ) अवैषीत्। ष्टुत्वम्। अवैष्टाम्। अवैषुः॥ क्षि क्षये। पूर्ववत् तिवादयः। गुणः। क्षयति। क्षयेत्। क्षयतु। अक्षयत्। क्षि णप् इति स्थिते ( द्विश्च ) क्षि क्षि णप् इति जाते ( शसात् खपाः ) अनेन सूत्रेण ककारः शेषः ( कुहोश्चुः ) चिक्षिणपिति जाते ( धातोर्नामिनः ) अनेन वृद्धिः 'स्वरहीनम्०' चिक्षाय ( नुधातोः ) चिक्षियतुः। चिक्षियुः। ( ? ) यात् इति जाते॥

( ये ) अनपि यकारे परे पूर्वस्य दीर्घो भवति। क्षीयात्। क्षेता। क्षेष्यति। अक्षेष्यत्। ( धातोर्नामिनः ) अक्षैषीत्। अक्षैष्टाम् अक्षैषुः॥ कटे वर्षावरणयोः। कटति। कटेत्। कटतु। अकटत्। चकाट।

सूत्रम् ( ये ) ७-१ एकपदं सूत्रम्। अनपि यकारे परे सति पूर्वस्य स्वरस्य दीर्घो भवति। अनेन दीर्घः। क्षीयात्। क्षेता। क्षेष्यति। अक्षेष्यत् ( धातोर्नामिनः ) अक्षैषीत्। अक्षैष्टाम्। अक्षैषुः। कटे वर्षावरणयोः। कटति। लिट्लकारे ( कुहोश्चुः )। ( अत उपधायाः ) अनेन वृद्धिः। चकाट। चकटतुः। चकटुः। कट्यात्। कटिता। कटिष्यति। अकटिष्यत्। पूर्वोक्तसूत्रैः। अ कट् इति ईट् दिप् इति जाते।

**( ह्यन्तक्षणश्वसिजागृहसादिवर्जं सेटि सौ वृद्धिः ) हसादयः एकारेतः। अकटीत्। अकटिष्टाम्। अकटिषुः॥ गुपू रक्षणे।**

सूत्रम्। (ह्यन्त०) ह्यन्तक्षणश्वसिजागृहसादिवर्जं सेटि सौ परे वृद्धिर्भवति। अत्र हसादय एकारेतो ज्ञातव्याः। अनेन वृद्धिनिषेधः ( इट ईटि। सवर्णे दीर्घः सह ) अकटीत्॥ गुपू रक्षणे। ऊकार ऊदितो वा इति कार्यार्थः।

**( आयः ) गुप्धूप्विच्छिपणिपनिभ्यः स्वार्थे आयः प्रत्ययो भवति। अनपि वा। उपधाया गुणः।**

सूत्रम् ( आयः ) १-१ एकपदं सूत्रम्। गुप्धूप्विच्छिपणिपनिभ्यो धातुभ्यः स्वार्थे आयः प्रत्ययो भवति। अनपि वा भवति। गुप् आय इति स्थिते ( उपधाया लघोः ) 'स्वर०' गोपाय इति जाते।

**( स धातुः ) यङादिप्रत्ययान्तः शब्दो धातुसंज्ञो भवति। धातुत्वात्तिवादयः। गोपायति। गोपायेत्। गोपायतु। अगोपायत् ( कासादिप्रत्ययादाम् )। गोपायाञ्चकार। गोपायामास। गोपायाम्बभूव। जुगोप।**

सूत्रम् ( स धातुः ) सः १-१ धातुः १-१ यङादिप्रत्ययान्तः शब्दो धातुसंज्ञो भवति। सुगमम्। धातुत्वात् तिबादयः। गोपाय तिप् इति जाते ( अप् कर्तरि ) गोपाय अप् तिप् इति जाते ( अदे ) 'स्वर०' गोपायति। गोपायेत्। गोपायतु। अगोपायत्। गोपाय णप् इति स्थिते ( कासादिप्रत्ययादाम्० ) अनेन सूत्रेण आम् प्रत्ययो भवति। तदा गोपाय आम् कृ णप् इति जाते ( सवर्णेदीर्घः सह ) गोपायाम् कृ णप् इति जाते ( द्विश्च। रः। कुहोश्चुः। धातोर्नामिनः। नश्चापदान्ते झसे ) 'स्वरहीनं०' गोपायाञ्चकार गोपायामास। गोपायाम्बभूव। अनपि वा इत्युक्तत्वात् वाऽऽयप्रत्ययो भवति। आयप्रत्ययाभावे आमप्रत्ययाभावो भवति। गुप् णबिति स्थिते ( द्विश्च। कुहोश्चुः ) अनेन गकारस्य जकारो भवति। ( उपधाया लघोः ) अनेन गुणो भवति। 'स्वरहीनं०' जुगोप। जुगुपतुः। जुगुपुः। 'गोपाय यात्' इति स्थिते।

( यतः ) यकारस्याकारस्य च लोपो भवत्यनपि । गोपाय्यात्-गुप्यात् । गोपायिता–गोपिता ( ऊदितो वा ) । गोप्ता । गोपायिष्यति-गोपिष्यति-गोप्स्यति । अगोपायिष्यत्--अगोपिष्यत् अगोप्स्यत् । अगोपायीत्-अगोपीत् ( अनिटो नामिवतः ) अगौप्सीत् ( झसात् ) अगौप्ताम् । एवं धूप् सन्तापे । धूपायति धूपायाञ्चकार । धूपायामास । धूपायाम्बभूव । दुधूप । दीर्घोपधत्वान्न गुणः॥ तप सन्तापे । तपति । तपेत् । तपतु । अतपत्। तताप । तेपतुः । तेपुः । तेपिथ ।

सूत्रम् ( यतः ) य् च अत् च यत् तस्य यतः ६–१ यकारस्य च अकारस्य अनपि प्रत्यये लोपो भवति । अनेनाकारस्य लोपः। गोपाय्यात् । आयाभावे सति गुप्यात् । स्य धातोः (ऊदितो वा ) अनेन सूत्रेणेड्विकल्पो भवति । अनपि आयप्रत्ययस्यापि कल्पोऽस्ति । गोपायिता । गोपिता ( ऊदितो वा ) गोप्ता । अन्यानि रूपाणि मूले कान्यतो न लिखितानि ( अनिटो नामिवतः ) अनेन वृद्धिर्भवति । अगौप्सीत् । ाप्तोऽयं धातुः । धूप संतापे ( आयः ) अनेन सूत्रेणास्यापि आयः प्रत्ययः। र्घोपधत्वान्न गुणः । धूपायति । धूपायाञ्चकार । धूपायामास । धूपायाम्बभूव । याभावे । दुधूप । अन्यानि रूपाणि सुगमानि तप् संतापे । पूर्ववत् तिवादयः । ति । तपेत् । तपतु । अतपत् ( अत उपधायाः)। अनेन वृद्धिः । तताप ( लोपः ां कित्ये चास्य ) अनेनैत्वपूर्वलोपौ भवतः । तेपतुः । तेपुः । तेपिथ ।

( अत्वतो नित्यानिटः स्थपो वेट्) ततप्थ । तप्यात् । तप्ता । तप्स्यति । अतप्स्यत् । अताप्सीत् । क्रमु पादविक्षेपे ॥

सूत्रम् ( अत्वत० ) । अत्वतो नित्यानिटो धातोः थपो वा इट् भवति । अनेनास्य इट् । ततप्थ । तप्यात् । तप्ता । तप्तारौ । तप्तारः । तप्स्यति । अतप्स्यत् ( णित्ये ) नेन सूत्रेण सेर्णित्वात् ( अत उपधायाः ) अनेन सूत्रेण वृद्धिः । अताप्सीत् (झसात्) ताप्ताम् । अताप्सुः । क्रमु पादविक्षेपे ।

( क्रमुभ्रमुत्रसित्रुटिलष्भ्राशृभ्लाशो वा यः प्रत्ययो वक्तव्यः ) चतुर्षु । क्राम्यति ।

( क्रमु भ्रमु त्रसि त्रुटि लष भ्रा० ) एभ्यो वा यः प्रत्ययो चतुर्षु लकारेषु परेषु । ामोऽप्यार्थः ।

( क्रमः पे चतुर्षु दीर्घता वक्तव्या ) क्रामति । क्राम्येत् । क्रामेत् क्राम्यतु । क्रामतु । अक्राम्यत । अक्रामत् । चक्राम । क्रम्यात् । क्रमिता । क्रमिष्यति । अक्रमिष्यत् । अक्रमीत् ॥ यम उपरमे ।

द्वितीयं सूत्रम् ( क्रमः० ) क्रमुधातोः परस्मैपदे चतुर्षु परेषु दीर्घता वक्तव्या । अनेन दीर्घः । प्रथमसूत्रेण यप्रत्ययः । द्वितीयेन दीर्घता भवति । क्राम्यति । यप्रत्ययाभावे । क्रामति । एवमन्यान्यपि रूपाणि ज्ञेयानि । लिट्लकारे ( अत उपधायाः ) अनेन सूत्रेण वृद्धिः ( रः । कुहोश्चुः ) चक्राम । चक्रमतुः । चक्रमुः । क्रम्यात् । क्रमिता । अन्यानि रूपाणि मूले उक्तानि सन्ति । ( णित्पे ) । इति णित्वात् । ( अतउ० ) । अनेन वृद्धिप्राप्तौ ( ह्यन्तक्षण० ) । इत्यनेन सूत्रेण वृद्धेरभावः । अक्रमीत् । अक्रमिष्टाम् । अक्रमिषुः ॥ यम उपरमे ।

( गमां छः ) गम्यम्इषूणां छो भवत्यपि । यच्छति । यच्छेत् । यच्छतु । अयच्छत् । ययाम । येमतुः येमुः । येमिथ–ययन्थ । यम्यात् । यन्ता । यंस्यति । अयंस्यत् ।

( गमां छः ) इदं सूत्रमस्ति । गमां ६–३ छः १–१ गम् यम् इषूणां धातूनां छकारादेशो भवति तिबादिषु चतुर्षु लकारेषु परेषु । यम् अप् तिप् इति स्थिते । अनेन मकारस्य छकारः । कुतोऽयमादेशो मकारस्य भवति तत्राह– ( षष्ठीति ) अनेन नियमसूत्रेण मकारस्यैवादेशो भवति । तदा यच्छ् अप् तिप् इति जाते 'स्वरहीनं०' ( छः । खसेचपाझसानाम् ) यच्छति । यच्छेत् । यच्छतु । अयच्छत् । ( अत उपधायाः ) । ययाम । य यम् अस् इति स्थिते ( लोपः पचां कित्ये चास्य ) अनेनैत्वपूर्वलोपौ भवतः । येमतुः । येमुः । येमिथ ( अत्वतः ) अनेन वा इट् । इडभावे एत्वपूर्वलोपाभावः । सेटि थपीत्युक्तत्वात् । ययन्थ । यम्यात् ( नश्चा० ) । यन्ता । यंस्यति । अयंस्यत् । 'अयम सि ईट् दिप्' इति स्थिते ॥

( आदन्तानां यमिरमिनमीनां सेरिट् सक् च पे वक्तव्यौ ) । अयंसीत् । अयंसिष्टाम् । अयंसिषुः । णम प्रह्वत्वे शब्दे च । नमति । नमेत् । नमतु । अनमत् । ननाम । नेमतुः । नेमुः । नेमिथ-ननन्थ । नम्यात् । नन्ता । नंस्यति । अनंस्यत् । अनंसीत् अनंसिष्टाम् । अनंसिषुः । गम्लृ गतौ । लृकारो लृदित्कार्यार्थः । गच्छति । गच्छेत् । गच्छतु । अगच्छत् । जगाम ।

सूत्रम् ( आदन्तानाम्० ) आदन्तानां यमिरमिनमीनां सेरिट्चैतेषां धातूनां सगागम एतौ द्वौ परस्मैपदे वक्तव्यौ । अनेनास्येट्सकौ भवतः । तदा अयम् सक् इट् सि ईट् दिप् इति स्थिते ककारः टकारश्चैतौ । ( इट ईटि । सवर्णे ) दिसिमि । पकारः । 'स्वरहीनं०' ( वावसाने । हयन्त० ) अनेन वृद्धेरभावो भवति ( न श्चापदान्ते ) अनेन मकारस्यानुस्वारो भवति । अयंसीत् । अयंसिष्टाम् । अयंसिषुः । समाप्तोऽयम् ॥ णम प्रह्वत्वे शब्दे च । पूर्ववत् तिवादयः ( आदेः ष्णः.स्नः ) अनेन णकारस्य नकारो भवति । नमति । लिट्लकारे ( अत उपधायाः ) ननाम ( लोपः०) नेमतुः नेमुः । नेमिथ । ( अत्वतः ) ननन्थ । अन्येषां लकाराणां रूपाणि मूले उक्तानि । लुङ् लकारे ( आदन्तानाम् ) अनेनेट्सकौ भवतः । ( हयन्त० ) अनेन वृद्धेरभावः । अनंसीत् । अनंसिष्टाम् । अनंसिषुः । अयं धातुरनिट् । गम्लृ गतौ । ऋकारो लृदित्कार्यार्थः । गम् अप् तिप् इति स्थिते ( गमां छः ) अनेन मकारस्य छकारः 'स्वरः०' ( छः । खसे० ) गच्छति । गम् णप् इति स्थिते ( द्विश्च । पूर्व० । कुहोश्चुः । अत उपधायाः ) जगाम । जगम् अतुस् इति स्थिते ।

( गमां स्वरे ) गम् हन् जन् खन् घस् एतेषामुपधाया लोपो भवति क्ङित्यङे स्वरे । जग्मतुः । जग्मुः । जगमिथ–जगन्थ । गम्यात् । गन्ता ।

सूत्रम् ( गमां स्वरे ) गमां ६–३ ( स्वरे ) ७–१ गम् हन् जन् खन् घस् एतेषां धातूनां किति च ङिति स्वरे परे उपधाया लोपो भवति अङे स्वरे । अनेनोपधाया लोपो भवति । ' स्वर० ' जग्मतुः । जग्मुः । जगमिथ ( अत्व० । नश्चा० ) जगन्थ । अन्यानि मूले सन्ति । तथापि लिखामि । गन्ता । गम् स्यप् तिप् इति स्थिते ॥

( हन्नृतः स्यपः ) । हन्तेर्ऋकारान्तात्स्यप इडागमो भवति । गमेश्च पे । गमिष्यति । अगमिष्यत् ।

सूत्रम् ( हन्नृतः स्यपः ) हन् च ऋत् च हन्नृत् तस्मात् हन्नृतः ५–१ स्यपः ६–१ हन्तेर्ऋकारान्तात् धातोः स्यप इडागमो भवति गमेश्च परस्मैपदे । अनेनेट् । गमिष्यति । अगमिष्यत् ॥

( लित्पुपादेर्ङः ) । लितो धातोः पुषादेर्द्युतादेश्च ङप्रत्ययो भवति दिवादौ परस्मैपदे । सेरपवादः । अङे अत्युक्तेर्नोपधालोपः । अगमत् । अगमताम् ॥ अगमन् ॥ इषु इच्छायाम् ।

इच्छति । इच्छेत् । इच्छतु । ऐच्छत् । इयेष । ईषतुः । ईषुः । इयेषिथ । इष्यात् ।

सूत्रम् ( लित्पुषादेर्ङः ) ऌ ऌकारः इत् यस्यासौ लित् पुष् आदिर्यस्यासौ पुषादिः । लिच्च पुषादिश्च लित्पुषादिः तस्मात् लित्पुषादेः ५–१ ङः १–१ द्विपदं सूत्रम् । लितो धातोः पुषादेर्द्युतादेश्च भूतार्थे ङप्रत्ययो भवति दिवादौ परे सति सेरपवादो भवति । गम् ङ दिप् इति जाते । ( गमां स्वरे ) । अनेनोपधाया लोपे प्राप्ते ङ इत्युक्तत्वान्नोपधाया लोपः । ङकारो गुणप्रतिषेधार्थः 'स्वर०' । अगमत् ॥ इषु इच्छायाम् । पूर्ववत् तिवादयः । ( गमां छः ) । अनेन षस्य छः । ( छः । खसे० । 'स्वर०' इच्छति । लिट्लकारे । इ इष णप् इति स्थिते ( उपधाया लघोः ) अनेन गुणः ( असवर्णे ) अनेनेय् 'स्वर०' इयेष । ( सवर्णे० ) ईषतुः । ईषुः । इयेषिथ । इष्यात् । इष् ता इति स्थिते ।

( इषुसहलुभरिषरुषामनपि तस्येड्वा वक्तव्यः ) । एषिता-एष्टा । एषिष्यति । ऐषिष्यत । ऐषीत् । ऐषिष्टाम् । ऐषिषुः ॥ ञिफला विशरणे । फलति । फलेत् । फलतु । अफलत् । पफाल । आदेशादित्वेनैत्वपूर्वलोपनिषेधे प्राप्ते ।

सूत्रम् ( इषुसह० ) । इषुश्च सहश्च लुभश्च रिषश्च रुष् च इषुसहलुभरिषरुषः तेषाम् इषुसहलुभरिषरुषां धातूनामनपि विषये तादिप्रत्ययस्येड् वा वक्तव्यः । अनेन वेट् । गुणः । एषिता । इडभावे गुणः । ( ष्टुभिः ष्टुः ) एष्टा । एषिष्यति । ( स्वरादेः ) । अनेन द्वितीयोऽट् । ऐषिष्यत् । ऐषीत् ॥ ञिफला विशरणे । पूर्ववत् तिवादयः । फलति । लिट्लकारे । ( अत उपधायाः ) अनेन वृद्धिः ( झपानाम् ) अनेन फस्य पः । पफाल । प फल अतुस् इति स्थिते । आदेशादित्वेनैत्वपूर्वलोपनिषेधे प्राप्ते ।

( तॄफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वक्तव्यौ ) । फेलतुः । फेलुः । फेलिथ । फल्यात् । फलिता । फलिष्यति । अफलिष्यत् । लृवकारोपधत्वेन वृद्धिविकल्पे प्राप्ते ।

सूत्रम् ( तॄफल० ) । तॄफलभजत्रपां धातूनां किति णादौ परे च सेटि थपि परे एत्वपूर्वलोपौ वक्तव्यौ । अनेनास्यैत्वपूर्वलोपौ । फेलतुः । फेलिथ । अन्यानि मूले सन्ति । लुङ्लकारे ( हसादेः ) अनेन वृद्धिविकल्पे प्राप्ते ।

( लरान्तस्याकारस्य सौ नित्यं वृद्धिर्वाच्या ) । अफालीत् ॥ जि जये । जयति । जयेत् । जयतु । अजयत् ।

सूत्रम् ( ऌरान्तस्या० )। धातोरकारस्य सौ परे नित्यं वृद्धिर्वाच्या । अनेन नित्यवृद्धिः । अफालीत् ॥ जि जये । गुणः । जयति । लिट्लकारे । जि जि णप् इति स्थिते ।

( सपरोक्षयोर्जेर्गिः ) । सप्रत्यये परोक्षे च जि जय इति धातोर्गिरादेशो भवति । जिगाय । जिग्यतुः । जिग्युः । जिगयिथ । जिगेथ । जीयात् । जेता । जेष्यति । अजेष्यत् । अजैषीत् । अजैष्टाम् । अजैषुः ॥ कृष् विलेखने । (उपधाया लघोः) कर्षति । कर्षेत् । कर्षतु अकर्षत् । चकर्ष । चकृषतुः । चकृषुः । चकर्षिथ । कृष्यात् । गुणे कृते ।

सूत्रम् ( सपरोक्षयोर्जेर्गिः ) सश्च परोक्षश्च सपरोक्षौ तयोः सपरोक्षयोः ७-२ जेः ६-१ गिः १-१ त्रिपदं सूत्रम् । सप्रत्यये च परोक्षे णवादौ परे सति जि जय इति धातोर्गिरादेशो भवति । अनेन गिरादेशः । ( द्विश्च । धातो० । कुहो-श्चुः ) । अनेन गकारस्य जकारः । जिगाय । ( युधातोः ) अनेन यकारः । जिग्यतुः । ( ये ) जीयात् । जेता । अनिटोऽनेन वृद्धिः । अजैषीत् । कृष् विलेखने । पूर्ववत् । ( उपधायाः ) । कर्षति । लिट्लकारे । द्विश्चरः । ( कुहोश्चुः । उपधायाः ) 'स्वर०' चकर्ष । चकृषतुः । चकर्षिथ । कृष्यात् । कृष् ता इति स्थिते । ( उपधायाः ) क् अर् ष् ता इति जातम् ।

( रारो झसे दृशाम् ) । दृश्सृजकृष्मृशतृप्दृप्सृपां झसे परे अरो रो भवति । रार इति तन्त्रोपात्तम् । तेन रा आरः र अरः । सकृदुच्चरितमनेकोपकारकं तन्त्रम् । स्रष्टा । क्रष्टा ।

तत्र सूत्रम् ( रारो झसे दृशाम् ) र १-१ अरः ६-१ झसे ७-१ दृशां ६-३ ( दृशे । उशो ) दृशादीनां दृश् स्पृश् मृश् सृज कृष् मृष् दृप् तृप् इत्यादीनां धातूनां संबन्धिनोऽर् इत्येतस्यावयवस्य झसे परे र इत्यादेशो भवति । सस्वर एवादेशो भवति । तत्र द्रष्टव्य इत्यादौ रस्यैव दर्शनात् ( अरो रो भवति ) अर् इति निर्देशात् दृशादीनां गुणोऽपि सूचितस्तेन पूर्वं गुणं विधाय पश्चात् रकारः कार्यः । इत्यभिप्रायः । रा र इति तन्त्रोपात्तम् । तेन रा आरः र अरः । सकृदुच्चरितमनेकोपकारकं तन्त्रम् । अनेन अरः रः जातः । तदा क र् ष् ता इति जाते 'स्वरहीनं०' ( ष्टुभिः ष्टुः ) क्रष्टा ।

( कृपादीनां रो वा वक्तव्यः ) कर्ष्टा। ( रारो झसे दृशाम् )

तथा च सूत्रम् ( कृपादीनाम्० ) कृप् स्पृश् मृष् तृप् दृप् एतेषां धातूनां रः अरो वा भवति। अनेन विकल्पः। कर्ष्टा। कृप् स्यप् इति स्थिते ( गुणः। रारो झसे० ) 'स्वरहीनं०' तदा क्रप् स्यप् इति जातम्।

( पढोः कः से ) धातोः पकारढकारयोः कत्वं भवति सकारे परे ( क्रिलात्पः सः कृतस्य ) ( कपसंयोगे क्षः )। क्रक्ष्यति–कर्क्ष्यति। अक्रक्ष्यत्–अकर्क्ष्यत्। अक्राक्षीत्। ( अनिटो नामिवतः ) अकार्क्षीत्।

तत्र सूत्रम् ( पढोः कः से ) पश्च ढ च पढौ तयोः पढोः ६–२ कः १–१ से ७–१ त्रिपदं सूत्रम्। धातुसंबन्धिनोः पकारढकारयोः कत्वं भवति सकारे परे त्यादावेवायं विधिः। तेन मधुलिट्सु इत्यादौ ककारो न भवेत्। अनेन पकारस्य ककारः। ( क्रिला०। कपसंयोगे क्षः ) 'स्वरहीनम्०' क्रक्ष्यति। विकल्पेन अरो रो न भवति। कर्क्ष्यति। लृङ्लकारे। अक्रक्ष्यत्। अकर्क्ष्यत्। अकृप् सि ईद् दिप् इति स्थिते ( अनिटो०। रारो झसे )। 'स्वरहीनं०' अक्राप् सि ईद् दिप् इति जातम् अकाप् सि ईद् दिप् इति जाते। ( पढोः कः से )। अनेन पस्य कः। ( क्रिला०। कपस०। ) 'स्वरहीनं०' अक्राक्षीत्। अक्राष्टाम्। अक्राक्षुः। रकाराभावे अकार्क्षीत्। अकार्ष्टाम्। अकार्क्षुः।

( कृपादीनां वा सिर्वक्तव्यः )। कृप् स्पृश् मृष् तृप् दृप् एते कृपादयः तत्पक्षे।

सूत्रम् ( कृपादीना० ) धातूना भूते सिः इति सूत्रेण विहितः सिप्रत्ययो वा भवति। सेरभावपक्षे।

( हशषान्तात्सक् ) हकारान्तात् शकारान्तात् षकारान्ताच्च नाम्युपधादविद्यमानेटो दिवादौ परे सक्प्रत्ययो भवति दृशं वर्जयित्वा। सेरपवादः। अकृक्षत्। अकृक्षताम्। अकृक्षन्॥ रुष् हिंसायाम् ( उपधाया लघोः ) रोषति। रोषेत्। रोषतु। अरोषत्। रुरोष। रुरुषतुः। रुरुषुः। रुरोषिथ। रुष्यात्। रोषिता। रोष्टा। रोषिष्यति। अरोषिष्यत्। अरोषीत्। उष् दाहे। ओषति। ओषत्। ओषतु। औषत्।

इदं सूत्रम् ( हशषान्तात्सक् ) । हश्च शश्च षश्च हशषाः ते अन्ते यस्य स हशषान्तस्तस्मात् हशषान्तात् ५–१ । सक् १–१ । हकारान्तात् दुह् लिह् इत्यादेः शकारान्तात् दृशिं वर्जयित्वा विशादेः षकारान्तात् कृषादेर्नाम्युपधाद् अविद्यमानेटो धातोर्भूतेऽर्थे दिवादौ परे सेः स्थाने सक्प्रत्ययो भवति । ककारो गुणनिषेधार्थः । स्थाननियमार्थश्च । तदा अकृष् स दिप् इति जाते । ( षढोः कः से । क्लिा० । कषसयो० । ) 'स्वरहीनं०' अकृक्षत् । अकृक्षताम् । अकृक्षन् । सक्प्रत्ययस्य सकारः सस्वर एव तिष्ठति । रुष् हिंसायाम् । पूर्ववत् तिवादयः ( उपधाया लघोः ) रोषति । लिट्लकारे । रुरोष । रुष्यात् । रोषिता । ( इषुसह० ) अनेनेड्विकल्पः । ( ष्टुभिः ष्टुः ) रोष्टा । अन्यानि मूले सन्ति ॥ उष् दाहे । पूर्ववत् । ओषति ( स्वरादेः ) औषत् । उष् णप् इति स्थिते ।

(उषविद्जागृणामाम्वा वक्तव्यः)ओषांचकार–उवोष। उवोषिथ। उष्यात्। ओषिता। ओषिष्यति। औषिष्यत्। औषीत्॥ मिह सेचने । मेहति। मेहेत्। मेहतु। अमेहत्। मिमेह। मिमिहतुः। मिमिहुः। मिमेहिथ। मिह्यात् ( होढः ) ( तथोर्धः ) ष्टुत्वम्।

सूत्रम् (उषविद्जागृणामाम्वा वक्तव्यः) ओषाञ्चकार । आमभावे-उवोष । उषतुः । उवोषिथ । अन्यानि सन्ति ॥ मिह् सेचने ( उपधायाः ) मेहति । लिट् । मिमेह । मिह्यात् । मिद् ता इति स्थिते । (होढः) तदा मिढ् ता इति जाते (तथोर्धः) । मिढ् धा इति जाते ( ष्टुभिः ष्टुः ) मिढ् ढा इति जाते ।

( ढि ढो लोपो दीर्घश्च ) ढकारस्य ढकारे परे लोपो भवति पूर्वस्य च दीर्घः । मेढा । मेक्ष्यति । अमेक्ष्यत । ( हशषान्तात् सक् । होढः। षढोः कः से ) अमिक्षत् । अमिक्षताम् । अमिक्षन् ॥ दह् भस्मीकरणे । दहति । दहेत् । दहतु । अदहत् । ददाह । देहतुः । देहुः । देहिथ–ददग्ध । दह्यात् । दग्धा । (दादेर्घः। आदिजबानां झभान्तस्य झभाश्वस्ध्वोः। खसे चपा०। किलात्पः सः कृतस्य । कषसंयोगे क्षः) धक्ष्यति । अधक्ष्यत् अधाक्षीत् ( झसात् ) अदाग्धाम् । अधाक्षुः ॥ ग्लै म्लै हर्षक्षये । आयादेशः । ग्लायति । ग्लायेत्। ग्लायतु । अग्लायत्।

(ढि ढो लोपो०) मी ढा इति जाते गुणः। वात्र ढिढोलोपो दीर्घश्च इति सूत्र-प्राप्तेः प्राग्उपधाया लघोः। अनेन गुणः कार्यः। मेढा। मेढारौ। मेढारः। मिह् स्यप् तिप् इति स्थिते। (होढः। पढोः कः से। किला०। कपसंयोगे०। उपधाया लघोः) मेक्ष्यति। अमेक्ष्यत्। (हशपान्तात् सक्) मिह् स दिप् इति जाते (होढः। पढोः कः से। किलात्। कपसं०) 'स्वरहीनम्' अमिक्षत्॥ दह् भस्मीकरणे। दहति। (अत उपधायाः) ददाह। (लोपः पचाम्०)। देहतुः। देहिथ। (अत्वतो०) अनेनेड्विकल्पः। तदा दह् थप् इति स्थिते। (दादेर्घः) अनेन हस्य घः। (तथोर्धः) अनेन थस्य धः। (झबे जबाः) अनेन घस्य गः। दग्धः। दह्यात्। दग्धा। इदमपि रूपं पूर्वोक्तसूत्रैः सिध्यति। दह् स्यप् तिप् इति स्थिते। (दादेर्घः) अनेन हस्य घः (आदिजबानां०) अनेन दस्य धः (खसे चपा झसानाम्) अनेन घस्य कः (किलात्०। कपसंयोगे०) धक्ष्यति अधक्ष्यत्। दह् सि इट् दिप् इति स्थिते। दिबादौ। (दादेर्घः)। (आदिजबानाम्। खसे०। (किलात्०। कपसं०) 'स्वरहीनं' अत उपाधायाः) अधाक्षीत्। (झसात्) अदाग्धाम्। अधाक्षुः। समाप्तोऽयम्॥ ग्लै म्लै हर्षक्षये। पूर्ववत् तिवादयः (ऐ आय्) ग्लायति। लिट्लकारे ग्लै णप् इति स्थिते॥

(सन्ध्यक्षराणामा) सन्ध्यक्षराणां धातूनामात्वं भवति अनपि विषये। णप्। (द्विश्च ह्रस्वः) पूर्वस्य हसादिः शेषः। कुहोश्चुः।

सूत्रम् (संध्यक्षराणामा) संध्यक्षराणां ६-३ आ १-१ (सांकेतिकम्) द्विपदम् संध्यक्षरान्तानां धातूनाम् अन्त्यस्वरस्यानपिविषये कर्तरि तिबादिचतुर्गणवर्जितस्थले आकारो भवति। अनेन ग्लै इत्यस्य ग्ला जातः। तदा ग्ला णप् इति जाते (द्विश्च ह्रस्वः) ग्ल ग्ला णप् इति स्थिते (पूर्वस्य हसादिः) अनेन गकारोऽवशिष्टः (कुहोश्चुः) जग्ला णप् इति जाते।

(आतो णप् डौ) आकारान्ताद्धातोः परो णप् डौ भवति। टिलोपः। जग्लौ।

सूत्रम् (आतो णप् डौ) आतः ५-१ णप् १-१ डौ १-१ (सांके०) त्रिपदम्। आकारान्ताद्धातोः परो यः प्रथमपुरुषे च उत्तमपुरुषे णप् डौ भवति डकारटिलोपार्थः। डित्करणं विनापि रूपसिद्धौ यत् डौ इति डित्करणं तत् (आतो युक्) इति युगागम-निषेधार्थम्। कृतेऽपि युगागमे टिलोपः स्यादेव। अनेन णप् डौ जातः। डित्वात् टिलोपः 'स्वरहीनम्०' जग्लौ। जग्ला अतुस् इति जाते।

( आतोऽनपि ) धातोराकारस्य लोपो भवति अनपि किति ङिति स्वरे सेटि थपि च । जग्लतुः । जग्लुः । जग्लिथ-जग्लाथ । जग्लथुः । जग्ल । जग्लौ । जग्लिव । जग्लिम ।

सूत्रम् ( अतोऽनपि ) आतः ६-१ न . अप् अनप् तस्मिन् अनपि । यत्राप् कर्त्तरि इत्यादि विकरणं न भवति तस्य विभक्तौ परतः तस्या एव किति ङिति च स्वरे परे इटि च धातोरेकारस्य लोपो भवति । अत्र णवादौ अनप् तत्रापि तं विना सर्वोऽपि प्रत्ययः कित् । तत्रानेनाकारस्य लोपो भवति । जग्लतुः । अन्यानि मूले सन्ति ग्लायात् इति स्थिते ।

( संयोगादेरादन्तस्य किति यादादवेकारो वा वक्तव्यः ) ग्लायात्-ग्लेयात् । ग्लाता । ग्लास्यति । अग्लास्यत् । अग्लासीत् । अग्लासिष्टाम् । अग्लासिषुः ॥ गै रै कै शब्दे । गायति । गायेत् । गायतु । अगायत् । जगौ । जगतुः । जगुः ।

सूत्रम् ( संयोगादेरिति ) संयोगादेः आदन्तस्य धातोः किति यादौ परे एकारो वा वक्तव्यः । षष्ठीनिर्दि० । अनेन नियमसूत्रेण अन्तस्यैव ) भवति । ग्लायात्-ग्लेयात् । अग्लासि ईट् दिप् इति स्थिते ( आदन्तानाम् ) तदा अग्लास् इट् सि ईट् दिप् इति जाते ( इट ईटि । सवर्णे० ) । 'स्वरहीनम्०' अग्लासीत् । गै रै कै शब्दे । गायति अन्यानि रूपाणि मूले सन्ति । आशिषि लिङ्लकारे विशेषः । गायात् इति स्थिते ।

( दादेरे ) अपिदाधामागेहाक्पिब्सोस्थानामाकारस्यैकारो भवति आशीर्यादादौ परस्मैपदे परे । गेयात् । गाता । गास्यति । अगास्यत् । अगासीत् । अगासिष्टाम् । अगासिषुः ॥ ष्टै शब्दसंघातयोः । सत्वनिषेधः । ष्टायति । ष्टायेत् । ष्टायतु । अष्टायत् ( सन्ध्यक्षराणामा । शसात्खपाः ) 'षात्तवर्गस्तवर्गजः' इति षकारे गते तकार एव । तष्टौ । ष्टायात्-ष्टेयात् । ष्टाता । ष्टास्यति । अष्टास्यत् । अष्टासीत् ॥ दैप् शोधने । दायति । दायेत् । दायतु । अदायत् । ददौ । पित्त्वादेकाराभावः । दायात् । दाता । दास्यति । अदास्यत् । अदासीत् । अदासिष्टाम् अदासिषुः । पित्त्वात्सिलोपाभावः । इत्यादि ॥ धेट् पाने ।

ट ईवर्थः। धयति। धयेत्। धयतु। अधयत्। दधौ। धेयात्। धाता धास्यति। अधास्यत्। वा सिलोपः। अधासीत्। अधासिष्टाम्। अधासिषुः। अधात्। अधाताम् ( स्याविदः )

सूत्रम् (दादेरे) दादेः ६-१ ए १-१ अपिद्दा-धा-मा-गे-हाक्-पिबति-सो-स्थानाम् आकारस्य एकारो भवति यादादेः परस्मैपदे परे। गेयात्। अन्यानि रूपाणि पूर्ववत् साध्यानि वैयाकरणैः॥ ष्ट्यै शब्दसंघातयोः। ( नामधातुः ) अनेनास्य सत्वनिषेधः ( ऐ आय् ) ष्ट्यायति। लिट्लकारे। ष्ट्यै णप् इति स्थिते ( संध्यक्षराणां० ) ष्ट्या णप् इति जाते। ( द्विश्च ) ( शसात् ) ( पूर्वस्य ) 'पाट्टवर्गस्तवर्गजः' इति-पकारे गते तकार एव शेषः। तष्ट्या णप इति जाते ( आतो णप् डौ )। 'स्वरहीनं०' तष्ट्यौ। अत्वतो नित्यानिटश्च धातोः स्थपो वेट् भवति। तष्ट्यिथ। तष्ट्याथ ( संयोगादेः ) ष्ट्यायात्-ष्ट्येयात्। अन्यानि मूले सन्ति। तेषां साधनं सुगमम्। पूर्वधातुवत्। दैप् शोधने। पकारो धातुभेदज्ञापनार्थः। पूर्ववत् तिबादयः ( ऐ आय् ) दायति। ददौ। पित्त्वात्। ( दादेरे ) अनेन एकारो न भवति। दायात्। ( आदन्तानाम्। ) अदासीत्। पित्त्वात् ( दादेः पे ) अनेन सिलोपो न भवति। धेट् पाने। ट ईवर्थः ( ए अय् ) धयति। लिट्लकारे ( संध्यक्षराणां ०। द्विश्च। ह्रस्वः। झपानाम्। आतो णप् डौ ) दधौ। ( दादेरे ) धेयात्। अधासीत् ( शाच्छा० ) अनेन वा सिलोपः। अधात्। अधाताम्। अधा अन् इति जाते। ( स्याविदः ) अधा उस् इति जाते।

( उस्यालोपः ) उसि परे धातोराकारस्य लोपो भवति। अधुः ( धेटः सेरङ् धातोर्द्वित्वं वेति केचित्। ) ( आतोऽनपि ) अदधत्। अदधताम्। अदधन्॥ दृशिर् प्रेक्षणे।

सूत्रम् ( उस्यालोपः ) उसि ७-१ आ ६-१ मांके० । लोपः १-१ उसि परे सति धातोराकारस्य लोपो भवति। अनेनाकारस्य लोपः। अधुः। धेटः सेः स्थाने अङ् धातोर्द्वित्वं वा भवति इति केचिदाचार्या वदन्ति। अनेनाङ्द्वित्वे भवतः। 'अ धा धा अङ् तिप्' इति जाते ( ह्रस्वः। झपानां। आतोऽनपि )। 'स्वरहीनं०' अदधत्॥ दृशिर् प्रेक्षणे। पूर्ववत् तिबादयः। इर् अनुबन्धः ( इरितो वा ) इति सूत्रस्थविशेषार्थः। दृश् अप तिप् इति जाते।

( दृशादेः पश्यादिः ) दृशादेर्धातोः पश्यादिरादेशो भवति चतुर्षु परेषु। दृश् ऋ सृ शद् सद् पा घ्रा ध्मा स्था म्ना दाण् एते दृशादयः। पश्य ऋच्छ धौ शीय सीद पिब जिघ्र धम तिष्ठ

मन यच्छ एते पश्यादयः । पश्यति । पश्येत् । पश्यतु । अपश्यत् । ददर्श । ददृशतुः । ददृशुः ( सृजिदृशोस्थपो वेद् ददर्शिथ ( गुणः । रारो झसे दृशाम् ) षत्वम् । ष्टुत्वम् । दद्रष्ठ । ददृशथुः । ददृश । ददर्श । ददृशिव । ददृशिम । दृश्यात् । द्रष्टा द्रक्ष्यति । अद्रक्ष्यत् । ( अत उपधायाः ) । अद्राक्षीत् । ( झसात् । ) ष्टुत्वम् । अद्राष्टाम् । अद्राक्षुः । पक्षे ( इरितो वा ) ( दृशादेर्ङे गुणः ) । अदर्शत् । अदर्शताम् । अदर्शन् ॥ ऋ गतौ । ऋच्छादेशः । ऋच्छति । ऋच्छेत् । ऋच्छतु । आर्च्छत् ( रः ) । पश्चात् ( ऋ अर् ) । वृद्धिः । आर । आरतुः । आरुः ।

• सूत्रम् ( दृशादेः पश्यादिः ) । दृश् आदिर्यस्यासौ दृशादिस्तस्य दृशादेः ६–१ पश्य आदिर्यस्यासौ पश्यादिः १–१ । दृशादेर्धातोस्तिवादौ विभक्तिचतुष्टये परे पश्य इत्यादिः आदेशो भवति । अनेन पश्यादेशः । पश्य अप् तिप् इति जाते( अदे ) 'स्वरही-नं०' पश्यति । लिट्लकारे । ( उपधायाः ) अनेन गुणः । ददर्श । ददृशतुः । ददृशुः । ददर्शिथ । सृजिदृशोरिति सृजिदृशोर्धात्वोः थपो वा इट् भवति । अनेनास्य थपि वा इट् भवति । इडभावे । ददृश् थप् इति जाते । ( गुणः । उपधाया ल्वो' । रारो झसे दृशाम् । ) अनेन अरो रः जातः । ( छशषराजादेः ) ष्टुत्वम् । दद्रष्ठ । ( रारो झसे० ) द्रष्टा । ( अत उपधायाः ) अद्राक्षीत् । ( झसात् ) अद्राष्टाम् । अस्य इरितो वानेन ङप्र-त्ययो भवति । तदा अदृश् ङ दिप् इति जाते ( दृशादेः ) दृशादेर्धातोर्ङकारे परे गुणो भवति । अनेन गुणः । ङकारो ङित्कार्यार्थः 'स्वर०' अदर्शत् । ऋ गतौ । ( दृशादेः ) अनेन ऋच्छादेशः ( अदे ) ऋच्छति । चतुर्णां लकाराणां रूपाणि सन्ति । सुगमत्वात् व्याख्यानं न कृतम् । 'ऋ णप्' इति स्थिते ( द्विश्च । रः ) अ ऋ णप् इति जाते ( ऋ अर् ) अर् णप् इति जाते ( अत उपधायाः ) अनेन वृद्धिः । आर ( गुणोऽर्ति । सवर्णे ) आरतुः । आरुः ।

( अत्यर्तिव्ययतीनां थपो नित्यमिट् ) आरिथ । आरथुः । आर । आर । आरिव । आरिम ।

• सूत्रम ( अत्यर्ति० ) अत्यर्तिव्ययतीना धातूना थपो नित्यमिट् भवति ( अत्वतो० ) अस्य विकल्पस्यायमपवादः । आरिथ । ऋ यात् इति स्थिते ।

_( गुणोर्त्तिसंयोगाद्योः ) अर्तेः संयोगादेर्ऋदन्तस्य च गुणो भ-

वति यकि यङि किति णादावाशीर्यादादौ च । अर्यात् । अर्ता । ( हनृतः स्यपः ) अरिष्यति । आरिष्यत् ।

सूत्रम् (गुणोर्तिसंयोगाद्योः) अर्तिश्च संयोगादिश्च अर्तिसंयोगादी तयोः अर्तिसंयोगाद्योः । ऋ गतावित्यस्य धातोः संयोगादेर्ऋदन्तस्य च ऋकारस्य गुणो भवति । यकि यङि किति णादौ आशीर्यादादौ च । अनेनारतुः इति रूपं सिद्धं भवति । गुणोऽनेन तदा अर्य्यात् ( गुणः ) अर्त्ता ( हनृतः स्यपः ) अनेनास्येट् ( गुणः ) अरिष्यति । ( स्वरादेः ) । आरिष्यत ।

( सर्तिशास्त्यर्तिभ्यो ङो लुङि सेरपवादः ) ( लित्पुपादेर्ङः ) आरत् । आरताम् । आरन् । ( अर्तेर्वा ङः सेरपवादो लुङीति केचित् ) आर्षीत् ॥ सृ गतौ । धावादेशः । धावति । शीघ्रगतावेव धावादेशः । सरति । ससार । सस्रतुः । सस्रुः । क्रादित्वात् । ससर्थ । सस्रथुः । सस्र । ससार-ससर । सस्रिव । सस्रिम ।

सूत्रम् (सर्तिशास्त्यर्तिभ्यो ङो लुङि सेरपवादः) सर्ति शास्ति अर्ति एभ्यो धातुभ्यो ङप्रत्ययो भवति सेरपवादः। अनेनास्य ङः । ( इणादेः । स्वरादेः ) आरत् । ( अर्तेः ) । अर्तेर्धातोर्वा ङप्रत्ययो भवति । लुङि सेरपवादः । इति केचिदाचार्या वदन्ति । तेषां मते ( सेः ) ( स्वरादेः ) । आर्षीत् इति रूपं सिद्धं भवति ॥ सृ गतौ । धावादेशः । धावति । शीघ्रगतावेव धावादेशः । तदभावे । सरति । लिट्लकारे । ससार । थपि. क्रादित्वान्नेट् । ससर्थ । सृ यात् इति स्थिते ।

( यादादौ ) । ऋकारस्य रिङादेशो भवति यादादौ परस्मैपदे परे । ङकारो व्यवधानार्थः । तेन ये इति न दीर्घः । स्रियात् । सर्ता । सरिष्यति । असरिष्यत् । पुपादित्वात्ङः । असरत् असरताम् । असरन् ॥ शद्लृ शातने ।

सूत्रम् ( यादादौ ) यादादौ ७-१ एकपदं सूत्रम् । आशीरर्थे यादादौ परे धातोर्ऋकारस्य रिङ् इत्यादेशः परस्मैपदे एव । अत्रापि ङकारो ये इति सूत्रेण विहितदीर्घनिषेधार्थः । स्रियात् । सर्त्ता । ( हनृतः स्यपः ) सरिष्यति । असरिष्यत (पुपादि०) अनेन ङः ( इणादेः ) असरत् ॥ शद्लृ शातने । शीयादेशः ।

( शीयादेशे आत्मनेपदं वाच्यम् ) शीयते । शीयेत । शीयताम् । अशीयत । शशाद ( लोपः पचाम् ) शेदतुः शेदुः । शेदिथ-श-

शत्थ। शद्यात्। शत्ता। शत्स्यति। अशत्स्यत्। लृदित्त्वात्ङः। अशदत्। *पद्लृविशरणगत्यवसादनेषु। सत्वम्। सीदादेशः। सीदति।ससाद। सेदतुः। सेदुः। सेदिथ-ससत्थ। सद्यात्। सत्ता। सत्स्यति। असत्स्यत। असदत्। निपूर्वः। न्यषदत्॥ पा पाने पिबादेशः। पिबति। पिबेत्। पिबतु। अपिबत्। पपौ। पपतुः। पपुः। पपिथ-पपाथ। (दादेरे) पेयात्। पाता। पास्यति। अपास्यत्। (दादेः पे) अपात्॥ घ्रा गन्धोपादाने। जिघ्रादेशः। जिघ्रति। जिघ्रेत्। जिघ्रतु। अजिघ्रत्। जघ्रौ। जघ्रतुः। जघ्रुः। जघ्रिथ-जघ्राथ। घ्रायात्-घ्रेयात्। घ्राता। घ्रास्यति। अघ्रास्यत्। अघ्रासीत्। अघ्रात्। ध्मा शब्दाग्निसंयोगयोः। धमादेशः। धमति। धमेत्। धमतु। अधमत्। दध्मौ। ध्मायात्। ध्मेयात्। ध्माता। ध्मास्यति। अध्मास्यत्। अध्मासीत्॥ ष्ठा गतिनिवृत्तौ। (आदेः ष्णः स्नः) सकारे जाते निमित्ताभावेन ठस्य थः। तिष्ठादेशः। तिष्ठति। तिष्ठेत्। तिष्ठतु। अतिष्ठत्। (शसात्खपाः) तस्थौ। तस्थतुः। तस्थुः। स्थेयात्-स्थायात्। स्थाता। स्थास्यति। अस्थास्यत्। निपूर्वः। पत्वम्। न्यष्ठात्॥ म्ना अभ्यासे। मनादेशः। मनति। मनेत्। मनतु। अमनत। मम्नौ। मम्नतुः। मम्नुः। मम्निथ-मम्नाथ। म्नायात्-म्नेयात्। म्नाता। म्नास्यति। अम्नास्यत्। अम्नासीत्॥ दाण् दाने। यच्छादेशः। यच्छति। यच्छेत्। यच्छतु। अयच्छत्। ददौ। ददतुः। ददुः। (दादेरे) देयात् दाता। दास्यति। अदास्यत्। अदात्॥ ह्वृ कौटिल्ये। ह्वरति। ह्वरेत्। ह्वरतु। अह्वरत्। जह्वार। (गुणोर्तिसंयोगाद्योः)। जह्वरतुः। जह्वरुः।

*सूत्रम् (शीयादेशे) शीयादेशे कृते सति आत्मनेपदं वाच्यम्। अनेनास्यात्मनेपदत्वम्। शीयते। लिट्लकारे (अत उपधायाः) शशाद (व्लोपः पचाम्) शेदतुः

अत्वतः० ) अनेन वा इट्। शेदिथ। ( खसे चपा झसानाम् ) शशत्थ। शद्यात्। ( खसे चपा झपानाम् ) शत्ता। अन्यानि मूले सन्ति ( लित्पुपादेर्ङः ) अनेनास्य लृदित्त्वात् ङः। अशदत्। षद्लृ विशरणगत्यवसादनेषु। सत्वम्। सीदादेशः। सीदति। ससाद ( लोपः० ) सेदतुः। ( अत्वतः ) सेदिथ। ( खसे चपा० ), ससत्थ। ( खसे० )। सत्ता। अन्यानि सन्ति। लुङ्लकारे। ( लित्पुपादेर्ङः )। असदत्। अयं धातुर्यदा निपूर्वो भवति तदा। ( प्रादेश्च )। अनेन षत्वम्। न्यषदत्। पा पाने। पिबादेशः। पिबति। लिट्लकारे 'पा णप्' इति स्थिते। ( द्विश्च। ह्रस्वः। आतो णप् डौ ) पपौ ( आतोऽनपि )। पपतुः। ( अत्वतो० )। पपिथ–पपाथ ( दादेरे ) पेयात्। ( दादेः पे ) अनेन सेर्लोपो भवति। अपात्। अपाताम्। अपुः ( आतोऽनपि ) इत्यनेनाकारस्य लोपः। घ्रा गन्धोपादाने। जिघ्रादेशः। जिघ्रति। घ्रा णप् इति स्थिते। 'द्विश्च। ह्रस्वः। रः। झपानाम्०। कुहोश्चुः। आतो णप् डौ )। जघ्रौ। ( अत्वतः )। जघ्रिथ–जघ्राथ। ( संयोगादेः )। घ्रायात्–घ्रेयात्। ( आदन्तानाम्० ) अघ्रासीत्। ( गाच्छासा० ) अनेन वा सेर्लोपः। अघ्रात्। ष्ठा गतिनिवृत्तौ। ( आदेः ष्णः स्नः ) अनेन षस्य सः। 'निमित्ताभावे०' अनेन न्यायेन ठस्य थः। दृशादेः। तिष्ठादेशः। तिष्ठति। 'स्था णप्' इति स्थिते ( द्विश्च। ह्रस्वः। शसात्०। झपानाम्० ) सवर्णत्वात्। (आतो णप्०)। तस्थौ। ( दादेरे। ) स्थेयात्–स्थायात्। लुङ्लकारे। निपूर्वोऽयम्। ( दादेः पे ) अनेन सेर्लोपो भवति। ( प्रादेश्च ) न्यष्ठात्। म्ना अभ्यासे। मनादेशः। पूर्ववत् तिवादयः ( अदे ) मनति। ( पूर्वस्य० )। मम्नौ। ( अत्वतः ) मम्निथ–मम्नाथ। ( संयोगादेः ) म्नायात्–म्नेयात्। अन्यानि मूले सन्ति। लुङ्लकारे। ( आदन्तानाम् अम्नासीत्। दाण् दाने। ( दृशादेः ) अनेन यच्छादेशः। यच्छति। दा णप् इति स्थिते ( द्विश्च। ह्रस्वः। आतो णप् डौ ) ददौ ( आतोऽनपि ) ददतुः ( अत्वतः ) ददिथ–ददाथ। ( दादेरे ) देयात्। लुङ्लकारे ( दादेः पे )। अनेन सेर्लोपो भवति। अदात्॥ ह्वृ कौटिल्ये। कुटिलस्य भावः कौटिल्यं तस्मिन् कौटिल्ये। ( गुणः )। ह्वरति। ह्वृ णप् इति स्थिते ( द्विश्च। रः। पूर्वस्य। कुहोश्चुः धातोर्नामिनः ) अनेन वृद्धिः। जह्वार (गुणोर्तिसंयोगाद्योः)। अनेन किति णवादौ गुणः। जह्वरतुः।

(ऋदन्तस्य थपो नेट्) जह्वर्थ। जह्वरथुः। जह्वर। जह्वार। जह्वर। जह्वरिव। जह्वरिम। ह्वर्यात्। ह्वर्ता। ( ह्नृतः स्यपः ) ह्वरिष्यति। अह्वरिष्यत्। वृद्धिः। अह्वार्षीत्। अह्वार्ष्टाम्॥ स्कन्दिर् गतिशोषणयोः। स्कन्दति। स्कन्देत्। स्कन्दतु। अस्कन्दत्। चस्कन्द। चस्कन्दतुः। चस्कन्दुः। चस्कन्दिथ।

सूत्रम् ( ऋदन्तस्य० ) ऋदन्तस्य धातोः थप इड् न भवति । जहर्थ । ह्रियात् । हर्ता । ( हृत. ) । ह्वरिष्यति । अह्वरिष्यत् ( णित्पे ) । अनेन णित्वात् वृद्धिः । अह्वार्षीत् । स्कन्दिर् गतिशोषणयोः । इर् अनुबन्धः ( इरितो वा ) इति सूत्रस्य विशेषणार्थः । स्कन्दति । लिट्लकारे । स्कन्द् णप् इति स्थिते ( द्विश्च । शसात् । पूर्वस्य । कुहोश्चुः ) चस्कन्द । ( ऋसंयोगात् ) अनेनाकित्वात् ( नो लोपः ) इति सूत्रेणानुस्वारस्य लोपो न भवति । चस्कन्दतुः । ( अत्वतः ) अनेनास्य वेट् । चस्कन्दिथ । इडभावे चस्कन्द थप् इति स्थिते ।

( हसात्परस्य झसस्य लोपो वा सवर्णे झसे) चस्कन्थ । ( नो लोपः ) स्कद्यात् । स्कन्ता । स्कन्त्स्यति । अस्कन्त्स्यत् ।

सूत्रम् ( हसात् ) हसात् परस्य सवर्णे झसे परे लोपो वाच्यः । अनेन दस्य लोपः । चस्कन्थ ( नो लोपः ) स्कद्यात ( हसात् ) स्कन्ता ( खसे चपा झसानाम् ) स्कन्त्स्यति । अस्कन्त्स्यत् ।

( सावनिटो नित्यं वृद्धिः ) णित्त्वविधानसामर्थ्यादनुपधाभूतस्याप्यतो वृद्धिः । अस्कान्त्सीत् ( इरितो वा ) अस्कदत् ॥ तॄ प्लवनतरणयोः । तरति । तरेत् । तरतु । अतरत् । कित्त्वाभावाद्गुणः ( ऋसंयोगादेर्णादेरकित्त्वं वाच्यम् ) ( तॄफलभजत्रपाम् इत्येत्वपूर्वलोपौ ) ततार । तेरतुः । तेरुः । तेरिथ ।

सूत्रम् ( सावनिटः० ) सौ परे सति अनिटो धातोर्नित्यं वृद्धिर्भवति । अस्य धातो र्वृद्धिप्राप्तिरेव नास्ति तत्राह णित्त्वविधानसामर्थ्यात् । अनुपधाभूतस्यातोऽकारस्य वृद्धिः ( खसे चपा झसानाम् ) अस्कान्त्सीत् ( इरितो वा ) अनेनास्य वा ङप्रत्ययो भवति । ( नो लोपः ) अस्कदत् ॥ तॄ प्लवनतरणयोः ( गुण. ) तरति । अन्यानि मूले गन्ति । लिट्लकारे । ततार ( ऋसंयोगात् ) अनेनाकित्वाद् गुणः । ( तॄफलभजत्रपाम् ) अनेनास्यैत्वपूर्वलोपौ भवतः । तेरतुः । तॄ यादिति स्थिते ।

( ॠत इर् ) ॠकारस्य इर् भवति किति ङिति च परे । ( य्वो र्वि हसे ) तीर्यात ।

सूत्रम् ( ॠत इर् ) ॠतः ६-१ इर् १-१ ॠकारस्य किति ङिति च परे इर् भवति ( य्वो र्वि हसे ) अनेन दीर्घः । तीर्यात् । 'तर् इट् ता' इति स्थिते ।

( ईटो ग्रहाम् ) ग्रहादीनामिट ईकारो भवति न तु णादौ । तरीता-तरि-

ता। तरीष्यति-तरिष्यति। अतरीष्यत्-अतरिष्यत्। अतारीत्। अतारिष्टाम्। अतारिषुः।

सूत्रम् (इटो ग्रहाम्) ई १-१ इटः ६-१ ग्रहाम् ६-३। ग्रहादीनां धातूनामिट ईकारो भवति न तु णादौ। वृङ् वृञ् ऋदन्तानां वा भवति। अनेनास्येट ईकारो भवति। तरीता। तरिता। अन्यानि मूले सन्ति। अतारीत्। अतारिष्टाम्। अतारिषुः। अत्रेट ईकारे प्राप्ते।

(वृद्धिहेतौ साविटो न दीर्घो वाच्यः)। रञ्ज् रागे। उभयपदी।

सूत्रम् (वृद्धिहेतौ०) वृद्धिहेतौ सौ परे इटो दीर्घो न वाच्यः। अनेन लुङ्लकारे दीर्घाभावः। रञ्ज् रागे। उभयपदी।

(अपि रञ्जदंशषञ्जष्वञ्जाम्) एषामनुस्वारस्य लोपो भवत्यपि परे। रजति। रजते। रजेत्। रजेत। रजतु। रजताम्। अरजत्। अजरत। ररञ्ज। ररञ्जतुः। ररञ्जुः। ररञ्जिथ-ररङ्क्थ। ररञ्जथुः। ररञ्ज। ररञ्जे। रज्यात्। रङ्क्षीष्ट। रङ्क्ता। रङ्क्ष्यति। रङ्क्ष्यते। अरङ्क्ष्यत्। अरङ्क्ष्यत। अराङ्क्षीत्। (चोः कुः। खसे चपा०) षत्वम्। अराङ्क्ताम्। अराङ्क्षुः। अरङ्क्त। अरङ्क्षाताम्। अरङ्क्षत॥ दंश दशने। दशति। दशेत्। दशतु। अदशत्। ददंश। ददंशतुः। ददंशुः। ददंशिथ-ददंष्ठ। ददंशथुः। दश्यात्। ष्टुत्वम्। दंष्टा। दङ्क्ष्यति। अदङ्क्ष्यत्। (णित्पे) णित्त्वाद्वृद्धिः। (षढोः कः से) अदाङ्क्षीत्॥ षञ्ज सङ्गे। सजति। सजेत्। सजतु। असजत्। ससञ्ज। ससञ्जिथ-ससङ्क्थ। सज्यात्। सङ्क्ता। सङ्क्ष्यति। असङ्क्ष्यत्। असाङ्क्षीत्। असाङ्क्ताम्। असाङ्क्षुः। कित रोगापनयने संशये च।

सूत्रम् (अपि रञ्जदंशषञ्जष्वञ्जाम्) अपि ७-१। रञ्जदंशषञ्जष्वञ्जा ६-३ रञ्ज दंशषञ्जष्वञ्ज् एषां धातूनामनुस्वारस्य लोपो भवति अपि परे। अनेनास्यानुस्वारस्य लोपो भवति। रजति। रजते। अन्यानि मूले लिखितानि सन्ति। लिट्लकारे। ररञ्ज। अकित्त्वादनुस्वारस्य लोपो न भवति। ररञ्जतुः (अत्वतः) ररञ्जिथ-ररञ्ज थ इति स्थिते। (चोः कुः)। (खसे चपा झसानाम्) ररङ्क्थ। आत्मनेपदे।

रञ्जे । ( नो लोपः ) रज्यात् ( चोः कुः । खसे चपा झसानाम् ) रङ्क्षीष्ट । अराङ्क्षीत् । ( झसात् । चोः कुः । खसे ) । अराङ्क्ताम् । अराङ्क्षुः । आत्मनेपदे । अरङ्क्त । अरङ्क्षाताम् । अरङ्क्षत ॥ दंश् दशने । ( अपिरञ्जदंश० ) अनेनास्यापि लोपो भवत्यनुस्वारस्य । दशति । ददंश । ददंशतुः । ( अत्वतः ) ददंशिथ । इडभावे । ददंश् थप् इति जाते । ( छशषराजादेः षः ) अनेन षकारः । ( ष्टुभिः ष्टुः ) ददंष्ठ । ( नो लोपः ) । दश्यात् । दंष्टा । ( षढोः कः से ) दङ्क्ष्यति । ( णित्पे ) अनेन वृद्धिः । ( षढोः कः से ) । अदाङ्क्षीत् । षञ्ज सङ्गे । ( आदेः ष्णः स्नः ) अनेन षस्य सः । पूर्ववत्तिबादयः । सजति । छिद्लकारे । ससञ्ज । ( अत्वतः ) अनेनास्य वेट् । ससञ्जिथ । इडभावे । ससञ्ज् थप् इति जाते ( चोः कुः । खसे चपा झसानाम् ) ससङ्क्थ । ( नो लोपः ) । सज्यात् । सञ्ज् ता इति स्थिते । ( चोः कुः । खसे चपा झसानाम् ) 'स्वरहीनं०' । सङ्क्ता । सञ्ज् स्यप् तिप् इति स्थिते । ( चोः कुः । खसे । षढोः कः से । किलात्० । कपसंयोगे० ) सङ्क्ष्यति । असङ्क्ष्यत् । ( सावनिटः ) । असाङ्क्षीत् । ( झसात् ) असाङ्क्ताम् । असाङ्क्षुः । कित् रोगापनयने संशये च ।

( गुब्भ्यः ) गुप् तिज् कित् मान् बध् दान् शान् एभ्यः स्वार्थे सः प्रत्ययो भवति । धातोश्च द्वित्वम् । ( कुहोश्चुः ) । गुप्तिज्किद्भ्यः क्रमान्निन्दाक्षमारोगापनयनेषु सः । तेन गोपति । तेजति । केतति । स धातुः । गुबादिभ्यः सस्येण्नेष्यते ।

( गुब्भ्यः ) गुब्भ्यः ५–३ गुप् तिज् कित् मान् बन्ध दान् शान् इत्यादिभ्यो धातुभ्यः स्वार्थे धात्वर्थे एव इगर्थ विनैव दशस्वपि लकारेषु कृति च सप्रत्ययो भवति । तत्सन्नियोगे ( द्विश्च ) अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे एव भवन्ति । गुप्-तिज्-किद्भ्यः क्रमात् । निन्दाक्षमारोगापनयनेषु सः प्रत्ययो भवति तेन । गोपति । तेजति । केतति । इत्यत्र पूर्वोक्तसूत्रेण सप्रत्ययो धातोः द्वित्वं च भवति । तदा कित् स इति जाते ( चोः कुः ) अनेन कस्य चः । चिकित् स इति जाते । ( सिसता० ) अनेनेटि प्राप्ते । गुबादिभ्यो धातुभ्यः सस्य इट् न इष्यते आचार्यैः । अनेन इडनिषेधः । ( उपधाया लघोः ) अनेन गुणे प्राप्ते ।

( नानिटि से ) इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति । तिप् । चिकित्सति । चिकित्सेत् । चिकित्सतु । अचिकित्सत् । चिकित्साञ्चकार । चिकित्सामास । चिकित्साम्बभूव । चिकित्स्यात् । चिकित्सा । चिकित्सिष्यति । अचिकित्सिष्यत् । अचिकित्सीत् । अचिकित्सिष्टाम् ॥ पत्लृ पतने । पतति । पतेत् । पत-

तु। अपतत्। पपात। पेततुः। पेतुः। पत्यात्। पतिता। पतिष्यति। अपतिष्यत् ( लित्पुरुपादेर्ङः रु।

सूत्रम् ( नानिटि से ) ना १–१ अनिटि ७–१ से ७–१ इड्वर्जिते समत्यये परे धातोर्गुणो न भवति। अनेन गुणाभावः। चिकित्स इति जाते ( स धातुः ) अनेन धातुत्वात् तिवादयः। चिकित्स् तिप् इति स्थिते। ( अप् कर्त्तरि। अदे ) चिकित्सति। अन्यानि मूले सन्ति। लिट् लकारे (कासादिप्रत्ययादाम् ) चिकित्साञ्चकार। अन्ये द्वे मूले स्तः। चिकित्स्यात्। लुङ् लकारे। अचिकित्सीत्। अचिकितिसष्टाम्। पत्लृ पतने। पूर्ववत् तिवादयः। पतति। लिट् लकारे। ( अत उपधायाः ) पपात। ( लोपः पचां किल्ये०। ) पेततुः। पतिता। लुङ् लकारे 'लित्पुपादेर्ङः' अनेन ङः प्रत्ययो भवति। अपत् ङ दिप् इति जाते।

( पतेर्ङे पुगागमो वाच्यः ) अपप्तत्॥ भ्रमु चलने।

सूत्रम्। ( पतेर्ङे० ) पतेर्धातोः ङप्रत्यये परे पुगागमो वाच्यः कित्त्वादन्ते। 'स्वरहीनं०' अपप्तत्। अपप्तताम्॥ भ्रमु चलने।

( शमां दीर्घः ) शमादीनां दीर्घो भवति यकारे परे। शम् दम् क्लमु श्रम् भ्रम् क्षम क्रम् मद् एते शमादयः। भ्राम्यति–भ्रमति। भ्राम्येत्–भ्रमेत्। भ्राम्यतु–भ्रमतु। अभ्राम्यत्–अभ्रमत्। बभ्राम।

सूत्रम् ( शमां दीर्घः ) शमां ६–३ दीर्घः १–१ द्विपदं सूत्रम्। शमादीनां धातूनां दीर्घो भवति यकारे परे। शमादयो मूले उक्ताः। भ्रम् तिप् इति स्थिते ( क्रमुभ्रम्० ) अनेन यः प्रत्ययः। भ्रम् य तिप् इति जाते ( शमां दीर्घः ) अनेन दीर्घः। भ्राम्यति। यप्रत्ययाभावे दीर्घाभावः। भ्रमति। अन्यानि मूले सन्ति। लिट्लकारे। ( अत उपधायाः ) अनेन वृद्धिः ( अपानाम्० ) बभ्राम।

( फणादीनामेत्वपूर्वलोपौ वा वाच्यौ )
फणतिर्भ्राजिराजी च भ्राशिभ्लाशी स्यमिस्वनी।
भ्रमित्रसी जीर्यतिश्च दशैते तु फणादयः॥

भ्रेमतुः–बभ्रमतुः। भ्रेमुः-बभ्रमुः। भ्रेमिथ-बभ्रमिथ। भ्रम्यात्। भ्रमिता। भ्रमिष्यति। अभ्रमिष्यत्। अभ्रमीत्॥ टुवम् उद्गिरणे। टु इत्संज्ञकः। वमति। वमेत्। वमतु। अवमत्। ववाम।

( फणादीनां० ) फणादीनाम् एत्वपूर्वलोपौ वा वक्तव्यौ । अनेनास्य वा एत्वपूर्वलोपौ । भ्रेमतुः-बभ्रमतुः । भ्रेमिथ-बभ्रमिथ । फणादयः श्लोकेनोक्ताः।भ्रम्यात् । भ्रमिता । लुङ्लकारे अभ्रमीत् । टुवम् उद्गिरणे । टु इत्संज्ञकः । वमति । लिट्लकारे ( शसृदद्वादि० ) अनेन निषेधे प्राप्ते ।

( वम एत्वपूर्वलोपौ वा वाच्यौ ) वेमतुः-ववमतुः । वेमुः-ववमुः । वम्यात् । वमिता । वमिष्यति । अवमिष्यत् । अवमीत्॥ फण गतौ । फणति । फणेत् । फणतु । अफणत्। पफाण । फेणतुः । फेणुः । फण्यात् । फणिता । फणिष्यति । अफणिष्यत् । अफाणीत्-अफणीत्॥ स्वन स्यमु शब्दे । स्वनति । स्वनेत् । स्वनतु । अस्वनत् । सस्वान । स्वेनतुः । स्वेनुः । स्वन्यात् । स्वनिता । स्वनिष्यति । अस्वनिष्यत् । अस्वानीत्-अस्वनीत् ॥ वस निवासे। वसति । वसेत् । वसतु । अवसत् । वस् णप् इति स्थिते । द्वित्वम् ।

सूत्रम् ( वमः०) वमधातोरेत्वपूर्वलोपौ वा वक्तव्यौ । अनेनास्य वा एत्वपूर्वलोपौ । ववाम । वेमतुः-ववमतुः । वमिता । लुङ्लकारे अवमीत्॥ फण् गतौ । फणति । लिट्लकारे ( अत उपधायाः । झपानाम् ) पफाण ( फणादीनाम् ) अनेन वा एत्वपूर्वलोपौ भवतः । फेणतुः-पफणतुः । पफणिथ-फेणिथ । फणिता । अफणीत् ॥ स्वन स्यमु शब्दे । स्वनति । स्यमति । सस्वान । सस्याम । स्वनिता । स्यमिता । अस्वानीत्-अस्वनीत् । ( हसादेः ) अनेन वा वृद्धिः । अस्यामीत्-अस्यमीत् ॥ वस निवासे। वसति । वस् णप् इति स्थिते ( द्विश्च ) ववस् णप् इति जाते ।

( णवादौ पूर्वस्य ) णवादौ परे यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं भवति । यकारवकाररेफाणामिकारोकारऋकारा भवन्ति । सस्वरस्य संप्रसारणं दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः ।

सूत्रम् ( णवादौ० ) ७-१ पूर्वस्य ६-१ यजादीनां यज् वच् स्वप् वद् वेञ

वप् वद् वसां श्वयतेर्ग्रहादीनां ग्रह् ज्या व्येञ् ह्वेञ् व्यध् वश् व्यच् प्रच्छ् व्रश्च भ्रस्जादीनां च धातूनां पूर्वस्य द्वित्वस्य णबादौ परे संप्रसारणं भवति। यकारवकाररेफाणाम् इकारोकारऋकारा भवन्ति। सस्वरस्याक्षरस्य संप्रसारणं भवति। ह्रस्वस्याक्षरस्य ह्रस्वः। दीर्घस्याक्षरस्य दीर्घः।

ग्रहिर्ज्यावयी व्यधिर्वष्टिर्विचतिर्वृश्चतिस्तथा।
पृच्छतिर्भृज्जतिश्चैव नवैते तु ग्रहादयः॥

पूर्ववकारस्योत्वे (अत उपधायाः) उवाम। उवस् अतुस् इति स्थिते।

ग्रहादयः श्लोकेनोक्ताः सन्ति। अनेन पूर्वस्य वकारस्य संप्रसारणं जातम्। ह्रस्वत्वात् ह्रस्वः। अनेन सूत्रेण पूर्वस्य वकारस्य उकारः। तदा उवस् णप् इति जाते। (अत उपधायाः) 'स्वरहीनं' उवास। ववस् अतुस् इति स्थिते। णबादौ पूर्वस्य अनेन पूर्वस्य संप्रसारणम्। उवस् अतुस इति जाते।

(यजां यवराणां य्वृतः संप्रसारणं किति) यजादीनां संप्रसारणं भवति किति परे।

सूत्रम् (यजां यवराणां य्वृतः संप्रसारणं किति)। यजा ६-३ यवराणां ६-३ इश्च उश्च ऋश्च य्वृतः १-३ संप्रसारणं १-१ किति ७-१ पंचपदं सूत्रम्। ग्रहादीनां तु किति ङिति च परे संप्रसारणं भवति। यजादीनां तु केवले किति परे एव संप्रसारणं भवति। अत एव पृथक् सूत्रकरणम्। यत्तु स्वब्व्येञोर्यङि संप्रसारणं तत्र प्रक्रियाया पृथक् सूत्रमस्ति। स्वापिस्वमिव्येञा यङि। अथवा स्वब्व्येञ्या ग्रहादिमध्ये यद् ग्रहणं तत् यङि प्रत्यये संप्रसारणार्थं नान्यत्र। यजादीना धातूना यकारवकारयोः किति परे संप्रसारणं भवति। यवराणामित्यत्र रकारग्रहणं ग्रहाद्विङिति। इति संप्रसारणसूत्रेऽनुवृत्त्यर्थं ज्ञेयम्। यकारवकाररेफाणाम् इकारोकारऋकारा भवन्ति। सस्वरस्य संप्रसारणं भवति। ह्रस्वस्य ह्रस्वः। दीर्घस्य दीर्घः। अनेन द्वितीयस्य वकारस्य संप्रसारणं भवति।

यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिः स्वपिः।
वद्वसी श्वयतिर्वक्तिरेकादश यजादयः॥

(सवर्णे दीर्घः सह)।

यजादयस्तु मूले श्लोकेनोक्ताः। उउस् अतुस् इति स्थिते।

(घसादेः षः)। घसिशासिवसीनां सस्य षो भवति पत्वनिमित्ते

सति । ऊपतुः । ऊषुः । उवसिथ । संप्रसारणम् । उवस्थ । पत्वम् उष्यात् । वस्ता ।

सूत्रम् ( घसादेः पः ) घस् आदिर्यस्य सः घसादिः तस्य घसादेः ६-१ । पः १-१ किलात्परस्य । घस्लृ अदने शास् अनुशिष्टौ वस् निवासे इत्येतेषां धातूनां सकारस्य षकारो भवति । अत्र ( किलात्० ) इति सूत्रस्य प्राप्तिरेव नास्ति तस्माद् सूत्रं कृतम । अनेन सस्य पः । 'स्वरहीनं०' ऊषतुः । ऊषुः ( अत्वतः ) । उवसिथ । उवस्थ ( यजाम् । घसादेः) उष्यात् । वस्ता । वस् स्यप् तिप् इति स्थिते ।

( सस्तोऽनपि ) सकारस्य तकारो भवति अनपि सकारे परे । वत्स्यति । अवत्स्यत् । वृद्धिः । अवात्सीत् ( झसात् ) प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायात् । अवात्ताम् । अवात्सुः ॥ वद व्यक्तायां वाचि । वदति । वदेत् । वदतु । अवदत् । उवाद । ऊदतुः । ऊदुः । उवदिथ । उद्यात् । वदिता । वदिष्यति । अवदिष्यत् । अवादीत् ॥ टुओश्वीर् गतिवृद्ध्योः । टुकारौकारौ कार्यार्थौ । इर् इत्संज्ञकः । श्वयति । श्वयेत् । श्वयतु । अश्वयत् ।

सूत्रम ( सस्तोऽनपि ) सः ६-१ तः १-१ अनपि ७-१ त्रिपदं सूत्रम । धातोः सकारस्यानपि विषये णवादिविभक्तिपञ्चविषये सकारे परे तकारो भवति । अनेन सकारस्य तकारो भवति । वत्स्यति । अवत्स्यत् ( सावनिटो नित्यम् ) अनेन वृद्धिः। अवात्सीत् ( झसात् सस्तोऽनपि ) 'प्रत्ययलोपे०' इति न्यायात् वृद्धिः। अवात्ताम् । अवात्सुः । वद् व्यक्तायां वाचि । वदति । लिट्लकारे ( णवादौ ) अनेन संप्रसारणम । ( जन उपधायाः ) अनेन वृद्धिः। उवाद ( यजाम्० ) ऊदतुः । ऊदुः । उवदिथ । 'संप्रसारणम' । उद्यात् । वदिता । लुङ्लकारे । ( वदिव्रज्योः० ) इत्यनेन नित्यं वृद्धिः । अवादीत् ॥ टुओश्वीर् गतिवृद्धयोः । टुकारौकारौ कार्यार्थौ । इर् इत्संज्ञकः । पूर्ववत् तिबादयः ( गुणः। ए अय् ) श्वयति । लिट्लकारे ।

श्वयतेर्णादौ प्रथमं संप्रसारणं वा वक्तव्यम् । ततो द्वित्वम् । शुशाव । शुशुवतुः । शुशुवुः । शुशविथ । संप्रसारणाभावपक्षे

शिश्वाय। शिश्वियतुः। शिश्वियुः। शिश्वयिथ। संप्रसारणम् (ये) शूयात्। श्वयिता। श्वयिष्यति। अश्वयिष्यत्।

सूत्रम् (श्वयतेः) श्वयतेर्धातोर्णादौ परे प्रथमं संप्रसारणं वा वाच्यम्। अनेनास्य पूर्वं संप्रसारणं ततो द्वित्वम्। शुशु णप् इति जाते (धातोर्नामिनः) अनेन वृद्धिः। शुशाव। शुशु अतुस् इति जाते। (नुधातोः) अनेन वकारे प्राप्ते। (नानप्योर्वः)। अनेन वक्ष्यमाणेन सूत्रेण तन्निषेधः। किंतु इय् एव भवति। शुशुवतुः। शुशविथ। संप्रसारणाभावपक्षे (धातोर्नामिनः)। शिश्वाय। (नुधातोः)। शिश्वियतुः (गुणः)। शिश्वयिथ। संप्रसारणम्। (ये) शूयात्। श्वयिता। श्वयिष्यति। अश्वयिष्यत्। अश्वि इसि ईट् दिप् इति जाते। णित्ये। अनेन सेर्णित्त्वात् वृद्धेः प्राप्तौ।

(श्वयतेः सौ वृद्ध्यभावो वाच्यः) अश्वयीत्। अश्वयिष्टाम्। अश्वयिषुः (इरितो वा)

सूत्रम् (श्वयतेः०) श्वयतेर्धातोः सौ परे वृद्ध्यभावो वाच्यः। अनेन तन्निषेधः (गुणः। इट ईटि) इत्यादिसूत्रैः अश्वयीत् इति रूपं सिद्धं भवति। अस्येरितो वानेन वा ङप्रत्ययो भवति। तदा अश्वि ङ दिप् इति जाते।

(श्वयतेरिलोपो ङे वक्तव्यः) अश्वत्।

सूत्रम् (श्वयतेः) श्वयतेर्धातोर्ङप्रत्यये परे इकारस्य लोपो वक्तव्यः। अनेनेकारस्य लोपो। भवति। अश्वत्। अश्वताम्। अश्वन्।

(श्वयतेर्ङे द्वित्वं वा) अशिश्वियत् इत्यादि॥

॥ इति भ्वादिषु परस्मैपदिनः॥

सूत्रम् (श्वयतेः०) श्वयतेर्धातोः ङप्रत्यये परे द्वित्वं वा भवति पूर्वस्य (नुधातोः)। अशिश्वियत्। अशिश्वियताम्। अशिश्वियन्। इत्यादीनि रूपाणि ज्ञातव्यानि॥ ॥इति भ्वादिगणस्य परस्मैपदिनः कथिताः॥

अथ भ्वादिष्वात्मनेपदिनः॥ ॥एध वृद्धौ॥ अकार आत्मने पदार्थः। ततः पराणि तिबादिवचनानि (अप्कर्त्तरि) एधते (अ इ ए) एधते धर्मादेधतेऽदो राज्यम्। विधिसम्भावनयोरित्यादीनि नव वचनानि। एधेत। साधुर्जनो धर्मत एधेत। एधताम्। ऐधत। (कासादिप्रत्ययादाम्०) एधाञ्चक्रे। आम्प्रत्ययो यस्माद्विहितः स चेदात्मनेपदी तर्हि अनुप्रयुक्तकृञ आत्मने-

पदं भ्वसोर्नात्मनेपदम् । एधामास । एधाम्बभूव । विधानसामर्थ्यादस्तेर्भूभावो न । इट् । एधिषीष्ट । एधिता । एधिष्यते । ऐधिष्यत । ऐधिष्ट । ऐधिषाताम् ॥ ईक्ष दर्शनाङ्कनयोः । ईक्षते । इक्षेत । ईक्षताम् । ऐक्षत । ईक्षाञ्चक्रे । ईक्षिषीष्ट । ईक्षिता । ईक्षिष्यते । ऐक्षिष्यत । ऐक्षिष्ट ॥ दद दाने । ददते । ददेत । ददताम् । अददत । ( शशददवा० ) इति नैत्वपूर्वलोपौ । दददे । ददाते । ददिरे । ददिषीष्ट । ददिता । ददिष्यते । अददिष्यत । अददिष्ट ॥ ष्वष्क गतौ । ( नामधातु० ) अनेन सत्वाभावः । ष्वष्कते । ष्वष्केत । ष्वष्कताम् । अष्वष्कत । पष्वष्के । ष्वष्किषीष्ट । ष्वष्किता । ष्वष्किष्यते । अष्वष्किष्यत । अष्वष्किष्ट । अष्वष्किषाताम् ॥ ऋज गतौ स्थैर्ये स्पर्शे च ( उपधाया लघोः ) अर्जते । अर्जेत । अर्जताम् । आर्जत । ( नुगशाम् ) ( आभ्वोर्णादौ ) आनृजे । अर्जिषीष्ट । अर्जिता । अर्जिष्यते । आर्जिष्यत । आर्जिष्ट ॥ ष्वञ्ज परिष्वंगे । सत्वम् ( अपिरञ्जदंशपञ्जष्वञ्जाम् ) स्वजते । स्वजेत । स्वजताम् । अस्वजत । सस्वञ्जे । सस्वञ्जाते । सस्वञ्जिरे ।

अथात्मनेपदिनः कथ्यन्ते । एध वृद्धौ । एध अयं धातुर्वृद्ध्यर्थे । एध इत्यनाकारोऽनुदात्तस्ततोऽयं धातुरनुदात्तेत् । तेनात्मनेपदी । तदेव ग्रन्थकार आह–अकार आत्मनेपदार्थः । तत्तस्मात्कारणाद्विभक्तिचतुष्टयेऽपि पराणि ते आते अन्ते । तथा ईत ईयाताम् ईरन् । ताम् आताम् अन्ताम् । तन् आताम् अन्त । इत्यादीनि नववचनानि योज्यानि तत्र वर्त्तमानात्मनेपादिनः लिख्यन्ते । अनादिप्रयोगः । अप्कर्त्तरीत्यादिकार्यं पूर्ववत् । सर्वत्र(अप्कर्त्त०)'स्वर०'एधते।एवं द्विवचने एध आते इति स्थिते। (अप्कर्त्तरि० आदाथ) एधेते। बहुवचने (अदे) इत्यकारलोपः।'स्वर०'। एधन्ते। एधसे। द्विवचने। (आदाथइः) इतीकारः ( अ इ ए ) एधेथे । एधध्वे । उत्तमपुरुषैकवचने ( अदे )। एधे । द्विवचने ।( अमोरा )। एधावहे । एधामहे । अयोदाह० । धर्मादिति । अदः समीपवर्ति राज्यं धर्म्मात् एधते वर्द्धते । इति वर्त्तमानप्रक्रिया ॥ विधिसंभावनयोः इत्यादीनि नववचनानि योज्यानि । सर्वत्र (अप्कर्त्तरि ) 'स्वर०'( अ इ ए ) । एधेत । एधेयाताम् एधेरन् इत्यादीनि रूपाणि । साधुः शोभनो जनो मनुष्यो धर्म्मतो धर्मात् एधेत वर्द्धेत ।

इति विधिः। आशीःप्रेरणयोः ताम् आताम् अन्ताम् इत्यादयो नव प्रत्ययाः।(अप्कर्त्तरि)। आताम् आथाम् इत्यत्र (आदाय इः। अ इ ए) अन्तामित्यत्र (अदे) 'स्वरहीनं०'मध्यमपुरुषद्विवचने। (आदाय इः। अ इ ए) एकत्वद्वित्वयोरविशेषः।उत्तमपुरुषैकवचने (ए ऐ ऐ)। एधै। द्वित्वबहुत्वयोः। (सवर्णे०) एधताम्। एधेताम् इत्यादीनि उदाहरणानि ज्ञेयानि। तवायुरेधताम्। अथानद्यतने एधधातोस्तनादीनि नव वचनानि योज्यानि। सर्वत्र (अप्कर्तरि। (दिवादावद्) अनेन प्राक् अडागमः (स्वरादेः)। अनेन द्वितीयोऽडागमो भवति। (सवर्णे०)। (ए ऐ ऐ)। ऐधत (आदाय इ। अ इ ए) ऐधेताम् (अदे) ऐधन्त इत्यादिरूपाणि ज्ञेयानि, अत्र यद्यपि द्वितीयाडागमं विनापि रूपसिद्धिर्भवति तथापि ऐक्षत इत्यादिरूपसिद्ध्यर्थं सूत्रस्यास्य प्रयोगः। (कासादिम्रत्ययादाम्) अनेनाम्। एधाञ्चक्रे। आम् प्रत्ययो यस्माद्धातोर्विहितः स धातुश्चेत् आत्मनेपदी तर्हि अनुप्रयुक्तस्य कृधातोरात्मनेपदं भवति। भ्वस्योर्धात्वोरात्मनेपदं न भवति। अनेन व्याख्यानेन भ्वसोर्यदानुप्रयोगस्तदात्मनेपदिनोऽपि धातोः परस्मैपदं भवति। एधामास। एधाम्बभूव। अनुप्रयोगविधानसामर्थ्यादस्तेर्धातोर्भूभावो न भवति। एधिषीष्ट। अन्यानि मूले सन्ति। पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। लुङ्लकारे। एध् सि तन् इति जाते (सिसता०) अनेनेद (दिवादावद्। स्वरादेः) ऐधिस् तन् इति जाते (किलात्० ष्टुभिः ष्टुः) ऐधिष्ट। ऐधिषाताम्। ऐधिषत॥ ईक्ष दर्शनाङ्कनयोः। ईक्षधातुर्दर्शनार्थे अङ्कनार्थे वा। अङ्कनं परीक्षणम्। अत्राप्यकार आत्मनेपदार्थः। तेन विभक्तिचतुष्टयेऽपि आत्मनेपदानि प्रयोज्यानि। सर्वत्र चतुर्लकारेऽप्कर्त्तरि–अनेनाप्प्रत्ययो भवति। एधतिवद् प्रक्रिया। लघूपधत्वाभावात् गुणो न भवति। ईक्षते। ईक्षेत। ईक्षताम्। (दिवादावद्।स्वरादेः। अ इ ए ए ऐ ऐ) ऐक्षत। (कासादिम्०)ईक्षाञ्चक्रे। ईक्षामास। ईक्षाम्बभूव। ईक्षिषीष्ट। ईक्षिता। अन्यानि मूले लिखितानि तानि सुगमान्येवातो व्याख्यानं न कृतम्। लुङ्लकारे। ऐक्षिष्ट। ऐक्षिषाताम्। ऐक्षिषत॥ दद दाने। अत्राप्यकार आत्मनेपदार्थः। ददते। ददेत। ददताम्। अददत। (लोपः) अनेनैत्वपूर्वलोपे प्राप्ते (शसददवादि०) अनेन तन्निषेधः। दददे। ददिषीष्ट। ददिता लुङ्। अददिष्ट। अददिषाताम्। अददिषत। सुगमोऽयं धातुः॥ ष्वष्क गतौ। नामधातुः। अनेन सत्वाभावः। ष्वष्कते। (पूर्वस्य हसादिः) पष्वष्के। पष्वष्काते। पष्वष्किरे। ष्वष्किषीष्ट। ष्वष्किता। लुङ्लकारे। अष्वष्किष्ट। अष्वष्किषाताम्। अष्वष्किषत॥ ऋज् गतौ स्थैर्ये स्पर्शे च। अकार आत्मनेपदार्थः। पूर्ववत् तिबादयः (उपधायाः)। अनेन गुणः। अर्जते। अर्जेत। अर्जताम् (स्वरादेः) आर्जत। ऋज् णप् इति स्थिते (द्विश्च। रः। नुगशाम्) अनेन पूर्वस्य नुमागमो भवति। (आभ्वोर्णादौ) 'स्वरहीनं' आनृजे। आनृजाते। आनृजिरे। अर्जिषीष्ट। अर्जिता (स्वरादेः) आर्जिष्ट। आर्जिषाताम्। आर्जिषत॥ ष्वञ्ज परिष्वङ्गे। (आदेः ष्णः स्नः) अनेन

सत्वम् ( अपि रञ्ज० ) । अनेनानुस्वारस्य लोपः । स्वजते । स्वजेत । स्वजताम् । अस्वजत । ( द्विश्च ) सस्वञ्जे । सस्वञ्जाते । सस्वञ्जिरे ।

( स्वजतेर्णादौ वा कित्त्वम् ) सस्वजे । सस्वजाते । सस्वजिरे । (चोः कुः । खसे चपा०) षत्वम् ( कपसंयोगे क्षः ) स्वङ्क्षीष्ट । स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्ष्यत । (झसात्) अस्वङ्क्त । अस्वङ्क्षाताम् । अस्वङ्क्षत । अस्वङ्क्थाः ॥ त्रपूष् लज्जायाम् । ऊकारषकारौ कार्यार्थौ । त्रपते । त्रपेत । त्रपताम् । अत्रपत । ( तॄफलभजत्रपाम् ) इत्येत्वपूर्वलोपौ । त्रेपे । त्रेपाते । त्रेपिरे । ( ऊदितो वा ) त्रपिषीष्ट–त्रप्सीष्ट । त्रपिता–त्रप्ता । त्रपिष्यते–त्रप्स्यते । अत्रपिष्यत । अत्रप्स्यत । अत्रपिष्ट । अत्रपिषाताम् । अत्रपिषत । अत्रप्त ॥ तिज् निशाने क्षमायां च । ( गुप्त्यः ) । तितिक्षते । तितिक्षेत । तितिक्षताम् । अतितिक्षत । तितिक्षाञ्चक्रे । तितिक्षाम्बभूव । तितिक्षामास । तितिक्षिषीष्ट । तितिक्षिता । तितिक्षिष्यते । अतितिक्षिष्यत–अतितिक्षिष्ट ॥ गुप गोपनकुत्सनयोः । जुगुप्सते । जुगुप्सेत । जुगुप्सताम् । अजुगुप्सत । जुगुप्साञ्चक्रे । जुगुप्साम्बभूव । जुगुप्सामास । जुगुप्सिषीष्ट । जुगुप्सिता । जुगुप्सिष्यते । अजुगुप्सिष्यत । अजुगुप्सिष्ट ॥ मान विचारणे । द्वित्वम् ( ह्रस्वः ) ।

सूत्रम् ( स्वजतेः० ) स्वजतेर्धातोर्णादौ वा कित्त्वं वाच्यम् । कित्त्वान्नो लोपः । अनेनैवानुस्वारस्य लोपो भवति । सस्वजे । सस्वजाते । सस्वजिरे । स्वञ् सीष्ट इति स्थिते । ( चो कुः ) अनेन जकारस्य गकारः ( खसे० ) अनेन गस्य कः । ( किलात्० ) अनेन सस्य ष. ( कपसं० ) स्वङ्क्षीष्ट ( चोः कुः । खसे० ) अनेन गस्य कः 'स्वरहीनम्०' स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्ष्यत । ( झसात् ) । अनेन सेर्लोपः । अस्वङ्क्त ॥ त्रपूष् लज्जायाम् । ऊकारषकारौ कार्यार्थौ । पूर्ववत्त त्रादयः । त्रपते । लिट्लकारे । त्रप णप् इति स्थिते ( तॄफलभजत्रपाम् ) अनेनैत्वपूर्वलोपौ भवतः । त्रेपे । त्रेपाते । त्रेपिरे । अस्य धातोरूदितो वानेनेड्विकल्पो भवति । त्रपिषीष्ट–त्रप्सीष्ट । लुङ्लकारे । अत्रपिष्ट । इडभावे । ( झसात्० ) अनेन सेर्लोपो भवति तदा । अत्रप्त । अत्रप्साताम् । अत्रप्सत ॥ तिज् निशाने क्षमायां च । निशानं तीक्ष्णीकर-

णम्। इति सिद्धांतकौमुद्यामुक्तम् ( गुप्भ्यः ) अनेन स्वार्थे सप्रत्ययो भवति धातोर्द्वित्वं च। तितिज् स अप् ते इति जाते। ( चो कुः ) अनेन जस्य गः। ( खसे चपा० )। अनेन गस्य कः ( किलात्० । कषसं० । अदे ) अनेनाकारस्य लोपो भवति 'स्वरहीनं' तितिक्षते। तितिक्षेत। तितिक्षताम्। अतितिक्षत। लिट्लकारे ( कासादिप्रत्ययादाम्० ) अनेनाम्प्रत्ययो भवति। तितिक्षाञ्चक्रे। अनेन व्याख्यानेन भ्वसोरनुप्रयोगे सति आत्मनेपदं न भवति। तेन तितिक्षाम्बभूव। तितिक्षामास। अन्यानि मूले सन्ति–तानि सुगमान्येव। लुङ्लकारे अतितिक्षिष्ट॥ गुप गोपनकुत्सनयोः ( गुप्भ्यः )। अनेनास्य धातोरपि सप्रत्ययो भवति। धातोर्द्वित्वं च। तदा गुगुप् स इति जाते। ( कुहोश्चुः ) अनेन गस्य जः। जुगुप् स इति जाते। (स धातुः) अनेन धातुत्वात् तआदयः प्रत्यया भवन्ति। तदा जुगुप्सते इति जाते। ( अप् कर्त्तरि। अदे )। जुगुप्सते। लिट्लकारे। जुगुप्सांचक्रे। जुगुप्सामास। जुगुप्सां बभूव। लुङ्लकारे अजुगुप्सिष्ट। अजुगुप्सिषाताम्। अजुगुप्सिषत। अन्येषां लकाराणां रूपाणि मूले सन्ति तस्मात् न लिखितानि॥ मान विचारणे। अकार इत् आत्मनेपदार्थः ( गुप्भ्यः ) अनेन स द्वित्वे भवतः। ( ह्रस्वः ) 'म मान् स' इति जाते।

( यः से ) पूर्वस्याकारस्येकारो भवति से परे।

सूत्रम् ( यः से ) इ १–१ अः ६–१ से ७–१ धातोः पूर्वस्य अकारस्य इकारो भवति सप्रत्यये परे। अनेनाकारस्य इकारः। तदा। मिमान् स इति जाते॥

( मानादीनां पूर्वस्य दीर्घो वक्तव्यः ) मीमांसते। मीमांसेत। मीमांसताम्। अमीमांसत। मीमांसाञ्चक्रे। मीमांसामास। मीमांसाम्बभूव। मीमांसिषीष्ट। मीमांसिता। मीमांसिष्यते। अमीमांसिष्यत–अमीमांसिष्ट। बध निन्दायाम् ( आदिजबानाम् ) बीभत्सते। बीभत्सेत। बीभत्सताम्। अबीभत्सत। बीभत्साञ्चक्रे। बीभत्सिषीष्ट। बीभत्सिता। बीभत्सिष्यते। अबीभत्सिष्यत। अबीभत्सिष्ट॥ पण व्यवहारे स्तुतौ च। पन च। ( आयः ) पणायते। पणायेत। पणायताम्। अपणायत। पणायाञ्चक्रे। आयाभावपक्षे। पेणे। पेणाते। पेणिरे। पणायिषीष्ट–पणिषीष्ट। पणायिता–पणिता। पणायिष्यते–पणिष्यते। अपणायिष्यत–अपणिष्यत। अपणायिष्ट–अपणिष्ट। एवं पन च॥ कमु कान्तौ।

सूत्रम् ( मानादीनाम्० ) मान् वध् दान् शान् इत्येतेषां धातूनां पूर्वस्य सप्रत्यये परे दीर्घो वक्तव्यः। अनेन पूर्वस्येकारस्य दीर्घः ( स धातु०। अप्कर्तरि । नश्चापदान्ते ) मीमांसते। लिट्लकारे। मीमांसाञ्चक्रे। लुङ्लकारे। अमीमांसिष्ट इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । पिष्टपेषणैः किं प्रयोजनम् ॥ वध निन्दायाम्। अकार उभयपदार्थ०( गुब्भ्यः ) ( आदिजवानाम् ) से । ( मानादीनाम् ) । ( स धातु० । अप्कर्त्तरि । अदे । खसेचपा० ) बीभत्सते । लिट्लकारे । बीभत्साञ्चक्रे । अन्यानि मूले सन्ति । लुङ्लकारे । अबीभत्सिष्ट ॥ पण व्यवहारे स्तुतौ च । (आय०)। अनेनास्य आय०प्रत्ययो भवति ।( स धातुः। अप्कर्त्तरि । सवर्णे दीर्घः सह ) पणायते। पणायेत । पणायताम्। अपणायत। पणायाचक्रे। आयप्रत्ययोऽनपि वा भवति। सूत्रोक्तत्वात्। आयाभावपक्षे। ( लोपः पचाम्० ) अनेनास्यैत्वपूर्वलोपौ। पेणे । पेणाते । पेणिरे। पणाय इट् सीष्ट इति जाते । ( यतः) 'स्वरहीनं०'( किलात् ) पणायिषीष्ट । आयाभावपक्षे पणिषीष्ट। पणायिता। पणिता। लुङ्लकारे। अपणायिष्ट। अपणिष्ट। एवं पनधातोरपि रूपाणि ज्ञेयानि ॥ कमु कान्तौ । कान्तिरत्र इच्छा । उकार इत् आत्मनेपदार्थः।

( कमेः स्वार्थे ञिः प्रत्ययो वक्तव्यः ) अनपि तु वा वृद्धिः । ( स धातुः ) अव्गुणौ । अयादेशः । कामयते । कामयेत।कामयताम् । अकामयत। कामयाञ्चक्रे-चकमे । कामयिषीष्ट-कमिषीष्ट। कामयिता-कमिता । कामयिष्यते--कमिष्यते । अकामयिष्यत-अकमिष्यत । अकामि तन् इति स्थिते ।

सू० ( कमेः ) कमेर्धातोः स्वार्थे ञि प्रत्ययो वक्तव्यः । अनपि तु वा वक्तव्य०। कम् ञि इति जाते । ( अत उपधायाः ) अनेन वृद्धिः । ( स धातुः ) अकारो ञित्कार्यार्थः। ( अप्कर्त्तरि । गुण । ए अ य् ) कामयते । कामयेत । कामयताम् । अकामयत । कामयाञ्चक्रे । ञेरभावपक्षे । चकमे । कामयिषीष्ट--कमिषीष्ट । कामयिता--कमिता । अन्यानि मूले सन्ति । लुङ्लकारे । अकामि तन् इति स्थिते ।

( ञेरङ् द्विश्च ) ञ्यन्ताद्धातोर्भूतेऽर्थे अङ्प्रत्ययो भवति दिबादौ परतः सेरपवादः धातोश्च द्वित्वम् ।

सू० ( ञेरङ् द्विश्च ) इदं सूत्रम् । ञेः ५--१ अङ् १--१ द्विः १--१ च १--१ चतुःपदं सूत्रम्। ञिप्रत्ययान्ताद्धातोर्भूतमात्रेऽतीते काले सिविषये दिबादौ परे अङ्प्रत्ययो भवति । सेरपवादो धातोः द्वित्वं भवति । चकाराद् श्रिस्रुद्रुभ्यो ञिप्रत्ययाभावेऽपि अङ् द्वित्वं च।

( ञेः ) इडागमवर्जिते अनपि विषये ञेर्लोपो भवति । ( ह्रस्वः ) ।

सू० ( ञेः ) ञेः ६-१ इडागमवर्जिते अनपि विषये ञिप्रत्ययस्य लोपो भवति । तदा । अ का काम इति स्थिते । ( ह्रस्वः । कुहोश्चुः ) तदा । अचकाम् तन् इति जाते

( अङि लघौ ह्रस्व उपधायाः ) अङि सत्युपधाया ह्रस्वो भवति पूर्वसंबन्धिनोऽकारस्येकारो भवति लघुनि धात्वक्षरे परे।

सूत्रम् ( अङि लघौ ह्रस्व उपधायाः ) अङि ७-१ लघौ ७-१ ह्रस्वः १-१ उपधायाः ६-१ अङि प्रत्यये सति धातोः लघौ परे पूर्वसंबन्धिनोऽकारस्य इकारो भवति । दीर्घंदिर्घातोरुपधाया ह्रस्वोऽपि भवति । अनेन अकारस्य इकारः । उपधाया ह्रस्वः तदा अचिकम् अङ् तन् । इति जाते ।

( लघोर्दीर्घः ) अङि सति हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि धात्वक्षरे परे । अचीकमत । अचीकमेताम् । अचीकमन्त । ञेरभावपक्षे ।

सूत्रम् ( लघोर्दीर्घः ) लघोः ६-१ । दीर्घः १-१ । अङि सति हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि धात्वक्षरे परे सति । अनेनेकारस्य दीर्घः अङ् तनोर्ङकारानकारलोपः। 'स्वरहीनं०' । अचीकमत । अचीकमेताम । अचीकमन्त । ञेरभावपक्षे ।

( कमेरङ्द्वित्वे वाच्ये ) ञ्यन्तत्वाभावान्न दीर्घकारो । अचकमत । अय गतौ । अयते, अयेत, अयताम्, आयत ।

सूत्रम् ( कमेः ) कमेर्धातोरङ्प्रत्ययद्वित्वे वाच्ये । अनेनाङ्प्रत्ययः । द्वित्वं च भवति । ञ्यन्तत्वाभावात् न दीर्घकारो । अचकमत । अचकमेताम् । अचकमन्त । इत्यादीनि रूपाणि ज्ञेयानि ॥अय गतौ । पूर्ववत् तबादयः प्रत्यया भवंति । अयते । यदायं धातुः परापूर्वः स्यात्तदा वक्ष्यमाणेन सूत्रेण लत्वं भवति ॥

( परापूर्व अयतावुपसर्गरेफस्य लत्वं वाच्यम् ) पलायते । पलायेत । पलायताम् । अपलायत । अयाञ्चक्रे । अयामास । अयाम्बभूव । अयिपीष्ट । अयिता । आयिष्यते । आयिष्यत । आयिष्ट । आयिषाताम् । आयिषत । आयिढ्वम्-आयिध्वम् ॥ दय दानगतिहिंसादानेषु । दयते । अयतिवत्प्रक्रिया ॥ घट

चेष्टायाम् । घटते । घटेत । घटताम् । अघटत । ( कुहोश्चुः ) जघटे । घटिषीष्ट । घटिता । घटिष्यते । अघटिष्यत । अघटिष्ट ॥ ईह चेष्टायाम् । ईहते । ईहेत । ईहताम् । ऐहत । ईहाञ्चक्रे । ईहिषीष्ट । ईहिता । ईहिष्यते । ऐहिष्यत । ऐहिष्ट ॥ काशृङ् दीप्तौ । काशते । काशेत । काशताम् । अकाशत ( विददरिद्रा० ) काशांचक्रे–चकाशे । काशिषीष्ट । काशिता । काशिष्यते । अकाशिष्यत । अकाशिष्ट ॥ कासृ शब्दकुत्सायाम् । कासते । कासेत । कासताम् । अकासत । कासाञ्चक्रे–चकासे । कासिषीष्ट । कासिता । कासिष्यते । अकासिष्यत । अकासिष्ट ॥ षेवृ सेवने । सत्वम् । सेवते । सेवेत । सेवताम् । असेवत । सिषेवे । सिषेवाते । सेविषीष्ट । सेविता । सेविष्यते । असेविष्यत । असेविष्ट ॥ गाङ् गतौ । सवर्णेदीर्घे कृते । आकारत्वादातोऽन्तोदनतः । गाते । गाते । गाते । गेत । गाताम् । अगात । जगे । जगाते । जगिरे । गासीष्ट । गाता । गास्यते । अगास्यत । अगास्त । अगासाताम् ॥ रुङ् गतौ भाषणे च । ( गुणः ) रवते । रवेत । रवताम् । अरवत । अरवेताम् । अनेकस्वरत्वादसंयोगपूर्वत्वाच्चोकारस्य वत्वे प्राप्ते ।

सूत्रम् ( परापूर्व अयतौ० ) अयतौ धातौ परे उपसर्गेरेफस्य लत्वं वाच्यम् । अनेन रेफारस्य लकारः । तदा पलायते इति रूपं सिद्धम् । लिट्लकारे । ( कासादिप्रत्ययादाम्० ) अनेनाम् प्रत्ययो भवति । अयाञ्चक्रे । ष्टे मूर्ध्ने ष्नः । अयिषीष्ट । लुङ्लकारे । आयिष्ट॥दय दानगतिहिंसादानेषु । अस्यापि धातोरयतिवत् रूपाणि ज्ञेयानि॥ घट चेष्टायाम् । पूर्ववत् तबादयः । घटते । लिट्लकारे । ( कुहोश्चुः ) । अनेन घस्य झः । जघटे । जघटाते । जघटिरे । घटिषीष्ट । लुङ्लकारे । अघटिष्ट । ईह चेष्टायाम् । दीर्घोपधत्वात न गुणः । ईहते । लुङ्लकारे । ( स्वरादेः ) ऐहत । लिट्लकारे । (कासादि०) अनेनास्याम । ईहाञ्चक्रे । ईहिषीष्ट । लुङ्लकारे । ऐहिष्ट । काशृङ् दीप्तौ । ऋकारङकारौ इतौ । काशते । लिट्लकारे । ( विददरिद्रा ) अनेनाम्य वाम्

प्रत्ययो भवति । काशाञ्चक्रे । आमभावे ( कुहोश्चुः । ह्रस्वः ) चकाशे । काशिषीष्ट । लुङ्लकारे । अकाशिष्ट । कासृ शब्दकुत्सायाम् । ऋकार इत् । पूर्ववत् तआदयः । कासते । लिट्लकारे । ( कासादिप्रत्ययादाम् ) अनेन नित्ये प्राप्ते ( विदाग्रिभ्रा० ) अनेन वा भवति । कासाञ्चक्रे । आमभावे । चकासे । कासिषीष्ट । कासिता । लुङ्लकारे । अकासिष्ट ॥ षेवृ सेवने । (आदेः ष्णः स्नः) अनेन सत्वम् । ऋकार इत् । सेवते । लिट्लकारे । सिषेवे । सिषेवाते । सिषेविरे । सेविषीष्ट । लुङ्लकारे । असेविष्ट ॥ गाङ् गतौ । ङकार आत्मनेपदार्थः । पूर्ववत् तआदयः ( सवर्णे० ) । गाते । गाते । आकारान्तत्वात् । (आतोऽन्तोदनतः) अनेन अन्ते इत्यस्य अते भवति । ( सवर्णे० ) गाते । गासे । गाथे । इत्यादीनि । ( अ इ ए ) गेत । गाताम् । गाताम् । गाताम् । अगात । अगाताम् । अगात । गा णप् इति स्थिते ।( द्विश्च । ह्रस्वः । कुहोश्चुः । आतोऽनपि ) जगे । जगाते । जगिरे । गासीष्ट । गाता । गास्यते । लुङ्लकारे । अगास्त । अगासाताम् । अगासत ॥ रुङ् गतौ भाषणे च । पूर्ववत् तआदयः । ( गुणः ) । रवते । लिट्लकारे । ( उवातोः ) । अनेनानेकस्वरासंयोगपूर्वत्वात् वकारे प्राप्ते ।

( नानप्योर्वः ) अनपि विषये धातोरुवर्णस्य वत्वं न भवति । तत उव् ( उवातोः ) । रुरुवे । रुरुवाते । रुरुविरे । रविषीष्ट । रविता । रविष्यते । अरविष्यत । अरविष्ट ॥ देङ् पालने । दयते । दयेत । दयताम् । अदयत ।

सूत्रम् ( नानप्योर्वः ) न (अ०) अनपि ७–१ ओः ६–१ वः १–१ तिबादिचतुष्टयस्याप्प्रत्ययो भवति नान्यविभक्तिगणस्य ततो विभक्तिचतुष्टयवर्जितो विभक्तिगणोऽनप् कथ्यते, ततोऽनप्संबन्धिनि स्वरे परे धातोरुवर्णस्य वत्वं न भवति । किंतु उवेव भवति । अनेनोव् भवति । रुरुवे । रुरुवाते । रुरुविरे । रविषीष्ट । रविता । लुङ्लकारे । अरविष्ट । अरविषाताम् । अरविषत ॥ देङ् पालने । ङकार आत्मनेपदार्थः । दयते । लिट्लकारे ।

( दयतेर्णादौ दिग्यादेशो द्वित्वाभावश्च वक्तव्यः ) दिग्ये । ( संध्यक्षराणामा० ) । दासीष्ट । दाता । दास्यते । अदास्यत ।

सूत्रम् ( दयतेः० ) दयतेर्धातोर्णादौ परे सति दिग्यादेशो भवति । द्वित्वाभावश्च वक्तव्यः । ( आतोऽनपि ) । दिग्ये । दिग्याते । दिग्यिरे । ( संध्यक्षराणामा० ) दासीष्ट । दाता । दास्यते । अदास्यत । अदासि तन् इति स्थिते ।

अपिदाधास्थामित्त्वं सेऽङित्त्वमात्मनेपदे वाच्यम् । ङित्वान्न गुणः ।

सूत्रम् ( अपिद्दाधास्थाम० ) अपिद्दाधास्थां धातूनां इत्वं सेर्डित्त्वं च आत्मनेपदे वाच्यम् । 'षष्ठीनिर्दि' ङित्त्वात् गुणाभावो भवति । तदा अदि सि तन् इति जाते ।

( लोपो ह्रस्वाज्झसे ) ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे । अदित । अदिषाताम् । अदिषत ॥ डीङ् विहायसा गतौ । डयते । डयेत । डयताम् । अडयत ( नुधातोः ) डिड्ये । डयिषीष्ट । डयिता । डयिष्यते । अडयिष्यत । अडयिष्ट ॥ दैङ् त्रैङ् पालने । दायते । दायेत । दायताम् । अदायत ।

सूत्रम् ( लोपो ह्रस्वाज्झसे ) लोपः १–१ ह्रस्वात् ५–१ झसे ७–१ ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे । अनेन सेर्लोपो भवति । अदित । अदिषाताम् । अदिषत ॥ डीङ् विहायसा गतौ । ङकारः सर्वत्रात्मनेपदार्थो ज्ञातव्यः । ( गुणः ) । डयते । डयेत । लिड्लकारे । नुधातोरनेन इय् भवति । डिड्ये । डिड्याते । डिड्यिरे । ( गुणः ) । डयिषीष्ट । अन्यानि मूले सन्ति । लुङ्लकारे । अडयिष्ट । अडयिषाताम् । अडयिषत ॥ दैङ् त्रैङ् पालने । पूर्ववत् तआदयः । ( ऐ आय् ) । दायते । त्रायते । लिड्लकारे ।

( दैङो णादौ दिग्यादेशो द्वित्वाभावश्च ) दिग्ये । दासीष्ट । ( अपिद्दाधास्थामि० । लोपो ह्रस्वाज्झसे ) अदित । तत्रे । अत्रास्त ॥ द्युतङ् द्योतने । ( उपधाया लघोः ) । द्योतते । द्योतेत । द्योतताम् । अद्योतत ।

सूत्रम्–( दैङः० ) दैङो धातोर्णादौ परे सति दिग्यादेशो द्वित्वाभावश्च भवति । ( आतोऽनपि ) दिग्ये । दिग्याते । दिग्यिरे । ( संध्यक्षराणा० ) । दासीष्ट । लुङ्लकारे । ( अपिद्दाधा० । लोपो ह्रस्वा० ) अदित । अदिषाताम् । अदिषत ॥ त्रैङ् धातोर्लिट्लकारे ( संध्यक्षराणामा० ) अनेनाकारः । ( द्विश्च । ह्रस्वः । पूर्वस्य० । आतोऽनपि ) अनेनाकारलोपः । तत्रे । तत्राते । तत्रिरे । अस्य धातोर्लुङ्लकारे ( संध्यक्षरा० ) । अत्रास्त । अत्रासाताम् । अत्रासत ॥ द्युतङ् द्योतने । अकार उच्चारणार्थः । ङकार आत्मनेपदार्थः ( उपधायाः ) अनेन गुणो भवत्यस्य । द्योतते । अन्यानि मूले सन्ति । द्युत् ण इति स्थिते । ( द्विश्च ) द्यु द्युत् ण इति जाते ।

( द्युतेः पूर्वस्य संप्रसारणं वक्तव्यं णादौ परे ) दिद्युते । द्योतिषीष्ट । द्योतिता । द्योतिष्यते । अद्योतिष्यत । अद्योतिष्ट ।

सूत्रम् ( द्युतेः० ) द्युतेर्धातोः पूर्वस्य संप्रसारणं वक्तव्यं णबादौ परे सति । अनेनास्य पूर्वस्य संप्रसारणम् 'स्वरहीनम्०' दिद्युते। दिद्युताते। दिद्युतिरे । द्योतिषीष्ट। द्योतिता। लुङ्ल्कारे। अद्योतिष्ट।

द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम् । ( लित्पुपादेर्ङः )। अद्युतत् ॥ वृतुङ् वर्तने। वर्तते। वर्तेत । वर्तन्ते। वर्तेत। वर्तताम् । अवर्तत । ववृते । वर्तिषीष्ट। वर्तिता । वर्तिष्यते । अवर्तिष्यत।

सूत्रम् ( द्युतादिभ्य० ) द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम्। अनेनास्य लुङि वा परस्मैपदं भवति । तदा ( लित्पुपादेर्ङः )। अनेन ङः। ङित्त्वात् गुणाभावः। अद्युतत् । अद्युतताम्। अद्युतन् ॥ वृतुङ् वर्तने । उकार उच्चारणार्थः । वर्त्तते । लिड्लकारे ( द्विश्च। रः। ववृत्ते ) वर्तिषीष्ट। वर्त्तिता। वर्त्तिष्यते। अवर्त्तिष्यत्।

( वृतादिभ्यः स्यप्स्योर्वा पं पेऽनिदत्वं च ) वृतु वृधु शृधु स्यन्दू कृपू एते वृतादयः। वर्त्स्यति। अवर्त्स्यत्। अवर्तिष्ट । परस्मैपदपक्षे ( लित्पुपादेर्ङः ) अवृतत् ॥ वृधुङ् वृद्धौ । वर्धते। वर्धेत। वर्धताम्। अवर्धत। ववृधे। वर्धिषीष्ट। वर्धिता। वर्धिष्यते। अवर्धिष्यत। वर्त्स्यति। अवर्त्स्यत् । अवर्धिष्ट। अवृधत् ॥ शृधुङ् पर्दने । शर्धते। शर्धेत। शर्धताम्। अशर्धत। शशृधे। शर्धिषीष्ट । शर्धिता । शर्धिष्यते । अशर्धिष्यत। अशर्धिष्ट। शर्त्स्यति। अशर्त्स्यत्। अशृधत् ॥ स्यन्दू प्रस्रवणे। स्यन्दते । स्यन्देत । स्यन्दताम् । अस्यन्दत । सस्यन्दे ऊदितो वा । स्यन्दिषीष्ट–स्यन्त्सीष्ट । स्यन्दिता–स्यन्ता । स्यन्दिष्यते–स्यन्त्स्यते। स्यन्त्स्यति। अस्यन्दिष्यत। अस्यन्त्स्यत । अस्यन्त्स्यत् । अस्यन्दिष्ट। अस्यन्त । पक्षे। अस्यदत् ॥ कृपू सामर्थ्ये । ( गुणः )।

सूत्रम् ( वृतादिभ्यः० ) वृतादिभ्यो धातुभ्यः स्यप्स्योः परतो वा पं परस्मैपदमनिट्त्वं च वाच्यम्। वृतादयस्तु मूले उक्ताः। (गुणः)। वर्त्स्यति। अवर्त्स्यत्।

लुङ्लकारे । अवर्तिष्ट । परस्मैपदपक्षे । ( लितुपादेर्ङः ) । अनेनास्य ङः । अवृतत् ॥ वृधुङ् । ( उपधाया लघोः ) । वर्द्धते । लिड्लकारे । ववृधे । वर्द्धिषीष्ट । अस्य धातोरपि पूर्वधातुवत् रूपाणि साध्यानि । शृधुङ् पर्दने । पर्दनं गुदरवः । शर्धते । अयमपि तद्वत् । न किंचिद्विशेषः ॥ स्यन्दू प्रस्रवणे । ऊकार इड्विकल्पार्थः । स्यन्दते । लिड्लकारे द्वित्वम् । (पूर्वस्य० ) सस्यन्दे । सस्यन्दाते । सस्यन्दिरे । अस्य धातोरूदितो वा । अनेनेड्विकल्पो भवति । स्यन्दिषीष्ट । इडभावपक्षे ( खसे चपा झसानाम् ) । अनेन दस्य तः । स्यन्त्सीष्ट । स्यन्दिता-स्यन्ता । स्यन्दिष्यते । इडभावपक्षे । (खसे०) स्यन्त्स्यते । अस्यन्दिष्यत-अस्यन्त्स्यत । अस्यन्दिष्ट । इडभावे अस्यन्त परस्मैपदपक्षे ।( लितुपादेर्ङः) (नो लोपः) । अनेन अनुस्वारस्य लोपो भवति । अस्यदत्॥कृपू सामर्थ्ये । पूर्ववत् तआदयः ( उपधायाः ) ।

**( कृपो रो लः ) कृपो रेफस्य लो भवति ऋकारस्य लकारो भवति । कल्पते । कल्पेत । कल्पताम् । अकल्पत । चक्लृपे। कल्पिपीष्ट । इडभावपक्षे ।**

सूत्रम् ( कृपो रोलः )। कृपः ६-१ रः ६-१ लः १-१ कृपो धातो रेफस्य लकारो भवति ऋकारस्य लकारो भवति । अनेन रस्य लः । कल्पते । लिड्लकारे(कृपो रो लः ) अनेन ऋकारस्य लृकारः । चक्लृपे। कल्पिपीष्ट । अस्यापि ऊदित्वादिड्विकल्पो भवति । तदा क्लृप्सीष्ट इति जाते । ( उपधाया लघोः ) अनेन गुणे प्राप्ते सति ।

**( सिस्योः ) उपधाया गुणो न भवति सिस्योरनिटोः परतः । क्लृप्सीष्ट । कल्पिता-कल्प्ता । कल्पिष्यते-कल्प्स्यते । कल्प्स्यति । अकल्पिष्यत-अकल्प्स्यत । अकल्प्स्यत् । अकल्पिष्ट । अक्लृप्त । अक्लृप्साताम् । अक्लृप्सत । अक्लृपत् । व्यथ दुःखसंचलनयोः। व्यथते। व्यथेत। व्यथताम्। अव्यथत।**

सूत्रम् ( सिस्योः ) सिश्च सीश्च सिस्यो तयोः सिस्योः ६-२ । सिस्योरनिटोः परत उपधाया गुणो न भवति । अनेन गुणाभावः । ( कृपो रो लः ) । क्लृप्सीष्ट । कल्पिता । कल्प्ता । कल्पिष्यते । कल्प्स्यते । अकल्पिष्यत । अकल्प्स्यत । परस्मैपदपक्षे । कल्प्स्यति । अकल्प्स्यत् । अकल्पिष्ट । (लितुपादेर्ङः । कृपो रो लः) अक्लृपत् । अक्लृपताम् । अक्लृपन् । समाप्तोऽयं धातुः । व्यथ दुःखभयचलनयोः। अकार आत्मनेपदार्थः । व्यथते ।

( व्यथतेर्णादौ पूर्वस्य संप्रसारणं वक्तव्यम् ) विव्यथे । व्यथिषीष्ट । व्यथिता । व्यथिष्यते । अव्यथिष्यत । अव्यथिष्ट ॥ रमु क्रीडायाम् । रमते । रमेत । रमताम् । अरमत ।

सूत्रम् ( व्यथतेर्धातोर्णादौ परे पूर्वस्य संप्रसारणं वक्तव्यम् ) । इदं मूले सूत्रमस्ति अनेनास्य धातोः संप्रसारणं भवति । विव्यथे । विव्यथाते । विव्यथिरे । व्यथिषीष्ट । व्यथिता । लुङ्लकारे । अव्यथिष्ट । रमु क्रीडायाम् । रमते । रमेत । रमताम् । अरमत ।

( व्याङ्पर्युपेभ्यो रमः पम् ) विरमति । आरमति । परिरमति । उपरमति । रेमे । रंसीष्ट । रन्ता । रंस्यते । अरंस्यत । अरंस्त । अरंसाताम् । अरंसत । विपूर्वः । ( आदन्तानाम् ) इतीद् सकौ । व्यरंसीत् । व्यरंसिष्टाम् ॥ ञित्वरा संभ्रमे । ञि आ इतौ । त्वरते । त्वरेत । त्वरताम् । अत्वरत । तत्वरे । त्वरिषीष्ट । त्वरिता । त्वरिष्यते । अत्वरिष्यत । अत्वरिष्ट । अत्वरिढ्वम्–अत्वरिध्वम् ॥ षह मर्षणे । सहते । सहेत । सहताम् । असहत । सेहे । सहिषीष्ट । सहिता । ( इषुसह० ) । इति वेट् ( होढः । तथोर्धः ) ष्टुत्वम् । ढलोपः ।

सूत्रम् ( व्याङ्पर्युपेभ्यः० ) । वि आङ् परि उप एभ्य उपसर्गेभ्यो रमधातोः पं परस्मैपदं भवति । विरमति । आरमति । परिरमति । उपरमति । लिड्लकारे । लोपः पचाम्० ) अनेनैत्वपूर्वलोपौ भवतः । रेमे । रेमाते । रेमिरे । ( नश्चापदान्ते झसे ) । अनेन मकारस्यानुस्वारो भवति । रंसीष्ट । रन्ता । लुङ्लकारे । अरंस्त । अरंसाताम् । अरंसत । यदायं धातुर्विपूर्वः स्यात्–तदात्मनेपदं भवति । ( आदन्तानाम्० ) अनेन परस्मैपदे सति इट्सकौ भवतः । व्यरम् म् इट् सि ईट् दिप् इति स्थिते । ( इट ईटि ) (सवर्णे० ) 'स्वरहीनम्' । ( नश्चापदान्ते । वावसाने ) व्यरंसीत् । व्यरंसिष्टाम् । व्यरंसिषुः । ञित्वरा संभ्रमे । ञि आ इतौ । पूर्ववत् तआदयः । त्वरते । लिड्लकारे ( द्विश्च । पूर्वस्य हसादिः शेषः ) तत्वरे । तत्वराते । तत्वरिरे । त्वरिषीष्ट । लुङ्लकारे अत्वरिष्ट । अत्वरिषाताम् । अत्वरिषत ॥ षह मर्षणे ॥( आदेः ष्णः स्नः ) अनेन सत्वम् । सहते । लिड्लकारे । ( लोपः पचाम् ) अनेनैत्वपूर्वलोपौ । सेहे । सेहाते । सेहिरे । सहिषीष्ट । सहिता । ( इषुसह० ) अनेनास्य वा इट् भवति । इडभावपक्षे सह ता इति स्थिते ( होढः ) अनेन हस्य ढः । ( तथोर्धः ) अनेन तस्य धः । ( ष्टुभिः ष्टुः । ढि ढो लोपो दीर्घश्च ) तदा सा ढा इति जाते ।

( सहिवहोरोदवर्णस्य ) सहिवहोरवर्णस्योकारादेशो भवति ढलोपनिमित्ते ढकारे परे । सोढा । सहिष्यते । असहिष्यत । असहिष्ट ।

॥ इति भ्वादिष्वात्मनेपदिनः ॥

सूत्रम् ( सहिवहोरोदवर्णस्य )। सहिश्च वह् च सहिवहौ तयोः सहिवहोः ६-२ ओत् १-१ अवर्णस्य ६-१ सहिवहोर्धात्वोरवर्णस्य ओकारो भवति ढलोपनिमित्ते ढकारे परे। अनेन ओकारः । सोढा । सोढारौ । सोढारः । सहिष्यते । असहिष्यत। असहिष्ट। असहिषाताम् । असहिषत ॥ ॥ इति भ्वादिगणस्यात्मनेपदिनः समाप्ताः ॥

अथोभयपदिनः॥ ॥ राजृ दीप्तौ । ऋकार ऋदित्कार्यार्थः। राजति । राजते । राजेत्। राजेत । राजतु । राजताम् । अराजत् । अराजत । रराज । फणादित्वादेत्वपूर्वलोपौ । रेजतुः-रराजतुः। रेजुः-रराजुः । रेजे । रराजे । राज्यात् । राजिषीष्ट । राजिता । राजिता । राजिष्यति । राजिष्यते।अराजिष्यत् । अराजिष्यत। अराजीत् । अराजिष्ट ॥ खन खनने । खनति । खनते। खनेत्। खनेत । खनतु । खनताम् । अखनत् । अखनत । चखान । ( गमां स्वरे ) । चख्नतुः । चख्नुः । चख्ने । खन्यात् ।

अथ भ्वादिगणस्योभयपदिनः कथ्यन्ते । राजृ दीप्तौ । उभयपदिनो धातोस्तिवादयस्त आदयश्च प्रत्यया भवन्ति।द्वयोः परयोः सतोरप् कर्त्तरि।अनेन अप् प्रत्ययो भवति। ऋकार ऋदित्कार्यार्थः । राजति । राजते । लिड्लकारे (फणादीनाम्) अनेनास्य वा एत्वपूर्वलोपौ। रराज । रेजतुः । रराजतुः । रेजिथ । रराजिथ । आत्मनेपदे । रेजे। एत्वपूर्वलोपाभावे । रराजे । राज्यात् । राजिषीष्ट । राजिता । राजिता । अन्यानि। सूत्रे सन्ति तानि सुगमानि पूर्वोक्तैरेव सूत्रैः सिद्धयन्ति । लुङ्लकारे । अराजीत्। अराजिष्टाम्। अराजिषु । अराजिष्ट । अराजिषाताम्। अराजिषत खन ॥ खनने। अकार उभयपदार्थं । खनति । खनते। लिट्लकारे। (अत उपधायाः) अनेन वृद्धिः । (कुहोश्चुः) चखान चखन अतुस् इति जाते ( गमां स्वरे ) अनेनोपधाया लोपो भवति ।( स्वरहीनं) चख्ने । खन्यात् ।

( जनखनसनां क्ङिति ये आकारो वा वक्तव्यः) खायात् । खनिषीष्ट । खनिता । खनिता । खनिष्यति । खनिष्यते । अखनि-

प्यत् । अखनिष्यत । अखानीत् । अखनीत् । अखनिष्ट ॥ हृञ् हरणे । हरति । हरते । हरेत् । हरेत । हरतु । हरताम् । अहरत । जहार । जह्रतुः । जह्रुः ।

सूत्रम् ( जनखनसनाम्० ) । जन खन सन एतेषां धातूनां क्ङिति यकारे परे आकारो वा वक्तव्यः । ( षष्ठीनिर्दि० ) खायात् । खनिषीष्ट । खनिता । खनिता । लुङ्लकारे ( हसादेः ) अनेनास्य वा वृद्धिः । अखानीत्–अखनीत् । अखनिष्ट । अखनिषाताम् । अखनिषत॥ हृञ् हरणे । अकार उभयपदार्थः ( गुणः ) । हरति । हरते । लिङ्लकारे । ( धातोर्नामिनः ) । अनेन वृद्धिः । ( कुहोश्चुः ) जहार । जह्रतुः ।

( ऋदन्तस्य थपो नेट् ) जहर्थ । जह्रे ।( यादादौ ) ह्रियात् ।

सूत्रम् ( ऋदन्तस्य ) ऋदन्तस्य धातोस्थप इट् न भवति । गुणः । जहर्थ । जह्रे । ( यादादौ ) । अनेन ऋकारस्य रिङादेशः । ह्रियात् । हृषीष्ट इति जाते । ( गुणः ) । अनेन गुणे प्राप्ते ।

( उः ) ऋकारस्य गुणो न भवति सिस्योरनिटोः परतः । हृषीष्ट । हर्ता । (हनृतः स्यपः) । हरिष्यति । हरिष्यते। अहरिष्यत् । अहरिष्यत । अहार्षीत् । ( लोपो ह्रस्वाज्झसे ) । अहृत। अहृषाताम् । अहृषत ॥ गुहू संवरणे ।

सूत्रम्–( उः ) उः ६–१ अनिटोः सिस्योः परतः ऋकारस्य गुणो न भवति (अनेन गुणनिषेधः) हृषीष्ट । ( गुणः ) हर्ता । (हनृतः स्यपः) अनेन स्यपि इड् भवति । (गुणः)। हरिष्यति , हरिष्यते । लुङ्लकारे । वृद्धिः । अहार्षीत् । ( लोपो ह्रस्वाज्झसे ) । अनेन सेर्लोपो भवति । अहृत । अहृषाताम् । अहृषत्॥ गुहू संवरणे । ऊकार इड्विकल्पार्थः। पूर्ववत् तिवादयस्तआदयश्च प्रत्यया भवन्ति ।

( गुहेरुपधाया ऊद्गुणहेतौ स्वरे ) गूहति गूहते । जुगूह । जुगुहतुः । जुगूहिथ–जुगोढ । जुगुहिषे–जुघुक्षे । जुगुहिध्वे–जुगुहिढ्वे–जुघूढ्वे–गूहिषीष्ट–घुक्षीष्ट । गूहिता–गोढा । गूहिष्यति । घोक्ष्यति ।

( गुहेः ) इदं सूत्रमस्ति । गुहेर्धातोरुपधाया ऊत् स्याद् गुणहेतौ स्वरे परे । अनेनास्योपधाया ऊत् । गूहति । गूहते । अन्यानि मूले सन्ति तानि सुगमान्येवानेनैव क्रमेण साध्यानि । लिङ्लकारे जुगूह । जुगुहतुः । जुगुहुः । जुगुहे । जुगूहिथ । (ऊदितो वा ) अनेनास्येड्विकल्पः । गुहेरिति सूत्रे 'स्वरादौ' इति वक्तव्यं तेन हलादौ गुणनि-

मित्ते प्रत्यये परे ऊत् न भवति किंतु गुणो भवति । जुगुह् थप् इति स्थिते गुण । जुगोह थप् इति जाते । ( होढः । तथोर्धः । ढिढो लोपो० ) जुगोढ । आत्मनेपदे । जुगुहे । जुगुहाते । जुगुहिरे (ऊदितो वा) जुगुहिषे । इडभावे जुगुह् से इति जाते ( हो ढः । आदिजबानाम् ) जुघुद् से इति जाते ( पढोः कः से ) अनेन ढस्य क । ( किलात्० । कषसंयोगे क्ष. ) जुघुक्षे । जुगूहिषे । इडभावे । ( होढः ) । ( झबे जबाः ) । जुघूढ्वे । गुह्यात् ( गुहेः ) ( सिसता० ) गूहिषीष्ट । इडभावे । ( होढः । आदिजबानाम् । पढोः कः से । किलात्० । कष०) घुक्षीष्ट । गूहिता । इडभावे ( गुणः उपधाया लघोः ) अनेन सूत्रेण भवति । ( होढः । तथोर्धः । ढिढो० ) । गोढा । आत्मनेपदे । गूहिता-गोढा । गूहिष्यति । इडभावे । ( उपधायाः । हो ढः । आदिजबानाम । पढोः कः से । किलात्० । कषसं० ) घोक्ष्यति । गूहिष्यते-घोक्ष्यते । अगूहिष्यत्-अघोक्ष्यत् । अगूहिष्यत । अघोक्ष्यत । लुङ्लकारे । अगूहीत् । इडभावे । ( हशषान्ता० ) अनेन सक्प्रत्ययो भवति । अघुक्षत् । आत्मनेपदे । अगूहिष्ट । इडभावे । अगुह सक् तन् इति स्थिते । ( होढः ) । ( आदिजबानाम् ) । अघुढ स् क् तन् इति जाते ।

( दुहदिहलिहगुहभ्यः सको लुग्वा वकारतकारयोराति )
अगूढ । अघुक्षत ।

सूत्रम् ( दुहदिहलिहगुहभ्यः० ) दुह् दिह् लिह् गुह् एभ्यो धातुभ्यः सको वा लुग् भवति वकारतकारयोराति आत्मने पदे धकारे परेऽपि भवति । अनेन सको वा लुक् (ढि ढो लोपो दीर्घश्च) अगूढ । लुगभावे अगूढ सक् तन् इति जाते ( पढोः कः से। किलात्० । कषसंयोगे क्षः ) अघुक्षत । अघुक्ष् आताम् इत्यत्र । ( आदाथ इः ) । अनेन आकारस्य इकारे प्राप्ते ।

(आति सकोऽकारलोपः स्वरे) अघुक्षाताम् । अघुक्षन्त । अगूढाः अघुक्षथाः। अघुक्षाथाम् । अगूढ्वम्-अघुक्षध्वम् । अघुक्षि-अगुह्वहि-अघुक्षावहि । अगुह्महि-अघुक्षामहि ॥दान आर्जवे (गुप्भ्यः) (यः से)(मानादीनां पूर्वस्य दीर्घो वक्तव्यः)दीदांसति । दीदांसते। दीदांसेत् । दीदांसेत । दीदांसतु । दीदांसताम् । अदीदांसत् । अदीदांसत । दीदांसाञ्चकार । दीदांसाञ्चक्रे । दीदांसामास । दीदांसाम्बभूव । दीदांस्यात्।दीदांसिषीष्ट । दीदांसिता २। दीदांसिष्यति । दीदांसिष्यते । अदीदांसिष्यत्-अदीदांसिष्यत ।

अदीदांसीत्–अदीदांसिष्ट॥शान तेजने। शीशांसति–शीशांसते। दानवत् ॥ भज सेवायाम् । भजति । भजते । भजेत् । भजेत । भजतु । भजताम् । अभजत् । अभजत । बभाज । ( तॄफल-भज० ) । इत्येत्वपूर्वलोपौ । भेजतुः । भेजुः । भेजिथ–बभक्थ । भेजे । भेजाते । भेजिरे । भज्यात् । भक्षीष्ट । भक्ता । भक्ता । भक्ष्यति । भक्ष्यते । अभक्ष्यत् । अभक्ष्यत । अभाक्षीत् ।अभाक्ताम् । अभाक्षुः । अभक्त । अभक्षाताम् । अभक्षत॥डुपचष् पाके । डुकारषकारौ कार्यार्थौ । पचति । पचते । पचेत् । पचेत । पचतु । पचताम् । अपचत् । अपचत । पपाच । पेचतुः । पेचुः । पेचे । पच्यात् । पक्षीष्ट । पक्ता । पक्ता।पक्ष्यति । पक्ष्यते। अपक्ष्यत् । अपक्ष्यत । अपाक्षीत् । अपक्त । अपक्षाताम् । अपक्षत॥अन्चु गतौ याचने च।आञ्चीत् ॥ व्यय गतौ। वव्यये । अव्ययीत् ॥ श्रिञ् सेवायाम् । (गुणः) । श्रयति । श्रयते । शिश्राय । शिश्रियतुः ।शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिता । श्रयिता । श्रयिष्यति । श्रयिष्यते । अश्रयिष्यत् । अश्रयिष्यत ।

सूत्रम्–(आति०) आति आत्मनेपदे सकः अकारस्य लोपो भवति स्वरे परे । अनेन अकारस्य लोपः । अघुक्षाताम् । अघुक्षत । अगूढाः। अघुक्षथाः। अघुक्षाथाम् । अगूढ्वम् । अघुक्षध्वम् । अघुक्षि । अगुह्वहि–अघुक्षावहि । अघुक्षामहि ॥ दान आर्जवे ( गुभ्यः । यः से । मानादीनाम् । स धातुः । नश्चापदान्ते ) दीदांसति । दीदांसते । अन्यानि मूले सन्ति । दीदांसाञ्चकार । दीदांसाञ्चक्रे । द्वे मूले स्तः । ( अस्यायतः ) दीदांस्यात् । दीदांसिषीष्ट । अन्यानि मूले सन्ति । तानि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति॥ शान तेजने । ( गुभ्यः ) शीशांसति । शीशांसते । दानवत् ॥ भज सेवायाम् । भजति । भजते । लिट्लकारे । ( अत उपधायाः ) बभाज । ( तॄफलभज० ) अनेनैत्वपूर्वलोपौ भवतः। भेजतुः। भेजे । भेजाते । ( चोः कुः । खसे०। षढोः कः से । क्लिलात्० । कपसं० ) भक्षीष्ट । भक्ता । लुङ्लकारे । ( सार्वानिटः ) अभाक्षीत् । ( झसात् ) । अभाक्ताम् । अभक्त । अभक्षाताम् ॥ डुपचष् पाके । डुकारषकारौ कार्यार्थौ । पचति । पचते । लिट्लकारे । ( लोपः पचाम्०। अत उपधायाः)। पपाच । पेचतुः । पेचे । पेचाते । पच्यात् । पच् सीष्ट इति स्थिते ( चोः कुः। क्लिलात्०। कपसं-

योगे क्षः)। पक्षीष्ट। ( चोः कुः ) पक्ता। लुट्लकारे। ( सावनिटः )। अपाक्षीत् ( झसात् ) अपाक्ताम्। आत्मनेपदे। अपक्त। अपक्षाताम्। अञ्चु गतौ याचने च। अञ्चति। अञ्चते। लिट्लकारे। आनञ्च। आनञ्चे।( नो लोपः) ॥ अच्यात्। अङ्क्षीष्ट। अङ्क्ता। लुङ्लकारे। आञ्चीत्। आङ्क्त ॥ श्रिञ् सेवायाम्। पूर्ववत् तिनादयस्तआदयश्च-( अप् कर्तरि। गुणः। ए अय् )। श्रयति। श्रयते। लिट्लकारे ( द्विश्च। पूर्वस्य। धातोर्नामिनः ) अनेन वृद्धिः। शिश्राय। (नुधातोः)। शिश्रियतुः। शिश्रिये। श्रीयात्। श्रयिषीष्ट। श्रयिता। अन्यानि मूले सन्ति। लुङ्लकारे।

( स्रुश्रिद्रुवां सेरङ् धातोर्द्वित्वं च) अशिश्रियत्। अशिश्रियत॥ त्विष् दीप्तौ। त्वेषति। त्वेषते। तित्वेष। तित्विषे। त्विष्यात्। त्विक्षीष्ट। त्वेष्टा। त्वेक्ष्यति। त्वेक्ष्यते। अत्वेक्ष्यत्। अत्वेक्ष्यत। ( हशपान्तात्सक् ) अत्विक्षत।

सूत्रम् ( स्रुश्रिद्रुवाम्० ) स्रु श्रि द्रु एतेषां धातूनां सेरङ् प्रत्ययो भवति धातोर्द्वित्वं च भवति। अशिश्रियत्। अशिश्रियत ॥ त्विष् दीप्तौ। ( उपधाया लघोः ) अनेन गुणः। त्वेषति। त्वेषते। अन्यानि सुगमानि। लिट्लकारे। ( उपधायाः। पूर्वस्य) तित्वेष। तित्विषतुः। आत्मनेपदे। तित्विषे। तित्विषाते। त्विष्यात्।( षढोः कः से ) त्विक्षीष्ट ( उपधायाः। ष्टुभिः ष्टुः ) त्वेष्टा। अन्यानि मूले सन्ति। लुङ्लकारे। ( हशपान्तात्सक् ) अनेन सक् प्रत्ययो भवति ( षढोः कः से। किलात्० कषसंयोगे क्षः ) अत्विक्षत्। अत्विक्षताम्। अत्विक्षन्। आत्मनेपदे। अत्विक्षत। अत्विक्ष आताम् इति जाते ( आदाय इः ) अनेन आकारस्य इकारे प्राप्ते।

( सस्यात्मनेपदे स्वरे टिलोपो वाच्यः ) अकारलोपे कृते ( आतोऽन्तोदनतः) अत्विक्षाताम्। अत्विक्षत ॥ यज देवपूजासंगतिकरणदानेषु। यजति। यजते। यजेत्। यजेत। यजतु। यजताम्। अयजत्। अयजत। ( णदो पूर्वस्य ) इयाज। ( यजां यवराणां य्वृतः संप्रसारणम् ) ईजतुः। ईजुः। इयजिथ-इयष्ठ। ईजे। इज्यात्। यक्षीष्ट। यष्टा। यष्टा। यक्ष्यति। यक्ष्यते। अयक्ष्यत्। अयक्ष्यत। अयाक्षीत्। अयाष्टाम्। अयाक्षुः। अयष्ट। अयक्षाताम्। अयक्षत। अयष्ठाः। अयक्षाथाम्।

सूत्रम् ( सस्य० ) सस्य आत्मनेपदे स्वरे परे सति टेर्लोपो वाच्यः। अनेन अकारस्य लोपः 'स्वरहीनं' अविक्षाताम् ( आतोऽन्तोऽनतः ) अविक्षत। समाप्तोऽयं धातुः। यज देवपूजासंगतिकरणदानेषु। यजति। यजते। अन्यानि मूले सन्ति। लिट्लकारे। यज् णप् इति स्थिते। ( द्विश्च। णवादौ पूर्वस्य ) अनेन संप्रसारणम्। ( अत उपधायाः)। इयाज। य यज् अतुस् इति जाते। ( णवादौ पूर्वस्य। यजां यवराणाम्। सवर्णे० ) ईजतुः। ईजुः। इयजिथ। ( अत्वतो नित्यानिटः,) अनेनास्य वा इड्भवति। इयज् थप् इति जाते। ( छशषराजादेः षः ) अनेन जस्य षः ( ष्टुभिः ष्टुः ) इयष्ठ आत्मनेपदे। द्वाभ्यां सूत्राभ्यां संप्रसारणं भवति। ईजे। ईजाते। ईजिरे। ( यजाम्० )। इज्यात्। ( छशषराजादेः षः। षढोः कः से। किलात्०। कपसंयोगे०) यक्षीष्ट। ( छशषराजादेः षः। ष्टुभिः ष्टुः ) यष्टा। अन्यानि लिखितानि सन्ति तस्मान्न लिखितानि मया। तानि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। लुङ् लकारे। ( सावनिटः ) अनेन वृद्धिः। अयाक्षीत्। ( झसात् ) अयाष्टाम्। अयाक्षुः। आत्मनेपदे। ( झसात् ) अनेन सेर्लोपः। ( ष्टुभिः ष्टुः ) अयष्ट। अयक्षाताम्। अयक्षत। अयष्ठाः। सध्वं इति जाते।

( ध्वे च सेर्लोपः ) षत्वम्। ( झवे जबाः )। ष्टुत्वम्। अयड्ढ्वम्। अयक्षि। अयक्ष्वहि। अयक्ष्महि॥ टुवप् बीजतन्तुसन्ताने। टु इत्। वपति। वपेत्। उवाप। ऊपतुः। ऊपुः। उवपिथ–उवप्थ। ऊपे। उप्यात्। वप्सीष्ट। वप्ता। वप्स्यति। वप्स्यते। अवप्स्यत्। अवप्स्यत। अवाप्सीत्। अवप्त॥ वह प्रापणे। वहति। वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ ( होढः। तथोर्धः ) ष्टुत्वम्। ढलोपः। ( सहिवहोरोदवर्णस्य )। उवोढ। उह्यात्। वक्षीष्ट। वोढा। वक्ष्यति। वक्ष्यते। अवक्ष्यत्। अवक्ष्यत। अवाक्षीत्। अवोढाम्। अवोढ। अवक्षाताम्। अवक्षत॥ वेञ् तन्तुसन्ताने। वयति। वयते।

( ध्वे च सेर्लोपः ) अनेन सेर्लोपः ( छशषराजादेः षः। षोढः। अनेन षस्य ढः। ष्टुत्वम्। अयड्ढ्वम्। टु वप् बीजतन्तुसन्ताने। टु इत्। वपति। वपते। लिट्लकारे। ( णवादौ० ) अनेन संप्रसारणम्। ( अत उपधायाः ) उवाप। द्वे संप्रसारणे भवतः अत्र। ( सवर्णे० ) ऊपतुः। ( अत्वतः )। उवपिथ। इडभावे। उवप्थ। ऊपे। ऊपाते

ऊपिरे ( यजाम० ) उप्यात् । वप्सीष्ट । वप्ता । अन्यानि मूले सन्ति । लुङ्लकारे । ( सावनिटः ) । अवाप्सीत् । ( झसात् ) अवाप्ताम् । अवाप्सुः । आत्मनेपदे । अवप्त । अवप्साताम् । अवप्सत ॥ वह् प्रापणे । वहति । वहते । लिट्लकारे ( णवादौ पूर्वस्य अत उपधायाः ) । उवाह । (यजाम्०) ऊहतुः । ऊहुः । उवहिथ । ( अत्वतः ) । उवह् थप् इति जाते । ( हो ढः ) । अनेन हस्य ढः । ( तथोर्धः ) अनेन थस्य धः । ष्टुत्वम् । ढलोपः । ( सहिवहोरोदवर्णस्य ) उवोढ । ऊहे । ऊहाते । ऊहिरे ( यजाम्० ) उह्यात् । ( होढः।तथोर्धः ) ष्टुत्वम् । ढलोपः ( सहिवहोरोदवर्णस्य ) वोढा । वोढा ।(ढोः कः से ) वक्ष्यति । वक्ष्यते । अन्यानि सन्ति मूले । लुङ्लकारे ( सावनिटः ) अवाक्षीत् । अवोढाम् । अवाक्षुः। अवोढ । अवक्षाताम् । अवक्षत ॥ वेञ् तन्तुसंताने । अकार उभयपदार्थः वयति । वयते । लिट्लकारे ।

## ( वेञो णादौ संप्रसारणाभावो वाच्यः ) ( सन्ध्यक्षराणामा ) ववौ । वादित्वान्नेत्वपूर्वलोपौ । ववतुः । ववुः । ववे ।

सूत्रम् ( वेञः० ) वेञो धातोर्णवादौ परे संप्रसारणाभावो वाच्यः । अनेनास्य संप्रसारणनिषेधो भवति (संध्यक्षराणामा । द्विश्च । आतो णप् डौ) ववौ (लोपः पचाम्) अनेनैत्वपूर्वलोपौ प्राप्तौ ( शसददवादि ) अनेन तन्निषेधः ( आतोऽनापि ) ववतुः । ववुः । आत्मनेपदे । ववे । ववाते । वविरे ।

## ( वेञो वय् णादौ वा वक्तव्यः ) उवाय ।

सूत्रम् ( वेञो धातोर्णवादौ परे वय् वाच्यः ) वय् णप् इति स्थिते ( द्विश्च । णवादौ पूर्वस्य । अत उपधायाः ) उवाय । वय अतुस् । इति स्थिते । णवादौ ।

## ( ग्रहां क्ङिति च ) ग्रहादीनां संप्रसारणं स्यात् किति ङिति च परे । इति संप्रसारणम् । यकारस्य संप्रसारणनिषेधः । ऊयतुः । ऊयुः । उवयिथः । ऊयथुः । ऊये।ऊयाते । ऊयिरे ।

सूत्रम्-(ग्रहां० ) ग्रहां ६-३ क्ङिति ७-१ च १-१ त्रिपदं० । ग्रह उपादाने । ज्या वयोहानौ । वेञ् तन्तुसंताने । ह्वेञ् स्पर्धायां शब्दे च । व्यध् ताडने । वश कान्तौ । व्यच व्यक्तीकरणे । भ्रच्छ ञीप्सायां । भ्रस्ज् पाके । व्रश्चू छेदने । इत्येतेषां सम्बन्धिनां यकारवकाररेफाणां किति ङिति च परे संप्रसारणं भवति । यकारस्य इकारः । वकारस्य उकारः । रेफस्य ऋकारः । लकारस्य लृकारः । ( संप्रसारणम् ) अनेन द्वितीयं संप्रसारणम् । यकारस्य संप्रसारणनिषेधो वाच्यः । अत्र । ऊयतुः।ऊयुः। उवयिथ । आत्मनेपदे । ऊये । ऊयाते । ऊयिरे ।

( वयो यस्य किति णादौ वो वा वक्तव्यः ) ऊवतुः। ऊवुः। ऊवे। ऊयात्। वासीष्ट। वाता। वाता। वास्यति। वास्यते। अवास्यत्। अवास्यत। अवासीत्। ( आदन्तानाम् ) इति इट्सकौ। अवासिष्टाम्। अवास्त॥ व्येञ् संवरणे। व्ययति। व्ययते।

सूत्रम्-( वयः० ) वयो यस्य किति,णादौ परे वकारो वा वक्तव्यः। तदा। उवाय। ऊवतुः। ऊवुः आत्मनेपदे ऊवे। ऊवाते ऊविरे। ( ग्रहां क्ङिति च ) ऊयात्। ( सन्ध्यक्षराणामा ) वासीष्ट। वाता। वाता। अन्यानि मूले सन्ति। लुङ्लकारे। ( आदन्तानाम् ) अवासीत्। अवासिष्टाम्। अवासिषुः। अवास्त। अवासाताम्। अवासत॥ व्येञ् संवरणे। व्ययति। व्ययते। लिट्लकारे।

( व्येञो णादौ नात्वम् ) विव्याय। विव्यतुः। विव्युः।

सूत्रम् ( व्येञः० ) व्येञो धातोर्णवादौ परे संध्यक्षराणामा अनेन सूत्रेण आत्वं न भवति व्येञ् णप् इति स्थिते। ( द्विश्च। णवादौ पूर्वस्य ) अनेन संप्रसारणं तदा। विव्ये णप् इति जाते। ( धातोर्नामिनः ) विव्याय। विव्यतुः। विव्युः।

( अत्यर्तिव्ययतीनां थपो नित्यमिट् ) विव्ययिथ। विव्ये। वीयात्। व्यासीष्ट। व्याता। व्याता। व्यास्यति। व्यास्यते। अव्यास्यत्। अव्यास्यत। अव्यासीत्।अव्यास्त। ह्वेञ् स्पर्धायां शब्दे च। ह्वयति। ह्वयते।

( अत्यर्ति० ) विव्ययिथ। विव्ये। वीयात्। ( सन्ध्यक्षराणामा ) व्यासीष्ट। व्याता। व्याता। अन्यानि मूले सन्ति। अव्यासीत्। अव्यास्त॥ ह्वेञ् स्पर्धायाम्। ह्वयति। ह्वयते। लिट्लकारे।

( अद्विरुक्तस्य ह्वयतेः संप्रसारणं वक्तव्यम्) जुहाव। जुहुवतुः। जुहुवुः। जुहविथ-जुहोथ। जुहुवे। जुहुवाते। जुहुविरे। हूयात्। ह्वासीष्ट। ह्वाता। ह्वाता। ह्वास्यति। ह्वास्यते। अह्वास्यत्। अह्वास्यत।

सूत्रम्-( अद्विरुक्तस्य० ) अद्विरुक्तस्य ह्वयतेर्धातोः संप्रसारणं वक्तव्यम् ( द्विश्च। धातोर्नामिनः ) जुहाव। जुहुवतुः। जुहुवुः। जुहविथ-जुहोथ। जुहुवे। जुहुवाते। जुहुविरे ( संप्रसारणम् ) हूयात्। ह्वासीष्ट। अन्यानि मूले सन्ति। लुङ्लकारे। अह्वासीत्।

( अस्यतिवक्तिख्यातिलिपिसिचिह्वयतीनां सेडों वा वाच्यः ) अह्वत । अह्वेताम् । अह्वन्त । अह्वास्त । अह्वासाताम् । अह्वासत ॥ ऋत जुगुप्सायां कृपायां च ।

सूत्रम् ( अस्यति वक्तिख्याति० ) अस्यति वक्ति ख्याति लिपि सिचि ह्वयति एतेषां धातूनां सेडों वा वाच्यः । ( आतोऽनपि ) अह्वत् । अह्वत । अह्वेताम् । अह्वन्त । अह्वास्त । ऋत जुगुप्सायां कृपायां च ।

( ऋतेरीयङ् स्वार्थेऽनपि तु वा ) ऋतीयते । ऋतीयाञ्चक्रे । आनर्त । ऋतीयिष्यते । आर्तीत् । आर्तीयिष्ट । इति भ्वादिपूभयपदिनः ॥ ॥ इत्यब्विकरणा भ्वादयो धातवः ॥

समाप्तोऽयं भ्वादिनामकः प्रथमो गणः ॥

सूत्रम् ( ऋतेः० ) ऋतेर्धातोरीयङ्प्रत्ययो भवति स्वार्थे । अनपि तु वा भवति । ऋतीयते । ऋतीयाञ्चक्रे । ईयङ्भावे । आनर्त । ऋतीयिष्यते । आर्तीत । आर्तीयिष्ट ॥ इति भ्वादिगणस्योभयपदिनः ॥ ॥ इत्यब्विकरणा भ्वादयो धातवः ॥

समाप्तोऽयंभ्वादिगणः ।

---

## अथ अदादिषु परस्मै पदिनः ।

इदानीं लुग्विकरणाददादेर्गणात्कर्तरि तिवादयो वर्ण्यन्ते ॥ अद् भक्षणे । अप् ।

इदानीं लुग्विकरणाददादेर्गणात् कर्तरि तिवादयो योज्यन्ते ॥ अद् भक्षणे । पूर्ववत् तिवादयः । ( अप्कर्तरि ) ।

( अदादेर्लुक् ) अदादेर्गणादुत्पन्नस्यापो लुग्भवति ( खसे चपा झसानाम् ) अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः । अद्यात् । अत्तु । अत्तात् । अत्ताम् । अदन्तु ।

सूत्रम् ( अदादेर्लुक् ) अदादेः ५-१ लुक् १-१ द्विपदं० । अदादेर्धातुगणादुत्पन्नो योऽप्प्रत्ययः तस्य लुग्भवति । अनेन सर्वत्राप्यो लुक् तत्र ( वर्त्तमाने तिप् तस् अन्ति, सिप् थस् ) इत्येतेषु ( खसे चपा० ) इति दस्य तकारः । अत्ति । अत्तः । अदन्ति अद्यात् । अत्तु । अत्तात् । अत्ताम् । अदन्तु । अद् हि इति स्थिते ।

( झसाद्धिर्हेः ) झसादुत्तरस्य हेर्धिर्भवति। अद्धि–अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम।

सूत्रम् ( झसाद्धिर्हेः ) झसात् ५–१ धिः १–१ हेः ६–१ झसादुत्तरस्य हि इति वचनस्य धिरित्यादेशो भवति। तातङ्डादेशे कृते तु न भवति 'स्वर०'। अद्धि अत्तात्। अत्तम्। अत्त। उत्तमपुरुषे सर्वत्र 'स्वर' अदानि। अदाव। अदाम। अनद्यतनेऽण् प्रत्ययलुकि कृते ( दिवादावट्०।स्वरादेः० ) इत्यडागमद्वये च कृते उभयत्रापि। ( स्व० )।

( अदो दिस्योरडागमो वक्तव्यः ) आदत्। आदः। जघास ( गमां स्वरे। खसे चपा। घसादेः षः ). क्षः। जक्षतुः। जक्षुः। जघसिथ। पक्षे। आद। आदतुः। आदुः। आदिथ। अद्यात्। अत्ता। अत्स्यति। आत्स्यत्।

सू०–( अदादिस्योरिति ) अदो धातोः परयोर्दिप् सिप् इत्येतयोः अडागमो भवति। अनेनाडागमः टित्त्वादादौ 'स्वर' ( वावसाने ) आदत्। तकारार्दो। ( खसे० )। आत्ताम्। आदन्। आदः, आत्तम, आत्त। आदम्। आद्व। आद्म। अद् णप् इति स्थिते।

( सिसयोः ) अनयोः परयोरदधातोर्घस्लआदेशो भवति।

सूत्रम ( सिसयोः ) सिसयोः परतः अदधातोर्घस्ल इत्यादेशो भवति। णवादौ वा भवति। लकारः लदित्कार्यार्थः। घस् णप् इति स्थिते ( द्विश्च। कुहोश्चुः। झपानां जबचपाः। अत उपधायाः) जघास। जघस् अतुस् इति स्थिते ( गमां स्वरे ) अनेनोपधाया लोपः ( खसे० ) अनेन घस्य कः ( घसादेः षः ) अनेन षत्वम्। ( कषसंयोगे०) जक्षतुः। जक्षुः। जघसिथ। पक्षे। आद। आदतुः। आदुः। अद्यात्। ( खसे० )। अत्ता। अन्यानि सन्ति मूले। लुङ्लकारे। ( सिसयोः )।

( लदित्त्वादङ् ) अघसत्। अघसताम्। अघसन्॥प्सा भक्षणे। प्साति। प्सातः। प्सान्ति। प्सायात्। प्सायाताम्। प्सायुः। प्सातु–प्सातात्। प्साताम्। प्सान्तु। अप्सात। अप्साताम्।

( लदित्त्वादङ् ) अघसत्। अघसताम्। अघसन्॥ प्सा भक्षणे। प्साति। प्सातः। प्सान्ति। अन्यानि मूले सन्ति तानि सुगमान्येव। लुङ्लकारे। अप्सात। अप्साताम्। अप्सा अन् इति स्थिते।

( आदन्तविद्द्विषामन उस् वा वक्तव्यः ) ( उस्यालोपः )। अप्सुः–अप्सान् । पप्सौ । पप्सतुः । पप्सुः । पप्सिथ-पप्साथ । प्सायात् । प्सेयात्–प्साता । प्सास्यति । अप्सास्यत् । ( आदन्तानाम् ) इतीट्सकौ । अप्सासीत् । अप्सासिष्टाम् ॥ मा माने । माति । मायात् । मातु । अमात् । अमाताम् । अमुः–अमान् । ममौ । ( दादेरे )। मेयात् । माता । मास्यति । अमास्यत् । अमासीत् ॥ या प्रापणे । याति । यायात् । यातु । अयात् । अयाताम् । अयुः ॥ अयान् । ययौ । यायात् । याता । यास्यति । अयास्यत् । अयासीत् ॥ वा गतिगन्धनयोः । वाति यातिवत् ॥ रा दाने । तद्वत् ॥ ला दानग्रहणयोः । लाति । ललौ । तद्वत्॥ द्रा कुत्सायां गतौ च । द्राति । दद्रौ । द्रायात्–द्रेयात् । द्राता द्रास्यति । अद्रास्यत् । अद्रासीत् ॥ ख्या प्रकथने । ख्याति । ख्यायात् । ख्यातु । अख्यात् । चख्यौ । ख्यायात्–ख्येयात् । ख्याता । ख्यास्यति । अख्यास्यत् । पुषादित्वात् ङः । ( आतोऽनपि ) अख्यत् ॥ पा रक्षणे । पाति । पायात् । पातु । अपात् । पपौ । पाता । पास्यति । अपास्यत् । अपासीत् ॥ भा दीप्तौ । भाति । बभौ । अभासीत् ॥ ष्णा शौचे । स्नाति । सस्नौ । स्नायात्–स्नेयात् । अस्नासीत् ॥ वश् कान्तौ । ( छशषराजादेः षः ) इति षत्वम् । ष्टुत्वम् । वष्टि ( ग्रहां क्ङिति च ) उष्टः । उशन्ति । षत्वम् । ( षढोः कः से ) क्षः । वक्षि । उष्ठः । उष्ठ । वश्मि । उश्वः । उश्मः । उश्यात् । उश्याताम् । उश्युः । वष्टु-उष्टात् । उष्टाम् । उशन्तु । ( झसाद्धिर्हेः । झबे जबाः ) ष्टुत्वम् । उड्ढि-उष्टात् । उष्टम् । उष्ट । वशानि । वशाव । वशाम ।

( आदन्तविद्द्विषाम० ) आदन्तः विद् द्विष् एतेषां धातूनाम् अन उस् वा वक्तव्यः । ( उस्यालोपः ) अप्सुः । अप्सात् ( द्विश्च । पूर्वस्य हमादिः । आतो णप्

डौ ) पप्सौ । पप्सतुः । ( अतः ) पप्सिथ । पप्साथ ( संयोगादेः० ) प्सायात् । प्सेयात्–प्साता । लुङ्लकारे ( आदन्तानाम् ) अप्सासीत् ॥ मा माने । माति । लिट्लकारे । ममौ । ( दादेः ) मेयात् । माता । ( आदन्तानाम् ) अमासीत् । अमासिष्ट । अमासिष्टाम् । अमासिषुः । समासोऽयम् ॥ या प्रापणे । याति । ययौ । अयासीत् ॥ वा गतिगन्धनयोः । वाति । अयं धातुर्यातिवत् ज्ञेयः । न कश्चित् विशेषः॥ रा दाने । राति । अयमपि तद्वत्॥ला दानग्रहणयोः। लाति । ललौ । अलासीत् ॥ द्रा कुत्सायां गतौ च । द्राति । ( रः ) । दद्रौ । ( संयोगादेः ) द्रायात्–द्रेयात् । अद्रासीत् ॥ ख्या प्रकथने। ख्याति ( कुहोश्चुः। झपानाम् ) चख्यौ (संयोगादेः ) ख्यायात् । ख्येयात् । अस्य धातोर्लुङ्लकारे । पुषादित्वात् ( लिट्पुषादेर्ङः। आतोऽनपि ) अनेनाकारस्य लोपः । अख्यत् । अख्यताम् । अख्यन् ॥ भा दीप्तौ । भाति । ( झपानां० ) बभौ । अभासीत् । अभासिष्टाम् । अभासिषुः । सुगमत्वात् धातूनाम् एतेषां व्याख्यानं न कृतम् ॥ वश कान्तौ । कान्तिरिच्छा । पूर्ववत् तिबादयः । ( अदादेर्लुक् ) अनेन सर्वत्र अपो लुग् भवति । वश् तिप् इति जाते ( छशप०) अनेन शस्य पः । ( ष्टुभिः ष्टुः ) । अनेन तस्य टः । वष्टि । वश तम् इति जाते । ( ग्रहां क्ङिति च ) । अनेन संप्रसारणम् । ( छशप० ) षुत्वम् । उष्टः । उशन्ति । वश सिप् इति स्थिते ( छशप०। षढोः कः से । किलात्०। कषसंयोगे क्षः ) वक्षि । उश्यात् । लोट्लकारे । वष्टु । वश हि इति जाते ( संप्रसारणम् । झसाद्धिर्हः ) शस्य षत्वम् । ( षो डः ) उड्ढि । उष्टात् । वशानि । वशाव । वशाम । वश् दिप् इति स्थिते । षत्वम् । वष् दिप् इति जाते । ( षो डः ) ।

( दिस्योर्हसात् ) हसादुत्तरयोर्दिप्सिपोर्लोपो भवति। षत्वम् । ( षो डः। वावसाने ) अवट्-अवड् । संप्रसारणम् । अडागमः। (उ ओ । ओ औ औ) औष्टाम् । औशन् । अवट्-अवड् । औष्टम् । औष्ट । अवशम् । औश्व । औश्म । उवाश । ऊशिव । ऊशिम ।उश्यात्। उश्यास्ताम्। उश्यासुः। वशिता । वशिष्यति। अवशिष्यत् । अवाशीत् ॥ हन् हिंसागत्योः । हन्ति ।

सूत्रम् ( दिस्योर्हसात् ) दिश्च सिश्च दिसी तयोः दिस्योः ६–२ हसात् १–१ हसादुत्तरौ यौ दिप्सिपौ तयोर्लोपो भवति । अनेनास्य वशो धातोर्दिस्योर्लोपो भवति । ( वावसाने ) अनेन टस्य टः । अवट्-अवड् । वश् ताम् इति स्थिते । ( ग्रहाक्ङिति च ) अनेन संप्रसारणम् । षत्वम् ष्टुत्वम् अडागम (उओ। ओ औ औ) औष्टाम् । औशन् । अन्यानि मूले सन्ति । वश् णप् इति स्थिते ( ङिश्च णबादौ पूर्वस्य अत

उपधायाः । उवाश ( ग्रहां क्किति० ) अनेन द्वितीयं संप्रसारणम् । ऊशतुः । ऊशुः । उवशिथ-संप्रसारणम ॥ उश्यात् । लुङ्लकारे । ( हसादेः ) अनेन वा वृद्धिः । अवाशीत् । अवशीत् । हन् हिंसागत्योः । पूर्व तिवादयः ( नश्चापदान्ते झसे ) अनेन नस्यानुस्वारः । हन्ति । हन् तस् इति स्थिते ।

( लोपस्त्वनुदात्ततनाम ) अनुदात्तानां तनादीनां च ञमस्य लोपो भवति किति ङिति झसे परे । तुशब्दात्कचिज्झसेऽपि क्यप्प्रत्ययादौ ञमस्य लोपः ।

रमिर्यमिनमी हन्तिरनुदात्ता गमिर्मनिः ।
तनुः क्षण् क्षिण् ऋणुक्तृण् वनुर्वमुस्तनादयः ॥

हतः । ( गमां स्वरे । हनो घ्ने ) घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । हन्यात् । हन्याताम् । हन्युः । हन्तु-हतात् । हताम् । घ्नन्तु ।

सूत्रम् ( लोपस्त्वनुदात्ततनाम ) लोप १-१ अनुदात्तश्च तनश्च अनुदात्ततनः । तेषामनुदात्ततनाम ६-३ अनुदात्तानां धातुपाठोक्तानामनिटां हन्-गम्-नम्-यम्यत्यादीनां तथा तनादीना तन् मन्-वन्-षण्-क्षिण्-क्षण्-तृण्-ऋणु-इत्यादीना धातूनां ञमस्य लोपो भवति किति ङिति च झसे परे । तुशब्दात्कचिदझसेऽपि क्यप्प्रत्ययादौ ञमस्य लोपो भवति । अनेन नकारस्य लोपः । हतः । हन् अन्ति इति स्थिते ( अप् कर्तरि । अदादेर्लुक् ) । अनेनापो लुग्भवति । हन् अन्ति । इति जाते (गमां स्वरे) अनेनोपधाया लोपः । हन् अन्ति इति जाते ( हनो घ्ने ) अनेन हस्य घः । 'स्वरहीनम' घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । हन्यात् । हन्याताम् । हन्युः । लोटलकारे । हन्तु ( तुह्योः० ) हतात् । हताम ( गमां स्वरे । हनोघ्ने )'स्वरहीनं' घ्नन्तु । हन् हि इति स्थिते ।

( जह्येधिशाधि ) हन्तेर्जहिशब्दोऽस्तेरेधिशब्दः।शास्तेः शाधिशब्दो निपात्यते हिविषये । जहि । हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम । अहत । अहनम् । अहन्व । अहन्म । ( हनो घ्ने ) वृद्धिः । जघान । जघ्नतुः । जघ्नुः ।

सूत्रम् ( जह्येधिशाधि ) जहिश्च एधिश्च शाधिश्च जह्येधिशाधि १-१ हिविषये हन इत्यस्य जहि, अस् इत्यस्य एधि, शास् इत्यस्य शाधि एते आदेशा भवन्ति । हिसहितानामेतेषां धातूना निपाता भवन्तीति ज्ञातव्यम् । अनेन हिसहितस्य हन्तेर्धातोरयमादेशः । जहि । हतात् । हतम् । हत । हनानि । हनाव । हनाम । हन् दिप् इति स्थिते । ( दिस्योर्हसात् ) अनेन दिपो लोपो भवति । ( दिवादावट्० ) अनेनाडागमः । अहन् । ( लोपस्त्वनुदात्ततनाम् ) अनेन नस्य लोपः । अहताम् । (गमां स्वरे । हनोघ्ने ) अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन् णप् इति स्थिते ( द्विश्च । पूर्वस्य हसादिः । कुहोश्चुः । हनोघ्ने । अत उपधायाः ) अनेन वृद्धिः ॥ जघान । हन् अतुस् इति स्थिते ( गमां स्वरे । हनो घ्ने ) जघ्नतुः । जघ्नुः। हन् थप् इति स्थिते । ( द्विश्च ) ।

**( द्विरुक्तस्य हन्तेस्थपि घत्वं वाच्यम् ) जघनिथ--जघन्थ । जघ्नथुः । जघ्न । जघान--जघन । जघ्निव । जघ्निम ।**

सूत्रम् ( द्विरुक्तस्य ) द्विरुक्तस्य हन्तेर्धातोस्थपि घत्वं वाच्यम् । अनेन घत्वम् । ( क्रादेः ) जघनिथ । ( अत्वतः । नश्चापदान्ते ) जघन्थ । जघ्न । अन्यानि मूले सन्ति हन् यात् इति स्थिते ।

**( हन्तेः स्याशीर्यादादौ वधादेशो वक्तव्यः ) वध्यात् । वध्यास्ताम् । वध्यासुः । हन्ता । हन्तारौ । हन्तारः । ( हनृतः स्यपः ) । हनिष्यति । हनिष्यतः । हनिष्यन्ति । अहनिष्यत् । अहनिष्यताम् । अहनिष्यन् ।**

सूत्रम् ( हन्तेः ) हन्तेर्धातोः स्याशीर्यादादौ परे सति वधादेशो वक्तव्यः । अनेन वधादेशः ( यतः ) वध्यात् । वध्यास्ताम् । वध्यासुः । लुट्लकारे ( नश्चापदान्ते ) हन्ता । हन्तारौ । हन्तारः ( हनृतः स्यपः ) अनेन स्यपि इट् भवति । हनिष्यति । अहनिष्यत् । हन् दिप् इति स्थिते ( भूते सिः ) 'हन् सि दिप्' इति जाते । अनेन वधादेशः । तदा वध् सि दिप् इति जाते ( यतः। सिसतासीस्यपाम्० । सेः। णित्पे) अनेन सेर्णित्वात् वृद्धौ प्राप्तायाम् ।

**( जनिवध्योर्न वृद्धिः ) वधादेशे कृते इट् । अवधीत् । अवधिष्टाम् । अवधिषुः । अवधीः । अवधिष्टम् । अवधिष्ट ॥ यु-मिश्रणे । ( गुणः ) ।**

सूत्रम् ( जनिवध्योः० ) जनिवध्योर्धात्वोर्वृद्धिर्न भवति अनेन वृद्धिनिषेधः ( इट ईटि ) अवधीत् । अवधिष्टाम् । अवधिषुः ॥ यु मिश्रणे । पूर्ववत्तिवादयः ( अदादेर्लुक् ) अनेन लुग् भवति । यु तिप् इति स्थित ।

( ओरौ ) उकारस्याद्विरुक्तस्य औकारादेशो भवति पिति त्स्मि अवादौ विषये । यौति । युतः ( नु धातोः ) युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयात् । यौतु-युतात् । युताम् । युवन्तु । युहि-युतात् । युतम् । युत । यवानि । यवाव । यवाम । अयौत् । अयुताम् । अयुवन् । अयौः । अयुतम् । अयुत । अयवम् । अयुव । अयुम ( धातोर्नामिनः ) युयाव । ( नानप्योर्वः ) युयुवतुः । युयुवुः । युयविथ । युयुवथुः । यूयात् । यविता । यविष्यति । अयविष्यत् । अयावीत् । अयाविष्टाम् । अयाविषुः ॥ तु गतिवृद्धिहिंसासु ।

सूत्रम् ( ओरौ ) ओः ६–१ औ १–१ अद्विरुक्तस्य उकारस्य ओकारादेशो भवति पिति त्स्मि परे । अवादौ विषये । अनेनोकारस्यौकारः । यौति । युतः ( नुधातोः ) युवन्ति । युयात् । यौतु । युतात् । युताम् । युवन्तु । युहि । युतात् । युतम् । युत । यवानि । यवाव । यवाम । अयौत् । अयुताम् । अयुवन् । अयौः । अयुतम् । अयुत । अयवम् । अयुव । अयुम । यु णप् । इति स्थिते ( द्विश्च । धातोर्नामिनः ) अनेन वृद्धि । युयाव । यु अतुम् इति स्थिते ( द्विश्च । नुधातोः । नानप्योर्वः ) युयुवतुः । युयुवुः । युयविथ ( ये ) यूयात् ( गुण । सिसतासीस्यपाम्० । ओ अव् ) यविता । लुङ्लकारे ( णित्पे । धातोर्नामिनः ) अयावीत् । अयाविष्टाम् । अयाविषुः ॥ तु गतिवृद्धिहिंसासु । पूर्ववत्तिवादयः ( अदादेर्लुक् । ओरौ ) तौति ।

( तुरुस्तुम्यो द्विरुक्तेभ्यो हसादीनां चतुर्णामीड् ) तौति-तवीति । तुतः–तुवीतः । तुवन्ति । तौषि–तवीषि । तुथः–तुवीथः । तुथ–तुवीथ । तौमि–तवीमि । तुयात्–तुवीयात् । तौतु–तवीतु । तुतात्–तुवीतात् । तुताम्–तुवीताम् । तुवन्तु । तुहि–तुवीहि । अतौत्–अतवीत् । तुताव । तोता । तोष्यति । अतोष्यत् । अतौषीत् ॥ रु शब्दे । रौति–रवीति । रुतः–रुवीतः । रुवन्ति । रौषि–रवीषि । रुयात्–रुवीयात् । रौतु–

रवीतु। रुतात्–रुवीतात्। अरौत्–अरवीत्। अरुताम्। अरुविताम्। अरुवन्। अरोः–अरवीः। रुराव। रुरुवतुः। रुरुवुः। रुरविथ। रूयात्। रविता। रविष्यति। अरविष्यत्। अरावीत्॥ दु गतौ। भौवादिकः। दवति। दुयात्। दवतु। अदवत्। दुदाव। दूयात्। दोता। दोष्यति। अदोष्यत्। अदौषीत्। अदौष्टाम्। अदौषुः॥ णु स्तुतौ (आदेः ष्णः स्नः) नौति नुतः। नुवन्ति। नुनाव। नूयात्। नविता। नविष्यति। अनविष्यत्। अनावीत्॥ टुक्षु शब्दे। टु इत्। क्षौति। क्षुतः। क्षुवन्ति। क्षुयात् क्षौतु। अक्षौत्। चुक्षाव। चुक्षुवतुः। चुक्षुवुः। क्षूयात्। क्षविता। क्षविष्यति। अक्षविष्यत्। अक्षावीत्॥ क्ष्णु तेजने। क्ष्णौति। क्ष्णुतः। क्ष्णुवन्ति। क्ष्णुयात्। क्ष्णौतु। अक्ष्णौत्। चुक्ष्णाव। क्ष्णूयात्। क्ष्णविता। क्ष्णविष्यति। अक्ष्णविष्यत्। अक्ष्णावीत्॥ ष्णु प्रस्रवणे। स्नौति। स्नुयात्। स्नौतु। अस्नौत्। सुस्नाव। स्नुयात्। स्नविता। स्नविष्यति। अस्नविष्यत्। अस्नावीत्॥ इण् गतौ। (गुणः)। एति। इतः।

सूत्रम् (तुरुस्तुभ्यः०) तु गतिवृद्धिहिंसासु॥ रु शब्दे। ष्टुञ् स्तुतौ। अद्विरुक्तेभ्य एभ्यो हसादीनां चतुर्णामीड् वा भवति (गुणः। ओ अव्) तवीति। तुतः (नुधातोः) तुवीतः। तुवन्ति। तुयात्–तुवीयात्। तुयाताम्–तुवीयाताम्। तुयुः–तुवीयुः। लोट्लकारे। तौतु–तवीतु। तुतात्–तुवीतात्। तुताम्–तुवीताम्। तुवन्तु। तुहि–तुवीहि। तुतात्–तुवीतात्। तुतम्–तुवीतम्। तुत–तुवीत। तवानि। तवाव। तवाम। लङ्लकारे। अतौत्–अतवीत्। अतुवीताम्। अतुवन्। अतौः–अतवीः। अतुतम्–अतुवीतम्। अतुत–अतुवीत। अतवम्। अतुव–अतुवीव। अतुम–अतुवीम। लिट्लकारे (द्विश्च। धातोर्नामिनः) अनेन वृद्धिः। तुताव। तुतु अतुस् इति जाते (नुधातोः नानप्योर्वः) आभ्यासुर् भवति। तुतुवतुः। तुतुवुः। तुतविथ। (ये) तूयात्। तोता। लुङ्लकारे (अनिटो नामिवतः) अनेन वृद्धिः। अतौषीत्। अतौष्टाम्। अतौषुः। अतौषीः। अतौष्टम्। अतौष्ट। अतौषम्। अतौष्व। अतौष्म॥ रु शब्दे। पूर्ववत्तिनादयः (अदादेर्लुक्) अनेन तिनादिचतुर्षु लकारेषु अपो लुग् भवति। अस्य धातोरपि रूपाणि तुधातुवत् ज्ञेयानि। (तुरुस्तुभ्यः०) अनेन सूत्रेण हसादीनां प्रत्ययानां

वा ईड् भवत्यस्य (ओरौ) अनेन अवादौ विषये। पितितिस्मिपरे उकारस्य औकारः। रौति-रवीति। रुयात्-रुवीयात्। रौतु-रवीतु। अरौत्-अरवीत्। लिड्लकारे। (धातोर्नामिनः) अनेन प्रथमपुरुषस्यैकवचने वृद्धिः। रुराव (नुधातोः) रुरुवतुः। (गुणः) रुरविथ। (ये) अनेन पूर्वस्य दीर्घः। रूयात् (गुणः) रविता। लुङ्लकारे। अरावीत्। अराविष्टाम्। अराविषुः॥ टुगतौ। अयं धातुर्भ्वादिकः। अप् कर्त्तरि। अनेनाप्प्रत्ययो भवति। तस्यादादेर्लुक्। अनेन सूत्रेण लुग् न भवति। भ्वादित्वात् (गुणः) द्रवति। अन्यानि मूले सन्ति तानि सुगमान्येवातो व्याख्यानस्यानावश्यकत्वम्। लिड्लकारे (धातोर्नामिनः) अनेन वृद्धिर्णित्प्रत्यये परे। दुद्राव। (नुधातोः) दुद्रुवतुः। (गुणः) दुद्रविथ। (ये)। अनेन दीर्घः। द्रूयात्। (गुणः) द्रोता। लुङ्लकारे। (अनिटो नामिवतः)। अनेन वृद्धिः। अद्रौषीत्। अद्रौष्टाम्। अद्रौषुः॥ णु स्तुतौ। (आदेः ष्णः स्नः) अनेन णस्य नः। (अप् कर्त्तरि। अदादेर्लुक्) अनेन तस्यापो लुग् भवति। (ओरौ) अनेनोकारस्यौकारः। नौति। लिड्लकारे। नुनाव। नुनुवतुः। नुनुवुः। (ये) अनेन दीर्घ। नूयात्। (गुणः)। नविता। लुङ्लकारे। (अनिटो नामिवतः)। अनावीत्॥ टुक्षु शब्दे। टु इत्। (अप् कर्तरि। अदादेर्लुक्)। ओरौ। क्षौति। क्षुतः। लिड्लकारे (द्विश्च। पूर्वस्य०। कुहोश्चुः। धातोर्नामिनः) चुक्षाव (नुधातोः) चुक्षुवतुः। (ये) अनेन पूर्वस्य दीर्घः। क्षूयात्। (सिसता०। गुणः। ओ अव्) क्षविता। अन्यानि मूले सन्ति। लुङ्लकारे। (णित्ये)। अनेन सेणित्त्वात् वृद्धिः। अक्षावीत्॥ क्ष्णु तेजने। अयमपि क्षुधातुवत् ज्ञातव्यः। क्ष्णौति। लिड्लकारे (द्विश्च। पूर्वस्य। कुहोश्चुः। धातोर्नामिनः) अनेन वृद्धिः। चुक्ष्णाव (नुधातोः) चुक्ष्णुवतुः (गुणः) चुक्ष्णविथ। (ये) क्ष्णूयात्। (गुणः। सिसता०) क्ष्णविता। लुङ्लकारे। (धातोर्नामिनः)। अनेन वृद्धिः। अक्ष्णावीत्। अक्ष्णाविष्टाम्। अक्ष्णाविषुः॥ ष्णु प्रस्रवणे। (आदेः ष्णः स्नः)। अनेन षस्य सः। पूर्ववत्। तिबादयः (अदादेर्लुक्। ओरौ) अनेन उकारस्यौकारः। स्नौति। लिड्लकारे। सुस्नाव। (नुधातोः) सुस्नुवतुः (गुणः) सुस्नविथ। (ये) स्नूयात् (गुणः। सिसता०। ओअव्) स्नविता। लुङ्लकारे। अस्नावीत्॥ इण् गतौ। णकार इण् इति सूत्रस्य विशेषणार्थः। पूर्ववत् तिबादयः (अदादेर्लुक्। गुणः) एति। इतः। इ अन्ति इति स्थिते।

(इणः क्ङिति स्वरे यो वक्तव्यः) यन्ति। एषि। इथः। इथ। एमि। इवः। इमः। इयात्। इयाताम्। इयुः। एतु-इतात्। इताम्। यन्तु। इहि-इतात्। इतम्। इत। अयानि। अयाव। अयाम। अडागमद्वयम्। ऐत्। ऐताम्। आयन्। ऐः। ऐतम्।

वा ईड् भवत्यस्य (ओरौ) अनेन अवादौ विषये। पितितिस्मिपरे उकारस्य औकारः। रौति-रवीति। रुयात्-रुवीयात्। रौतु-रवीतु। अरौत्-अरवीत्। लिट्लकारे। (धातोर्नामिनः) अनेन प्रथमपुरुषस्यैकवचने वृद्धिः। रुराव (नुधातोः) रुरुवतुः। (गुणः) रुरविथ। (ये) अनेन पूर्वस्य दीर्घः। रूयात् (गुणः) रविता। लुङ्लकारे। अरावीत्। अराविष्टाम्। अराविषुः॥ दुगतौ। अयं धातुर्भ्वादिकः। अप् कर्त्तरि। अनेनाप्प्रत्ययो भवति। तस्यादादेर्लुक्। अनेन सूत्रेण लुग् न भवति। भ्वादित्वात् (गुणः) दवति। अन्यानि मूले सन्ति तानि सुगमान्येवातो व्याख्यानस्यानावश्यकत्वम्। लिट्लकारे (धातोर्नामिनः) अनेन वृद्धिर्णित्प्रत्यये परे। दुदाव। (नुधातोः) दुदुवतुः। (गुणः) दुदविथ। (ये)। अनेन दीर्घः। दूयात्। (गुणः) दोता। लुङ्लकारे। (अनिटो नामिवतः)। अनेन वृद्धिः। अदौषीत्। अदौष्टाम्। अदौषुः॥ णु स्तुतौ। (आदेः ष्णः स्नः) अनेन णस्य नः। (अप् कर्तरि। अदादेर्लुक्) अनेन तस्यापो लुग् भवति। (ओरौ) अनेनोकारस्यौकारः। नौति। लिट्लकारे। नुनाव। नुनुवतुः। नुनुवुः। (ये) अनेन दीर्घ। नूयात्। (गुणः)। नविता। लुङ्लकारे। (अनिटो नामिवतः)। अनावीत्॥ टक्षु शब्दे। टु इत्। (अप् कर्तरि। अदादेर्लुक्)। ओरौ। क्षौति। क्षुतः। लिट्लकारे (द्विश्च। पूर्वस्य०। कुहोश्चुः। धातोर्नामिनः) चुक्षाव (नुधातोः) चुक्षुवतुः। (ये) अनेन पूर्वस्य दीर्घः। क्षूयात्। (सिसता०। गुणः। ओ अव्) क्षविता। अन्यानि मूले सन्ति। लुङ्लकारे। (णित्ये)। अनेन सेर्णित्वात् वृद्धिः। अक्षावीत्॥ क्ष्णु तेजने। अयमपि क्षुधातुवत् ज्ञातव्यः। क्ष्णौति। लिट्लकारे (द्विश्च। पूर्वस्य। कुहोश्चुः। धातोर्नामिनः) अनेन वृद्धिः। चुक्ष्णाव (नुधातोः) चुक्ष्णुवतुः (गुणः) चुक्ष्णविथ। (ये) क्ष्णूयात्। (गुणः। सिसता०) क्ष्णविता। लुङ्लकारे। (धातोर्नामिनः)। अनेन वृद्धिः। अक्ष्णावीत्। अक्ष्णाविष्टाम्। अक्ष्णाविषुः॥ ष्णु प्रस्रवणे। (आदेः ष्णः स्नः)। अनेन षस्य सः। पूर्ववत्। तिवादयः (अदादेर्लुक्। ओरौ) अनेन उकारस्यौकारः। स्नौति। लिट्लकारे। सुस्नाव। (नुधातोः) सुस्नुवतुः (गुणः) सुस्नविथ। (ये) स्नूयात् (गुणः। सिसता०। ओअव्) स्नविता। लुङ्लकारे। अस्नावीत्॥ इण् गतौ। णकार इण् इति सूत्रस्य विशेषणार्थः। पूर्ववत् तिवादयः (अदादेर्लुक्। गुणः) एति। इतः। इ अन्ति इति स्थिते।

(इणः क्ङिति स्वरे यो वक्तव्यः) यन्ति। एषि। इथः। इथ। एमि। इवः। इमः। इयात्। इयाताम्। इयुः। एतु-इतात्। इताम्। यन्तु। इहि-इतात्। इतम्। इत। अयानि। अयाव। अयाम। अडागमद्वयम्। ऐत्। ऐताम्। आयन्। ऐः। ऐतम्।

ऐत । आयम । ऐव । ऐम । द्वित्वम् वृद्धिः । पूर्वस्य इयादेशः । इयाय ।

सूत्रम् ( इणः० ) इणो धातोः क्ङिति स्वरे परे सति यकारो वक्तव्यः । अनेनेकारस्य यकारः 'स्वरहीनम्' यन्ति । एपि । अस्मिन् रूपे (किलात्०) अनेन षत्वं भवति । इथः । इथ । एमि । इवः । इमः । इयात् । ऐत् । इहि ( गुणः ) अयानि । लङ्लकारे ( गुणः) अडागमद्वयं भवति ( ए ऐ ऐ ) पुनः (ए ऐ ऐ)ऐत् ( अ इ ए । ए ऐ ऐ ) ऐताम्। अडागमद्वयम्-(सवर्णे० । अ इ ए) आयन् । ऐः। ऐतम् । ऐत । आयम् । इत्यत्र गुणो भवति । इ णप् इति स्थिते ( द्विश्च । धातोर्नामिनः । असवर्णे ) अनेन पूर्वस्य इय् । 'स्वरहीनं०' इयाम् । इ इ अतुस् इति जाते ( नुधातोः ) इय अतुस् इति जाते ।

( इणः किति णादौ पूर्वस्य दीर्घो वक्तव्यः ) ईयतुः । ईयुः । इययिथ-इयेथ । ईयथुः । ईय । इयाय-इयय । ईयिव । ईयिम। ( ये ) ईयात् । ईयास्ताम् । ईयासुः । एता । एष्यति । ऐष्यत् । ( दादेः पे )।

सूत्रम् ( इणः० ) इणो धातोः किति णादौ परे पूर्वस्य दीर्घो वक्तव्यः । अनेन इकारस्य दीर्घः । ईयतुः । ईयुः ( गुणः । असवर्णे । ऐ अय् । क्रादेर्णादेः ) । इययिथ । ( अत्वतः ) इयेथ । ईयथुः । ईय । इयाय ( णबुत्तमः । गुणः ) इयय । ईयिव । ईयिम ( ये ) अनेन पूर्वस्य दीर्घः । ईयात् । ( गुणः ) एता । अन्यानि मूले सन्ति।लङ्लकारे । अडागमद्वयम् । ऐष्यत् । लङ्लकारे इ सि दिप् इति जाते ( दादेः पे ) अनेन सेर्लोपो भवति । इ दिप् इति जाते ।

( इणिकोः सिलोपे गा वक्तव्यः ) अगात । अगाताम् । अगुः॥ इक् स्मरणे । इङिकावध्युपसर्गतो न व्यभिचरतः । अध्येति । अधीतः । अधियन्ति । अधीयात् । अध्येतु । अध्यैत् । अध्यैताम् । अध्यायन् । अधीयाय । अधीयात् । अध्येता । अध्येष्यति । अध्यैष्यत् । अध्यगात् । इण्वत् ॥ विद् ज्ञाने ( उपधाया लघोः ) वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः ।

सूत्रम् ( इणिकोः० ) इणिकोर्धात्वोः सिलोपे कृते सति गा इत्यादेशो वक्तव्यः । गुरुत्वात्सर्वस्यादेशः। ( दिवादावट् ) अगात् । अगाताम् । अगुः । अस्मिनरूपे

( आतोऽनपि ) अनेनाकारस्य लोपो भवति । अगाः । अगातम् । अगात । अगाम् ।
अगाव । अगाम॥ इक् स्मरणे । ककारे इणिकोरिति सूत्रस्य विशेषणार्थः॥ अधिपूर्वोऽयं नित्यम् । इङिकौ धातू अध्युपसर्गतो न व्यभिचरतः ( गुणः। इयं स्वरे ) अध्येति । ( सवर्णे दीर्घः ) अधीतः । अधियन्ति । इण्वदिग् इति वक्तव्यम् । अनेन इणो यानि कार्याणि भवन्ति तानि कार्याणि इकोऽपि भवन्ति । लिङ्लकारे अधीयाय । अधीयतुः । अध्येता । ( गुणः ) अध्येष्यति । लुङ्लकारे ( दादेः पे । इणिकोः ) अध्यगात् । अध्यगाताम् । ( आतोऽनपि ) अध्यगुः॥ विद् ज्ञाने । पूर्ववत् तिबादयः (अदादेर्लुक् । उपधायाः लघोः ) अनेन गुणः ( खसे चपा झसानाम् ) अनेन दस्य तः । वेत्ति । ( खसे चपाः ) इदं सूत्रं खसे परे सर्वत्र प्राप्नोति । वित्तः। विदन्ति । अन्यानि मूले सन्ति ।

(विदो नवानां त्यादीनां णवादिर्नवको वा) विद उत्तरेषां तिबादीनां नवानां णवादिर्नवको वा भवति । वेद। विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । विद्यात् । वेत्तु–वित्तात् । वित्ताम् । विदन्तु । (झसाद्धिर्हेः ) । विद्धि–वित्तात् । वित्तम् । वित्त । वेदानि । वेदाव । वेदाम । ( दिस्योर्हसात् ) अवेत्–अवेद् । अवित्ताम् । ( अन उस् वा ) । अविदन्–अविदुः ।

सूत्रम् (विदो नवानां त्यादीनां णवादिर्नवकोवा) विदः५–१ नवानां६–३ त्यादीनां ६–३ णवादिः १–१ नवकः१–१ वा अव्ययम् । पदपदं सूत्रं वर्त्तते ॥ विद ज्ञाने इत्यस्मात्परेषां तिबादीनां नवानां वचनानां णवादिर्नवकं वा भवति । अनेन तिबादीनां णवादयो भवन्ति । णप् अतुस् इत्यादीनि नव वचनानि वा भवन्ति तिबाद्यर्थे एव । तदा विद् णप् इति जाते ( द्विश्च ) अनेन द्वित्वे प्राप्ते यदादेश इति न्यायेन द्वित्वं न भवति किंतु । अप् कर्त्तरि । अनेनाप् प्रत्ययो भवति । तस्यादादेर्लुग् । अनेन लुग् भवति ( उपधाया लघोः ) अनेन गुणः । वेद । विदतुः । विदुः ( उपधायाः खसे० ) वेत्थ । अन्यान्यस्य लकारस्य रूपाणि मूले सन्ति । विद्यात् । विद्याताम् । लोट्लकारे । वेत्तु । मध्यमपुरुषस्यैकवचने । ( झसाद्धिर्हेः ) अनेन हस्य धः। 'स्वरहीनं०' विद्धि। अन्यानि सान्त । विद दिप् इति स्थिते-( उपधायाः० । दिस्योर्हसात् ) अनेन दिप्सिपोर्लोपः ( दिवादावट्० । वावसाने ) अवेत् । अवेद्–खसे० ( अवित्ताम् । ( आदन्ताविद्विषाम्० ) अनेन वा अन उस

भवति । अविदन् । अविदुः । अविद् सिप् इति जाते । ( दिस्योः० ) अनेन सिपो लोपः । 'अविद्' इति जाते । ( उपधायाः ) ।

( दः सः ) दकारस्य वा सकारो भवति सिविषये । अवेः– अवेत् । अवित्तम् । अवित्त । अवेदम् । अविद्व । अविद्म । विवेद । विविदतुः । विविदुः । विवेदिथ । पक्षे ।

सूत्रम् ( दः सः ) दः ६–१ सः १–१ दकारस्य सिविषये वा सकारो भवति । अनेन दस्य सः ( सोर्विसर्गः ) अवेः । सस्याभावे । अवेत् । अन्यानि सन्ति । लिट्लकारे । ( उपधायाः ) विवेद । विविदतुः । विवेदिथ । ( विद्दरिद्रा ) अनेनास्य वा आम्प्रत्ययः । आमि परे सति । ( उपधायाः ) अनेन गुणे प्राप्ते ।

( आमि विदेर्न गुणः ) विदाञ्चकार । विदामास । विदाम्बभूव । विद्यात् । विद्यास्ताम् । वेदिता । वेदिष्यति । अवेदिष्यत् अवेदीत् । अवेदिष्टाम् । अवेदिषुः ॥ अस् भुवि । अस्ति ।

सूत्रम् ( आमि० ) आमि परे सति विदेर्धातोर्गुणो न भवति । अनेन गुणनिषेधः । साधनं तु पूर्ववत् । विदाञ्चकार । विदामास । विदाम्बभूव । विद्यात् । विद्यास्ताम् । वेदिता । अन्यानि मूले सन्ति । लुङ्लकारे । ( उपधाया लवोः ) । अनेन गुणः । अन्यत्तु पूर्ववत् । अवेदीत् । अवेदिष्टाम् । अवेदिषुः॥ अस् भुवि । भू सत्तायाम् । अर्थादयं धातुः सत्तायां वर्तते इत्यर्थः । पूर्ववत् तिबादयः । ( अदादेर्लुक् ) अनेन लुक् । अस्ति । अस् तस् इति जाते ।

( नमसोऽस्य ) नम इत्येतस्य विकरणस्यास् भुवीति धातोश्चाकारस्य लोपो भवति ङिति परे । स्तः । सन्ति ।

सूत्रम् ( नमसोऽस्य ) नम् च अस् च नमस् तस्य नमसः ६–१ । अस्य ६–१ द्विपदं सूत्रम् । नम इत्येतस्य रुधादिगणोत्पन्नविकरणस्य अस् भुवि इति धातोश्च संबन्धिनोऽकारस्य ङिति विभक्तौ परतो लोपो भवति । अनेन अकारस्य लोपः । स्तः । ( नमसोऽस्य ) सन्ति अस् सिप् इति स्थिते ।

( सि सः ) अस्तेः सकारस्य लोपो भवति सकारे परे । सि स इत्यत्र अस्तेः सलोपः सकारमात्रे न तु पिति । तेन व्यतिसे । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । स्यात् । स्याताम् ।

स्युः । अस्तु-स्तात् । स्ताम् । सन्तु । ( ह्वोधिशाधि ) एधि-स्तात् । स्तम् । स्त । असानि । असाव । असाम ।

सूत्रम् ( सि सः ) अस्तेः सकारस्य लोपो भवति सकारे परे अनेन सकारस्य लोपे प्राप्ते सि सः इत्यत्र अस्तेः सलोपः सकारमात्रे न तु पित्येव । तेन 'व्यतिसे' इति रूपं सिद्धं भवति । अनेनात्र सलोपः । असि । अन्यानि मूले सन्ति ( नमसोऽस्य ) स्यात् । स्याताम् । स्युः । स्याः । स्यातम् । स्यात । स्याम् । स्याव । स्याम । अस्तु-स्तात् । स्ताम । सन्तु । ( ह्वोधिशाधि ) एधि । स्तात् । अन्यानि सन्ति । 'अस् दिप्' इति स्थिते ।

( अस्तेरीद् ) अस्तेः परयोर्दिस्योरीडागमो भवति । आसीत् ।

सूत्रम् ( अस्तेरीद् ) अस्तेः ६-१ ईद् १-१ अस्तेर्धातोः परयोर्दिप्सिपो-रीडागमो भवति । टित्वादादौ । ( दिवादावट् । स्वरादेः ) आसीत् । अस् ताम् इति जाते ।

( लोपागमयोर्मध्ये आगमविधिर्बलवान् ) आस्ताम् । आसन् । आसीः । आस्तम् । आस्त । आसम् । आस्व । आस्म ।

( लोपागमयोर्मध्ये आगमविधिर्बलवान् ) तेन प्रथममडागमद्वयं भवति । पश्चात् ( नमसोऽस्य ) अनेन अकारस्य लोपो भवति । आस्ताम् । आसन् । आसीः । अन्यानि सन्ति मूले ।

( अस्तेरनपि भू वक्तव्यः ) बभूव ॥ मृजूप् शुद्धौ ।

सूत्रम्-( अस्तेर्धातोरनपि भू वक्तव्यः ) गुरुत्वात् सर्वस्यादेशः । तेनास्य धातो रनपि भूधातुवत् रूपाणि ज्ञेयानि । बभूव । बभूवतुः । बभूवुः । इत्यादीनि ॥ मृ-जू शुद्धौ । ऊकारविकल्पार्थः । पूर्ववत् तिवादयः । ( अदादेर्लुक् ) । 'मृज् तिप्' इति जाते ।

( मृजेर्गुणनिमित्ते प्रत्यये परे वृद्धिर्वाच्या किति ङिति स्वरे वा) षत्वम् । ष्टुत्वम् ।

सूत्रम् ( मृजेः० ) मृजेर्धातोर्गुणनिमित्ते प्रत्यये परे वृद्धिर्भवति किति ङिति स्वरे वा भवति । अनेन वृद्धिः ( छशषराजादेः षः ) अनेन षत्वम् ( ष्टुभिः ष्टुः ) अत्र(संयो-गान्तस्य लोपः ) अनेन षकारस्य लोपे प्राप्ते ।

( रात्सस्य ) रेफादुत्तरस्य सस्यैव लोपः स्यान्न त्वन्यस्य । मार्ष्टि । मृष्टः । मृजन्ति-मार्जन्ति । मार्क्षि । मृष्ठः । मृष्ठ ।

मार्ज्मि । मृज्वः । मृज्मः । मृज्यात् । मार्ष्टु–मृष्टात् । मृष्टाम् । मृजन्तु–मार्जन्तु । मृड्ढि–मृष्टात् । मृष्टम् । मृष्ट । मार्जानि । मार्जाव । मार्जाम । अमार्ट्–अमार्ड्–अमृष्टाम् । अमृजन् । अमार्जन् । अमार्ट्–अमार्ड् । अमृष्टम् । अमृष्ट । अमार्जम् । अमृज्व । अमृज्म । ममार्ज । ममृजतुः–ममार्जतुः । ममृजुः–ममार्जुः । ममार्जिथ–ममार्ष्ठ । ममृजथुः–ममार्जथुः । मृज्यात् । मार्जिता–मार्ष्टा। मार्जिष्यति–मार्क्ष्यति । अमार्जिष्यत्–अमार्क्ष्यत् । अमार्जीत् । अमार्जिष्टाम् । अमार्जिषुः । अमार्क्षीत् । अमार्ष्टाम् । अमार्क्षुः॥ वच् परिभाषणे । वक्ति । वक्तः ।

सूत्रम् ( रात्सस्य ) रात् ५–१ सस्य ६–१ रेफादुत्तरस्य सकारस्यैव लोपो भवति नान्यस्य । अनेन षकारस्य लोपो न भवति । मार्ष्टि । मृष्टः । मृजन्ति।(मृजेः) अनेन वा वृद्धिः । मार्जन्ति । 'मृज सिप्' इति स्थिते ( मृजेः० । छशषराजादेः० । षढोः कः से । क्विलात्० । कषसंयोगे क्षः ) मार्क्षि । मृष्ठः । अन्यानि मूले सन्ति । मृज्यात्। मार्ष्टु–मृष्टात् । मृष्टाम् । मृजन्तु–मार्जन्तु । 'मृज् हि' इति स्थिते(झसाद्धिर्हः । छशष०। षोडः ) ष्टुत्वम् । मृड्ढि ।अन्यानि मूले सन्ति । लिट्लकारे मृजेः०) अनेन वृद्धिः । ममार्ज । ममृजतुः । ममृजुः । ममार्जिथ । ( ऊदितो वा ) अनेन इड्विकल्पे सति ( मृजेः० । छशष० ) ष्टुत्वम् । ममार्ष्ठ । ममृजथुः । ममृज । ममार्ज । ममार्ज । ममृजिव । ममृजिम । मृज्यात् । मृज्यास्ताम् । मृज्यासुः । अस्य धातोरूदित्त्वादिड् वा भवति ( मृजेः ) मार्जिता । इडभावे वृद्धिः ( छशष०) ष्टुत्वम् । मार्ष्टा । मार्जिष्यति । 'मृज् स्यप् तिप्' इति स्थिते ( मृजेः० । छशष० । षढोः कः से । क्विलात्० । कषसंयोगे क्षः ) मार्क्ष्यति । अमार्जिष्यत् । अमार्क्ष्यत् । अमार्जीत् । अमार्जिष्टाम् । अमार्जिषुः । इडभावे–अमार्क्षीत् ( झसात्० । छशष० ) ष्टुत्वम् । अमार्ष्टम् । अमार्क्षुः । अमार्क्षीः । अमार्ष्टम् । अमार्ष्ट । अमार्क्षम् । अमार्क्ष्व । अमार्क्ष्म । समाप्तोऽयं धातुः॥ वच परिभाषणे । पूर्ववत् तिबादयः ( जदादेर्लुक् । चोः कुः) अनेन चकारस्य ककारो भवति । वक्ति । वक्तः ।

(नहि वचिरन्तिपरः प्रयोक्तव्यः किन्तु वदन्तीत्युच्चारणीयम् )
वदन्ति । वक्षि । वक्थः । वक्थ । वच्मि । वच्वः । वच्मः । वच्यात् । वक्तु–वक्तात् । वक्ताम् । वग्धि–वक्तात् । वक्तम् ।

वक्त । अवक्-अवग् । अवक्ताम् । अवचन् । अवक्-अवग् । अवक्तम् । अवक्त । अवचम । अवच्व । अवच्म । ( णबादौ पूर्वस्य ) उवाच ( यजां यवराणां य्वृतः संप्रसारणम् ) ऊचतुः । ऊचुः । उवचिथ-उवक्थ । उच्यात् । वक्ता । वक्ष्यति । अवक्ष्यत् । इति ( अस्यातिवक्ति ) इति ।

सूत्रम् ( नहि वचिरन्तिपरः प्रयोक्तव्यः किंतु वदन्तीत्युच्चारणीयम् ) वदन्ति । 'वच् सिप्' इति स्थिते ( चोः कुः । किलात्० । कषसं० ) वक्षि ( चोः कुः ) वक्थः । वक्थ । अन्यानि मूले सन्ति । वच्यात् । वच्याताम् । वच्युः । वक्तु । वक्तात् ( नहि वचि० ) वदन्तु । 'वच् हि' इति स्थिते ( झसाद्धिर्द्धिः । चोः कुः । झवे जबाः ) वग्धि । लङ्लकारे ( चोः कुः । दिस्योर्हसात् ) अनेन सेर्लोपो भवति । ( वावसाने ) अवक्-अवग् । अन्यानि मूले सन्ति । ( द्विश्च । पूर्वस्य० । णबादौ पूर्वस्य ) अनेन संप्रसारणम् ( अंत उपधायाः ) उवाच ( यजां० ) अनेन द्वितीयं संप्रसारणम् ( सवर्णे० ) ऊचतुः । ऊचुः । उवचिथ ( अत्वतः । चोः कुः ) उवक्थ ( चोः कुः ) वक्ता ( चोः कुः । किलात्० । कषसंयोगे क्षः ) वक्ष्यति । अवक्ष्यत् । 'वच् सि दिप्' इति स्थिते । ( अस्यति वक्ति ) अनेन सेङो भवति । 'वच् दिप्' इति जाते ।

( ङे वचेरुमागमो वक्तव्यः ) ( उओ ) अवोचत् । अवोचताम् । अवोचन् ॥ रुदिर् अश्रुविमोचने ।

सूत्रम् ( ङे० ) ङप्रत्यये परे सति वचेर्धातोः उमागमो भवति । ( भिदन्त्यात्० । उओ । दिवादावट्० ) अवोचत् । अवोचताम् । अवोचन् ॥ रुदिर् अश्रुविमोचने । इर् अनुबन्धः ( इरितो वा ) इत्यस्य सूत्रस्य विशेषणार्थः । तिवादयः ( अदादेर्लुक् ) इत्येतत्सर्वं पूर्ववत् ( उपधाया लघोः ) अनेन गुणः ।

( रुदादेश्चतुर्णां ह्वसादेः ) रुदादेः परेषां तिवादिचतुर्णां मध्ये हकारवसादेः प्रत्ययस्येट् भवति ।

> रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।
> जक्षितिश्चैव विज्ञेयो रुदादिपञ्चको गणः ॥ १ ॥

रोदिति । रुदितः । रुदन्ति । रोदिषि । रुदिथः । रुदिथ । रोदिमि । रुदिवः । रुदिमः । रुद्यात् । रोदितु-रुदितात् । रुदिताम् ।

रुदन्तु । रुदिहि–रुदितात् । रुदितम् । रुदित । रोदानि । रोदाव । रोदाम ।

सूत्रम् ( रुदादेश्चतुर्णां ह्लसादेः ) रुदादेः ५–१ चतुर्णाम् ६–३ ह् च वस् च ह्लसौ तौ आदी यस्य स ह्लसादिः तस्य ह्लसादेः ६–१ त्रिपदं सूत्रम् । रुदादेः परस्य चतुर्णां तिबादीनां संबन्धिनो हकारादेर्वस्प्रत्याहारादेश्च प्रत्ययस्य इडागमो भवति । टित्वादादौ । अनेन स्वरादिरहिते प्रत्यये परे इडागमो भवति । रुदादयस्तु मूले श्लोकेनोक्ताः । रोदिति । रुदितः । रुदन्ति । अन्यानि मूले सन्ति । रुद्यात् । रुद्याताम् । रोदितु । रुदिहि । लङ्लकारे ॥

( रुदादेर्दिस्योरीडटौ च वक्तव्यौ ) अरोदीत्–अरोदत् । रुरोद । रुरुदतुः। रुद्यात् । रोदिता। रोदिष्यति। अरोदिष्यत् । अरोदीत् ( इरितो वा ) अरुदत् ॥ ञिष्वप् शये । ञि इत् । स्वपिति । स्वप्यात्। स्वपितु–स्वपितात् । अस्वपीत्–अस्वपत् । संप्रसारणम् । सुष्वाप । सुषुपतुः। सुषुपुः । सुष्वपिथ-सुष्वप्थ । सुप्यात्। स्वप्ता । स्वप्स्यति । अस्वप्स्यत् । अस्वाप्सीत् । अस्वाप्ताम् । अस्वाप्सुः ॥ श्वस् प्राणने । श्वसिति । श्वस्यात् । श्वसितु । अश्वसीत् । अश्वसत् । अश्वसिताम् । अश्वसन् । शश्वास । शश्वसतुः । शश्वसुः । श्वस्यात् । श्वसिता । श्वसिष्यति । अश्वसिष्यत् ( ह्म्यन्तक्षणेति वृद्ध्यभावः ) अश्वसीत् ॥ अन प्राणने ।

सूत्रम् (रुदादेः०) रुदादेर्धातोः परयोर्दिप्सिपोरीडटौ च वक्तव्यौ । इडपवादोऽयम् । अरोदीत् । अरोदत् ( उपधायाः) रुरोद । रुरुदतुः। रुरोदिथ । रुद्यात् । रुद्यास्ताम् । रुद्यासुः । रोदिता । अन्यानि मूले सन्ति । अरोदीत् ( इरितो वा ) अनेनास्य वाङ्प्रत्ययो भवति । अरुदत् । अरुदताम् । अरुदन् । अत्र ङित्वात् गुणाभावः॥ ञिष्वप् शयने । पूर्ववत् सर्वं भवति । ञि इत् ( आदेः ष्णः स्नः ) अनेन सत्वम् । ( रुदादेश्चतुर्णाम् ) अनेनास्यापि इट् । स्वपिति । लङ्लकारे ( रुदादेर्दिस्योः० ) अस्वपीत् । अस्वपत् । लिट्लकारे ( द्विश्च । णबादौ पूर्वस्य ) अनेन संप्रसारणम् । ( क्लिलात्०। अत उपधायाः) सुष्वाप ( यजां०) अनेन द्वितीयं संप्रसारणम् । सुषुपतुः।( अत्वतः) सुष्वपिथ । सुष्वप्थ । संप्रसारणम्।सुप्यात्। सुप्यास्ताम् । स्वप्ता । लृङ्लकारे (सार्व-

निटः ) अनेन नित्यं वृद्धिः । अस्वाप्सीत् । झसात् । अनेन सेर्लोपः । अस्वाप्ताम् । अस्वाप्सुः । श्वस् प्राणने । अयमपि पूर्ववत् । श्वसिति । लङ्लकारे दिप्सिपोरीडटौ भवतः । अश्वसीत् । अश्वसत् । लिट्लकारे ( द्विश्च । पूर्वस्य० । अत उपधायाः ) अनेन वृद्धिः । शश्वास । शश्वसतुः । शश्वसिथ ( अत्वतः ) शश्वथ । श्वस्यात् । श्वसिता । अन्येषां रूपाणि मूले सन्ति । लुङ्लकारे ( ह्यन्तक्षण० ) अनेन वृद्ध्यभावः । अश्वसीत् । अश्वसिष्टाम् । अश्वसिषुः ॥ अन प्राणने । पूर्ववत्सर्वम् । अनिति । यदायं धातुः प्रपूर्वस्तदा ।

( अनिति ) प्रपूर्वः । उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम् । प्राणिति । अन्यात् । अनितु । आनीत् । आनत् । आन । आनतुः । आनुः । अन्यात् । अनिष्यति । आनिष्यत् । आनीत् । आनिष्टाम् । आनिषुः ॥ जक्ष भक्षहसनयोः । जक्षिति । जक्षितः ।

सूत्रम् ( अनिति ) उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम् । अनेन नकारस्यास्य णकारो भवति ( सवर्णे० ) प्राणिति । लङ्लकारे । रुदादेः ( स्वरादेः ) आनीत्–आनत् । लिट्लकारे ( द्विश्च । सवर्णे० ) आन । आनतुः । आनुः । अन्यात् । अन्यास्ताम् । अन्यासुः । अनिता । अन्यानि मूले सन्ति । लुङ्लकारे । स्वरादेः परः । अनेन द्वितीयोऽडागमो भवति । आनीत् । आनिष्टाम् । आनिषुः ॥ जक्ष भक्षहसनयोः । पूर्ववत् सर्वं भवति । जक्षिति । जक्षितः । जक्ष् अन्ति इति स्थिते ।

( जक्षादेरन्तोऽदन उस् ) जक्षजागृदरिद्राशास्चकासृभ्यः परस्य अन्त अत् अन उस् भवति । जक्षति । जक्षिषि । जक्ष्यात् । जक्षितु । अजक्षीत्–अजक्षत् । जजक्ष । जक्ष्यात् । जक्षिता । जक्षिष्यति-अजक्षिष्यत् । अजक्षीत् ॥ जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । जागर्षि । जागृयात् । जागर्तु–जागृतात् । जागृताम् । जाग्रतु । जागृहि–जागृतात् । जागृतम् । जागृत । जागराणि । जागराव । जागराम ( गुणः । दिस्योर्हसात् । सोर्विसर्गः ) अजागः । अजागृताम् ।

सूत्रम् ( जक्षादेरन्तोदन उस् ) जक्षादेः ५–१ अन्तः ६–१ अत् १–१ अनः ६–१ उस् १–१ पञ्चपदं सूत्रम् । जक्षजागृदरिद्राशास्चकासृभ्यः परस्य अन्तः अत्

भवति अन् उस् भवति । जक्षादयः केनचिदाचार्येण गणिताः श्लोकेन "जक्षि जागृ दरिद्राति चकास्ति शास्तिरेव च । दीधीङ् वेवीङ् च विज्ञेयो जक्षादिः सप्तको गणः ॥" अनेन अन्ति इत्यस्य अतिः । जक्षति । जक्ष्यात् । जक्षितु-जक्षितात् । जक्षिताम् ( जक्षादेः० ) जक्षतु । जक्षिहि ( रुदादेर्दिस्योः० ) अजक्षीत्-अजक्षत् । अजक्षिताम् । अजक्षुः । लिड्लकारे ( द्विश्च । पूर्वस्य हसादिः शेषः ) जजक्ष । जजक्षतुः । जजक्षुः । जजक्षिथ । जक्ष्यात् । जक्ष्यास्ताम् । जक्षिता । लुङ्लकारे । अजक्षीत् । अजक्षिष्टाम् । अजक्षिषुः ॥ जागृ निद्राक्षये । पूर्ववत् तिबादयः ( अदादेर्लुक् । गुणः ) अनेन गुणो भवति । जागर्ति । जागृतः । ( ऋरम् । जक्षादेः० ) जाग्रति । जागर्षि । अत्र ( किलात्० ) अनेन षत्वम् । जागृथः । जागृथ । जागर्मि । जागृवः । जागृमः । जागृयात् । जागृयाताम् । जागृयुः । जागर्तु । अन्यानि मूले सन्ति । जागृ दिप् इति स्थिते । गुणः । ( दिस्योर्हसात् ) अनेन दिपो लोपो भवति । ( स्रोर्विसर्गः।दिवादावट ) अजागः । अजागृताम् । जागृ अन् इति स्थिते ( जक्षादेः० ) अनेन अन उस् ।

( उसि जागर्तेर्धातोर्गुणो वक्तव्यः ) अजागरुः । अजागः । अजागृतम् । अजागृत । अजागरम् । अजागृव । अजागृम । जजागार ।

सूत्रम् ( उसि० ) उसि परे सति जागर्तेर्धातोर्गुणो वक्तव्यः । अनेन गुणः । अजागरुः । अजागः । अजागृतम् । अजागृत । अन्यानि सन्ति मूले । लिड्लकारे ( द्विश्च । सस्वरादिः । ह्रस्वः । धातोर्नामिनः ) अनेन वृद्धिः । जजागार ।

( जागर्तेः किति गुणो वक्तव्यः ) जजागरतुः । जजागरुः । जजागरिथ । जजागरथुः । जजागर । जजागार-जजागर । जजागरिव । जजागरिम ( विद्० ) इति पक्षे आम् । जागराञ्चकार । जागरामास । जागराम्बभूव । जागर्यात् । जागरिता । जागरिष्यति । अजागरिष्यत् । ( ह्यन्तक्षण० ) इति न वृद्धिः । अजागरीत् ॥ दरिद्रा दुर्गतौ । दरिद्राति ।

सूत्रम्-( जागर्तेः० ) जागर्तेर्धातोः किति प्रत्यये परे गुणो वक्तव्यः । अनेन गुणः । जजागरतुः । अन्यानि मूले सन्ति । ( विद् दरिद्रा ) अनेन सूत्रेणास्य वा आम् प्रत्ययो भवति । गुणः । जागराञ्चकार । अन्ये द्वे मूले स्तः । ( जागर्तेः ) अनेन ( गुणः ) जागर्यात् । जागर्यास्ताम् । जागर्यासुः ( गुणः ) जागरिता । अन्यानि मूले सन्ति ।

लोपः ( दिवादावद् ) अशात् । दिपि परे द्वे रूपे भवतः । वाग्रहणात् । अशात्-अशाः । अन्यानि सन्ति । लिड्लकारे ( द्विश्च । पूर्वस्य । ह्रस्वः ) शशास । शशासतुः । शशासिथ । शासिता । शासिष्यति । लुङ्लकारे ( लिप्युपादेर्ङः ) अनेन ङप्रत्ययो भवति ( शासेरिः ) अनेनाकारस्येकारो भवति ( वसादेः षः ) अनेन सस्य षः। (दिवादावद् ) अशिषत् । अशिषताम् । अशिषुः ॥ चकासृ दीप्तौ । ऋकार इत् । प्रत्ययलुगादि सर्वं पूर्ववत् । चकास्ति । प्रथमपुरुषस्य बहुवचने ( जक्षादेः० ) अनेन सूत्रेण अन्तः अत् अन उस् भवति । चकासति । चकास्यात् । चकास्तु । अस्य लकारस्य मध्यमपुरुषस्यैकवचने ( शसाद्धिर्हेः ) अनेन हेर्धिः । चकास् धि इति जाते ।

( धौ सलोपो वाच्यः ) चकाधि-चकास्तात् । चकास्तम् । चकास्त । अचकात् । अचकास्ताम् । अचकासुः । अचकात्-अचकाः ( कासादिप्रत्ययादाम् )चकासाञ्चकार । चकास्यात् । चकासिता । चकासिष्यति । अचकासिष्यत् । अचकासीत् । अचकासिष्टाम् । अचकासिषु ॥ ॥ इत्यदादिषु परस्मैपदिनः॥

सूत्रम् ( धौ० ) धिप्रत्यये परे सति सकारस्य लोपो भवति । अनेन सकारस्य लोपः । चकाधि । लङ्लकारे । चकास् दिप् इति स्थिते ( दिपि० सस्य तः ) अनेन सस्य तः ( दिस्योर्हसात् । दिवादावद् ) अचकात् । अस्य प्रथमपुरुषस्य बहुवचने ( जक्षादेः० ) । अनेन अन उस् । अचकासुः । अन्यानि मूले सन्ति ( कासादिप्रत्ययादाम् ) अनेनास्य धातोराम्प्रत्ययो भवति । चकासाञ्चकार । चकासामास । चकासाम्बभूव । चकास्यात् । चकास्यास्ताम् । चकास्यासुः। ( सिसता० ) अनेनेट् । चकासिता । अन्यानि मूले सन्ति । लुङ्लकारे । अचकासीत्॥ ॥इत्यदादिगणे परस्मैपदिनः कथिताः ॥

अथात्मनेपदिनः॥ ॥चक्षिङ् व्यक्तायां वाचि। इकार उच्चारणार्थः। ङकार आत्मनेपदार्थः ( स्कोराद्योश्च ) ष्टुत्वम् । चष्टे । चक्षाते ( आतोऽन्तोदनतः ) चक्षते ( षढोः कः से ) चक्षे । चक्षाथे । चड्ढ्वे । चक्षे । चक्ष्वहे । चक्ष्महे । चक्षीत । चष्टाम् । अचष्ट । अचक्षाताम् । अचक्षत ।

अथात्मनेपदिनः कथ्यन्ते॥ ॥चक्षिङ् व्यक्तायां वाचि। इकार उच्चारणार्थः। ङकार आत्मनेपदार्थः । तत्रादयः प्रत्यया भवन्ति ( अप् कर्त्तरि । अदादेर्लुक् ) अनेनापो लुग्भवति तदा चक्षते इति जाते ( स्कोराद्योश्च ) अनेन ककारस्य लोपः ( ष्टुभिः

ष्ठः ) चष्टे। चक्षाते ( आतोन्तोऽदनतः ) अनेन अन्तः अत्। चक्षते। चक्ष् से इति जाते ( स्कोरादयोश्च ) अनेन कस्य लोपः ( षढोः कः से ) अनेन षस्य कः (किलात्०। कषसंयोगे क्षः ) चक्षे। चक्ष् ध्वे इति जाते ( स्कोरादयोश्च। षोडः ) चड्ढ्वे। अन्यानि सुगमानि। चक्षीत। चक्षीयाताम्। चक्षीरन्। चष्टाम्। चक्षाताम्। चक्षताम् ( स्कोरादयोश्च ) ष्टुत्वम्। चष्ठाः। अन्यानि तु सुगमान्येव तथापि लिखामि। चक्षाथाम्। चड्ढ्वम्। चक्षै। चक्षावहै। चक्षामहै। अचष्ट। अचक्षताम्। अचक्षत। अचष्ठाः। अचक्षाथाम्। अचड्ढ्वम्। अचक्षि। अचक्ष्वहि। अचक्ष्महि। चक्ष् णप् इति स्थिते।

( चक्षिङोऽनपि ख्याञ्क्शाञौ णादौ वा वक्तव्यौ ) चख्यौ। चख्यतुः। चख्युः। चक्शौ। चक्शतुः। चक्शुः। चचक्षे। ख्यायात्-ख्येयात्। क्शायात्-क्शेयात। ख्यासीष्ट-क्शासीष्ट। ख्याता २। क्शाता २। ख्यास्यति। ख्यास्यते। क्शास्यति। क्शास्यते। अख्यास्यत्। अख्यास्यत। अक्शास्यत्। अक्शास्यत। पुषादित्वान्ङः। अख्यत्।

सूत्रम्-( चक्षिङः० ) चक्षिङ्धातोरनपि विषये ख्याञ्क्शाञौ वक्तव्यौ णादौ वा वक्तव्यौ। गुरुत्वात्सर्वस्यादेशः ञकार उभयपदार्थः। ख्या णप् इति जाते ( द्विश्च। पूर्वस्य हसादिः। कुहोश्चुः। झपानाम्। आतो णप् डौ) चख्यौ ( आतोऽनपि ) चख्यतुः चख्युः। ( अत्वतः) चखियथ-चख्याथ। चख्ये। चख्याते। चखियरे। क्शाञा-कृते देशे (द्विश्च पूर्वस्य। ह्रस्वः। कुहोश्चुः। आतो णप् डौ) चक्शौ (आतोऽनपि) चक्शतुः ( अत्वतः ) चक्शिथ। चक्शे। चक्शाथ। चक्शाते। चक्शिरे। एतयोः प्रत्यययोर्विकल्पः। तदा चक्ष् णप् इति स्थिते ( द्विश्चापूर्वस्य ) चचक्षे। चचक्षाते। चचक्षिरे ( संयोगादेरादन्तस्य) ख्यायात्-ख्येयात्-क्शायात्। क्शेयात्। अन्यानि मूले सन्ति। सर्वत्र विकल्पेन ख्याञ्क्शाञौ भवतः। अत एकस्मिॅल्लकारे द्विधा रूपाणि भवन्ति। लुङ्लकारे ( लित्पुषादेर्ङः। दिवादावद्। आतोऽनपि ) अख्यत्। अख्यताम्। अख्यन्। आत्मनेपदे।

( अस्यतिवक्तिख्यातीनामात्मनेपदे सेर्ङो वाच्यः ) अख्यत। अक्शासीत्। अक्शास्ताम्॥ईड् स्तुतौ (खसे चपा झसानाम् ) ईट्टे। ईडाते। ईडते।

सूत्रम् ( अस्यति० ) अस्यतिवक्तिख्यातीनां धातूनामात्मनेपदे सेर्ङो वाच्यः। अनेन सेर्ङः ( आतोऽनपि ) अख्यत। अख्येताम्। अख्यन्त। क्शाञादेशे सति-

लुङ्लकारे ( आदन्तानाम्० ) अनेनेटसकौ भवतः । अक्शासीत् । अक्शासिष्टाम् । अक्शासिषुः । अक्शास्त । अक्शासाताम् । अक्शासत । अक्शास्थाः । अक्शासाथाम् । अक्शाध्वम् ॥ ईड् स्तुतौ । पूर्ववत् तिवादयः ( अदादेर्लुक् ) इड् ते इति जाते । ( खसे चपा झसानाम् ) अनेन डकारस्य टकारः ( ष्टुभिः ष्टुः ) ईट्टे । ईडाते ( आतोन्तोदनतः ) ईडते । ईड् से इति स्थिते ।

( ईडीशोः सध्वयोरिड्वक्तव्यः ) ईडिषे । ईडाथे । ईडिध्वे । ईडे । ईड्वहे । ईड्महे । ईडीत । ईट्टाम् । ऐट्ट ।

सूत्रम्-( ईडीशोः० ) ईडीशोर्धात्वोः सध्वयोः प्रत्ययोरिड् वक्तव्यः । अनेनेट् । (किलात्०) ईडिषे । ईडाथे । ईड् ध्वे इति जाते पूर्वोक्तेनैव सूत्रेण इट् । ईडिध्वे । अन्यानि मूले सन्ति । लिङ्लकारे । ईडीत । ईडीयाताम् । ईडीरन् । इत्यादीनि रूपाणि ज्ञातव्यानि । लोड्लकारे । ईट्टाम् । ईडाताम् । ईडताम् (ईडीशोः०) अनेनेट् ( किलात्० ) ईडिष्व । ईडाथाम् । ईडिध्वम् । लघूपधत्वाभावान्न गुणः । ईडै । ईडावहै । ईडामहै । लङ्लकारे । ईड् तन् इति जाते ( खसे चपा० । ष्टुभिः ष्टुः । दिवादावट् । स्वरादेः परः । अ इ ए । ए ऐ ऐ ) ऐट्ट । ऐडाताम् । ऐडत । ऐट्ठाः । ऐडाथाम् । ऐड् ध्वमिति जाते ( ईडीशोः० ) अनेनेटि प्राप्ते सति ।

( लङो ध्वस्य नेट् ) ऐड्ढ्वम् । ईडाञ्चक्रे । ईडिषीष्ट । ईडिता । ईडिष्यते । ऐडिष्यत । ऐडिष्ट ॥ ईश ऐश्वर्ये । ईष्टे । ईशिषे । ईशीत । ईष्टाम् । ऐष्ट । ईशाञ्चक्रे । ईशिषीष्ट । ईशिता । ईशिष्यते । ऐशिष्यत । ऐशिष्ट ॥ आस् उपवेशने । आस्ते । आसीत । आस्ताम् । आस्त । कासादित्वादाम् । आसाञ्चक्रे । आसिषीष्ट । आसिता । आसिष्यते । आसिष्यत । आसिष्ट ॥ वस् आच्छदने । वस्ते । वसीत । अवसिष्ट ॥ पूङ् प्राणिगर्भविमोचने । ( आदेः ष्णः स्नः ) सूते । सुवीत । सूताम् ।

सूत्रम् ( लङः० ) लङ्लकारस्य ध्वप्रत्ययस्य इट् न भवति, अनेन तन्निषेधः ( ष्टुभिः ष्टुः ) ऐड्ढ्वम् ( कासादिप्रत्ययादाम् ) अनेन आम् प्रत्ययः । अन्यत् साधनं पूर्ववत् । ईडाञ्चक्रे । अन्यानि सुगमानि । ईडिषीष्ट । अन्यानि मूले सन्ति अन्येषाम् । लुङ्लकारे ( भूते सिः । सिसता० । किलात्० । ष्टुभिः ष्टुः ) द्वौ अडागमौ (अ इ ए । ए ऐ ऐ) ऐडिष्ट । ऐडिषाताम् । ऐडिषत । अन्यानि सुगमानि ॥ ईश ऐश्वर्ये । ( छशष० ) अनेन शकारस्य षकारः ( ष्टुभिः ष्टुः ) ईष्टे । ईशाते । ईशते । (ईडीशोः०) अनेनेट् ( किलात्० ) ईशिषे । ईशाथे । ईशिध्वे । ईशे । ईश्वहे । ईश्महे । ईशीत । ईशी-

याताम् । ईशीरन् । लोट्लकारे ईष्टाम् । ईशाताम् । इशताम् । ( ईडीशोः० ) अनेनेट् ( क्लिात्० ) ईशिष्व । ईशायाम् । ईशिध्वम् । दीर्घोपधत्वान्न गुणः। ईशै । ईशावहै । ईशामहै । लङ्लकारे । अडागमद्वयं भवति । अन्यत् साधनं तु पूर्ववत् । ऐष्ट । ऐशाताम् । ऐशत । ऐष्ठाः । ऐशायाम् । ( लङो ध्वस्य० ) अनेन सूत्रेण इड्निषेधः। ( छशष० । ष्टुनिः ष्टुः ) ऐड्ढ्वम् । लिड्लकारे । (कासादिप्रत्ययादाम्) ईशाञ्चक्रे । ईशामास । ईशाम्बभूव ( सिसता० ) ईशिषीष्ट । अत्र क्लिादनेन षत्वम् । लुङ्लकारे अडागमद्वयम् । ऐशिष्ट । ऐशिषाताम् । ऐशिषत॥ सुगमोऽयं धातुः॥ आस् उपवेशने। ( अप्कर्तरि । अदादेर्लुक् ) आस्ते । आसाते । आसते । अत्र ( आतोऽन्तोऽदनतः ) अनेन अन्तः अत् । आसीत । आसीयाताम् । आसीरन् । आस्ताम् । आसाताम् । (आतोऽन्तोऽदनतः ) आसताम् । आस्त । आसाताम् आसत । ( कासादिप्रत्ययादाम् ) आसाञ्चक्रे । आसामास । आसाम्बभूव । ( सिसता० ) अनेनेट् । आसिषीष्ट । अन्येषां सन्ति मूले रूपाणि तानि सुगमान्येव अतो व्याख्यानं न कृतम् । लुङ्लकारे द्वौ अडौ (सवर्णे०) आसिष्ट । आसिषाताम् । आसिषत॥ वस् आच्छादने (अप् कर्त्तरि । अदादेर्लुक् ) इत्यादि सर्व पूर्ववत् । तआदयः प्रत्यया भवन्ति । वस्ते । वसाते । वसते । वसीत । वसीयाताम् । वसीरन् । वस्ताम् । वसाताम् । वसताम् । आतोऽन्तोऽदनतः । अनेन अन्तः अत् । पूर्वरूपम् । वस्ताम् । वसाताम् । वसताम् । अन्यानि सुगमानि । लिड्लकारे ( द्विश्च । पूर्वस्य हसादिः । लोपः पचां कित्ये चास्य ) अनेन सूत्रेण एत्वपूर्वलोपौ प्राप्तौ वादित्वान्न भवत एत्वपूर्वलोपौ । ववसे । ववसाते । ववसिरे ( ऋादेर्णादेः ) अनेनेट् ( क्लिात्० ) ववसिषे । अन्यानि सुगमानि ( सिसता० ) अनेनेट् ( क्लिात्० ) वसिषीष्ट । वसिता । वसिष्यति । अवसिष्यत् । लुङ्लकारे । अवसिष्ट । अवसिषाताम् । अवसिषत । अत्र । ( आतोऽन्तोऽदनतः ) अनेन अन्तः अत् भवति । अन्यानि सुगमानि ॥ षूङ् प्राणिगर्भविमोचने । पूर्ववत् सर्वम् ( आदेः ष्णः स्नः ) अनेन षस्य सः । सूते ( नुधातोः ) अनेन उव् । सुवाते ( आतोऽन्तोऽदनतः ) सुवते ( क्लिात्० ) सूषे । सुवाथे । सूध्वे । सुवे । सूवहे । सूमहे ( नुधातोः ) सुवीत । सुवीयाताम् । सुवीरन् । सूताम् ( नुधातोः ) सुवाताम् ( आतोऽन्तोऽद० ) सुवताम् ( क्लिात्० ) सूष्व । सुवाथाम् । सूध्वम् । सू ऐप् इति जाते ( गुणः ) अनेन गुणे प्राप्ते ।

( सूतेः पिति गुणाभावो वाच्यः ) सुवै । सुवावहै । सुवामहै । असूत । सुषुवे ( स्वरति० ) इति वेट् । सविषीष्ट-सोषीष्ट । सविता-सोता । सविष्यते-सोष्यते । असविष्यत-असोष्यत । असविष्ट-असोष्ट ॥ शीङ् स्वप्ने ।

सूत्रम् ( सूतेः० ) सूतेर्धातोः पिति प्रत्यये परे गुणस्य अभावो वाच्यः । किं तु ( नुधातोः ) अनेन उव् भवति । सुवै । सुवावहै । सुवामहै । लङ्लकारे । असूत । असुवाताम् ( आतोऽन्तो० ) असुवत । इत्यादीनि रूपाणि ज्ञातव्यानि । लिट्लकारे ( द्विश्च । सस्वरादिः । किलात्० । नुधातोः ) सुषुवे । सुषुवाते । सुषुविरे । इत्यादीनि ( स्वरतिसूयति० ) अनेनास्य धातोरिड्विकल्पः ( सिसता० । गुणः । ओ अव् ) सविषीष्ट । इडभावे गुणः । सोषीष्ट । अन्येषां लकाराणां द्वे रूपे मूले स्तः । लुङ्लकारे ( सिसता० ) अनेनेट् । पूर्व ( भूते सिः ) अनेन सिप्रत्ययः ( किलात्० ) षुत्वम् ( दिवादावट् ) असविष्ट । असविषाताम् । असविषत । इडभावे । असोष्ट । असोषाताम् । असोषत । इत्यादीनि रूपाणि ज्ञातव्यानि ॥ शीङ् स्वप्ने । ङकार आत्मनेपदार्थः ।

( शीङः ) सर्वत्र गुणो भवत्यपि विषये । शेते । शयाते ।

सूत्रम्-( शीङः० )शीङो धातोः सर्वत्र अपि विषये गुणो भवति । अनेनास्य धातोः सर्वत्र गुणो भवति । शेते ( ए अय् ) शयाते । गुणे कृते । शे अन्ते इति जाते (आतोऽन्तोऽदनतः ) शे अते इति जाते ।

( शीङोऽतो रुट् ) शीङः परस्यादित्येतस्य रुडागमो भवति । शेरते । शयीत । शेताम् । शयाताम् । शेरताम् । अशेत ।अशयाताम् । अशेरत । शिश्ये । शिश्याते । शयिषीष्ट । शयिता । शयिष्यते । अशयिष्यत । अशयिष्ट ॥ इङ् अध्ययने । अधिपूर्वः । अधीते । अधीयाते । अधीयते । अधीयीत । अधीताम् । अधीयाताम् । अधीयताम् । अध्यैत । इयादेशे कृते पश्चादडागमद्वयम् । अध्यैयाताम् । अध्यैयत ।

सूत्रम्-( शीङोऽतोरुट् ) शीङः ५-१ अतः ६-१ रुट् १-१ । शीङ्धातोः परस्य अत् इत्येतस्य रुडागमो भवति । टित्वादादौ । टकारष्टित्कार्यार्थः । उकार उच्चारणार्थः । शेरते । शेषे । शयाथे । शेध्वे । इत्यादीनि रूपाणि ज्ञातव्यानि । तानि सुगमान्येव । शयीत । शयीयाताम् । शयीरन् । शेताम् । शयाताम् ( शीङोऽतो रुट्) अनेन रुट् । शेरताम् । अशेत । अशयाताम् । रुडागमः । अशेरत । अन्यानि सुगमानि । लिट्लकारे ( द्विश्च । सस्वरादिः । ह्रस्वः । नुधातोः ) अनेन यकारः । शिश्ये । शिश्याते । शिश्यिरे । अन्यानि सुगमानि ( गुणः । ए अय् ) शयिषीष्ट । अत्र ( किलात्० ) अनेन सकारस्य षकारो भवति । लुङ्लकारे अशयिष्ट । अशयिषा-

ताम् । अशयिषत । इत्यादीनि रूपाणि ज्ञातव्यानि॥ इङ् अध्ययने । अयं धातुर्नित्यमधिपूर्वः । ङकार आत्मनेपदार्थः ( सवर्णे दीर्घः सह ) अधीते । अधि इ आते इति जाते ( नुधातोः ) अनेन इय् ( सवर्णे ) अधीयाते । अधीयते । अधीषे । ( किलात्० ) अनेन षकारः। अधीयाथे । अधीध्वे । अधीये । अधीवहे । अधीमहे । अधीयीत । अधीयीयाताम् । अधीयीरन् । लोट्लकारे । अधीताम् । अधीयाताम् । अधीयताम् । लुङ्लकारे । अधि इ तन् इति जाते ( दिवादावट् । स्वरादेः ) अनेन द्वितीयोऽडागमः (अ इ ए । ए ऐ ऐ । इ यं स्वरे) अध्यैत । इयादेशे कृते पश्चादडागमद्वयम् । अध्यैयाताम् । अध्यैयत । अध्यैथाः । अन्यानि सुगमानि । पूर्वोक्तैरेव सूत्रैः सिध्यंति । लिट्लकारे । अधि इ णप् इति स्थिते ।

( इङो णादौ गा वक्तव्यः ) अधिजगे । अध्येषीष्ट । अध्येता । अध्येष्यते । अध्यैष्यत ।

सूत्रम्-( इङः० ) इङो धातोर्णादौ परे गा इत्यादेशो वक्तव्यः । गुरुत्वात्सर्वादेशः। अधि गा णप् इति जाते ( द्विश्च । ह्रस्वः । कुहोश्चुः । आतोऽनपि ) अनेन आकारस्य लोपो भवति । अधिजगे । अधिजगाते । अधिजगिरे । इत्यादीनि । अध्येषीष्ट । अध्येता । अध्येष्यते । अडागमद्वयम् । अध्यैष्यत । अध्यैष्येताम् । अध्यैष्यन्त । इत्यादीनि ।

( इङो वा गीसौ लृङि च तत्परस्य प्रत्ययस्य ङित्त्वं वाच्यम् ) ङित्त्वाद्गुणो न । अध्यगीष्यत । अध्यगीष्येताम् । अध्यगीष्यन्त । अध्यैष्यत–अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । अध्यैष्ट । अध्यैषाताम् । अध्यैषत॥ ॥इत्यदादिष्वात्मनेपदिनः॥

सूत्रम्-( इङो० ) इङ्धातोर्वा गी इत्यादेशो भवति सौ परे च लृङि विषये तस्मात्परस्य प्रत्ययस्य ङित्त्वं वाच्यम् । अनेन गी इत्यादेशः । ङित्त्वाद् गुणाभावो भवति । अध्यगीष्यत । अध्यगीष्येताम् । अध्यगीष्यन्त । लुङ्लकारे ( इङो वा ) अनेन गीरादेशः ( भूते सिः । किलात्० ) ष्टुत्वम् । अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । अन्यानि सुगमानि । गीरादेशाभावे अडागमद्वयम् ( गुणः । ए ऐ ऐ । इ यं स्वरे ) अध्यैष्ट । अध्यैषाताम् । अध्यैषत । इत्यादीनि रूपाणि ज्ञातव्यानि ॥ इत्यात्मनेपदिनः समाप्ताः ॥

## अथोभयपदिनः प्रदर्श्यंते ।

द्विष अप्रीतौ । अकार उभयपदार्थः । द्वेष्टि । द्विष्टे । द्विष्यात् । द्विषीत । द्वेष्टु । द्विड्ढि । द्विषाम् । अद्वेट्–अद्वेड् । अद्विष्टाम् ।

अद्विषुः–अद्विषन् । अद्विष्ट । दिद्वेष । दिद्विषे । द्विष्यात् । द्विक्षीष्ट । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । अद्वेक्ष्यत् । अद्वेक्ष्यत । ( हशपान्तात्सक् ) अद्विक्षत् । अद्विक्षताम् । अद्विक्षत ।

अथोभयपदिनः प्रदर्श्यन्ते ॥ ॥ द्विष अप्रीतौ । अकार उभयपदार्थः। तिबादयस्त-आदयश्च प्रत्यया भवन्ति ( अप् कर्त्तरि ) अनेन चतुर्षु लकारेषु अप्प्रत्ययो भवति ( अदादेर्लुक् ) अनेन तस्य लुग् भवति । द्विष् तिप् । इति जाते ( गुणः ष्टुभिः ष्टुः ) द्वेष्टि । द्विष्टः । द्विषन्ति । द्विष् सिप् इति स्थिते ( गुणः । षढोः कः से ) अनेन षस्य कः ( क्िलात्० । कषसंयोगे० ) द्वेक्षि । द्विष्ठः । द्विष्ठ । द्वेष्मि । द्विष्वः । द्विष्मः । द्विष्टे । द्विषाते । द्विषते । द्विष्यात् । द्विष्याताम् । द्विष्युः । द्विषीत । द्विषीयाताम् । द्विषीरन् । द्वेष्टु–द्विष्टात् । द्विष्टाम् । द्विषन्तु । द्विष् हि इति जाते ( झसाद्धिर्हिः । षोडः ) ष्टुत्वम् । द्विड्ढि–द्विष्टात् । द्वेषाणि । द्वेषाव । द्वेषाम । द्विष्टाम् । द्विषाताम् । द्विषताम् । इत्यादीनि । दिष् दिप् इति जाते ( गुणः । षोडः । दिस्योर्हसात् । वावसाने । दिवादावट् ) अनेन पूर्वमडागमः । अद्वेट्–अद्वेड् । अद्विष्टाम् ( आदन्तविद्द्विषाम्० ) अनेन वा अन उस् भवति । अद्विषुः । अद्विषन् । अन्यानि सुगमानि । आत्मनेपदे । अद्विष्ट । अद्विषाताम् । अद्विषत । द्विष् णप् इति स्थिते ( द्विश्च । पूर्वस्य० । उपधाया लघोः ) अनेन गुणः । दिद्वेष । दिद्विषतुः । दिद्विषुः । दिद्वेषिथ । दिद्विषे । दिद्विषाते । दिद्विषिरे । द्विष्यात्(सिस्योः०) अनेन गुणनिषेधः ( षढोः कः से । क्िलात्० । कषसंयोगे० ) द्विक्षीष्ट । द्वेष्टा ( उपधाया लघोः ) अनेन गुणः । द्वेष्टा । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे ( हशपान्तात् सक् ) अनेन सक्प्रत्ययो भवति । क्त्वाद् गुणाभावः ( षढोः कः से । क्िलात्० । कषसं० ) अद्विक्षत् । अद्विक्षताम् । अद्विक्षन् । आत्मनेपदेऽपि सक्प्रत्ययो भवति । अद्विक्षत ।

( सस्यात्मनेपदे स्वरे टिलोपो वाच्यः ) अद्विक्षाताम् । अद्विक्षत ॥ दुह् प्रपूरणे ( दादेर्घः ) दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुह्मः । दुग्धे । दुह्यात् । दुहीत । दोग्धु ।

सूत्रम् ( आत्मनेपदे स्वरे टिलोपो वाच्यः ) अनेन टेर्लोपः । अद्विक्षाताम् । अद्विक्षत । अद्विक्षथाः । अद्विक्षाथाम् । अन्यानि सुगमानि ॥ दुह प्रपूरणे । अकार उभयपदार्थः । दुह् तिप् इति जाते ( दादेर्घः ) अनेन हस्य घः ( उपधाया लघोः ) अनेन

सर्वत्र गुणनिमित्ते प्रत्यये परे गुणो भवति। दोह् तिप् इति जाते ( तथोर्धः।झषेजबाः) दोग्धि। दुग्धः। दुहन्ति। दुह् सिप् इति जाते ( दादेर्घः। आदिजबानाम्०। उपधायाः। खसे चपा०। किलात्०। कषसंयोगे क्षः ) धोक्षि। अन्यानि मूले सन्ति। दुग्धे। दुहाते। दुहते। अत्र ( आतोऽन्तोऽदनतः ) अनेन अन्तः अत्। दुह्यात्। दुह्याताम्। दुह्युः। दुहीत। दुहीयाताम्। दुहीरन्। दोग्धु-दुग्धात्। दुग्धाम्। दुहन्तु।

## ( हकारस्य क्वचिज्झस्भावो वाच्यः ) दुग्धि। दुग्धाम्। अधोक्-अधोग्। अदुग्धाम्। अदुहन्। अग्दुध। दुदोह। दुदुहे। दुह्यात्। धुक्षीष्ट। दोग्धा। दोग्धा। धोक्ष्यति। धोक्ष्यते। अधोक्ष्यत्। अधोक्ष्यत। अधुक्षत्। अधुक्षत।

सूत्रम्-(हकारस्य क्वचित् स्थाने झसभावो वाच्यः) अनेन हकारो झसवत् ज्ञातव्यः ( दादेर्घः ) अनेन घत्वम् ( झसाद्धिर्हिः। झषे जबाः ) दुग्धि-दुग्धात्। दुग्धम्। दुग्ध ( उपधायाः ) दोहानि। दोहाव। दोहाम। दुग्धाम्। दुहाताम्। दुहताम्। दुह् स्व। इति जाते ( दादेर्घः। आदिजबानाम्०। खसे चपा झसानाम्। किलात्०। कषसंयोगे० ) धुक्ष्व। दुहाथाम्। धुग्ध्वम्। दोहै। दोहावहै। दोहामहै। 'दुह् दिप्' इति जाते ( दादेर्घः। गुणः। दिस्योर्हसात्। आदिजबानाम्०। वावसाने। दिवादावद् ) अधोक्-अधोग्। अदुग्धाम्। अदुहन्। अधोक्-अधोग्। अदुग्धम्। अदुग्ध। ( गुणः ) अदोहम्। अदुह्व। अदुह्म। अदुग्ध। अदुहाताम्। अदुहत। अदुग्धाः। इत्यादीनि रूपाणि ज्ञेयानि। लिट्लकारे ( द्विश्च। पूर्वस्य। उपधाया लघोः ) दुदोह। दुदुहतुः। दुदुहुः ( उपधाया लघोः ) दुदोहिथ। इत्यादीनि आत्मनेपदे। दुदुहे। दुदुहाते। दुदुहिरे। इत्यादीनि रूपाणि ज्ञातव्यानि वैयाकरणैः।दुह्यात्। दुह्यास्ताम्। दुह्यासुः। दुह् सीष्ट इति स्थिते ( दिस्योः० ) अनेन गुणनिषेधः (दादेर्घः। आदिजबानाम्०। खसे चपा०। किलात्०। कषसंयोगे० ) धुक्षीष्ट। दुह् ता इति स्थिते। धत्वम् ( गुणः। तथोर्धः। झषे जबाः ) दोग्धा। दोग्धा। दुह् स्यप् तिप् इति जाते। घत्वम् ( गुणः। आदिजबानाम। खसेचपा०। पत्वम्। कषसंयोगे क्षः ) धोक्ष्यति। धोक्ष्यते। अधोक्ष्यत्। अधोक्ष्यत। लुङ्लकारे ( हशपान्तात् सक् ) अनेन सक् प्रत्ययो भवति। सिविषये कित्वाद गुणाभावः। घत्वम् षत्वम्। कत्वम् (किलात्। कषसंयोगे क्षः ) अधुक्षत्। अधुक्षताम्। अधुक्षन्। आत्मनेपदे अधुक्षत।

## ( दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोरादि ) अदुग्ध। अधुक्षाताम्। अधुक्षत। अदुग्धाः-अधुक्षथाः। अधुक्षाथाम्।

अधुग्ध्वम् । अधुक्षध्वम् । अधुक्षावहि-अदुह्वहि । अधुक्षामहि ॥ दिह उपचये । देग्धि । तद्वत् ॥ लिह आस्वादने । ( होढः ) लेढि । तद्वत् ॥ ष्टुञ् स्तुतौ ( आदेः ष्णः स्नः । ओरौ ) स्तौति-स्तवीति।स्तुतः-स्तुवीतः।स्तुवन्ति । स्तुते-स्तुवीते । स्तुयात्-स्तुवीयात् । स्तौतु-स्तवीतु । स्तुतात्-स्तुवीतात् । स्तुताम्-स्तुवीताम् । स्तुवन्तु । स्तुहि-स्तुतात् । स्तुवीहि-स्तुवीतात् । अस्तौत् । अस्तवीत्-अस्तुताम् । अस्तवीताम् । अस्तुवन् । अस्तुत।अस्तुवीत । तुष्टाव । तुष्टुवतुः । तुष्टुवुः । क्रादित्वान्नेट् । तुष्टोथ । तुष्टुवथुः । तुष्टुव । तुष्टाव । तुष्टुव । तुष्टुम । तुष्टुवे । स्तूयात् । स्तोषीष्ट । स्तोता । स्तोता । स्तोष्यति । स्तोष्यते । अस्तोष्यत् । अस्तोष्यत ।

सूत्रम्-( दुहदिहलिहगुहूभ्यः ) अनेन सको लुक् । 'अदुह तन्' इति जाते घत्वम् ( तयोर्धः । झबे जबाः ) अदुग्ध ( सस्यात्मने० ) अनेन टिलोपः । अधुक्षाताम् । अधुक्षत । थकारे परेऽपि सको लुग् भवति । विकल्पेनैव लुकि सति । 'अदुह् थास्' इति जाते । घत्वम् ( तयोर्धः । झबे जबाः ) अदुग्धाः । अधुक्षथाः । अधुक्षाथाम् । ध्वे परेऽपि सको लुक् । अदुग्ध्वम् । अधुक्षध्वम् । अधुक्षि । अधुक्षावहि । अधुक्षामहि । समाप्तोऽयं धातुः ॥ दिह उपचये । अयं धातुः पूर्ववत् ॥ लिह आस्वादने । आस्वादनमीषद्भक्षणम् । पूर्ववत् प्रत्यया भवन्ति (अदादेर्लुक्) लिह् तिप् इति जाते ( होढः । तयोर्धः ) ष्टुत्वम् ( उपधायाः । ढि ढोलोपो दीर्घश्च ) लेढि । लीढः । लिहन्ति । आत्मनेपदे । लीढे । लिहाते । लिहते । लिह्यात् । लिहीत । लोट्लकारे । लेढु । लीढात् । लीढाम् । लिहन्तु । लिह् हि इति स्थिते । अत्र झसपरत्वाभावात ( होढः ) अनेन

इति स्थिते ( सिस्योः० ) अनेन गुणाभावः ( होढः। षढोः कः से। किदाशु०। कप० ) लिक्षीष्ट। लिक्षीयास्ताम्। लिक्षीरन्। लिह् ता इति स्थिते ( होढः । उपधाया ल्वोः। तयोर्धः ) ष्टुत्वम् ( ढि ढो लोपः ) लेढा। आत्मनेपदेऽपि । लेढा। लेढारौ। लेढारः। लृट्लकारे। लिह् स्यप् तिप् इति स्थिते। ढत्वम् ( गुणः ) कत्वम्। षत्वम्। ( कपसंयोगे० ) लेक्ष्यति। लेक्ष्यते। अलेक्ष्यत्। अलेक्ष्यत। लुङ्लकारे ( इशपान्तात्सक् ) कित्वाद् गुणाभावः। अन्यत् साधनं पूर्ववत्। अलिक्षत्। अलिक्षताम्। अलिक्षन्। आत्मनेपदे। अलिक्षत। ( दुहदिहलिह० ) अनेन सको लुक्। अन्यत्साधनं पूर्ववत्। अलीढ (सस्यात्मने०) अलिक्षाताम्। अलिक्षत। साध्योऽयं धातुर्दुहधातुवत् ॥ ष्टुञ् स्तुतौ। नकार उभयपदार्थः ( आदेः ष्णः स्नः। ओरौतुरुस्तुभ्यः) अनेन ईट्। यत्र ईट् भवति तत्र गुणः। स्तौति ( ओ अव् ) स्तवीति । स्तुतः । स्तवीतः ( नुधातोः ) स्तुवन्ति। इत्यादीनि। स्तुते। स्तुवीते। स्तुवाते। स्तुवते। स्तुयात्। स्तुवीयात्। स्तुयाताम्। स्तुवीयाताम्। स्तुयुः। स्तुवीयुः। लोट्लकारे । स्तौतु । स्तवीतु। स्तुतात। स्तुवीतात्। स्तुवन्तु। इत्यादीनि रूपाणि ज्ञातव्यानि। स्तुताम् । स्तुवीताम। स्तुवाताम्। स्तुवताम्। लङ्लकारे। अस्तौत्। अस्तवीत् । अस्तुताम् । अस्तवीताम् ( नुधातोः ) अस्तुवन्। अस्तुत। अस्तुवीत। अस्तुवाताम् ( आतोन्तो० ) अस्तुवत। इत्यादीनि। लिट्लकारे ( द्विश्च। शसात् खपाः ) अनेन तकारः शेषः। पत्वम् ( धातोर्नामिनः ) अनेन वृद्धिः। तुष्टाव। ( नुधातोः ) तुष्टुवतुः । तुष्टुवुः। क्रादित्वात् अस्य धातोः स्थपि इडागमो न भवति ( गुणः ) तुष्टोथ। अन्यानि मूले सन्ति। तुष्टुवे। तुष्टुवाते। तुष्टुविरे। अन्यानि सुगमानि ( ये ) अनेन पूर्वस्य दीर्घः। स्तूयात् ( गुणः ) षत्वम्। स्तोषीष्ट। स्तोता। स्तोता। लुङ्लकारे।

( स्तुसुधूञ्भ्यां पे सेरिट् वक्तव्यः ) अस्तावीत् । अस्तोष्ट ॥ ब्रूञ् व्यक्तायां वाचि।

सूत्रम् ( स्तुसुधूञाम् ) स्तुसुधूञां धातूनां परस्मैपदे सिप्रत्ययस्य इट् वक्तव्यः। ( धातोर्नामिनः ) अनेन वृद्धिः। अस्तावीत्। अस्ताविष्टाम्। अस्ताविषुः। इत्यादीनि अस्तोष्ट। अस्तोषाताम्। अस्तोषत ॥ ब्रूञ् व्यक्तायां वाचि। ञकारः सर्वत्र उभयपदार्थः। अप्प्रत्ययो भवति। तस्य लुग् भवति।

(अवादावीप्पिति त्तिस्म) ब्रुव ईकारः प्रत्ययो भवति तकारसकारमकारादौ पिति परे अवादौ विषये। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रवीषि। ब्रूथः ॥

सूत्रम् ( अवादावीप्पिति त्स्मि ) अवादौ ७–१ ईप् १–१ पिति ७–१ त् च स् च म् त्स्म् तस्मिन् त्स्मि ७–१ चतुःपदं सूत्रम् । यद्वा द् च त् च स् च म् च त्स्म् तस्मिन् त्स्मि ( खसेचपा० ) अनेन दस्य तः । तेन दकारे परेऽपि ईप् प्रत्ययः । ब्रूञ्धातोस्तकारसकारमकारादौ पिति परे ईप् प्रत्ययो भवति अवादौ विषये । अत्राब्विषये इत्येव वक्तव्ये आदिशब्दश्चिन्त्यः । यद्वा अप् आदिः प्रथमो यस्य सः अवादिः अब्लुक् इत्यर्थः । तस्मिन्नवादौ अपो लुकि कृते सति इत्यर्थः । अनेनेकारः प्रत्ययो भवति ( गुणः। ओ अव् ) ब्रवीति । ब्रूतः ( नुधातोः ) ब्रुवन्ति । पत्वम् । ब्रवीषि । ब्रूथः

( ब्रुव आहश्च पञ्चानाम् ) ब्रुव उत्तरेषां तिबादीनां पञ्चानां णवादयः पञ्चादेशा भवन्ति । ब्रुव आहश्चादेशो भवति । आह । आहतुः । आहुः ।

सूत्रम्-( ब्रुव आहश्च पञ्चानाम् ) आहः १–१ च अव्ययम् । पञ्चानाम् ६–३ ब्रूञ्धातोरुत्तरेषां तिबादीनां पञ्चानां णवादयः पञ्चादेशा भवन्ति । ब्रुवो धातोराहश्च आदेशो भवति । यदादेशः । अनेन न द्वित्वम् । आह । आहतुः । आहुः । आह थप् इति जाते ।

( तस्थे ) आहो हकारस्य तकारादेशो भवति थे परे । आत्थ । आहथुः । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः । ब्रूयात् । ब्रवीत । ब्रवीतु ब्रूताम् । अब्रवीत् । अब्रूत ।

सूत्रम्-( तस्थे ) आहादेशस्य हकारस्य तकारादेशो भवति थकारे परे । अनेन हस्य तः । आत्थ । आहथुः । ब्रूथ ( गुणः ) ब्रवीमि । ब्रूवः । ब्रूमः । ब्रूते । ब्रुवाते । ( आतोऽन्तो० ) ब्रुवते । इत्यादीनि । ब्रूयात् ( नुधातोः ) ब्रुवीत । ब्रवीतु । ब्रूतात् । ब्रूताम् ( नुधातोः ) ब्रुवन्तु । ब्रूताम् । ब्रुवाताम् । ब्रुवताम् ( दिबादावट् ) अब्रवीत् । अब्रूताम् । अब्रुवन् । अब्रूत । अब्रुवाताम् । अब्रुवत । इत्यादीनि रूपाणि पूर्वसूत्रैरेव सिध्यन्ति ।

( ब्रुवो वचिः ) ब्रुवो वचिरादेशो भवति अनपि विषये । इकार इत् । उवाच । ऊचे । अवोचत् । अवोचत । शेषस्य पूर्ववत्प्रक्रिया ॥ ऊर्णुञ् आच्छादने ।

सूत्रम् ( ब्रुवो वचिः ) ब्रुवो धातोर्वचिरादेशो भवति अनपि विषये । इकार इत् । अनेन वचादेशः । वच् णप् इति जाते ( द्विश्च । पूर्वस्य । णवादौ पूर्वस्य ) अनेन संप्रसारणम् ( अत उपधायाः ) अनेन वृद्धिः । उवाच । ( ग्रहां क्ङिति च ) अनेन

द्वितीय संप्रसारणम्। ऊचतुः। ऊचुः ( अलतो॰ ) उवचिथ। उवक्थ। अन्यानि सुगमानि। ऊचे। ऊचाते। ऊचिरे। इत्यादीनि। अन्यानि वच् परिभाषणे इति धातुवत् रूपाणि ज्ञातव्यानि। लुङ्लकारे ( अस्यति ) अनेन सेर्डो भवति ( टे वचेः ) अनेन उमागमः। अवोचत्। अवोचताम्। अवोचन्। आत्मनेपदे। अवोचत। अवोचेताम्। अवोचन्त। इत्यादीनि रूपाणि भवन्ति तानि सुगमानि ज्ञातव्यानि विद्वद्भिः॥ ऊर्णुञ् आच्छादने। पूर्ववत् प्रत्ययो भवति ( अदादेर्लुक् ) अनेन लुक् भवति। ञकार इत्। ऊर्णु तिप् इति जाते।

## ( ऊर्णोतेर्वा वृद्धिः ) हसादौ पिति। ऊर्णौति-ऊर्णोति।

सूत्रम् ( ऊर्णोतेः॰ ) ऊर्णोतेर्धातोर्वा वृद्धिर्भवति हसादौ पिति प्रत्यये परे। अनेन वा वृद्धिः। ऊर्णौति। ऊर्णोति-ऊर्णुतः। ऊर्णुवन्ति। अत्र ( नुधातोः ) अनेनोव्। ऊर्णौषि-ऊर्णोषि। अत्र षत्वम्। अन्यानि सुगमानि। ऊर्णुते ( नुधातोः ) ऊर्णुवाते। ऊर्णुवते। ऊर्णुयात्। ऊर्णुवीत। ऊर्णौतु-ऊर्णोतु। ऊर्णुतात्। ऊर्णुताम्। लङ्लकारे।

## ( ऊर्णोतेर्गुणो दिस्योः वृद्धेरपवादः ) और्णोत्-और्णोः।

सूत्रम् ( ऊर्णोतेः॰ ) ऊर्णोतेर्धातोर्दिस्योः परतो गुणो भवति वृद्धेरपवादः। अनेन दिस्योर्गुणो भवति। अडागमद्वयं च। और्णोत्। और्णुताम्। और्णुवन्। और्णोः। और्णुत। और्णुवाताम्। और्णुवत। इत्यादीनि ज्ञातव्यानि। लिट्लकारे। अनेकस्वरत्वादाम्प्रत्यये प्राप्ते।

## ( ऊर्णोतेराम्न )

सूत्रम् ( ऊर्णोतेः॰ ) ऊर्णोतेर्धातोराम्प्रत्ययो न भवति। अनेनास्याम् प्रत्ययो न। ( द्विश्च ) अस्य धातोर्द्वित्वविधायकम्।

## ( स्वरादेः परः ) स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति।

सूत्रम् ( स्वरादेः परः ) स्वरादेः ६-१ परः १-१ स्वरादेर्धातोरद्विरुक्तः सस्वरो द्वितीयोऽवयवो द्विर्भवति। रकारस्य द्वित्वे प्राप्ते।

## ( स्वरात्पराः संयोगादयो नदरा द्विर्न ) ऊर्णुनाव। ऊर्णुनुवतुः।

सूत्रम् ( स्वरात्पराः॰ ) स्वरात्पराः संयोगादयो नकारदकाररकारा द्विर्न भवन्ति। अनेन रकारस्य न द्वित्वम्। किंतु णकारस्यैव भवति। धातोर्नामिनः ) अनेन वृद्धिः। रकारस्तु पूर्वस्य णत्वे निमित्त नेतरस्य। ऊर्णुनाव ( नुधातोः ) अनेनोव्। ऊर्णुनुवतुः। ऊर्णुनुवुः। ऊर्णु इट् थप् इति जाते।

( ऊर्णोतेरिडादिः प्रत्ययो वा ङित् ) ऊर्णुनुविथ-ऊर्णुनविथ। र्णूयात्। ऊर्णुविपीष्ट-ऊर्णविपीष्ट। ऊर्णुविता-ऊर्णविता।

सूत्रम् ( ऊर्णोतेः० ) ऊर्णोतेर्धातोरिडादिः प्रत्ययो वा ङिद् भवति। ङित्त्वाद् गुणाभावः। ऊर्णुनुविथ-ऊर्णुनविथ। ऊर्णुनुवथुः। ऊर्णुनुव। अन्यानि मानि। आत्मनेपदे। ऊर्णुनुवे। ऊर्णुनुवाते। ऊर्णुनुविरे ( ये ) अनेन पूर्वस्य ः। ऊर्णूयात्। ऊर्णूयास्ताम्। ऊर्णूयासुः। ङित्त्वात् ऊर्णुविपीष्ट। विकल्पेन गुणः। विपीष्ट। अन्येषां रूपाणि ज्ञातव्यानि। विस्तरभयान्न लिख्यन्ते। लुङ्लकारे।

ऊर्णोतेर्वा वृद्धिः सौ परे ) पक्षे गुणः। और्णावीत्-और्णवीत्-और्णुवीत्।

और्णाविष्ट। और्णविष्ट। और्णुविष्ट॥ इत्यदादिपूभयपदिनः॥

॥ इत्युभयपदिनो लुग्विकरणा अदादयो धातवः॥

॥ इति अदादिनामको द्वितीयो गणः समाप्तः॥ २॥

सूत्रम् ( ऊर्णोतेः० ) ऊर्णोतेर्धातोर्वा वृद्धिर्भवति सिप्रत्यये परे। अनेनास्य वाः। द्वौ अडागमौ भवतः। स्वरादित्वात्। और्णावीत्। पक्षे गुणो भवति। ङित् वा उव् भवति। और्णुवीत्। और्णुविष्टाम्। और्णुविषुः। यदा गुणो भवति और्णवीत्। और्णविष्टाम्-और्णविषुः। आत्मनेपदे और्णाविष्ट। और्णाविषा-। और्णाविषत। और्णविष्ट-और्णुविष्ट। और्णुविपाताम्। और्णुविषत। इत्यदिपूभयपदिनः इति लुग्विकरणा अदादयो धातवः कथिताः॥ ॥ इति द्वितीयोऽदि गणः॥

अथ लुग्विकरणस्यापि ह्वादिगणस्य विशेषः॥ ॥ हु दानादनयोः॥ ( ह्वादेर्द्विश्च ) हु इत्यादेर्गणादुत्पन्नस्यापो लुग्भवति। तस्मिन् लुकि सति धातोर्द्विर्वचनम् ( कुहोश्चुः। गुणः ) जुहोति। जुहुतः।

अधुना लुग्विकरणा ह्वादयो धातवः कथ्यन्ते। लुग्विकरणस्यापि ह्वादिगय विशेषः। तिवादयः प्रत्यया भवन्ति॥ हु दानादनयोः। अयं धातुः प्रायोऽग्निण्यर्थे होमार्थे वर्तते। उदात्तेत्। तेन परस्मैपदी हु अप् तिप् इति जाते सूत्रम् ह्वादेर्द्विश्च ) ह्वादेः ५-१ द्विः १-१ च १-१ आद्ये ( नामिनो रः ) द्वितीये ( विसर्गस्य सः। स्तोश्चुभिः श्चुः ) त्रिपदं सूत्रम्। हु इत्यादेर्गणात् धातुपाठोक्तादुत्पन्नस्य अप्प्रत्ययस्य लुग् भवति। तस्मिश्च लुकि कृते सति धातोर्द्विर्वचनं द्वित्वं भवति।

अनेन अपो लुग् धातोर्द्वित्वे। सूत्रम् ( सस्वरादिर्द्विरद्विः ) सस्वरः १-१ आदिः १-१ द्विः। १-१ अद्विः १-१ चतुष्पदं सूत्रम्। हसादौ अनेकस्वरे धातौ एकस्वरे वा संयोगादौ व्यञ्जनान्ते च धातौ सस्वर आदिरवयवोऽद्विरुक्तो द्विर्भवति। इदं द्वित्वविधायकं सूत्रम्। हु हु तिप् ( कुहोश्चुः। झपानां जबचपाः ) जु हु तिप्। इति जाते। गुणः। जुहोति। जुहुतः। 'जुहु अन्ति' इति जाते।

( द्वेः ) द्विरुक्तादुत्तरस्यान्त इत्येतस्याद्भवति। जुह्वति। जुहोपि। जुहुथः। जुहुथ। जुहोमि। जुहुवः। जुहुमः। जुहुयात्। जुहुयाताम्। जुहोतु-जुहुतात्। जुहुताम्। जुह्वतु।

सूत्रम् ( द्वेः ) द्विरुक्तात् कृतद्वित्वाद्धातोरुत्तरस्य अन्तः अत् भवति। अनेन अन्तः अत्। नुधातोः। जुह्वति। अन्यानि मूले सन्ति। जुहुयात्। जुहुयाताम्। जुहुयुः। जुहोतु। जुहुतात्। जुहुताम्। जुह्वतु। 'जुहु हि' इति जाते।

( हेर्धिः ) जुहोतेरुत्तरस्य हेर्धिर्भवति। जुहुधि। अजुहोत्। अजुहुताम्। अद्व्युसीत्युक्तेर्गुणः।

सूत्रम् (हेर्धिः) हेः ६-१ धिः १-१ जुहोतिधातोरुत्तरस्य हिप्रत्ययस्य धिर्भवति। अनेन हेर्धिः। जुहुधि। अन्यानि सुगमानि। अजुहोत्। अजुहुताम्। अजुहु अन् इति जाते।

( अन उस् ) अजुहवुः। अजुहोः। अजुहुतम्। अजुहुत। अजुहवम्। अजुहुव। अजुहुम। जुहाव। जुहुवतुः। जुहुवुः। जुहविथ-जुहोथ।

सूत्रम् ( अन उस् ) अनः ६-१ उस् १-१। द्विरुक्ताद्धातोरन् उस् भवति। अद्व्युसीत्युक्तत्वात् गुणो भवति। अजुहवुः। अन्यानि मूले सन्ति। 'हु णप्' इति स्थिते ( द्विश्च। सस्वरादिः। कुहोश्चुः। झपानाम्। धातोर्नामिनः ) जुहाव। जुहुवतुः। ( अत्वतो० ) जुहविथ-जुहोथ।

( भीह्रुभृह्रीणामाम्वा वक्तव्यः स लुग्वत् ) लुकि सति धातोर्द्वित्वम्। जुहवांचकार। हूयात्। होता। होष्यति। अहोष्यत्। अहौषीत्। अहौष्टाम्। अहौषुः॥ ञिभी भये। ञि इत्। बिभेति। बिभीतः।

सूत्रम् ( भीहुभृह्रीणामाम् वा० ) भीहुभृह्रीणां धातूनां आम् वा वक्तव्यः स चाम् लुग्वत् । लुकि सति धातोर्द्वित्वं भवति । जुहवांचकार । जुहवामास । जुहवांबभूव । एतानि सुगमानि ( ये ) हूयात् । होता । अत्र गुणो भवति । अन्येषां लकाराणां प्रथमपुरुषस्यैकवचनान्तानि मूले सन्ति । लुङ्लकारे ( अनिटो नामिवतः ) अनेन वृद्धिः । अहौषीत् । अहौष्टाम् । अहौषुः । अहौषीः । अहौष्टम् । अहौष्ट । इत्यादीनि ॥ ञिभी भये । ञि इत् । पूर्ववत् तिवादयः ( अप् कर्त्तरि । ह्वादेर्द्विश्च । ह्रस्वः । झपानाम् । गुणः ) बिभेति । बिभीतः ।

( ङिति हसे भिय इकारो वा वक्तव्यः सार्वधातुके ) बिभितः । बिभ्यति । बिभीयात्–बिभियात् । बिभेतु–बिभितात्–बिभीतात् । बिभीताम्–बिभिताम् । अबिभेत् । अबिभिताम्–अबिभीताम् । अबिभयुः । बिभाय । पक्षे आम् । बिभयांचकार । भीयात् । भेता । भेष्यति । अभेष्यत् । अभैषीत् ॥ ह्री लज्जायाम् । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रीयात् । जिह्रेतु । अजिह्रेत् । अजिह्रीताम् । अजिह्रयुः । जिह्राय । जिह्रियतुः । जिह्रियुः । जिह्रयांचकार । ह्रीयात् । ह्रेता । ह्रेष्यति । अह्रेष्यत् । अह्रैषीत् ॥ पॄ पालनपूरणयोः ।

सूत्रम् ( ङिति हसे परे भियो धातोरिकारो वा वक्तव्यः सार्वधातुके ) सुगममिदं सूत्रम् । बिभितः ( नुधातोः ) बिभ्यति । अत्र रूपे । द्विरुक्तात् । अनेन अन्तः अत् बिभेषि । अत्र षत्वम् । बिभीथः–बिभिथः । बिभीथ–बिभिथ । इत्यादीनि रूपाणि ज्ञातव्यानि । बिभीयात्–बिभियात् । बिभीयाताम्–बिभियाताम् । बिभीयुः–बिभियुः । इत्यादीनि । लोट्लकारे । बिभेतु–बिभीतात्–बिभितात् । बिभीताम्–बिभिताम् । बिभ्यतु । इत्यादीनि । अबिभेत् । अबिभीताम्–अबिभिताम् । अबिभयुः । इत्यादीनि । लिट्लकारे ( द्विश्च । सस्वरादिः । ह्रस्वः । झपानाम० । धातोर्नामिनः ) बिभाय । बिभ्यतुः । बिभ्युः । इत्यादीनि ( भीहुभृह्रीणां० ) अनेनास्याम्प्रत्ययः । बिभयांचकार । बिभयामास । बिभयांबभूव । भीयात् । (गुणः) । भेता । लुङ्लकारे । ( अनिटो नामिवतः ) अनेन वृद्धिः । अभैषीत् । अभैष्टाम् । अभैषुः ॥ इत्यादीनि ॥ ह्री लज्जायाम् । पूर्ववत् तिवादयः ( अप्कर्त्तरि । ह्वादेर्द्विश्च । सस्वरादिः । कुहोश्चुः । झपाना जबचपाः । गुणः ) जिह्रेति । जिह्रीतः ( नुधातोः ) द्विरुक्तात् । जिह्रियति । इत्यादीनि । लिट्लकारे ( द्विश्च । सस्वरादिः । कुहोश्चुः । झपानाम् । धातोर्नामिनः ) जिह्राय ( नुधातोः ) जिह्रियतुः । जिह्रियुः । इत्यादीनि ( भीहु० )

अनेनाम् । जिह्रयाञ्चकार । जिह्रयामास । जिह्रयांबभूव । ह्रीयात् ( गुणः ) ह्रेता । अन्यानि सुगमानि । लुङ्लकारे ( अनिटः । अह्रैषीत् । अह्रैष्टाम् । अह्रैषुः । इत्यादीनि । सुगमोऽयं धातुः॥ पॄ पालनपूरणयोः। पूर्ववत् तिबादयः ( अप् कर्त्तरि । ह्वादेर्द्विश्च ) पॄ पॄ तिप् इति जाते ।

( ऋश्रोरिः पूर्वस्य ) ऋश्रोः पूर्वस्य ऋकारस्य इकारो भवति लुकि सति ( गुणः ) पिपर्त्ति ।

सूत्रम् ( ऋश्रोरिः पूर्वस्य ) ऋश्रोः ६-२ इः १-१ पूर्वस्य ६-१ऋ गतौ॥ पॄ पालनपूरणयोः । इत्येतयोः धात्वोस्तिबादौ । अपो लुकि कृते । पूर्वस्य ऋकारस्य इकारो भवति । लुकि सति ( रः ) अस्य सूत्रस्यापवादोऽयम् । पिपॄ तिप् इति जाते (गुणः। राधपोद्विः ) पिपर्त्ति । पिपॄ तस् इति जाते ।

( पोरुर् ) पवर्गादुत्तरस्य ऋकारस्य उर् भवति किति ङिति च परे ( य्वोर्वि हसे ) पिपूर्तः । पिपुरति । पिपूर्यात् । पिपर्तु-पिपूर्तात् । पिपूर्ताम् । पिपुरतु । पिपूर्हि । अपिपः ।

सूत्रम् ( पोरुर् ) पोः ५-१ उर् १-१ पवर्गात् उत्तरस्य ऋकारस्य किति ङिति प्रत्यये परे उर् भवति । ( य्वोर्वि हसे ) अनेन दीर्घः । पिपूर्तः ( पोरुर् ) पिपुरति । पिपर्षि । पिपूर्थः । पिपूर्थ । पिपर्मि । पिपूर्वः । पिपूर्मः । पिपूर्यात् । पिपूर्याताम् पिपूर्युः । इत्यादीनि । एतानि रूपाणि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति । लोट्लकारे । पिपर्त्तु-पिपूर्तात् । पिपूर्त्ताम् । पिपुरतु । पिपूर्हि-पिपूर्तात् । पिपूर्तम् । पिपूर्त । ( गुणः ) पिपराणि । पिपराव । पिपराम । लङ्लकारे । अपिपॄ दिप्' इति जाते । ( गुणः ) अपिपर् दिप् इति जाते ( दिस्योर्हसात् । स्रोर्विसर्गः ) अपिपः ।

( ऋश्रोर्दिस्योरडागमो वा वक्तव्यः इति केचित् ) अपिपरत् । अपिपूर्ताम् । अपिपरुः । अपिपः-अपिपरः । अपिपूर्तम् । अपिपूर्त । अपिपरम् । अपिपूर्व । अपिपूर्म । पपार ।

सूत्रम् ( ऋश्रोः० ) ऋश्रोर्धात्वोः दिस्योः प्रत्यययोः अडागमो वा वक्तव्यः इति केचिदाचार्या वदन्ति । तन्मते । अपिपरत् ।अपिपूर्ताम्।अपिपरुः । अपिपः (ऋश्रोः०) अपिपरः । अन्यानि मूले सन्ति । लिट्लकारे । 'पॄ णप्' इति स्थिते ( द्विश्च । सस्वरादिः । रः । धातोर्नामिनः ) पपार ।

( ऋसंयोगादेर्णादेरकित्त्वं वाच्यम् ) कित्त्वाभावाद्गुणः । पपरतुः । पपरुः । पपरिथ । पूर्यात् ( ईटो ग्रहाम्० ) । परीता ।

परिता । परीष्यति-परिष्यति । अपरीष्यत्-अपरिष्यत् । अपारीत् । ( वृद्धिहेतौ साविटो न दीर्घः ) अपारिष्टाम् । अपारिषुः॥ ह्रस्वोऽपि पिपर्त्तिरस्ति। पिपर्त्ति। पिपृतः । पिप्रति। पिपृयात् । पिपर्तु । अपिपः । अपिपरत् । अपिपृताम् । अपिपरुः । अपिपः । अपिपरः । पपार । पप्रतुः। पप्रुः । ( यादादौ ) इति रिङ् । प्रियात् । पर्ता । ( ह्नृतः स्यपः ) । परिष्यति । अपरिष्यत् । अपार्पीत् ॥ ओहाक् त्यागे । ओकावितौ जहाति ।

( ऋसंयोगादेरिति ) अनेनास्य किस्वाभावात् गुणो भवति । पपरतुः । पपरुः । पपरिथ । पपरथुः । पपर । पपार । पपर । पपरिव । पपरिम । पृ यात् इति स्थिते । ( पोरुर् । य्वोर्वि हसे ) पूर्यात् । पूर्यास्ताम् । पूर्यासुः । इत्यादीनि । 'पृ ता' इति स्थिते । ( गुणः । सिसता० । ईटो ग्रहाम्० ) परीता-परिता । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे ( णित्पे ) अनेन सेर्णित्त्वात् ( धातोर्नामिनः ) अनेन वृद्धिः । अपारीत् । अपारिष्टाम् । अस्मिन् रूपे ( ईटो ग्रहाम्० ) अनेन दीर्घे प्राप्ते ( वृद्धिहेतौ सौ ) अनेन तन्निषेधः । अपारिषुः । इत्यादीनि ॥ ह्रस्वोऽपि पिपर्तिरस्ति । पूर्ववत् तिवादयः ( ह्वादेर्द्विश्च । ऋप्रोरिः पूर्वस्य । गुणः ) पिपर्ति । पिपृतः । पिप्रति । पिपर्षि । पिपृथः । पिपृथ । पिपर्मि । पिपृवः । पिपृमः । पिपृयात् । पिपर्तु-पिपृतात् । पिपृताम् । पिपरतु । पिपृहि-पिपृतात् । पिपृतम् । पिपृत । अपिपः ( ऋभ्रोः ) अपिपरत् । अपिपृताम् । अपिपरुः । अपिपः । अपिपः । अन्यानि सुगमानि । लिट्लकारे ( द्विश्च । सस्वरादिः । रः । धातोर्नामिनः ) पपार ( ऋ रम् ) पप्रतुः । पप्रुः । पपर्थ ( यादादौ ) अनेन ऋकारस्य रिङ् । प्रियात् ( गुणः । राद्यपो द्विः ) पर्त्ता । पर्त्तारौ । पर्त्तारः ( ह्नृतः स्यपः ) अनेन स्यप इडागमो भवति ( गुणः ) परिष्यति । इत्यादीनि रूपाणि । अपरिष्यत् । लुङ्लकारे ( णित्पे ) अनेन णित्त्वात् ( सावनिटः ) अनेन नित्यं वृद्धिर्भवति । पत्वम् ( दिवादावट् ) अनेन अडागमः । अपार्षीत् । अपार्ष्टाम् । अपार्षुः । इत्यादीनि रूपाणि सुगमानि ॥ ओहाक् त्यागे । ओकावितौ । पूर्ववत् प्रत्ययः ( ह्वादेर्द्विश्च ) अनेनाद्यो लुग् धातोर्द्वित्वं च भवति । तदा हा हा तिप् इति जाते ( ह्रस्वः । कुहोश्चुः । झपानाम्० ) जहाति । इति सिद्धम् । 'जहा तस्' इति जाते ।

( द्वेस्तौ ) लोपोऽनुवर्तते ईकारश्च । द्विरुक्तस्य धातोराकारस्य लोपो भवति ङिति स्वरे ईकारश्च ङिति हसे परे । जहीतः ।

सूत्रम् (द्वेस्तौ) लोपोऽनुवर्त्तते इकारश्च। द्वेः ६-१ तौ ७-२ लोपः इकारश्च अनुवर्त्तते। सूत्रं तु द्विपदमस्ति। कस्मात्सूत्रादनुवर्त्तते इति शङ्कायां वृत्तिकारो विशेषेण व्याचष्टे। नात इति सूत्रादाकारस्य लोपोऽनुवर्त्तते। तथा (ई हसे) इति सूत्रात् ईकारोऽनुवर्त्तते। द्विरुक्तस्य धातोराकारस्य टिति स्वरे परे लोपो भवति। टिति हसे परे आकारस्य ईकारो भवति। अनेन आकारस्य ईकारः। जहीतः।

**(जहातेराकारस्य क्ङिति हसे इर्वा वाच्यः) जहितः। जहति।**

(जहातेः) जहातेर्धातोराकारस्य क्ङिति हसे परे वा इकारो भवति। अनेन वा आकारस्य इकारः। जहितः। जहा अन्ति इति जाते। द्विरुक्तात् (द्वेस्तौ) अनेन आकारस्य लोपो भवति। जहति। जहासि। जहीथः-जहिथः। जहीथ-जहिथ। जहामि। जहीवः। जहिवः-जहीमः। जहिमः-इत्यादीनि रूपाणि ज्ञेयानि। 'जहा यात्' इति जाते।

**(जहातेर्यादादावालोपो वाच्यः) जह्यात्। जहातु-जहीतात्-जहितात्। जहीताम्-जहिताम्। जहतु।**

सूत्रम् (जहातेः०) जहातेर्धातोर्यादादौ परे आकारस्य लोपो भवति। अनेन आकारस्य लोपः। जह्यात्। शेषाणि सुगमानि। आशीःप्रेरणयोः। जहातु-जहीतात्-जहितात्। जहीताम्-जहिताम्। (द्वेस्तौ) द्विरुक्तात्। जहतु। जहा हि इति स्थिते।

**(ईर्वा हौ) जहातेर्हौ परे ईकारः सिद्ध एव। पक्षे आकारेकारौ भवतः। जहीहि-जहिहि-जहाहि। अजहात्। अजहिताम्-अजहीताम्। अजहुः। जहौ। जहतुः। जहुः। जहिथ-जहाथ। (दादेरे) हेयात्। हाता। हास्यति। अहास्यत। अहासीत्॥ ऋ गतौ। ऋत्रोरिः पूर्वस्य।**

सूत्रम् (ईर्वाहौ) ईः। १-१ वा अव्ययम् हौ ७-१। जहातेर्धातोर्हौ परे ईकारः सिद्ध एव पक्षे आकारेकारौ भवतः। सुगमम्। अनेन सूत्रेण त्रीणि रूपाणि भवन्ति-जहीहि। जहिहि-जहाहि। अत्र भट्टिः 'जहिहि जहीहि जहाहि रामभार्याम्' इत्युदाजहार। अन्यानि सुगमानि। लङ्लकारे। अजहात्। अजहीताम्-अजहिताम्। (द्वेस्तौ) अनेनाकारस्य लोपो भवति। अजहुः। अन्यानि सुगमानि (परोक्षे) द्वित्वम् (ह्रस्वः। कुहोश्चुः। झपानाम्। आतो णप् डौ) जहौ। (आतोऽनपि) अनेन आकारस्य लोपो भवति। तदा। जहतुः। जहुः (अत्वतो०) जहिथ-जहाथ। अन्यानि सुगमानि। लिङ्लकारे 'हा यात्'-इति जाते (दादेरे) अनेन

अपोऽपवादः । मकारः स्थाननियमार्थः । णत्वम् । ( तयोर्धः ) रुणद्धि । ( नमसोऽस्य )

सूत्रम् ( रुधादेर्नम् ) रुध आदिर्यस्मात् स रुधादिः तस्य रुधादेः ५-१ नम् १-१ रुधादेर्गणान्नम् प्रत्ययो भवति चतुर्षु लकारेषु परेषु । अपोऽपवादः । प्रत्यये मकारः स्थाननियमार्थः । ( पूर्नो णोनन्ते ) अनेन णत्वं च । ( तयोर्धः ) अनेन तकारस्य धकारः ( झबे जबाः ) रुणद्धि । रुध् तस् इति जाते । ( नमसोऽस्य ) अनेन अकारस्य लोपः । ( तयोर्धः )

( हसात्परस्य झसस्य लोपो वा सवर्णे झसे ) रुन्धः । रुन्धंति। रुणत्सि ।रुन्धः।रुन्ध । रुणध्मि।रुन्ध्वः। रुन्ध्मः।रुन्धे।रुन्धाते रुन्धते । रुन्ध्यात् । रुन्धीत । रुणद्धु । रुन्धाम् । अरुणत्-अरुणद् । अरुन्ध । रुरोध। रुरुधतुः।रुरुधुः । रुरोधिथ । रुरुधे । रुरुधाते । रुध्यात् । रुत्सीष्ट। रोद्धा २ । रोत्स्यति । रोत्स्यते । अरोत्स्यत् । अरोत्स्यत ।(अनिटो नामिवतः ) अरौत्सीत् ( सिस्योः० ) अरुद्ध । अरुत्साताम् । अरुत्सत ( इरितो वा ) अरुधत् ॥ उच्छृदिर् दीप्तिदेवनयोः । उइराविती । छृणत्ति । छृन्तः। छृन्दंति । छृन्ते । छृन्द्यात् । छृन्दीत । छृणत्तु । छृन्ताम् । अच्छृणत्-अच्छृणद् ( दः सः ) दकारस्य वा सकारो भवति सिपि विषये । अच्छृणः । अच्छृणतम् । अच्छृणत । चच्छर्द । चच्छृदे । छृद्यात् । छृत्सीष्ट--छर्दिषीष्ट । छर्दिता । छर्दिष्यति-छर्त्स्यंति । छर्दिष्यते-छर्त्स्यंते । अच्छर्दिष्यत्-अच्छर्त्स्यंत्। अच्छर्दिष्यत-अच्छर्त्स्यंत ( इरितो वा ) अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट ॥ उतृदिर् हिंसानादरयोः । तृणत्ति। तृन्तः । तृन्दंति । तृन्ते। तृन्द्यात् । तृन्दीत । तृणत्तु । तृन्ताम् । अतृणत् । अतृन्त । ततर्द । ततृदे । तृद्यात् । तृत्सीष्ट-तर्दिषीष्ट । तर्दिष्यति-तर्त्स्यंति । तर्दिष्यते-तर्त्स्यंते। अतर्दिष्यत्-अतर्त्स्यंत् । अतर्दिष्यत-अतर्त्स्यंत। अतृदत-

अतर्दीत्। ( नृततृदच्छृदचृतकृद्द्योऽसेः सादेरिड्वा ) अतर्दिष्ट॥
॥ इति रुधादिपूभयपदिनः॥

( हसात्० ) अनेन धकारस्य लोपो भवति। ( नश्चा० ) रुन्धः। रुन्धन्ति। ( खसे० ) रुणत्सि। रुन्धः। रुन्ध। अन्यानि मूले संति। रुंधे। रुंधाते। रुंधते। इत्यादीनि रूपाणि भवंति। रुंध्यात्। रुंध्याताम्। रुंध्युः। सुगमानि। रुंधीत। रुंधीयाताम्। रुंधीरन्। रुणद्धु--रुंधात्। रुंधाम्। रुंधंतु। ( झसाद्धिर्हिः। हसात् ) रुंधि। रुंधात्। रुंधम्। रुंध। रुणधानि। रुणधाव। रुणधाम। रुंधाम्। रुधाताम्। रुंधताम्। इत्यादीनि। अरुणत्। अरुंधाम्। अरुंधन्। अरुणः। अरुंध। अरुंधाताम्। अरुंधत। अरुंधाः। अरुंधाताम्। अरुंध्वम्। अरुणधम्। अरुंध्व। अरुंध्म। इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। तानि यथासंभवं साध्यानि। लिट्लकारे। द्वित्वादिकं सर्वं भवति। ( उपधाया लघोः ) रुरोध। रुरुधतुः। रुरुधुः। रुरोधिथ। इत्यादीनि। आत्मनेपदे। रुरुधे। रुरुधाते। रुरुधिरे। अन्यानि सुगमानि। रुध्यात्। रुत्सीष्ट। ( तथोर्धः गुणः ) रोद्धा। रोद्धा। ( खसे० ) रोत्स्यति। रोत्स्यते लुङ्लकारे। ( अनिटः ) अनेन वृद्धिः। ( खसे० ) अरौत्सीत्। अरौद्धाम्। अरौत्सुः। इत्यादीनि। आत्मनेपदे। ( झसात्० ) अनेन सेर्लोपो भवति। अरुद्ध। अरुत्साताम्। अरुत्सत। इत्यादीनि रूपाणि सुगमानि। अस्य धातोरिरितो वा अनेन ङप्रत्ययो भवति। इरित्त्वात्। ङित्त्वात्। गुणाभावः। अरुधत्। अरुधताम्। अरुधन्। सुगमानि॥ उच्छृदिर् दीप्तिदेवनयोः। उइरावितौ। पूर्ववत् प्रत्ययाः ( रुधादेर्नम् ) अनेन चतुर्षुनम्प्रत्ययो भवति। छृणत्ति। अत्र ( खसे चपा झसानाम् ) अनेन दस्य तः। ( नश्चापदान्ते झसे ) अनेन नस्यानुस्वारो भवति। छृंत्तः। छृंदंति। इत्यादीनि रूपाणि पूर्वसदृशानि सन्ति। पूर्वोक्तैरेव सूत्रैः सिध्यंति। छृन्ते। छृन्दाते। छृन्दते। चतुर्णां लकाराणां रूपाणि पूर्वसदृशानि। लिट्लकारे। द्वित्वादिकं सर्वं भवति ( पूर्वस्य। रः। उपधायाः ) अनेन गुणः। ( झपानाम्० ) चच्छर्द। चच्छृदतुः। चच्छृदुः। चच्छर्दिथ। आत्मनेपदे। चच्छृदे। चच्छृदाते। चच्छृदिरे। इत्यादीनि रूपाणि भवन्ति। छृद्यात्। ( सिस्योः० ) अनेन गुणनिषेधः। (खसे०) छर्त्सीष्ट ( नृत् तृद् छृद् ) अनेन वक्ष्यमाणेन वेट्। ( उपधाया लघोः) अनेन गुणः। छर्दिता। अन्येषां रूपाणि सुगमानि। छर्दिष्यति ( नृततृद्० ) अनेन वा इट्। ( खसे० ) छर्त्स्यति। इत्यादीनि। [illegible]ङ्। द्वाविटौ सेर्लोपः। ( गुणः ) अडागमः। अच्छर्दीत्। अच्छर्दिष्टाम्। अच्छर्दिषुः। अन्यानि सुगमानि। आत्मनेपदे साधनं पूर्ववत्। अच्छर्दिष्ट। अच्छर्दिषाताम्। अच्छर्दिषत। इत्यादीनि। अस्य धातोरिरितो वा। अनेन ङप्रत्ययो भवति। ङित्त्वाद्गुणाभावः। अच्छृदत्। अच्छृदताम्। अच्छृदन्।

अच्छृदः। अच्छृदतम्। अच्छृदत। अच्छृदम्। अच्छृदाव। अच्छृदाम। साधनमेतादृशं शतशः कृतम्॥ उतृदिर् हिंसानादरयोः। उइरावितौ। पूर्ववत् प्रत्यया भवन्ति। (रुधादेर्नम्) अनेन चतुर्षु नम्प्रत्ययो भवति। णत्वम्। तृणत्ति। अस्मिन्रूपे (खसे०) अनेन दस्य तः। ङिति प्रत्यये परे। (नमसोस्य) अनेन नमोऽकारस्य लोपो भवति। (नश्चा०) अनेन झसे परे नकारस्यानुस्वारो भवति। (हसात्०)अनेन वा कारस्य लोपो भवति। छृंत्तः। छृंतः। एतादृशमपि रूपं स्यात्। तृन्दंति। तृन्ते। तृंदाते। तृंदते। इत्यादीनि चतुर्णां रूपाणि सुगमानि। पूर्वोक्तैरेव सूत्रैः सिध्यंति। लिड्लकारे। (द्विश्च। पूर्वस्य रः। उपधाया लघोः) अनेन गुणः। ततर्द। कित्त्वात् गुणाभावः। किति णबादौ। अन्यत्साधनं पूर्ववत्। ततृदतुः। ततृदुः। गुणो भवति थपि। ततर्दिथ। इत्यादीनि। आत्मनेपदे साधनं पूर्ववत्। ततृदे। ततृदाते। ततृदिरे। अन्यानि। सुगमानि। तृद्यात्। (खसे०। नृतृतृद्०) अनेन वा इडनिषेधः। (सिस्योः०) अनेन गुणनिषेधः। तृत्सीष्ट। इटि कृते गुणो भवति। तर्दिपीष्ट। अन्यानि रूपाणि सुगमानि। अन्यानि रूपाण्यन्येषां लकाराणां मूलात् ज्ञेयानि। सिवर्जितसादिप्रत्यये इड्विकल्पः। लुङ्लकारे (सि सता०। से०) आभ्यां द्वाविटौ। सेर्लोपो भवति। उपधायाः। अनेन गुणः (दिवादावट्।वावसाने) अतर्दीत्। अतर्दिष्टाम्। अतर्दिषुः (इरितो वा) अनेन वा ङप्रत्ययो भवति। ङित्त्वाद् गुणाभावः। अतृदत्। आत्मनेपदे (सिसता०) अनेनेट्। गुणः। पत्वम्। ष्टुत्वम् (राघपोद्दिः) अनेन द्वित्वम्। अतर्दिष्ट। अतर्दिषाताम्। अतर्दिषत॥ इत्युभयपादिनः समाप्ताः॥

अथ परस्मैपदिनः॥ शिष्लृ विशेषणे। शिनष्टि। शिंष्टः। शिंषन्ति। शिंष्यात्। शिनष्टु। अशिनट्। शिशेष। शिष्यात्। शेष्टा। शेक्ष्यति। अशेक्ष्यत्। अशिषत्॥ हिसि हिंसायाम्। इदितः।

अथ परस्मैपदिनः कथ्यन्ते। तिवादयः प्रत्यया भवंति (रुधादेर्नम्) अनेन नम्प्रत्ययो भवति॥ शिष्लृ विशेषणे। लृकारो लृत्कार्यार्थः पूर्ववत्सर्वं कार्यं भवति। शि नष् तिप् इति जाते। ष्टुत्वम्। शिनष्टि (नश्चापन्दाते झसे) शिंष्टः। शिंषंति (षढोः कः से) पत्वम्। शिनक्षि। शिंष्टः। शिंष्ट। शिनष्मि। शिंष्वः। शिंष्मः। शिंष्यात्। शिंष्याताम्। शिंष्युः। शिनष्टु। शिंष्टात्। शिंष्टाम्। शिंषन्तु (झसाद्धेर्हिः) ष्टुत्वम् (षोडः) शिण्ढि। अन्यानि सुगमानि। लङ्लकारे। (षोडः) अनेन षकारस्य डकारः (वावसाने। दिवादावट्) अशिनट्-अशिनड्। अशिंष्टाम्। अशिंषन्। अन्यानि सुगमानि। लिट्लकारे। द्वित्वं पूर्वस्य (उपधाया लघोः)

शिशेप। शिशिपतुः। शिशिपुः। शिशेपिथ। अन्यानि सुगमानि। शिष्यात्। (उपधाया लघोः) इत्वम्। शेष्टा। गुणः (षढोः कः से। कपसयोगे क्षः) शेक्ष्यति (दिनादावद्) अशेक्ष्यत्। लुङ्लकारे (ल्तिपुषादेर्ङः) अनेन ङप्रत्ययः। ङित्त्वाद्गुणाभावः (दिवादावद्) अशिषत्। अशिषताम्। अशिषन्॥ हिसि हिंसायाम्। तिवादयः (इदितो नुम्०) पश्चात् (रुधादेर्नम्) अनेन नम्प्रत्ययो भवति। हिनस् तिप् इति जाते।

**(नमः) नमः प्रत्ययात्परस्य नस्य लोपो भवति। हिनस्ति। हिंस्तः। हिंसन्ति। हिंस्यात्। हिनस्तु। (धौ मलोपो वा सस्य द इति केचित्) हिन्धि। हिन्द्धि। अहिनत्-अहिनद्।**

सूत्रम् (नमः) नमः ५-१ एकपद सूत्रम्। नमः प्रत्ययात्परस्य नकारस्य लोपो भवति। अनेन नकारस्य लोपः 'स्वरहीन०' हिनस्ति (नमसोऽस्य। नश्चापदान्ते) अनेन नमो नकारस्यानुस्वारः। हिंस्तः। हिंसन्ति। अनेनैव प्रकारेणान्यानि रूपाणि साध्यानि। हिंस्यात्। हिनस्तु। हिंस्तात्। हिंस्ताम्। हिंसन्तु (झसाद्धिर्धिः) तदा हिंस् धि इति जाते। सूत्रम् (धौ) धौ परे सति सकारस्य लोपो भवति। वा सकारस्य दकारो भवति। यदा सकारस्य लोपः। तदा। हिन्धि। यदा सकारस्य दकारस्तदा। हिन्द्धि। अन्यानि सुगमानि। लङ्लकारे (दिवादावद्) अहिंस् दिप् इति जाते।

**(दिपि सस्य दः सिपि वा) अहिनत्। अहिनः। जिहिंस। हिंस्यात्। हिंसिता। हिंसिष्यति। अहिंसिष्यत्। अहिंसीत्॥ भञ्जो आमर्दने। ओ इत्। भनक्ति। भङ्क्तः। बभञ्ज। भज्यात्। भङ्क्ता। भङ्क्ष्यति। अभङ्क्ष्यत्।**

(दिपि सस्य दः०) अनेन सकारस्य दकारः (दिस्योर्हसात्। वावसाने) अहिनत् अहिनद्। अहिंस्ताम्। अहिंसन्। अहिनत्। अहिनः। अहिंस्तम्। अहिंस्त। अहिनसम्। अहिंस्व। अहिंस्म। लिट्लकारे। द्वित्वादिकम् (कुहोश्चुः) जिहिंस। जिहिंसतुः। जिहिंसुः। हिंस्यात्। हिंसिता (सिसता०) अनेन इडागमो भवति। हिंसिष्यति (दिवादावद्) अहिंसिष्यत्। लुङ्लकारे। द्वाविटौ। सेर्लोपः (दिवादावद्) अहिंसीत्। अहिंसिष्टाम्। अहिंसिषुः। इत्यादीनि॥ भञ्जो आमर्दने। ओकार इत्। तिवादयः (रुधादेर्नम्) भनज् तिप् इति जाते (नमः। चोः कुः। खसे चपा०) भनक्ति (नमसोऽस्य) अनेन ङित्यकारस्य लोपः (नश्चापदान्ते०) भङ्क्तः। भञ्जन्ति। (क्लिलात्०। कप०) भनक्षि। भज्यात्। भंज्यातम्। भंज्युः।

भनक्त–भंक्तात् । भंक्ताम् । भंजंतु । भंग्धि । भंक्तात् । भंक्तम् । भंक्त । भनजानि । भनजाव । भनजाम । ( चोः कुः । दिस्योर्हसात् । दिवादावट् । वावसाने ) अभनक्–अभनग् । अभंक्ताम् । अभंजन् । अभनक्–अभनग् । अभंक्तम् । अभंक्त । अभनजम् । अभंज्व । अभंज्म । लिट्लकारे द्वित्वादिकं ( झपानाम् ) बभंज । बभंजतुः । बभंजुः । बभंजिथ ( अत्वतः । चोः कुः । खसे चपा० ) बभंक्थ । इत्यादीनि । भज्यात् । अत्र नोलोपः । अनेन नकारस्य लोपः । भंज् ता इति जाते ( चोः कुः । खसेचपा० ) भंक्ता । भंक्तारौ । भंक्तारः ' भंज् स्यप् तिप् ' इति जाते ( चोः कुः । खसे० । किलात्० । कप० ) भंक्ष्यति ( दिवादावट् ) अभंक्ष्यत् । लुङ्लकारे ( भूते सिः । सेः । दिवादावट् ) अभंज सि ईट् दिप् इति जाते ।

**( सावनिटो नित्यं वृद्धिः ) अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे । अभांक्षीत् । अभाङ्क्ताम् । अभांक्षुः ॥ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अञ्ज्यात् । अनक्तु । आनक्–आनग् । आनञ्ज । अज्यात् । अञ्जिता–अङ्क्ता । अञ्जिष्यति–अंक्ष्यति । आञ्जिष्यत्–आंक्ष्यत् ।**

सूत्रम् ( सावनिटो नित्यं वृद्धिः ) सौ ७–१ अनिटः ६–१ नित्यं १–१ वृद्धिः १–१ अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे । सुगममिदं सूत्रम् । ( चोः कुः । खसे० । किलात्० । कप० ) अभांक्षीत् । ( झसात्० ) अभांक्ताम । अभांक्षुः । अन्यानि सुगमानि ॥ अंजू व्यक्तिम्रक्षणकांतिगतिषु । ऊकार इड्विकल्पार्थः । तिवादयः । ( रुधादेर्नम् । चोः कुः । खसे० ) अनक्ति । ( नमसोऽस्य ) अङ्क्तः । अञ्जन्ति । अंज्यात् । अंज्याताम् । अंज्युः । अनक्तु । अंक्तात् । अंक्ताम् । अंजंतु । अंग्धि । ( दिवादावट् । स्वरादेः परः । सवर्णे दीर्घः । चोः कुः । दिस्योर्हसात् । वावसाने ) आनक् । आनग् । ( नमः ) आक्ताम् । ( नश्चापदाते० ) आजन् । अन्यानि सुगमानि । लिट्लकारे । द्वित्वादिकम् । ( नुगशां० । आभ्वोर्णादौ ) आनंज । आनंजतु । आनंजुः । आनंजिथ–आनङ्क्थ । अज्यात् । ( ऊदितो वा ) अनेन सूत्रेण इड्विकल्पो भवति । अंजिता । इडभावे । ( चोः कुः । खसे० ) अंक्ता । अजिष्यति । इडभावे । कुत्वम् । ( खसे० ) षत्वम् । ( कप० ) अंक्ष्यति ( दिवादावट् । स्वरादेः ) आंजिष्यत् । इडभावे आंक्ष्यत् । लुङ्लकारे इड्विकल्पे प्राप्ते ।

**( अञ्जेः सौ नित्यमिड्वाच्यः ) आञ्जीत् ॥ ॥ इति रुधादिषु परस्मैपदिनः ॥**

सूत्रम् ( अंजेः० ) अंजेर्धातोः सौ नित्यं इड् वाच्यः । अन्यत् साधनं तु पूर्ववत् । आञ्जीत् । आंजिष्टाम् । आञ्जिषुः । इत्यादीनि ॥ इति रुधादिषु परस्मैपदिनः कथिताः ॥

अथात्मनेपदिनः ॥ ञिइन्धी दीप्तौ । ञि ई इतौ । इन्धे । इन्धीत । इन्धाम् । ऐन्ध । इन्धाञ्चक्रे । इन्धिषीष्ट । इन्धिता । इन्धिष्यते । ऐन्धिष्यत । ऐन्धिष्ट ॥ ॥ इति रुधादिष्वात्मनेपदिनः ॥ ॥ इति नम्विकरणा रुधादयः ॥ ॥

अथात्मनेपदिनः कथ्यन्ते ॥ ञिइन्धी दीप्तौ । ञि ई इतौ । तआदयः । ( रुधादेर्नम् । नमः । तयोर्धः । नमसोस्य । नश्चापदान्ते । हसात् ) इन्धे । इन्धाते । इन्धते । इन्धीत । इन्धीयाताम् । इन्धीरन् । इन्धाम् । इन्धाताम् । इन्धताम् । ( दिवादावट् । स्वरादेः परः । अ इ ए । ए ऐ ऐ ) अन्यत् साधनं तु पूर्ववत् । ऐंध । ऐंधाताम् । ऐंधत । ऐंधाः । ऐंधाथाम् । ऐंध्वम् । ( कासादिप्रत्ययादाम् ) अनेनाम् । अन्यत्साधनं तु पूर्ववत् । इन्धांचक्रे । इन्धामास । इन्धांबभूव । रूपाणि सुगमानि । ( सिसता० ) अनेनेट् । इन्धिषीष्ट । इन्धिता । इन्धिष्यते । द्वावडागमौ । अ इ ए । ए ऐ ऐ । ऐन्धिष्यत । लुङ्लकारे । ऐन्धिष्ट । ऐन्धिषाताम् । ऐन्धिषत ॥ इत्यात्मनेपदिनः समाप्तिमगमन् ॥ इति नम्विकरणा रुधादयो धातवः कथिताः ॥

अथ तनादयः ॥ सर्वे उभयपदिनः ॥ तनु विस्तारे । ( तनादेरुप् ) तनादेर्गणादुप् प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । ( नूपः ) तनोति । तनुते । तनुयात् । तन्वीत । तनोतु । तनुताम् । अतनोत् । अतनुत । ततान । तेनतुः । तेनुः । तेने । तन्यात् । तनिषीष्ट । तनिता २ । तनिष्यति । तनिष्यते । अतनिष्यत् । अतनिष्यत । अतानीत्-अतनीत् । अतनिष्ट ।

अथ तनादयो धातवः कथ्यन्ते । तनादयः सर्वे उभयपदिनः सन्ति॥ तनु विस्तारे । तिवादयः तआदयश्च प्रत्यया भवन्ति । सूत्रम् ( तनादेरुप् ) तनादेः ५–१ उप् १–१ तनादेर्गणात् चतुर्षु लकारेषु परेषु उप्प्रत्ययो भवति । अपोऽपवादः । अनेन उप् । तनु तिप् इति जाते । ( नूपः ) अनेन गुणः । तनोति । तनुतः । ( नुधातोः ) तन्वन्ति । तनोषि । तनुथः। तनुथ । तनोमि । ( ओर्म्वोर्वा लोपः ) तनुवः-तन्वः ।

तनुमः-तन्मः । तनुते । तन्वाते । ( आतोन्तोदनतः ) तन्वते । इत्यादीनि ॥ तनुयात् । ( नुधातोः ) तन्वीत । तनोतु । हौ परे । ( ओर्वाहेः ) तनु । तनुताम् । तन्वाताम् । तन्वताम् । तनुष्व । अन्यानि सुगमानि । ( दिवादावद् ) अतनोत् । अतनुताम् । अतन्वन् । आत्मनेपदे । अतनुत । इत्यादीनि रूपाणि ज्ञातव्यानि । लिट्लकारे । ( द्विश्च । पूर्वस्य । अत उपधायाः ) ततान । (लोपः पचाम्०) तेनतुः । तेनुः (अत्वतः) तेनिथ-ततन्थ । इत्यादीनि । आत्मनेपदे । तेने । तेनाते । तेनिरे । अन्यानि सुगमानि । तन्यात् । ( सिसता० ) षत्वम् । तनिषीष्ट । तनिता । तनिता । लुङ्लकारे । ( णित्पे ) अनेन णित्वात् वृद्धिः । अन्यत्साधनं सुगमम् । अतानीत् । अतानिष्टाम् । अतानिषुः । आत्मनेपदे । अतनिष्ट ।

( तनादेरकरोतेस्तन्थासोर्वा सिलोपो वाच्यः । लोपस्त्वनुदात्ततनाम् ) अतत । अतथाः । अतनिष्ठाः ॥ क्षणु क्षिणु हिंसायाम् । क्षणोति । क्षणुते । क्षणुयात् । क्षण्वीत । क्षणोतु । क्षणुताम् । अक्षणोत् । अक्षणुत । चक्षाण । चक्षणे । क्षण्यात् । क्षणिषीष्ट । क्षणिता २ । क्षणिष्यति । क्षणिष्यते । अक्षणिष्यत् । अक्षणिष्यत ( ह्यन्तक्षणेति० ) न वृद्धिः । अक्षणीत् । अक्षणिष्ट-अक्षत । अक्षथाः । अक्षणिष्ठाः ।

सूत्रम् ( तनादेः० ) अकरोतेस्तनादेस्तन्थासोः परयोः सेर्लोपो वाच्यः । अनेन वा सेर्लोपः ( लोपस्त्वनुदात्त० ) अनेन नकारस्य लोपः । अतत । अतनिषाताम् । अतनिषत । सेर्लोपः । नकारस्य लोपः । अतथाः । अतनिष्ठाः । अन्यानि सुगमानि ॥ क्षणु क्षिणु हिंसायाम् । पूर्ववत् प्रत्यया भवन्ति ( तनादेरुप् । नूरः ) । क्षणोति । क्षणुतः । क्षण्वंति । क्षणुते । क्षणुयात् । क्षण्वीत । क्षणोतु । क्षणुताम् । अक्षणोत् । अक्षणुत । लिट्लकारे ( द्विश्च । पूर्वस्य । कुहोश्चुः । अत उपधायाः ) चक्षाण । चक्षणतुः । चक्षणुः । चक्षणे । चक्षणाते । चक्षणिरे । क्षण्यात् ( सिसता० ) षत्वम् । क्षणिषीष्ट । क्षणिता । क्षणिता । अन्येषां मूलात् ज्ञेयानि । लुङ्लकारे । द्वाविटौ । सेर्णित्वात् । ( अत उपधायाः ) अनेन वृद्धौ प्राप्तायाम् ( ह्यन्तक्षण० ) अनेन तन्निषेधः । अक्षणीत् । अन्यानि सुगमानि । आत्मनेपदे । अक्षणिष्ट ( तनादेः ) अनेन वा सेर्लोपः ( लोपस्त्वनुदात्त० ) अक्षत । अक्षणिषाताम् । अक्षणिषत । अक्षणिष्ठाः । वा सेर्लोपः । अक्षथाः । इत्यादीनि ॥ क्षिणुधातो रूपाणि कथ्यन्ते । प्रत्ययादयः पूर्ववत् । ( तनादेरुप् ) ।

( तनादेरुपधाया गुणो वा पिति ) क्षिणोति-क्षेणोति । अक्षेणीत् । अक्षित-अक्षेणिष्ट ॥ षणु दाने । सेने । सायात् । सन्यात् । असात । असनिष्ट । असाथाः । असनिष्ठाः ॥ डुकृञ् करणे । डुञावितौ ( गुणः । नूपः ) करोति ।

सूत्रम् ( तनादेः० ) तनादेर्धातोरुपधाया गुणो वा भवति पिति प्रत्यये परे । क्षिणोतिक्षेणोति । क्षिणुते । क्षिणुयात् । क्षिण्वीत । क्षिणोतु-क्षेणोतु । क्षिणुताम् । अक्षिणोत्-अक्षेणोत् । अक्षिणुत । अन्यानि रूपाणि सुगमानि । लिट्लकारे । ( उपधाया लघोः ) चिक्षेण । चिक्षिणतुः । चिक्षिणुः । चिक्षिणे । चिक्षिणाते । चिक्षिणिरे । इत्यादीनि । क्षिण्यात्(सिसता०)क्षेणिषीष्ट । क्षेणिता । क्षेणिता । लुङ्लकारे । अक्षेणीत् । आत्मनेपदे । अक्षेणिष्ट-अक्षित । इत्यादीनि ॥ षणु दाने । पूर्ववद् प्रत्ययाः ( तनादेरुप आदेः ष्णः स्नः । नूपः ) सनोति । सनुतः । सनुते । सनुयात् । सन्वीत । सनोतु । हौ परे । सनु । सनुताम् । असनोत् । असनुत । रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् । वृद्धिः । ससान । ( लोपः पचां० ) सेनतुः । सेनुः । सेने । सेनाते । सेनिरे । सन् यात् इति स्थिते ( जनखनसनां० ) अनेन वा आकारो भवति । सायात्-सन्यात् ( सिसता० ) सनिषीष्ट । सनिता । सनिता । लुङ्लकारे । असानीत्-असनीत् । असनिष्ट-असत । असनिष्ठाः । असथाः । इत्यादीनि ॥ डुकृञ् करणे । डुञावितौ ( तनादेरुप् । गुणः । नूपः ) करोति । कृ उप् तस् इति जाते ( गुणः ) ।

( ङित्यदुः ) करोतेरकारस्य उकारो भवति ङिति विभक्तौ परतः । कुरुतः । कुर्वन्ति । करोषि । कुरुथः । कुरुथ । करोमि ।

सूत्रम् ( ङित्यदुः ) ङिति ७-१ अत् ६-१ उः १-१ करोतेर्धातोरकारस्य उकारो भवति ङिति विभक्तौ परतः । कुरुतः । कुर्वंति । करोषि । कुरुथः । कुरुथ । करोमि । कुरु वस् इति जाते ( ओर्व्मोर्वा० ) अनेन लोपविकल्पे प्राप्ते ।

( कृञो नित्यं वमोरुलोपो वाच्यः ) कुर्वः । कुर्मः । कुरुते ।

सूत्रम् ( कृञः० ) कृञो धातोर्नित्यं वकारमकारयोरुकारस्य लोपो वाच्यः । अनेन नित्यं लोपः ( र्वोर्वि हसे ) अनेन दीर्घे प्राप्ते ।

( कुर्छुरोर्न दीर्घः )

सूत्रम् ( कुर्छुरोः० ) कुर्छुरो दीर्घो न भवति । अनेन करोतेः दीर्घाभावः । कुर्वः । कुर्मः । कुरु यात् । इति जाते ।

( कृञो ये ) कृञ उत्तरस्य उप्रत्ययस्य लोपो भवति ये परे। कुर्यात्। कुर्वीत । करोतु। करवाणि । कुरुताम् । करवै । अकरोत्। अकुरुत। चकार । चक्रतुः । चक्रुः। चकर्थ। चक्रे। क्रियात्। कृषीष्ट। कर्ता। करिष्यति। अकरिष्यत्। अकार्षीत्। अकृत। अकृषाताम्। अकृषत ॥

सूत्रम् ( कृञो ये ) कृञः ५-१ ये ७-१ कृञ उत्तरस्य उप्रत्ययस्य लोपो भवति। अनेन उकारस्य लोपः । कुर्यात् । कुर्वीत । करोतु-कुरुतात् । कुरुताम् । कुर्वंतु। ( ओर्वा हेः० ) कुरु । णत्वम् । करवाणि । कुरुताम् । कुर्वाताम् । कुर्वताम् । करवै । अकरोत् । अकुरुत । रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् ( रः । कुहोश्चुः । धातोर्नामिनः ) चकार ( ऋ रम् ) चक्रतुः । चक्रुः । क्रादित्वान्नेट् । चकर्थ । चक्रे । चक्राते । चक्रिरे । यादादौ इति रिङ् । क्रियात् । षत्वम् । कृषीष्ट ( गुणः ) कर्त्ता । कर्त्ता ( हृतः स्यपः । गुणः ) करिष्यति । करिष्यते ( दिवादावट् ) अकरिष्यत् । अकरिष्यत । लुङ्लकारे ( धातोर्नामिनः ) अनेन वृद्धिः । अकार्षीत् । अकार्ष्टाम् । अकार्षुः ( तनादेः ) अकृत । अकृषाताम् । अकृषत ॥

( संपर्युपेभ्यः करोतेर्भूषणेऽर्थे सुट् ) संस्करोति ।

सूत्रम् ( संपर्युपेभ्यः ) संपर्युपेभ्य उपसर्गेभ्यः करोतेर्धातोर्भूषणेऽर्थे सुट् भवति । संस्करोति । इत्यादीनि ।

( अड्द्वित्वव्यवधानेऽपि सुट् स्यात् ) समस्करोत् । सञ्चस्कार।

सूत्रम् ( अड्द्वित्व० ) अड्द्वित्वव्यवधाने सत्यपि सुट् स्यात् । समस्करोत् । सञ्चस्कार। द्वित्वादादौ भवति सुट् ।

( ससुट्कृञो णादौ नित्यमिड्वाच्यः ) सञ्चस्करिथ। एवमुपस्कुरुते ॥ मनु अवबोधने। मनुते। मेने। मन्ता ॥ वनु याचने। परस्मैपद्ययमित्येके। वनुते ॥ इति तनाद्युभयपदिन ॥ इत्युविकरणास्तनादयः ॥

सूत्रम् (ससुट्कृञः०) सुटा सह वर्त्तमानः ससुट् । ससुट् चासौ कृञ् च ससुट्कृञ् । तस्य ससुट्कृञः । ससुट्करोतेर्धातोर्णादौ परे सति नित्यमिड् वाच्यः । संचस्करिथ । एवमुपस्कुरुते ॥ मनु अवबोधने। पूर्ववत् प्रत्यया भवंति । ( तनादेरुप् ) अयं धातुरात्मनेपदी । मनुते । मन्वाते । मन्वते । मन्वीत । मनुताम् । ( दिवादावट् ) अमनुत । रूपाणि सुगमानि ॥ लिट्लकारे । द्वित्वादिकम् । ( लोपः पचाम्० ) मेने ।

मेनाते । मेनिरे । इत्यादीनि । ( नश्चापदान्ते० ) मंसीष्ट । मंता । मंस्यते । (दिनादावद् ) अमंस्यत । लुङ्ल्कारे । अमंस्त । अमंसाताम् । अमंसत । इत्यादीनि ॥ वनु याचने । अयमप्यात्मनेपदी । तआदयः प्रत्यया भवंति । ( तनादेरुप् ) वनुते । वन्वीत । वनुताम् । अवनुत । लिट्ल्कारे । वादित्वान्नैत्वपूर्वलोपौ भवतः । ववने । ववनाते । ववनिरे । वंसीष्ट । वंता । वंस्यते । अवंस्यत । लुङ्ल्कारे । अवंस्त । अवंसाताम् । अवंसत । सर्वत्र ( नश्चापदान्ते झसे ) अनेन अनुस्वारः । अयं धातुः परस्मैपदी । इति एके आचार्या वदंति । तन्मते वनोति । इत्यादीनि रूपाणि भवंति । इत्युब्विकरणास्तनादयो धातवः कथिताः ॥

अथ तुदादयः ॥ तत्रादावुभयपदिनः ॥ तुद व्यथने । अकार उभयपदार्थः ।

अथ तुदादयो धातवः कथ्यंते । तत्रादावुभयपदिनो धातवः सन्ति॥ तुद व्यथने। अकार उभयपदार्थः । तिवादयस्तआदयश्च प्रत्यया भवन्ति ।

( तुदादेरः ) तुदादेर्गणादः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । ङित्त्वान्न गुणः । तुदति । तुदते । तुदेत् । तुदेत । तुदतु । तुदताम् । अतुदत् । अतुदत । तुतोद । तुतुदे । तुद्यात् । तुत्सीष्ट । तोत्ता । तोत्स्यति । तोत्स्यते । अतोत्स्यत् । अतोत्स्यत । अतौत्सीत् । अतौत्ताम् । अतौत्सुः । अतुत्त । अतुत्साताम् । अतुत्सत ॥ भ्रस्जो पाके । ओ इत् ।

सूत्रम् ( तुदादेरः ) तुदादेः । ५-१ अः १-१ तुदादेर्गणात् अः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । ङित्त्वान्न गुणः । तुदति । आत्मनेपदे । तुदते । रूपाणि सुगमानि । तुदेत् । तुदेत । तुदतु । तुदताम् । अतुदत् । अतुदत । रूपाणि भूधातुवत् । किंतु गुणाभावः । लिट्ल्कारे द्वित्वादिकम् ( उपधाया लघोः ) अनेन गुणो भवति । तुतोद । तुतुदतुः । तुतुदुः । तुतोदिथ । इत्यादीनि । आत्मनेपदे । तुतुदे । तुद्यात् । ( खसे० ) तुत्सीष्ट । अन्येषां सूत्रतो ज्ञेयानि । लुङ्ल्कारे । ( अनिटो नामिवनः ) अनेन वृद्धिः । अतौत्सीत् । ( झसात्० ) अनेन सेर्लोपः । अतौत्ताम् । अतौत्सुः । इत्यादीनि । आत्मनेपदे । ( झसात्० ) अनेन झसे परे सेर्लोपः । ( सिस्योः० ) अनेन गुणनिषेधः । अतुत्त । अतुत्साताम् । अतुत्सत ॥ इत्यादीनि भवन्ति ॥ भ्रस्जो पाके । ओकार इत् । तिवादयो भवन्ति । ( तुदादेरः ) अनेन अप्रत्ययो भवति ।

( अन्यत्र सो जः ) झसपरत्वाभावे सस्य जो भवति । ( ग्रहां क्ङिति च )

सूत्रम् ( अन्यत्र सोजः ) अन्यत्र ७–१ सः ६–१ जः १–१ झसपरत्वाभावे सति सकारस्य जकारो भवति । अनेन सस्य जकारः ।

( अप्रत्ययो ङिद्वत् ) भृज्जति । भृज्जते । बभ्रज्ज ( ऋसंयोगात्० ) इति कित्त्वाभावान्न संप्रसारणम् । बभ्रज्जतुः । बभ्रज्जुः । बभ्रज्जिथ--बभ्रष्ठ । बभ्रज्जे ।

सूत्रम् ( अप्र० ) अप्रत्ययो ङिद्वद् ज्ञातव्यः ङित्त्वात्संप्रसारणम् । 'ग्रहां क्ङिति च' अनेन भवति । भृज्जति । भृज्जते । चतुर्णां लकाराणा रूपाणि सुगमानि । लिट्लकारे ( द्विश्च ) कित्त्वाभावात् संप्रसारणं न भवति । बभ्रज्जतुः । बभ्रज्जुः । बभ्रज्जिथ - बभ्रष्ठ । आत्मनेपदे । बभ्रज्जे । बभ्रज्जाते । बभ्रज्जिरे । इत्यादीनि ॥

( भृज्जतेः सकाररेफौ लुप्त्वा रमागमोऽन्यपि वा वाच्यः ) बभर्ज । बभर्जे।भृज्यात्--भर्ज्यात् । भ्रक्षीष्ट--भर्क्षीष्ट । भ्रष्टा-भर्ष्टा॥ भ्रक्ष्यति--भर्क्ष्यति । अभ्रक्ष्यत्–अभर्क्ष्यत् । अभ्राक्षीत्--अभार्क्षीत् । अभ्रष्ट–अभर्ष्ट ॥ दिश अतिसर्जने । दिक्षीष्ट । अदिक्षत् । अदिक्षत ॥ क्षिप प्रेरणे । क्षिप्सीष्ट । अक्षिप्त ॥ कृष् विलेखने । कृक्षीष्ट । क्रष्टा–कर्ष्टा । अकार्क्षीत्–अक्राक्षीत्–अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत ॥ मिल संगमे । मिमिले । अमेलिष्ट ॥ मुच्लृ मोक्षणे ।

( भृज्जतेः० ) भृज्जतेर्धातोः सकाररेफौ लुप्त्वा रमागमोऽन्यपि वा वाच्यः । सुगममिदं सूत्रम् । मिदन्त्यात्स्वरात्परो भवति । तत्पक्षे । बभर्ज्ज । बभर्ज्जतुः । बभर्ज्जुः । आत्मनेपदे । बभर्ज्जे । इत्यादीनि । ( अन्यत्र सो जः ) संप्रसारणम् । भृज्ज्यात् । भृज्जतेः । भर्ज्ज्यात् । भ्रस्ज् सीष्ट इति स्थिते । ( स्कोराद्योश्च ) अनेन सस्य लोपः । ( चोः कुः । खसे० ) षत्वम् । ( कषसंयोगे० ) भ्रक्षीष्ट ( भृज्जतेः० ) तदा । भर्क्षीष्ट। अन्येषा मूलाद्र ज्ञातव्यानि सर्वाणि रूपाणि । अनेनैव प्रकारेण सिध्यन्ति । लुङ्लकारे । ( अनिटो नामिवतः ) अनेन वृद्धिः । अन्यत्साधनं तु पूर्ववत् । अभ्राक्षीत् । ( झसात् ) अनेन सेर्लोपो भवति । अभ्राष्टाम् । अभ्राक्षुः । रमागमे कृते । अभार्क्षीत् । आत्मने पदे । ( स्कोराद्योश्च । छशष० ) अनेन षकारः।अभ्रष्ट । अभ्रक्षाताम् ।

अभ्रक्षत । रमागमे कृते । अभ्रष्ट । इत्यादीनि रूपाणि भवन्ति ॥ दिश अतिसर्जने । अकार उभयपदार्थः । पूर्ववत्प्रत्यया भवन्ति । ( तुदादेः ) दिशति । दिशते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । ( उपधाया लघोः ) अनेन गुणः । दिदेश । दिदिशे । अन्यानि रूपाणि सुगमानि । दिश्यात् । 'दिश् सीष्ट' इति स्थिते । ( छशप० । षढोः०) षत्वम् ( कषसंयोगे क्षः ) दिक्षीष्ट । षत्वम् । ष्टुत्वम् । देष्टा । अत्र गुणो भवति । देष्टा । देक्ष्यति । देक्ष्यते । अदेक्ष्यत् । अदेक्ष्यत । ( हशपान्तात्०) अनेन लुङि सक् । अन्यत्साधनं तु पूर्ववत् । अदिक्षत् । आत्मनेपदे । अदिक्षत । अदिक्षाताम् । अदिक्षत । इत्यादीनि भवन्ति॥ क्षिप् प्रेरणे । प्रत्ययादयः पूर्ववत् । क्षिपति । क्षिपते । लिट्लकारे द्वित्वादिकम् । गुणः । चिक्षेप । चिक्षिपे । क्षिप्यात् । क्षिप्सीष्ट । क्षेप्ता । क्षेप्ता । अन्येषां रूपाणि सुगमानि । लुङ्लकारे ( अनिटः ) अनेन वृद्धिः । अक्षैप्सीत् । ( झसात्० ) अक्षैप्ताम् । आत्मनेपदे । अक्षिप्त । इत्यादीनि रूपाणि ॥ कृष विलेखने । ( तुदादेः ) कृषति । कृषते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । ( द्विश्च । रः । कुहोश्चुः । उपधाया लघोः ) चकर्ष । चकृषतुः । चकृषुः । ( अत्वतः ) चकर्षिथ । चकर्ष । चकृषे । चकृषाते । चकृषिरे । इत्यादीनि । कृष्यात् । कृष् सीष्ट इति स्थिते । ( सिस्योः०) अनेन गुणनिषेधः ( षढोः० ) षत्वम् । ( कषसंयोगे क्षः ) कृक्षीष्ट । गुणः । ष्टुत्वम् । कर्ष्टा । ( रारोऽझसे दृशाम् ) अनेन अरो रकारो वा भवति । क्रष्टा-कर्ष्टा । कर्क्ष्यति-क्रक्ष्यति । अन्येषां रूपाणां सिद्धिरनेनैव प्रकारेण । लुङ्लकारे । ( अनिटः० ) अनेन वृद्धिः । अन्यत्साधनं तु पूर्वसदृशमस्ति । अकार्क्षीत् । अकार्ष्टाम् । अत्र ( झसात् ) अनेन सेर्लोपो भवति । अकार्क्षुः ( रारो झसे० ) अक्राक्षीत् । आत्मनेपदे ( सिस्योः० ) अनेन गुणनिषेधः ( झसात्० ) अनेन झसे परे सेर्लोपः । अकृष्ट । अकृक्षाताम् । ( आतोन्तो० ) अकृक्षत । ( हशपान्तात्० ) अकृक्षत् । आत्मनेपदे । अकृक्षत । अकृक्षाताम् । ( आतोन्तो० ) अकृक्षत । इत्यादीनि रूपाणि ज्ञातव्यानि ॥ मिल संगमने । अकारः । ( तुदादेः ) मिलति । मिलते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् । ( उपधाया लघोः ) मिमेल । मिमिलतुः । मिमिलुः । मिमेलिथ । इत्यादीनि । मिमिले । मिल्यात् । ( उपधाया लघोः ) मेलिषीष्ट । अत्र षत्वं च भवति । मेलिता । मेलिता । मेलिष्यते । मेलिष्यति । अमेलिष्यत् । अमेलिष्यत । लुङ्लकारे द्वाविटौ । ( इट ईटि ) अनेन सेर्लोपो भवति । ( दिवादावट ) अमेलीत् । अमेलिष्टाम् । अमेलिषुः आत्मनेपदे । अमेलिष्ट । अमेलिषाताम् । अमेलिषत । इत्यादीनि ॥ मुच्लृ मोक्षणे । लृकारो लित्कार्यार्थः । ( तुदादेः ) ।

( मुचादेर्मुम् ) मुचादीनां मुमागमो भवति अप्रत्यये परे । मुञ्चति । मुञ्चते । मुमोच । मुमुचे । मुच्यात् ( सिस्योः ) अनेन गुणाभावः ( चोः कुः ) मुक्षीष्ट । मोक्ता । मोक्ष्यति । मोक्ष्यते। अमोक्ष्यत् । अमोक्ष्यत । अमुचत् । अमुक्त ॥ लुप्लृ छेदने । लुम्पति । लुप्सीष्ट । अलुपत् ॥ विद्लृ लाभे । विन्दति । अवेदिष्ट ॥ अनिडयमित्येके । वेत्ता ॥ लिप् उपदेहे । मुच्-लुप्-विद्-लिप्-सिच्-कृत्-पिश्-खिद्-एते मुचादयः । लिम्पति । लिलेप । अलिपत् । अलिपत ।

सूत्रम् ( मुचादेर्मुम् ) मुचादेः । ६-१ मुम् १-१ मुचादीनां धातूनां मुमागमो भवत्यप्रत्यये परे । ( मिदं० ) मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एते मुचादयो धातवो ज्ञातव्याः । मुञ्चति । मुञ्चते । चतुर्णां लकाराणा रूपाणि सुगमानि । लिट्लकारे । ( द्विश्च । पूर्वस्य । उपधाया लघोः ) मुमोच । मुमुचतुः । मुमुचुः । ( अत्वतः ) मुमोचिथ ( चोः कुः ) मुमोक्थ । मुमुचे । मुच्यात् । ( चोः कुः ) पत्वम् । ( कषसं० । सिस्योः ) अनेन गुणनिषेधः । मुक्षीष्ट । गुणः । ( चोः कुः )मोक्ता। मोक्ता । मोक्ष्यति । मोक्ष्यते । अमोक्ष्यत् । अमोक्ष्यत । ( लिप्तुपादेर्ङः ) अनेन लुङि ङप्रत्ययो भवति । ङित्वाद् गुणाभावः । अमुचत् । आत्मनेपदे । ( झसात् ) अनेन सेर्लोपो भवति झसे परे । अमुक्त । अमुक्षाताम् । अमुक्षत ॥ लुप्लृ छेदने । ( तुदादेरः । मुचादेर्मुम् ) लुंपति । लुंपते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । लुलोप । लुलुपे । लुप्यात् । ( सिस्योः ) अनेन गुणनिषेधः। लुप्सीष्ट । लोप्ता । लोप्ता । लोप्स्यति । लोप्स्यते । अलोप्स्यत् । अलोप्स्यत । ( लिप्तुपादेर्ङः ) अलुपत् ।आत्मनेपदे । ( झसात् ) अलुप्त । अलुप्साताम् । अलुप्सत । इत्यादीनि ॥

( लिपिसिचिह्वयतीनामात्मनेपदे सेर्ङो वा वाच्यः ) अलिप्त ॥ पिच्लृ क्षरणे । सिञ्चति । सिषेच । सिच्यात् । सिक्षीष्ट । सेक्ता २ । सेक्ष्यति । असिचत् । असिक्त ॥ इति तुदादिपूभयपदिनः ॥

सूत्रम् ( लिपिसिचिह्वयतीनाम० ) एषां धातुनामात्मनेपदे सेर्ङो वा वाच्यः । अनेनात्मनेपदेऽपि । सेर्ङः । अलिपत । अलिपेताम् । अलिपन्त । इत्यादीनि ॥ पिच्लृक्षरणे । ( तुदादेरः । मुचादेर्मुम् । आदेः ष्णः स्नः ) सिञ्चति । सिञ्चते ।

अन्येषां सुगमानि। लिट्लकारे। द्वित्वादिकम्। पत्वम्। गुणः। सिषेच। सिषिचतुः। सिषिचुः। सिषेचिथ। ( अत्वतः। चोः कुः ) सिषेक्थ। सिषिचे। सिच्यात्। ( चोः कुः ) षत्वम्। ( कप०। सिस्योः ) अनेन गुणनिषेधः। सिक्षीष्ट। गुणः। ( चोः कुः ) सेक्ता। सेक्ता। सेक्ष्यति। सेक्ष्यते। असेक्ष्यत्। असेक्ष्यत। ( लिटुपादेङः ) असिचत्। ( लिपिसिचि० ) असिचत। असिचेताम्। असिचन्त। ङेरभावपक्षे ( झसात्०। चोः कुः ) असिक्त। असिक्षाताम्। असिक्षत॥ इत्यादीनि॥ इत्युभयपदिनो धातवः कथिताः॥

अथ परस्मैपदिनः॥ कृती छेदने। कृन्तति। चकर्त। कृत्यात्। कर्तिता। कर्तिष्यति। अकर्तिष्यत्। अकर्तीत्॥ लुभ विमोहने। लोभिता–लोब्धा। अलोभीत्॥ चृती हिंसाग्रन्थनयोः। चर्तिष्यति–चर्त्स्यति। अचर्तीत्॥ विध विधाने। वेधिता॥ कुट कौटिल्ये।

अथ परस्मैपदिनो धातवः कथ्यन्ते॥ तिवादयः सर्वत्र भवन्ति ( तुदादेरः ) अयमपि चतुर्षु भवति॥ कृती छेदने। ईकार इत्। ( मुचादेर्नुम् ) कृन्तति। कृन्ततु। चतुर्णां सुगमानि रूपाणि। लिट्लकारे। ( द्विश्च। रः। उपधाया लघोः। कुहोश्चुः ) चकर्त्त। चकृततुः। चकृतुः। चकृत। कृत्यात्। ( सिसता० ) गुणः। कर्त्तिता। कर्त्तिष्यति। अकर्त्तिष्यत्। लुङ्लकारे। द्वाविटौ। सेर्लोपः। ( उपधाया लघोः ) अकर्त्तीत्। अकर्त्तिष्टाम्। अकर्त्तिषुः॥ लुभ् विमोहने। ( तुदादेरः ) लुभति। लुभेत्। लुभतु। अलुभत्। लिट्लकारे। द्वित्वादिकम्० ( उपधाया लघोः ) लुलोभ। लुलुभतुः। लुलुभुः। लुभ्यात्। ( इपुसह० ) लोभिता। इडभावे गुणः। ( तथोर्धः। झबे जबाः ) लोब्धा। लोब्धारौ। लोब्धारः। लोभिष्यति। अलोभिष्यत्। लुङ्लकारे। द्वाविटौ। ( उपधाया लघोः ) अलोभीत्। अलोभिष्टाम्। अलोभिषुः॥ चृती हिंसाग्रन्थनयोः। ईकार इत्। ( तुदादेरः ) चृतति। चृतेत्। चृततु। अचृतत्। लिट्लकारे। ( द्विश्च। पूर्वस्य रः। उपधाया लघोः ) चचर्त्त। चचृततुः। चचृतुः। चृत्यात्। ( सिसता० ) गुणः। चर्त्तिता। ( नृतृवृद० ) अनेन स्यपि वा इट्। चर्त्तिष्यति–चर्त्स्यति। अचर्त्तिष्यत्–अचर्त्स्यत्। लुङ्लकारे। द्वाविटौ। अचर्त्तीत्। अचर्त्तिष्टाम्। अचर्त्तिषुः॥ विध विधाने। ( तुदादेरः ) विधति। चतुर्णां सुगमानि। लिट्लकारे। द्वित्वादिकम्। गुणः। विवेध। विविधतुः। विविधुः। विध्यात् ( सिसता० ) गुणः। वेधिता। वेधिष्यति। अवेधिष्यत्। लुङ्लकारे। द्वाविटौ। गुणः। सेर्लोपः। अवेधीत्। अवेधिष्टाम्। अवेधिषुः। इत्यादीनि॥ कुट कौटिल्ये।

अकार इत्। ( तुदादेरः) कुटति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे ।(द्विश्च । पूर्वस्य । कुहोश्चुः । उपधाया लघोः ) चुकोट । चुकुटतुः। चुकुटुः। चुकुद् इट् थप् इति जाते । ( उपधाया लघोः ) अनेन गुणे प्राप्ते ।

( कुटादेर्ञ्णिणद्वर्जः प्रत्ययो ङिद्वत् ) चुकोट । चकुटिथ। कुटिता । अकुटीत् ॥ त्रुट् छेदने । त्रुट्यति । त्रुटति ॥ ओव्रश्चू छेदने । ओऊ इतौ । ( ग्रहां क्ङिति च ) वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चुः। वव्रश्चिथ-वव्रष्ठ । वृश्च्यात्। ( ऊदितो वा ) व्रश्चिता-व्रष्टा ( स्कोराद्योश्च ) व्रश्चिष्यति-व्रक्ष्यति । अव्रश्चीत । अव्राक्षीत् । अव्राष्टाम ॥ कॄ विक्षेपे । ( ऋत इर् ) किरति । चकार । चकरतुः । कीर्यात् । करिता-( ईटो ग्रहाम्) करीता। करीष्यति-करिष्यति । अकरिष्यत्-अकरीष्यत् । अकारीत् ॥

सूत्रम् ( कुटादेः० ) कुटादेर्धातोर्ञ्णिणद्वर्जः प्रत्ययो ङिद्वत् । ङित्वाद्गुणाभावः । चुकुटिथ । कुट्यात् । ( कुटादेः ) अनेन ङित्वाद्गुणो न भवति । कुटिता । कुटिष्यति । अकुटिष्यत् । शेषाणि रूपाणि सुगमानि । लुङ्लकारे । द्वाविटौ । गुणाभावः । अकुटीत् । अकुटिष्टाम् । अकुटिषुः । इत्यादीनि ॥ त्रुट् छेदने । ( क्रमुभ्रमु० ) अनेनास्य धातोर्वा यः प्रत्ययो भवति ( तुदादेरः ) त्रुट्यति । अप्रत्यये कृते सति । त्रुटति । एवं चतुर्णां रूपाणि । लिट्लकारे । तुत्रोट । तुत्रुटतुः । तुत्रुटुः । तुत्रुटिथ । त्रुट्यात् । त्रुटिता । कुटादित्वाद् गुणो न भवति । त्रुटिष्यति । अत्रुटिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः ( दिवादावट् ) अत्रुटीत् । अत्रुटिष्टाम् । अत्रुटिषुः ॥ इत्यादीनि रूपाणि भवन्ति ॥ ओव्रश्च छेदने । ओकारोकारावितौ ( तुदादेरः । ग्रहां क्ङिति च ) अनेन संप्रसारणं भवति । वृश्चति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे ( द्विश्च । पूर्वस्य ) वव्रश्च । संप्रसारणम् । वव्रश्चतुः । वव्रश्चुः । वव्रश्चिथ ( ऊदितो वा । संयोगान्तस्य लोपः ) अनेन चकारस्य लोपः ( छशा० ) ष्टुत्वम् । वव्रष्ठ । इत्यादीनि । संप्रसारणम् । वृश्च्यात् ( ऊदितो वा० ) अनेन वा इट् । व्रश्चिता । संयोगान्तस्य लोपः ( षत्वम् । ष्टुत्वम् ।व्रष्टा । व्रश्चिष्यति । इडभावे ( स्कोराद्योश्च । चोःकुः) षत्वम् ( कषसंयोगे० ) व्रक्ष्यति । अव्रश्चिष्यत्-अव्रक्ष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । ( दिवादावट् ) अव्रश्चीत् । अव्रश्चिष्टाम् । अव्रश्चिषुः । इडभावे ( स्कोरा०। चोः कुः । अनिटो नामिवतः ) अनेन वृद्धिः । अव्राक्षीत् ( झसात् ) अनेन सेर्लोपः ।

अन्यत्साधनं पूर्ववत्। अव्राष्टाम्। अव्राक्षुः॥ कॄ विक्षेपे (तुदादेरः। ऋत इर्) अनेन ऋकारस्य इर् भवति। किरति। किरेत्। किरतु। अकिरत्। लिट्लकारे (द्विश्च। रः। कुहोश्चुः। धातोर्नामिनः) चकार (ऋसंयोगात्) अनेनाकित्त्वान्न गुणाभावः। चकरतुः। चकरुः। चकरिथ। ऋत इर् (य्वोर्विहसे) कीर्यात् (सिसता०। गुणः) करिता (इटो ग्रहाम्) अनेन वा दीर्घः। करीता। अन्येषां मूलाज्ज्ञेयानि। लुङ्लकारे (णित्वे) अनेन सेर्णित्त्वात् वृद्धिः (धातोर्नामिनः) अकारीत् (वृद्धिइती) अनेन दीर्घाभावः। अकारिष्टाम्। अकारिषुः। इत्यादीनि॥

**(उपात्किरतेश्छेदेऽर्थे सुड्वाच्यः)।**

सूत्रम् (उपात्०) उपोपसर्गपूर्वात् किरतेर्धातोः छेदनेऽर्थे सुड् वाच्यः।

**(हिंसायां प्रतेश्च) उपस्किरति। उपचस्कार। प्रतिस्किरति॥**

**गॄ निगरणे। गिरति।**

सूत्रम् (हिंसायाम्०) किरतेर्धातोर्हिंसायामर्थे प्रतिपूर्वाच्च सुड् वाच्यः। उपस्किरति। उपचस्कार। हिंसायाम्। प्रतिस्किरति॥ गॄ निगरणे। ऋत इर्। अनेनेर् (तुदादेरः) गिरति।

**(गिरतेरस्य वा लः स्वरे वाच्यः) गिलति। जगार-जगाल। जगरतुः-जगलतुः। जगरुः-जगलुः। अगारीत्-अगालीत्॥ स्पृश् स्पर्शने। स्पृशति। पस्पर्श। स्पृश्यात्। स्प्रष्टा-स्पर्ष्टा। स्प्रक्ष्यति-स्पर्क्ष्यति। अस्प्रक्ष्यत्-अस्पर्क्ष्यत्। अस्प्राक्षीत्-रो वा। अस्पार्क्षीत्।**

सूत्रम् (गिरतेः) गिरतेर्धातोरकारस्य लकारः स्वरे परे वाच्यः। अनेन रकारस्य लकारः। गिलति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे (द्विश्च। रः। कुहोश्चुः। धातोर्नामिनः) अनेन वृद्धिः। जगार-जगाल (ऋसंयोगात्) अनेनाकित्त्वाद् गुणो भवति। जगरतुः-जगलतुः। इत्यादीनि (ऋत इर्। य्वोर्वि हसे) गीर्यात्। गरिता-गलिता। अन्यानि सुगमानि। लुङ्लकारे। द्वाविटौ (धातोर्नामिनः) अनेन वृद्धिः। अगारीत्। अगारिष्टाम्। अगारिषुः। लत्वे कृते सति। अगालीत्। अगालिष्टाम्। अगालिषुः। इत्यादीनि॥ स्पृश् स्पर्शने। तिनादय- (तुदादेरः) स्पृशति। लिट्लकारे (द्विश्च। रः। पूर्वस्य हसादिः। उपधाया लघोः) पस्पर्श। पस्पृशतुः। पस्पृशुः। इत्यादीनि। स्पृश्यात्। स्पृश ता इति स्थिते (उपञ०) अनेन षकारः (उपधाया लघोः) अनेन गुणः (सृशो ऋमे०) अनेन अरो रकारः (कृपादीनां) अनेन विकल्पः। ष्टुत्वम्। स्प्रष्टा-स्पर्ष्टा (षढोः कः से) स्प्रक्ष्यति-स्पर्क्ष्यति। अस्प-

क्ष्यत्-अस्पर्क्ष्यत् । लुङ्लकारे ( अनिटो नामिवतः ) अनेन वृद्धिः । अन्यत्साधनं सुगमम् । अस्पार्क्षीत् ( झसात्० ) अनेन सेर्लोपः । अस्पार्ष्टाम् । अस्पार्क्षुः । अरो रकारे कृते । अस्प्राक्षीत् । अस्प्राष्टाम् । अस्प्राक्षुः । इत्यादीनि ( कृपादीनां० ) अनेन ( भूते सिः ) अनेन विहितः सिः प्रत्ययो वा भवति ।

( कृपादीनां वा सिर्वक्तव्यः ) तत्पक्षे ( हशषान्तात्सक् ) अस्पृक्षत् ॥ प्रच्छ ज्ञीप्सायाम् । संप्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ-पप्रष्ठ । पृच्छ्यात् । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् ॥ सृज विसर्गे । सृजति । ससर्ज । ससृजतुः । ससृजुः । ससर्जिथ-सस्रष्ठ । सृज्यात् ( रारो झसे दृशाम् ) स्रष्टा । स्रक्ष्यति । अस्राक्षीत् ॥ टुमस्जो शुद्धौ । टु ओ इतौ । ( अन्यत्र सो जः ) मज्जति । ममज्ज । मङ्क्ता । मस्जिनशोर्झसे नुम् । मंक्ष्यति । अमांक्षीत् । अमाङ्क्ताम् । अमांक्षुः ॥ विश् प्रवेशने । वेष्टा । अविक्षत ॥ मृश् आमर्षणे । अम्राक्षीत्-अमार्क्षीत् । अमृक्षत् ॥ विच्छ गतौ ( आयः ) विच्छायति । विच्छायाञ्चकार-विविच्छ । विच्छाय्यात्-विच्छ्यात् । विच्छायिता-विच्छिता । अविच्छायीत् ॥ इषु इच्छायाम् । ( गमां छः ) इच्छति । इच्छेत् । इयेष । एषिता-एष्टा ॥ छुप स्पर्शे । छोप्ता । अछौप्सीत् ॥ लिश गतौ । लेष्टा । अलिक्षत् ॥ खिद परिघाते । खिन्दति । खेत्ता । अखैत्सीत् ॥ पिश अयवे । पिंशति । पेशिता ॥ ॥ इति तुदादिषु परस्मैपदिनः ॥

सूत्रम् ( कृपादीनाम्० ) अनेन कृपादीनां धातूनां सर्वत्र सेर्विकल्पः । तदा । ( हशषान्तात् ) अनेन सक् । अन्यत्साधनं सुगमम् । अस्पृक्षत् । अस्पृक्षताम् । अस्पृक्षन् । इत्यादीनि ॥ प्रच्छ ज्ञीप्सायाम् । ( तुदादेः । ग्रहां क्ङिति च ) अनेन संप्रसारणम् । पृच्छति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । ( द्विश्च । पूर्वस्य ) पप्रच्छ । संप्रसारणं० । पप्रच्छतुः । पप्रच्छुः । पप्रच्छिथ । ( छत्वतः ) षत्वम् । ष्टुत्वम् । पप्रष्ठ । इत्यादीनि । संप्रसारणं० । पृच्छ्यात् । षत्वम् । ष्टुत्वम् । प्रष्टा ( षढोः

कः से। किलात्०। कप०) म्रक्ष्यति। अम्रक्ष्यत्। लुङ्लकारे। (अत उपधायाः) अनेन वृद्धिः। अन्यत्साधनं सुगमम्। अम्राक्षीत्। (छशष०) ष्टुत्वम्। अम्राष्टाम्। अम्राक्षुः। इत्यादीनि॥ सृज विसर्गे। (तुदादेः) सृजति। चतुर्णां सुगमानि। लिट्लकारे। (द्विश्च। रः। उपधाया लघोः) ससर्ज। ससृजतुः। ससृजुः। (अत्वतः) ससर्जिथ। स सृज् थप् इति जाते। (उपधाया लघोः। रारो झसे०। छशष०) ष्टुत्वम्। ससष्ठ। सृज्यात्। (रारो झसे०) षत्वम्। ष्टुत्वम्। स्रष्टा। (षढोः कः से) षत्वम्। (कषसंयोगे०) स्रक्ष्यति। अस्रक्ष्यत्। (अनिटो नामिवतः) अस्राक्षीत्। अस्राष्टाम्। अस्राक्षुः॥ टुमस्जो शुद्धौ। टुकारौकारौ। इतौ (तुदादेः। अन्यत्र सोजः) अनेन सकारस्य जकारः। मज्जति। चतुर्णां लकाराणां रूपाणि सुगमानि। लिट्लकारे। (द्विश्च। पूर्वस्य। अन्यत्र। सो जः) ममज्ज। ममज्जतुः। ममज्जुः। इत्यादीनि। मस्ज् ता इति स्थिते। (स्कोराद्योश्च) अनेन सकारस्य लोपः। (चोः कुः। खसे चपा०। मस्जिनशोः०) अनेन नुम्। (नश्चापदांते) मंक्ता। मंक्तारौ। मंक्तारः। मंक्ष्यति। अमंक्ष्यत्। (अत उपधायाः) अमांक्षीत्। (झसात्) अनेन सेर्लोपः। अमांक्ताम्। अमांक्षुः। इत्यादीनि॥ विश् प्रवेशने। (तुदादेः) विशति। लिट्लकारे। (द्विश्च। पूर्वस्य। हसा०) गुणः। विवेश। विविशतुः। विविशुः। विवेशिथ। (अत्वतः) षत्वम्। ष्टुत्वम्। गुणः। विवेष्ठ। विश्यात्। गुणः। षत्वम्। ष्टुत्वम्। वेष्टा। षत्वम्। (षढोः कः से। किलात०। कष०) गुणः। वेक्ष्यति। अवेक्ष्यत्। (हशषान्तात्) अनेन सक्। अन्यत्साधनं सुगमम्। अविक्षत्। अविक्षताम्। अविक्षन्॥ मृश आमर्षणे। (तुदादेः) मृशति। लिट् द्वित्वादिकम्। (रः) गुणः। ममर्श। ममृशतुः। ममृशुः। ममर्शिथ। (अत्वतः) ममर्ष्ठ। मृश्यात्। गुणः। ष्टुत्वम्। (रारो०) म्रष्टा। (षढोः कः से) म्रक्ष्यति। अम्रक्ष्यत्। (अनिटो नामिवतः) अम्राक्षीत्। अम्राष्टाम्। अम्राक्षुः। (कृशादीनां०) अनेन सेर्विकल्पः। तत्पक्षे। (हशषान्तात्) अमृक्षत्। अमृक्षताम्। अमृक्षन्॥ विच्छ गतौ। (आयः) अनेन आयः प्रत्ययः (तुदादेः। अदे) विच्छायति। लिट्। विच्छायांचकार। अत्र (कासादि०) अनेनाम्। अनापि वा इति उक्तत्वात्। अनापि वा भवति। तत्पक्षे। विविच्छ। विविच्छतुः। विविच्छुः। विच्छायात्। अत्र (यतः) अनेन अकारस्य लोपः। आयाभावे। विच्छ्यात्। (सिसता०) विच्छायिता-विच्छिता। विच्छायिष्यति-विच्छिष्यति। अविच्छायिष्यत्-अविच्छिष्यत्। लुङ्लकारे। इ्रविटौ। अविच्छायीत्-अविच्छीत्॥ इषु इच्छायाम्। (तुदादेः। गमां छः) इच्छति। लिट् (द्विश्च) गुणः। (असवर्णे) इयेष। (सवर्णे) ईषतुः। ईषुः। इत्यादीनि। इष्यात्। (इषु सह०) गुणः। एषिता। ष्टुत्वम्। एष्टा। एषिष्यति। (स्वरादेः) ऐषिष्यत्। लुङ्। ऐषीत्॥ छुप स्पर्शे। (तुदादेः) छुपति।

चतुर्णां रूपाणि सुगमानि । लिट् । ( द्विश्च ) गुणः । ( झपानाम्० ) चुच्छोप । छुप्यात् । गुणः । छोप्ता । छोप्स्यति । अच्छोप्स्यत् । ( अनिटो नामिवतः ) अच्छौप्सीत् । ( झसात्० ) अच्छौप्ताम् । अच्छौप्सुः॥ लिश् गतौ । ( तुदादेः ) लिशति । लिट् । लिलेश । लिलिशतुः । लिलिशुः । लिलेशिथ । ( अत्वत० ) लिलेष्ट । लिश्यात् । गुणः । पत्वम् । लेष्टा । (पढोः कः से ) लेक्ष्यति । अलेक्ष्यत् । ( हशषांता० । छशष० । पढोः कः से ) पत्वम् । ( कष० ) अलिक्षत् । अलिक्षताम् । अलिक्षन् ॥ खिद् परिघाते । ( तुदादेः ) अनेनाप्रत्ययो भवति । ( मुचादेर्मुम् ) अनेन मुमागमो भवति । ( नश्चापदान्ते झसे ) अनेनानुस्वारः । खिन्दति । खिन्देत् । खिन्दतु । ( दिवादावट् ) अखिन्दत् । रूपाणि सुगमानि । लिट्लकारे । ( द्विश्च । पूर्वस्य । उपधाया लघोः ) अनेन गुणः । चिखेद । चिखिदतुः । चिखिदुः । इत्यादीनि । खिद्यात् । ( खसे० । गुणः ) खेत्ता । खेत्स्यति । अखेत्स्यत् । ( अनिटो नामिवतः ) अनेन वृद्धिः । अखैत्सीत् । ( झसात्० ) अनेन सेर्लोपः । ( तथोर्धः ) अखैद्धाम् । अखैत्सुः । इत्यादीनि ॥ पिश् अवयवे ( तुदादेः । मुचादेर्मुम् ) पिंशति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । ( द्विश्च । पूर्वस्य । उपधाया लघोः ) पिपेश । पिपिशतुः । पिपिशुः । पिपेशिथ । पिश्यात् । ( सिसता० । उपधाया लघोः ) पेशिता । पत्वम् । पेशिष्यति । ( दिवादावट् ) अपेशिष्यत् । लुङ्लकारे द्वाविटौ । अन्यत्साधनं तु पूर्वसदृशम् । अपेशीत् । अपेशिष्टाम् । अपेशिषुः । इत्यादीनि ॥ इति परस्मैपदिनो धातवः कथिताः ॥

**अथात्मनेपदिनः ॥ मृङ् प्राणत्यागे ( अयकि ) ऋकारस्य रिङादेशो भवति अकारे प्रत्यये यकि च परे । ( नुधातोः ) म्रियते ।**

अथात्मनेपदिनः कथ्यन्ते ॥ मृङ् प्राणत्यागे । ङकार आत्मनेपदार्थः । ( तुदादेः ) सूत्रम् ( अयकि ) अश्च यक् च अयक् तस्मिन् अयकि । ऋकारस्य । ( तुदादेः ) अनेन सूत्रेण विहिते अकारे परे च यक् प्रत्यये परे रिङादेशो भवति । अत्र ङकारव्यवधानात् । ( ये ) अनेन दीर्घो न भवति 'अनुबन्धः प्रत्यक्षवत्' इति न्यायात् ( नुधातोः ) अनेनेय् भवति । म्रियते । ( आदाय इः । अ इ ए ) म्रियेते । म्रियन्ते । म्रियेत । म्रियताम् । अम्रियत ।

**( सपरोक्षयोस्तादौ स्यपि च म्रियतेः परस्मैपदं वाच्यम् )ममार। मम्रतुः । मृषीष्ट । मर्ता । मरिष्यति । अमरिष्यत् । ( लोपो ह्रस्वाज्झसे ) अमृत । अमृषाताम् । अमृषत ॥ दृङ् आदरे ।**

द्रियते। दद्रे। दृषीष्ट। दर्ता। ( ह्रनृतः स्यपः ) दरिष्यते। अदरिष्यत। अदृत ॥ धृङ् अवस्थाने। ध्रियते। तद्वत्॥ पृङ् व्यापारे। व्याप्रियते। व्यापरिष्यते। व्यापृत। व्यापृषाताम् ॥ ओविजी भयचलनयोः। विजते। विजेत। विजताम्। अविजत। विविजे। विजिता।

सूत्रम् ( सपरोक्षयोः० ) सपरोक्षयोस्तादौ स्यपि परतो म्रियतेर्धातोः परस्मैपदं वाच्यम्। तदा णवादयः प्रत्यया भवन्ति। ( द्विश्च। रः। धातोर्नामिनः ) ममार। ( ऋ रम् ) मम्रतुः। मम्रुः। ममर्थ। इत्यादीनि। ( उः ) अनेन गुणनिषेधः। षत्वम्। मृषीष्ट। ( गुणः ) मर्त्ता। ( ह्रनृतः स्यपः ) मरिष्यति। अमरिष्यत्। लुङ्लकारे। ( लोपो ह्रस्वाज्झसे ) अनेन सेर्लोपः। अमृत। अमृषाताम्। अमृषत ॥ दृङ् आदरे। ङकार आत्मनेपदार्थः। ( तुदादेरः। अयकि। नुधातोः ) द्रियते। द्रियेत। द्रियताम्। अद्रियत। लिट्लकारे। ( द्विश्च। रः। ऋ रम् ) दद्रे। दद्राते। दद्रिरे। दृषीष्ट। ( गुणः ) दर्ता। ( ह्रनृत० ) दरिष्यति। अदरिष्यत्। लुङ्लकारे। ( लोपो ह्रस्वाज्झसे ) अनेन सेर्लोपः। अदृत। अदृषाताम्। अदृषत। इत्यादीनि ॥ धृङ् अवस्थाने। ङकार आत्मनेपदार्थः। ( तुदादेरः। अयकि। नुधातोः ) अनेन इय् भवति। ध्रियते। ध्रियेत। ध्रियताम्। अध्रियत। लिट्लकारे। ( द्विश्च। रः। झपानाम्०। ऋ रम् ) दध्रे। दध्राते। दध्रिरे। ( उः ) धृषीष्ट। अत्र षत्वं भवति। ( गुणः ) धर्त्ता। ( ह्रनृतः ) अनेनेट्। धरिष्यते। अधरिष्यत। ड्लकारे। सेर्लोपः। अधृत। अधृषाताम्। अधृषत ॥ पृङ् व्यापारे। ङकारः। अन्यत्साधनं तु पूर्वसदृशम्। व्यापूर्वोऽयं धातुः। व्याप्रियते। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्वादिकम्। व्यापप्रे। अन्येषां रूपाणि पूर्वसदृशानि। लुङ्लकारे। सेर्लोपः। व्यापृत। व्यापृषाताम्। व्यापृषत। इत्यादीनि ॥ ओविजी भयचलनयोः। ईकारोकारावितौ स्तः। ( तुदादेरः ) विजते। लिट्लकारे। द्वित्वादिकम्। विविजे। विविजाते। विविजिरे। विज् इट् ता इति जाते। तत्र गुणे प्राप्ते।

( विजेः पर इट् किद्वक्तव्यः ) ततो नोपधागुणः। विजिष्यते। अविजिष्यत। अविजिष्ट ॥ ओलस्जी व्रीडायाम्। ( अन्यत्र सो जः ) लज्जते। ललज्जे। अलज्जिष्ट ॥ इति तुदादिष्वात्मनेपदिनः ॥ इति अविकरणास्तुदादयः ॥ इति धातूनामष्टमो गणः ॥ ८ ॥

सूत्रम् ( विजेः० ) विजेः धातोः पर इट् किद्वक्तव्यः। अनेन गुणनिषेधः। विजिता। षत्वम्। विजिष्यते। अविजिष्यत। लुङ्लकारे। ष्टुत्वम्। अविजिष्ट। अविजिषाताम्। अविजिषत॥ ओलस्जी व्रीडायाम्। द्वावितौ। ( तुदादेः। अन्यत्र सो जः) अनेन सकारस्य जकारः। लज्जते। चतुर्णां लकाराणां सुगमानि। लिट्लकारे। द्वित्वादिकम्। ललज्जे। इत्यादीनि। लज्जिषीष्ट। लज्जिता। लज्जिष्यते। अलज्जिष्यत। अलज्जिष्ट। अलज्जिषाताम्। अलज्जिषत। इत्यादीनि॥ इत्यात्मनेपदिनः कथिताः॥ इति अविकरणास्तुदादयो धातवः कथिताः॥

अथ क्र्यादयः॥ तत्रादावुभयपदिनः॥ डुक्रीञ् द्रव्यविनिमये। ( ना क्र्यादेः ) क्र्यादेर्गणान्ना प्रत्ययो भवति चतुर्षु परेषु। अपोऽपवादः। णत्वम्। क्रीणाति।

अथ क्र्यादयो धातवः कथ्यन्ते तत्रादावुभयपदिनो धातवः सन्ति॥ डुक्रीञ् द्रव्यविनिमये। द्रव्यपरावर्त्तने वस्तूनां मौल्येन ग्रहणे इत्यर्थः। डुकारञकारावनुबन्धौ। डुकारो ड्वितस्त्रिमक् इति कार्यार्थः। ञकारानुबन्धत्वादुभयपदी। तिबादयः प्रत्ययाः। क्री तिप् इति स्थिते। सूत्रम्। ( ना क्र्यादेः ) ना १-१। साके०। क्र्यादेः। ५-१ क्र्यादेर्गणात् ना प्रत्ययो भवति चतुर्षु तिबादिषु परेषु। अनेन नाप्रत्ययः। णत्वम्। क्रीणाति। 'क्री ना तस्' इति जाते।

( ई हसे ) ना इत्यस्याकारस्य ईकारो भवति ङिति हसे परे। क्रीणीतः।

सूत्रम् ( ई हसे ) ई १-१ साकेतिकम्। हसे ७-१ ना इति प्रत्ययसंबन्धिन आकारस्य ङिति हसे प्रत्यये परे ईकारो भवति। अनेन सर्वत्र ङिति हसे आकारस्य ईकारः कार्यः। ( पूर्वो णोऽनन्ते ) अनेन णत्वम्। क्रीणीतः। क्री ना अन्ति इति स्थिते।

( नातः ) ना इत्यस्याकारस्य लोपो भवति ङिति स्वरे परे। क्रीणन्ति। क्रीणासि। क्रीणीथः। क्रीणीथ। क्रीणामि। क्रीणीवः। क्रीणीमः। क्रीणीते। क्रीणीयात्। क्रीणीत। क्रीणातु। क्रीणीताम्। अक्रीणात्। अक्रीणीत। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रयिथ-चिक्रेथ। चिक्रिये। क्रीयात्। क्रेषीष्ट। क्रेता २। क्रेष्यति। क्रेष्यते। अक्रेष्यत्।

अक्रेप्यत। अक्रैपीत्। अक्रेष्ट॥ प्रीञ् तर्पणे कान्तौ च। पिप्रिये॥ मीञ् हिंसायाम्। मीनाति (मीनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि च आत्वं वाच्यम्) ममौ। मिम्यतुः। मिम्युः। ममिथ। ममाथ। मासीष्ट। माता। अमासीत्। अमास्त॥ स्कुञ् आप्रवणे॥ (स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यो श्नुर्नाश्च) स्कुनोति। स्कुनाति। अस्कुनीत्। चुस्कुविपे। अस्कौपीत्। अस्कोष्ट॥ स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु रोधने। स्तभ्नोति-स्तभ्नाति। स्तुभ्नोति-स्तुभ्नाति। स्कभ्नोति–स्कभ्नाति। स्कुभ्नोति–स्कुभ्नाति। स्तभान–स्तुभान। स्कभान–स्कुभान। अस्तभत्। (जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च्लेरङ् वा) अस्तम्भीत्॥ पूञ् पवने।

सूत्रम् (नातः)। ना ६–१ सांके०। आतः ६–१ द्विपदं सूत्रम्। क्र्यादेरुत्पन्नस्य ना इति प्रत्ययसंबन्धिन आकारस्य ङिति स्वरे लोपो भवति। अनेन ङिति स्वरे सर्वत्र आकारस्य लोपः कार्यः। क्रीणन्ति। क्रीणासि। पित्त्वादीकारो न। अन्यानि मूले सन्ति। आत्मनेपदे। क्रीणीते। क्रीणाते। क्रीणते। (आतोऽन्तो०) अनेन अन्त अत्। अन्यानि सुगमानि। यथासंभवं साध्यानि। यादादावीकारः सर्वत्र। क्रीणीयात्। क्रीणीयाताम्। क्रीणीयुः। इत्यादीनि। (नातः) अनेन आकारस्य लोप ईतादौ भवति। क्रीणीत। क्रीणीयाताम्। क्रीणीरन्। इत्यादीनि। लोट्लकारेऽपि साधनं सदृशम्। क्रीणातु। तातङि। ङित्वादीकारः। क्रीणीतात्। क्रीणीताम्। (नातः) अनेनाकारस्य लोपः। क्रीणंतु। हौ परे। आकारस्येकारः। क्रीणीहि। आनिवादौ सवर्णे। क्रीणानि। क्रीणीव। क्रीणीम। इत्यादीनि। आत्मनेपदे०। क्रीणीताम्। क्रीणाताम्। क्रीणताम्। णत्वं भवति। क्रीणीष्व। इत्यादीनि। (दिवादावट्) अक्रीणात्। अक्रीणीताम्। अक्रीणन्। अक्रीणाः। अमिपि (सवर्णे दीर्घः) अक्रीणाम्। आत्मनेपदे। अक्रीणीत। (नातः) अक्रीणाताम्। अक्रीणत। इत्यादीनि रूपाणि ज्ञातव्यानि। सर्वेषां रूपाणां द्वाभ्यां सूत्राभ्यां प्रायः सिद्धिर्भवति। लिट्लकारे। (द्विश्च। सस्वरादिः। ह्रस्वः। कुहोश्चुः। धातोर्नामिनः) अनेन वृद्धिः। चिकाय। (नुधातोः) अनेन इय्। चिक्रियतुः। चिक्रियुः। (अस्वतः। गुणः)

चिक्रयिथ । चिक्रेय । चिक्रियथुः । चिक्रिय । इत्यादीनि रूपाणि भवन्ति । चिक्रिये । चिक्रियाते । चिक्रियिरे । क्रीयात् । ( गुणः ) षत्वम् । क्रेषीष्ट । अन्यानि मूलात् ज्ञेयानि । लुङ्लकारे । ( अनिटो नामिवतः ) षत्वम् । ( दिवादावट् ) अक्रैषीत् । अक्रैष्टाम् । अक्रैषुः । आत्मनेपदे ( गुणः ) षत्वम् । ष्टुत्वम् । ( दिवादावट् ) अक्रेष्ट । अक्रेषाताम् । अक्रेषत । इत्यादीनि भवन्ति ॥ प्रीञ् तर्पणे कान्तौ च । तिवादयो भवन्ति ( ना क्र्यादेः ) अनेन चतुर्षु ना प्रत्ययः । णत्वम् । प्रीणाति । ( ई हसे ) प्रीणीतः । ( नातः ) प्रीणन्ति । रूपाणि पूर्ववत् । प्रीणीते । प्रीणीयात् । प्रीणीत । प्रीणातु । प्रीणीताम् । अप्रीणात् । अप्रीणीत । लिट्लकारे । ( द्विश्च । सस्वरादिः । ह्रस्वः । धातोर्नामिनः ) पिप्राय । पिप्रियतुः । पिप्रियुः । ( अत्वतः० ) पिप्रयिथ । पिप्रेथ । इत्यादीनि । पिप्रिये । पिप्रियाते । पिप्रियिरे । प्रीयात् । ( गुणः ) प्रेषीष्ट । अत्र षत्वं भवति । प्रेता । प्रेता । षत्वम् । प्रेष्यति । प्रेष्यते । अप्रेष्यत् । अप्रेष्यत । अनिटो नामिवतः । अप्रैषीत् । आत्मनेपदे गुणः । अप्रेष्ट । अप्रेषाताम् । अप्रेषत ॥ इत्यादीनि रूपाणि ज्ञातव्यानि ॥ पूञ् पवने । तिवादयः । ( ना क्र्यादेः )

( प्वादेर्ह्रस्वः ) प्वादीनां ह्रस्वो भवति चतुर्षु परेषु । पुनाति । पुनीते । पुनीयात् । पुनीत । पुनातु । पुनीताम् । अपुनात् । अपुनीत । पुपाव । पुपुवे । पूयात् । पविषीष्ट । पविता २ । पविष्यति । पविष्यते । अपविष्यत् । अपविष्यत । अपावीत् । अपविष्ट ॥ कॄञ् हिंसायाम् । कृणाति । कृणीते । चकार । चकरे । कीर्यात । करिषीष्ट । अकारीत् ॥ धूञ् कंपने । धुनाति । धुनीते । दुधाव । अधविष्ट-अधोष्ट ॥ ग्रह उपादाने । ( ग्रहां क्ङिति च ) गृह्णाति । गृह्णीतः । गृह्णीते । गृह्णीयात् । गृह्णीत । गृह्णातु । गृह्णीतात् । गृह्णीताम् । गृह्णन्तु ।

सूत्रम् ( प्वादेर्ह्रस्वः ) प्वादेः ६-१ ह्रस्वः १-१ प्वादीनां धातूनां ह्रस्वो भवति चतुर्षु परेषु । अनेन ह्रस्वः । पुनाति । पुनीते । अन्यानि पूर्वसदृशानि । लिट्लकारे । ( द्विश्च । सस्वरादिः । ह्रस्वः । धातोर्नामिनः ) पुपाव । ( उधातो० ) पुपुवतु० । पुपुवुः । पुपविथ । आत्मनेपदे । पुपुवे । पुपुवाते । पुपुविरे । पूयात् । ( सिसता० ) अनेन इट् । ( गुणः ) षत्वम् । पविषीष्ट । अन्येषां मूलतो ज्ञातव्यानि । लुङ्लकारे । ( धातोर्नामिनः ) अनेन वृद्धिः । अन्यत्साधनं सुगमम् । अपावीत् । अपाविष्टाम् । अपाविषुः । आत्मनेपदे तु गुणः । षत्वम् । ष्टुत्वम् । अपविष्ट । अपविषाताम् । अपविषत ॥

इत्यादीनि भवंति ॥ कृञ् हिंसायाम् । ञकार उभयपदार्थः । तिबादयः प्रत्यया भवंति । ( ना क्र्यादेः ) अनेन नाप्रत्ययो भवति । (प्वादे र्हस्वः)·णत्वम् । कृणाति । ( ईं हसे ) कृणीतः । ( नातः ) अनेन आकारस्य ङिति स्वरे लोपः। कृणंति । आत्मनेपदे कृणीते । कृणाते । कृणते । कृणीयात् । कृणीत । कृणातु । कृणीताम् । अकृणात् । अकृणीत । लिट्लकारे । द्वित्वादिकम् । ( रः । कुहोश्चुः । धातोर्ना० ) चकार। चकरतुः । चकुः । चकरिथ । चक्रे । चक्राते । चक्रिरे । यादादौ । ( ऋत इर् । य्वोर्वि हसे ) कीर्यात् । ( सिसता० । गुणः ) षत्वम् । करिषीष्ट । करिता–करीता । षत्वम् । ( गुणः ) इट् । करिष्यति । करिष्यते । अकरिष्यत् । अकरिष्यत । रूपाणि सुगमानि सन्ति । अतो न लिखितानि । लुङ्लकारे । सेणित्वात् । ( धातोर्ना० ) अनेन वृद्धिः । अकारीत् । अकारिष्टाम् । अकारिषुः । आत्मनेपदे० । ( गुणः ) षत्वम् । ष्टुत्वम । अकरिष्ट । अकरिषाताम् । अकरिषत । इत्यादीनि भवन्ति ॥ धूञ् कंपने । ञकारः । तिबादयः । ( प्वादेर्हस्वः । ना क्र्यादेः ) धुनाति । धुनीते । चतुर्णां लकाराणां रूपाणि सुगमानि । तेषां साधनमपि पूर्वसदृशमस्ति । लिट्लकारे । द्वित्वादिकम् । ( ह्स्वः । झपानाम्० । धातोर्ना० ) दुधाव । ( धुधातोः । नानप्योर्वः ) अनेनोव् भवति । दुधुवतुः । दुधुवुः । दुधविथ । दुधुवे । दुधुवाते । दुधुविरे । इत्यादीनि । धूयात् । ( स्वरति० ) अनेनास्य धातोरिड्विकल्पः । गुणः षत्वम् । धविषीष्ट । इडभावे । गुणः । षत्वम । धोषीष्ट । धविता २ । धोता २ । धविष्यति । इडभावे । धोष्यति । धविष्यते–धोष्यते । अधविष्यत्–अधोष्यत् । अधविष्यत–अधोष्यत । लुङ्लकारे । (स्तुसुधूञाम्०)अनेन सेरिट् । वृद्धिः । अधावीत् । अधाविष्टाम् । अधाविषुः। आत्मनेपदे । अधविष्ट । अधविषाताम् । अधविषत । इडभावे । ( गुणः ) षत्वम् । ष्टुत्वम् । अधोष्ट । अधोषाताम् । अधोषत ॥ ग्रह उपादाने । उपादानं ग्रहणम् । तिबादयः । ( ना क्र्यादेः । ग्रहां क्ङिति च ) अनेन संप्रसारणम् । णत्वम् । गृह्णाति।गृह्णीतः। गृह्णन्ति । गृह्णीते । गृह्णीयात् । गृह्णीत । गृह्णातु–गृह्णीतात् । गृह्णीताम् । गृह्णन्तु । 'गृह्ण हि' इति स्थिते ।

**( हसादान हौ ) हसान्तात्क्र्यादेर्गणादानः प्रत्ययो भवति । हौ परे । नाप्रत्ययाभावः । गृहाण । अगृह्णात् । जग्राह । जगृहे । गृह्यात् । ( ईटो ग्रहाम् ) इति ईः । ग्रहीषीष्ट । ग्रहीता २ । ग्रहीष्यति । अग्रहीष्यत् । अग्रहीष्यत । अग्राहीत् । अग्रहीष्ट ॥ इति क्र्यादिपूभयपदिनः ॥**

सूत्रम् ( हसादान हौ ) हसात् ५–१ आनः १–१ हौ ७–१ हसान्तात् क्र्यादेर्गणात् आनः प्रत्ययो भवति हिप्रत्यये परे । नाप्रत्ययाभावो भवति । ( अतः ) अनेन

हेर्डुक् । संप्रसारणम । गृहाण । अन्यानि सुगमानि । गृह्णीताम् । अगृह्णात्।अगृह्णीत । लिट्लकारे । ( द्विश्च ) संप्रसारणम् । ( रः । कुहोश्चुः । अत उपधायाः ) जग्राह जगृहतुः । जगृहुः । जगृहे । जगृहाते । जगृहिरे । संप्रसारणम् । गृह्यात् । ग्रह् सीष्ट इति स्थिते । ( सिसता० । ईटो ग्रहां० ) अनेन दीर्घः । ग्रहीषीष्ट । ग्रहीता २ । ग्रहीष्यति । ग्रहीष्यते । अग्रहीष्यत् । अग्रहीष्यत । एतेषां रूपाणि सुगमानि । लुङ्लकारे ( अत उपधायाः ) अनेन वृद्धिः । अन्यत्साधनं सुगमम् । अग्राहीत् । अग्राहिष्टाम् । अग्राहिषुः । ( वृद्धिहेतौ ) अनेन अत्र दीर्घाभावः । आत्मनेपदे । अग्रहीष्ट । अग्रहीषाताम् । अग्रहीषत । इत्यादीनि ॥ इत्युभयपदिनः ॥

अथ परस्मैपदिनः ॥ पुष् पुष्टौ । पुष्णाति । पुष्णीयात् । पुष्णातु–पुष्णीतात् । पुष्णीताम् । पुष्णन्तु । पुषाण । अपुष्णात् । पुपोष । पुष्यात् । पोषिता । पोषिष्यति । अपोषिष्यत् । अपोषीत् ॥ मुष स्तेये । मुष्णाति । मुमोष । मुष्यात् । मोषिता । मोषिष्यति । अमोषिष्यत् । अमोषीत् ॥ शॄ हिंसायाम् । शृणाति । शशार । शशरतुः । शशरुः । शीर्यात् । शरिता । शरिष्यति । अशरिष्यत् । अशारीत् ॥ ज्या वयोहानौ । ग्रहादित्वात्संप्रसारणम् । जीनाति । जीनीयात् । जिज्यौ । जिज्यतुः । जिज्युः । जिज्यिथ । जिज्याथ । जीयात् । ज्याता । ज्यास्यति । अज्यास्यत् । अज्यासीत् ॥ ज्ञा अवबोधने । ( जा जनीज्ञोः ) जानाति जज्ञौ । ज्ञायात्–ज्ञेयात् । ज्ञाता । अज्ञासीत् ॥ ली श्लेषणे । लीनाति ( लीलीङोरात्वं वा ) ललौ । लिलाय । लिल्यतुः । लाता–लेता । अलासीत्–अलैषीत् ॥ बन्ध् बन्धने । बध्नाति । बबन्ध । भन्त्स्यति । अभान्त्सीत् ॥ मन्थ विलोडने । मथ्नाति ॥ कुष् निष्कर्षे । कुष्णाति । कुषाण । चुकोष । कुष्यात् । कोषिता । अकोषीत् ॥ अश भोजने । अश्नाति । अश्नीयात् । अश्नातु–अश्नीतात् । अश्नीताम् । अश्नन्तु । अशान । आश । अशिता । आशीत् ॥ इति क्र्यादिषु परस्मैपदिनः ॥

अथ परस्मैपदिनो धातवः कथ्यन्ते ॥ पुष् पुष्टौ । तिवादयः । ( ना क्र्यादेः ) णत्वम् । अन्यत्र साधनं तु पूर्वसदृशम् । पुष्णाति । चतुर्णां रूपाणि सुगमानि । हौ परे । पुषाण । अन्यानि सुगमानि । लिट्लकारे । ( द्विश्च । पूर्वस्य उपधाया लघोः ) पुपोष । पुपुषतुः । पुपुषुः । ( क्र्यादेर्णादेः ) गुणः । पुपोषिथ । पुष्यात् । ( सिसता० । उपधाया लघोः ) पोषिता । षत्वम् । पोषिष्यति । ( दिवादावद् ) अपोषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । गुणः । अपोषीत् । अपोषिष्टाम् । अपोषिषुः । इत्यादीनि ॥ मुष् स्तेये । तिवादयः । ( ना क्र्यादेः ) णत्वम् । मुष्णाति । मुष्णीयात् । मुष्णातु । हौ परे । मुषाण । अमुष्णात् । रूपाणि सुगमानि । लिट्लकारे । ( द्विश्च । पूर्वस्य० । उपधाया लघोः ) मुमोष । मुमुषतुः मुमुषुः गुणः मुमोषिथ । मुष्यात् । ( सिसता० । गुणः ) मोषिता । षत्वम् । मोषिष्यति । अमोषिष्यत् । लुङ्लकारे । द्वाविटौ । गुणः । सेर्लोपः । अमोषीत् । अमोषिष्टाम् । अमोषिषुः ॥ शॄ हिंसायाम् । तिवादयः । ( ना क्र्यादेः । प्वादेर्ह्रस्वः ) णत्वम् । शृणाति । शृणीयात् । शृणातु । अशृणात् । लिट्लकारे । ( द्विश्च । रः । धातोर्नामिनः ) शशार । ( ऋसंयोगात्० ) अनेनाकित्त्वात् गुणः । शशरतुः । शशरुः । शशरिथ । शर इर् । ( य्वोर्विंहसे ) शीर्यात् । ( सिसता० । गुणः ) शरिता । षत्वम् । शरिष्यति । अशरिष्यत् । ( धातोर्नामिनः ) अशारीत् । अशारिष्टाम् । अशारिषुः ॥ ज्या वयोहानौ । तिवादयः । ( ना क्र्यादेः । ग्रहां क्ङिति च ) अनेन संप्रसारणम् । दीर्घस्वरत्वात् । दीर्घः । जीनाति । जीनीतः । जीनन्ति । जीनीयात् । जीनातु । जीनीहि । अजीनात् । अजीनीताम् । अजीनन् । लिट्लकारे । ( द्विश्च । णवादौ पूर्वस्य ह्रस्वः । आतो णप् डौ ) जिज्यौ । जिज्यतुः । जिज्युः । जिज्यिथ । जिज्याथ । संप्रसारणं० । जीयात् । ज्याता । ज्यास्यति । अज्यास्यत् । ( आदन्तानाम् ) अनेनेट्सकौ । अज्यासीत् । अज्यासिष्टाम् । अज्यासिषुः ॥ ज्ञा अवबोधने । तिवादयः । पूर्ववत् । ( ना क्र्यादेः ) अनेन चतुर्षु नाप्रत्ययो भवति । ( जा जनीज्ञोः ) अनेन सूत्रेण जा इत्यादेशः । जानाति । ( ई हसे ) जानीतः । ( नातः ) जानन्ति । इत्यादीनि रूपाणि भवन्ति । तानि पूर्वसदृशानि । जानीयात् । जानातु । हौ परे सति । ( ई हसे ) अनेन ईकारः । जानीहि । अजानात् । लिट्लकारे । ( द्विश्च । पूर्वस्य ह्रस्वः । आतो णप् डौ ) डित्वात् टिलोपः । जज्ञौ । ( आतोऽनपि ) जज्ञतुः । जज्ञुः । ( अलतः । आतोऽनपि ) अनेन आकारस्य लोपो भवति । जज्ञिथ–जज्ञाथ । ( संयोगादेः ) ज्ञायात्–ज्ञेयात् । ज्ञाता । ज्ञास्यति । ( दिवादावद् ) अज्ञास्यत् । आदन्तानां० ) अनेन इट्सकौ भवतः । अन्यत्साधनं सुगमम् । अज्ञासीत् । अज्ञासिष्टाम् । अज्ञासिषुः । इत्यादीनि ॥ ली श्लेषणे । तिवादयः । ( नाक्र्यादेः ) लीनाति । लीनीयात् । लीनातु । ( दिवादावद् ) अलीनात् । चतुर्णां रूपाणि सुगमानि । लकाराणां सूत्रम् । ( लीलीङोः सत्वं वा ) लीलीङोर्धातो-

गुणवृद्धिविषये आत्वं वा भवति । पश्ची अनेनान्तस्य भवति । आत्वपक्षे । ललौ । आत्वाभावपक्षे द्वित्वादिकम् । ( धातोर्नामिनः ) अनेन वृद्धिः । लिलाय । लिल्यतुः । ( नुधातोः ) अनेन यत्वम् । लिल्युः । ( अत्वतः ) ललिथ । ललाथ । लिलयिथ । लिलेथ । इत्यादीनि । लीयात् । आत्वे कृते । लाता । आत्वाभावे गुणः । लेता । लास्यति । लेष्यति । अलास्यत् । अलेष्यत् । ( आदन्तानां० ) अनेनात्वपक्षे । इट्सकौ । अलासीत् । अलासिष्टाम् । अलासिषुः । आत्वाभावपक्षे । ( अनिटो नामिवतः ) अनेन वृद्धिः । अलैषीत् । अलैष्टाम् । अलैषुः ॥ बंध बंधने । तिवादयः । ( ना ऋयादेः । नो लोपः ) अनेन नकारस्य लोपः । बध्नाति । चतुर्णा रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् । बबंध । बबंधतुः । बबंधुः । बबंधिथ । ( अत्वतः । तथोर्धः । झबे जबाः । नो लोपः ) बध्यात् । बबंध । इत्यादीनि । बद्धा ( आदिजबानाम् ) अनेन बस्य भः । ( खसे चपा० ) भंत्स्यति । ( दिवादावट् ) अभंत्स्यत् । लुङ्लकारे । ( अत उपधायाः ) अनेन वृद्धिः । अभांत्सीत् । 'प्रत्ययलोपे०' । अस्यानित्यत्वान्न भकारः । ( झसात् ) अनेन सेर्लोपो भवति । ( तथोर्धः ) अबाद्धाम् । अभांत्सुः । इत्यादीनि ॥ मंथ विलोडने । ( ना ऋयादेः । नोलोपः ) मथ्नाति । चतुर्णा सुगमानि । लिट्लकारे । ममंथः । ममंथतुः । ममंथुः । ममंथिथ ॥ अन्येषां लकाराणां भ्वादिगणोक्तमंथधातुवत् रूपाणि ॥ कुष् निष्कर्षे । ( ना ऋयादेः ) णत्वम् । कुष्णाति । कुष्णीतः । कुष्णंति । इत्यादीनि । चतुर्णा रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् । ( कुहोश्चुः । उपधाया लघोः ) चुकोष । चुकुषतुः । चुकुषुः । चुकोषिथ । कुष्यात् । ( सिसता० ) गुणः । कोषिता । षत्वम् । कोषिष्यति । ( दिवादावट् ) अकोषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः गुणः । अकोषीत् । अकोषिष्टाम् । अकोषिषुः ॥ अश् भोजने । तिवादयः । ( ना ऋयादेः ) अश्नाति । चतुर्णा लकाराणा रूपाणि सुगमानि । हौ परे । ( हसादान हौ । अतः ) अशान । लुङ्लकारे । ( स्वरादेः ) अनेन द्वितीयोऽडागमः । सवर्णे । आश्नत् । लिट्लकारे । द्वित्वादिकम् । ( अत उपधायाः । सवर्णे ) आश । आशतुः । आशुः । आशिथ । अश्यात् । ( सिसता० ) अशिता । षत्वम् । अशिष्यति । ( दिवादावट् । स्वरादेः ) आशिष्यत् । आशीत् । आशिष्टाम् । आशिषुः इत्यादीनि ॥ इति परस्मैपदिनो धातवः कथिताः ॥

अथात्मनेपदिनः ॥ वृङ् संभक्तौ । वृणीते । वृणीत । वृणीताम् । अवृणीत । वव्रे । वरिषीष्ट-वरीषीष्ट । ( संयोगादिऋदन्तवृङ्वृञां सिस्योरात्मनेपदे इड्वा वाच्यः ) वृषीष्ट । ( उः ) अवरिष्ट-अवरीष्ट । अवृत ॥ इति ऋयादिष्वात्मनेपदिनः ॥ इति नाविकरणाः ऋयादयः ॥

अथात्मनेपदिनः कथ्यंते ॥ वृङ् संभक्तौ । ङकार आत्मनेपदार्थः । तत्रादयः प्रत्यया भवंति । ( ना क्र्यादेः । ईहसे ) णत्वम् । वृणीते । ( नातः ) वृणाते । वृणते । वृणीत । वृणीताम् । अवृणीत । रूपाणि सुगमानि । तेषां कार्यमपि सदृशम् । लिट्लकारे । ( द्विश्च । रः । ऋ रम् ) वव्रे । वव्राते । वव्रिरे । क्र्यादित्वान्नेट् । ववृषे । इत्यादीनि । वृसीष्ट इति स्थिते । ( सिसता० । गुणः ) वरिषीष्ट । ( इटो ग्रहाम् ) वरीषीष्ट । ( संयोगादि० ) अनेन सीष्टादौ वेट् । ( उः ) अनेन गुणनिषेधः । वृषीष्ट । वरिता-वरीता । वरिष्यते-वरीष्यते । अवरिष्यत-अवरीष्यत । लुङ्लकारे । अवरिष्ट । अवरिषाताम् । अवरिषत । दीर्घे कृते । अवरीष्ट । अवरीषाताम् । अवरीषत ॥ इडभावपक्षे । ( लोपो ह्रस्वाज्झसे ) अनेन झसे परे सेर्लोपः । अवृत । अवृषाताम् । अवृषत । अवृथाः । इत्यादीनि रूपाणि भवंति ॥ इत्यात्मनेपदिनः कथिताः ॥ ॥ इति नाविकरणाः क्र्यादयो धातवः ॥ ॥

अथ चुराद्यः ॥ चुर स्तेये ( चुरादेः ) चुरादेर्गणात् स्वार्थे ञिः प्रत्ययो भवति । ( उपधायाः ) इति गुणः । ( स धातुः ) अबगुणायः । चोरयति । चोरयेत् । चोरयतु । अचोरयत् । चोरयाञ्चकार । चोरयाम्बभूव । चोरयामास । चोरयाञ्चक्रे । ( ञेः ) चोर्यात् । चोरयिता । चोरयिष्यति । अचोरयिष्यत् । ( ञेरङ् द्विश्च । अङि लघौ ह्रस्व उपधायाः । लघोर्दीर्घः ) अचूचुरत् ॥ चिती संज्ञाने । चेतयति । अचीचितत् ॥ चिति स्मृत्याम् । ( इदितो नुम् ) चिन्तयति । लघोरभावान्न दीर्घः । अचिचिन्तत् । चुरादेर्ञिर्वेति केचित् । चिन्तति ॥ पीड अवगाहने । पीडयति ।

अथ चुराद्यो धातवः कथ्यन्ते ॥ चुर स्तेये । सूत्रम् ( चुरादेः ) चुरादेः ५-१ चुरादेर्धातुगणात् धातुपाठोक्तात् स्वार्थे मूलार्थे एव प्रेरणाद्यर्थं विनैव ञिप्रत्ययो भवति । यथा भ्वादीनाम् अबादिविकरणं तथा चुरादीनां ञिविकरणमित्यर्थः । अनेन ञिप्रत्ययो भवति । तत्र वृद्धेः प्राप्तौ सूत्राभावे । ( उपधाया लघोः ) अनेन गुणो भवति । चोरि इति स्थिते । ( स धातुः ) अनेन धातुसंज्ञा । धातुत्वात् तिबादयः । ( अप् कर्तरि ) अनेन अप्प्रत्ययः । गुणः । ( ए अय् ) 'स्वरहीनम्०' चोरयति । चोरयतः । चोरयंति । इत्यादीनि रूपाणि भवंति तानि सुगमानि । चोरयेत् । चोरयतु । ( दिवादावट् ) अचोरयत् । लिट्लकारे । ( कासादिप्रत्यया-

दाम् ) अनेन आम् । गुणः । अन्यत् साधनं सुगमम् । चोरयांचकार । चोरयामास । चोरयांबभूव । इत्यादीनि रूपाणि भवंति । ञित्वादुभयपदी । चोरयते । चोरयांचक्रे । चोरि यात् इति जाते । ( जेः ) अनेन ञेर्लोपः । चोर्यात् । ( सिसता ) अनेनेट् । चोरयिता । चोरयिष्यति । ( दिवादावट् ) अचोरयिष्यत् । चुर् ञि दिप् इति जाते । ( ञेरङ् द्विश्च ) अनेन सिविषमे अङ्प्रत्ययो भवति च धातोर्द्वित्वम् । ( पूर्वस्य ) चुचुर् ञि अङ् दिप् इति जाते । ( ञेः ) अनेन ञेर्लोपो भवति । चुचुर् अङ् दिप् इति जाते । ( लघोर्दीर्घः ) अनेन पूर्वस्य दीर्घः । ( दिवादावट् । स्वर० । वावसाने ) अचूचुरत्-अचूचुरद् । अचूचुरताम् । अचूचुरन् । इत्यादीनि भवंति रूपाणि । अथवा चोरि इति सिद्धस्यैव अङ्प्रत्यये कृते । ( ञेः ) अनेन ञेर्लोपे कृते । निमित्ताभावे इति वचनात् चो इत्यस्य चुः । ततो द्वित्वम् । एवमपि साधना भवति । "अचूचुरच्चंद्रमसोऽभिरामतः" इति माघः ॥ चिती संज्ञाने । ईकार इत् । ( चुरादेः । उपधाया लघोः । स धातुः ) तिवादयः । ( अप् -कर्त्तरि ) गुणः । ( ए अय् ) चेतयति । चेतयेत् । चेतयतु । अचेतयत् । ( कासादि० ) अनेन सर्वत्र णवादौ आम्प्रत्ययो भवति । चेतयांचकार । चेतयामास । चेतयांबभूव । ( ञेः ) अनेन ञेर्लोपः । चेत्यात् । ( सिसता० ) गुणः । चेतयिता । चेतयिष्यति । अचेतयिष्यत् । लुङ्लकारे । ( ञेरङ् द्विश्च । अङि लघौ ह्रस्वः । लघोर्दीर्घः । दिवादावट् ) अचीचितत् । अचीचितताम् । अचीचितन् । इत्यादिनि ॥ चिति स्मृत्याम् । ( चुरादेः ) अनेन ञिप्रत्ययो भवति । ( इदितो नुम् ) अन्यत्साधनं पूर्वसदृशं वर्तते । चिंतयति । लिट्लकारे आम्प्रत्ययो भवति । अन्यानि रूपाणि पूर्वधातुवत् । लुङ्लकारे । ( ञेरङ् द्विश्च ) अनेनाङ्प्रत्ययो भवति । लघोरभावात् पूर्वस्य दीर्घो न भवति । ( दिवादावट् ) अचिचिंतत् । अचिचिंतताम् । अचिचिंतन् । इत्यादीनि । चुरादेर्धातोर्गणात् ञिः प्रत्ययो वा भवति । इति केचिदाचार्या वदन्ति । तन्मते । चितति । चिंततः । चिंतंति । इत्यादीनि रूपाणि स्युः ॥ पीड अवगाहने । अवगाहनं प्रवेशः । ( चुरादेः ) लघ्वभावात् ( उपधाया लघोः ) अनेन गुणो न भवति । अप् । गुणः । पीडयति । लिट्लकारे । ( कासादि० ) अनेनाम् । पीडयांचकार । ( ञेः ) पीड्यात् । ( सिसता० ) गुणः । पीडयिता । लुङ्लकारे । ( ञेरङ् द्विश्च ) अनेन अङ्प्रत्ययः । धातोर्द्वित्वं च । ( पूर्वस्य० । दिवादावट् । ह्रस्वः ) अपिपीड् ञि अङ् दिप् इति जाते ।

( भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वो अङ्परे ञौ ) अपीपिडत् । अपिपीडत् ॥ प्रथ प्रख्याने । प्रथयति ।

सूत्रम् ( भ्राज० ) भ्राजभासभाषदीपजीवमीलपीडामेतेषां धातूनामुपधाया वा ह्रस्वो भवति अङ्परे ञौ परे । अनेन वोपधाया ह्रस्वः । ( ञेः ) अनेन ञेर्लोपः ।

(लघोर्दीर्घः) अनेन पूर्वस्य दीर्घः। अपीपिडत्। अपीपिडताम्। अपीपिडन्। इत्यादीनि। यदोपधाया ह्रस्वो न भवति। तदा। अपिपीडत्। अपिपीडताम्। अपिपीडन्॥ प्रथ प्रख्याने। (चुरादेः) प्रथयति। लिट्लकारे। आम्प्रत्ययः। प्रथयांचकार। लुङ्लकारे। (णेरङ् द्विश्व। पूर्वस्य०) अ प प्रथ णि अङ् दिप् इति जाते (आङि लघौ०) अनेनोपधाया ह्रस्वः। अकारस्येकारे प्राप्ते।

## (स्मृदृत्वरप्रथम्रदस्तॄस्पशां पूर्वस्यातोऽदङ्परे णौ) इत्वापवादः। अपप्रथत्॥ पृथ प्रक्षेपे।

सूत्रम् (स्मृ०) स्मृदृत्वरप्रथम्रदस्तॄस्पशां धातूनां पूर्वस्य अकारस्य अकार एव भवति। इत्यपवादः। अनेन पूर्वस्य अकारस्य इकारो न भवति। (णेः) अनेन सेर्लोपः। अपप्रथत्। अपप्रथताम्। अपप्रथन्। इत्यादीनि॥ पृथ प्रक्षेपे। (चुरादेः। उपधाया लघोः) अन्यत्तु पूर्ववत्। पर्थयति। लुङ्लकारे। (णेरङ्। द्विश्च। आङि लघौ०। लघोर्दीर्घः। णेः) अपीपृथ अङ् दिप् इति जाते।

## (उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः) इररारामपवादः। अपीपृथत्–अपपर्थत्॥ ज्ञप ज्ञानज्ञापनयोर्मित्।

(उपधायाः०) उपधाया ऋवर्णस्य ऋकारो वा वक्तव्यः। इररारामपवादः। अनेन ऋकारस्य ऋकार एव। अपीपृथत्। अपीपृथताम्। अपीपृथन्। यदा ऋकारो न भवति। तदा णौ परे गुणः। अपपर्थत्। अपपर्थताम्। अपपर्थन्॥ ज्ञप ज्ञानज्ञापनयोः। (चुरादेः। अत उपधायाः) ज्ञाप् णि इति जाते।

## (मितां ह्रस्वः) मितां धातूनां ह्रस्वो भवति णौ परे। ज्ञपयति॥ चिञ् चयने मित्।

सूत्रम् (मितां ह्रस्वः) मितां ६–३ ह्रस्वः १–१ मितां धातूनां ह्रस्वो भवति णौ परे। मितो धातवो धातुपाठादवगन्तव्याः। अनेन ह्रस्वः। अन्यत्सुगमम्। ज्ञपयति। लिट्लकारे। आम्प्रत्ययः। ज्ञपयांचकार। लुङ्लकारे। (णेरङ् द्विश्व। पूर्वस्य०। ह्रस्वः। णेः। आङि०) अजिज्ञपत्। अजिज्ञपताम्। अजिज्ञपन्॥ चिञ् चयने। अयं धातुर्मित्। (चुरादेः) अनेन णिः।

## (चिस्फुरोर्णौवात्वं वा)

सूत्रम् (चिस्फुरोः०) चिस्फुरोर्धात्वोर्णिप्रत्यये परे आत्वं वा भवति। पश्चात् अनेनायमादेशोन्त्यस्य। चा णि इति जाते।

( रातो ञौ पुक् ) ऋ गतावित्यस्याऽऽकारस्य च पुगागमो भवति ञौ परे । चपयति । चययति ॥ अर्च पूजायाम् । अर्चयति ।

सूत्रम् ( रातो ञौ पुक् ) रातः ६-१ ञौ । ७-१ पुक् १-१ ऋ गतौ इत्यस्य धातोराकारान्तस्य च धातोर्ञिप्रत्यये परे पुगागमो भवति । अनेन पुक् । कित्वादन्ते । ( मिता ह्रस्वः ) अनेन ह्रस्वः । ( स धातुः ) तिवादयः । ( अप्कर्त्तरि । गुणः ) चपयति । चपयेत् । चपयतु । अचपयत् । लिट्लकारे । ( कासादिप्रत्ययादाम् ) अनेनास्याम् । अन्यत्साधनं सुगमम् । चपयाचकार । चपयामास । चपयाम्बभूव । ( ञेः ) चप्यात् । ( सिसता० ) चपयिता । चपयिष्यति । अचपयिष्यत् । लुङ्लकारे । चप् ञि दिप् इति जाते । ( ञेरङ् द्विश्च । पूर्वस्य० । अङि लघौ । लघोर्दीर्घः ) अचीचपत् । अचीचपताम् । अचीचपन् । आत्वाभावपक्षे । ( धातोर्नामिनः ) अनेन वृद्धिः । ( मिता ह्रस्वः। स धातुः। अप्० ) चययति । लिट्लकारे । आमप्रत्ययः । चययाचकार । (ञेः) चय्यात् । लुङ्लकारे । चय् ञि दिप् इति जाते । ( ञेरङ् द्विश्च । ञेः । अङि लघौ । लघोर्दीर्घः ) अचीचयत् । अचीचयताम् । अचीचयन् ॥ अर्च पूजायाम् । ( चुरादेः ) अन्यत्साधनं तु पूर्ववत् । अर्चयति । लिट्लकारे । अर्चयाचकार । आशीर्वादादौ । ( ञेः ) अर्च्यात् । लुङ्लकारे । अर्च् ञि दिप् इति जाते । ( ञेरङ् द्विश्च )

( स्वरादेः परः ) स्वरादेर्धातोः परोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति ( नदराः ) संयोगादयो न द्विः इति रेफस्य न द्वित्वम् । आर्चिचत् ॥ कृत संशब्दे ।

( स्वरादेः परः ) ( नदराः ) अनेन रकारस्य द्वित्वनिषेधः ( ञेः । दिवादावट् । स्वरादेः ) आर्चिचत् । आर्चिचताम् । आर्चिचन् ॥ कृत संशब्दे ( चुरादेः )

( धातोरुपधाया ऋकारस्य ईकारादेशो वाच्यो ञिप्रत्यये परे ) कीर्तयति । अचिकीर्तत् ॥ गण संख्याने । अकारान्तः । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । गणयति ।

सूत्रम् ( धातोः० ) धातोरुपधाया ऋकारस्य ञिप्रत्यये परे ईकारादेशो वाच्यः ( र्वोर्वि ह्रसे ) अनेन दीर्घः । कीर्त्तयति । लिट् । कीर्त्तयाञ्चकार । लुङ् ( ञेरङ् द्विश्च । ह्रस्वः । कुहोश्चुः । दिवादावट् ) अचिकीर्त्तत् । अचिकीर्त्तताम् । अचिकीर्त्तन् ॥ गण संख्याने । अयमकारान्तः ( चुरादेः । यतः ) अनेनाकारस्य लोपः । तत्र ( अत

उपधायाः ) अनेन सूत्रेण वृद्धेः प्राप्तौ सत्यां 'यदादेशस्तद्वद्भवति' इति न्यायेन वृद्धिर्न भवति उपधायामकाराभावात् । गणयति । चतुर्णां सुगमानि । लिट् । गणयांचकार । लुङ् ( णेरङ् द्विश्च । पूर्वस्य० । कुहोश्चुः ),

**( अल्लोपिनो नाङ्कार्यम् ) अजगणत् । कथगणयोरङ्कार्यं चेति केचित् । अजीगणत् ॥ कथ वाक्यप्रबन्धे । कथयति । अचकथत् । अचीकथत् ॥ ऊन परिहाणे । ऊनयति । णिनिमित्तस्वरादेशो द्वित्वे कर्त्तव्ये । स्थानिवत् ( स्वरादेः परः ) अर्थङ् याचने । अर्थयते । आर्तथत ॥ संग्रामङ् युद्धे । अससंग्रामत ॥ अन्ध दृष्ट्युपघाते । आन्दधत् ॥ अङ्क अङ्ग पदे लक्षणे च । आञ्चकत् ॥ इति चुरादयः ॥**

सूत्रम् ( अल्लोपिनः० ) अल्लोपिनो धातोरङ्कार्यं न भवति ( अटि लघौ । लघोर्दीर्घः ) आभ्यां सूत्राभ्यामुक्तं कार्यं न भवति इत्यर्थः । अजगणत् । अजगणताम् । अजगणन् । कथगणयोर्धात्वोरङ्कार्यं वा भवतीति केचिदाचार्या वदंति । तन्मते । अजीगणत् । अजीगणताम् । अजीगणन् ॥ कथ वाक्यप्रबन्धे । अयमप्यकारांतः । ( चुरादेः ) कथयति । कथयांचकार । कथ्यात् । ( अल्लोपिनः ) अनेनाङ्कार्यं न भवति । ( कुहोश्चुः ) अचकथत् । अचकथताम् । अचकथन् । वा भवतीत्युक्तत्वात् अङ्कार्यं भवति । साधनं तु पूर्ववत् । अचीकथत् । अचीकथताम् । अचीकथन् ॥ ऊन परिहाणे ( चुरादेः ) अकारांतोयम् । ऊनयति । ऊनयेत् । ऊनयतु । ( स्वरादेः ) अनेनास्य धातोर्द्वितीयोऽडागमो भवति । औनयत् । लिट्लकारे ( कासादि० ) अनेनाम् । ऊनयांचकार ( णेः ) ऊन्यात् ( सिसता० ) ऊनयिता । ऊनयिष्यति । औनयिष्यत् । लुङ्लकारे । ऊनयि दिप् इति स्थिते ( णेरङ् द्विश्च ) अनेन ङप्रत्ययो धातोर्द्वित्वं च भवति ( स्वरादेः परः ) अनेन नकारस्य द्वित्वम् ( णेः । यतः । द्विवाद्भवत् । स्वरादेः परः ) औननत् । औननताम् । औननन् । इत्यादीनि रूपाणि भवंति ॥ अर्थङ् याचने । ङकार आत्मनेपदार्थः । अकारान्तोऽयं धातुः ( चुरादेः ) अन्यत्साधनं पूर्ववत् । अर्थयते । अर्थयेत । अर्थयताम् ( स्वरादेः ) अनेन द्वितीयोऽडागमो भवति । आर्थयत । लिट्लकारे ( कासादि० ) अनेनाम् । अर्थयांचक्रे आम्प्रत्ययः । अनेन अर्थयामास । अर्थयांबभूव । इत्यादीनि रूपाणि ( सिसता० ) अर्थयिषीष्ट । लुङ्लकारे । अङ्प्रत्ययः । धातोर्द्वित्वम् ( स्वरादेः परः ) अनेन थकारस्य द्वित्वं भवति ( झपानां० ) अनेन थकारस्य तकारः ( णेः । यतः । स्वरादेः० ) अनेन द्वितीयोऽडागमः । आर्तथत । आर्तथेताम् । आर्तथंत । इत्यादीनि ॥ संग्रामङ्

युद्धे । डकार आत्मनेपदार्थः । अकारान्तोऽयम् ( चुरादेः । यतः ) अन्यत्साधनं पूर्ववत् । संग्रामयते । संग्रामयेत । संग्रामयताम् । असंग्रामयत ( कासादि० ) संग्रामयांचक्रे ( सिसता० ) संग्रामयिषीष्ट । संग्रामयिता । लुङ्लकारे ( सस्वरादिः० ) अनेन सकारस्य द्वित्वम् अससंग्रामत । अससंग्रामेताम् । अससंग्रामत । इत्यादीनि भवंति ॥ अंध दृष्ट्युपघाते । अकारान्तोऽयम् । ( चुरादेः । यतः । स धातुः ) तिवादयः । अवादयः । अंधयति अंधयेत् । अंधयतु । ( स्वरादेः ) अनेन द्वितीयोऽडागमो भवति । आंधयत् । लिट्लकारे । आम्प्रत्ययो भवति । अंधयांचकार ( ञेः ) अंध्यात् ( सिसता० ) अंधयिता । अंधयिष्यति । आंधयिष्यत् । लुङ्लकारे । अङ्प्रत्ययः । धकारस्य द्वित्वम् ( झपानाम्० । ( ञेः । यतः । स्वरादेः ) आंदधत् । आंदधताम् । आदधन् । इत्यादीनि ॥ अंक अंग पदे लक्षणे च । अकारांतौ । ( चुरादेः । यतः ) अंकयति । अंगयति । इत्यादीनि रूपाणि सुगमानि । लिट्लकारे आम्प्रत्ययो भवति । अंकयांचकार । लुङ्लकारे अङ्प्रत्ययः ( स्वरादेः परः ) अनेन ककारस्य द्वित्वम् ( कुहोश्चुः ञेः । यतः स्वरादेः ) आंचकत् । आंचकताम् । आंचकन् । इत्यादीनि ॥ इति चुरादयो धातवः कथिताः ॥ ॥

## अथ ण्यन्तप्रक्रिया निरूप्यते ।

अथ ण्यंतप्रक्रियानिरूप्यते ।

( धातोः प्रेरणे ) प्रयोजकव्यापारेऽर्थे धातोर्ञिः प्रत्ययो भवति । कुर्वन्तं प्रेरयति यः स प्रयोजकः । कारयति । कारयते । अचीकरत् । पाचयति । अपीपचत् । भवंतं प्रेरयति भावयति । भावयते । भावयाम्बभूव ( अङ्सयोः पूर्वस्योकारस्येत्वं पवर्गयवरलजकारेष्ववर्णपरेषु परतः ) ( द्विर्निमित्तेऽचि ) द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । अबीभवत्॥ मूङ् मोहने । मावयति । अमीमवत् ॥ यु मिश्रणे । अयीयवत् ॥ रु शब्दे । अरीरवत् ॥ लूञ् छेदने । अलीलवत् ॥ जु गतौ । अजीजवत् ॥

सूत्रम् ( धातोः प्रेरणे ) धातोः ६-१ प्रेरणे ७-१ द्विपदं सूत्रम् । भ्वादेर्धातोः प्रेरणेऽर्थे कारितेऽर्थे ञिः प्रत्ययो भवति । प्रेरणेऽर्थे इति,कोऽर्थः । प्रयोजकव्यापारे । प्रयोजक इति कोऽर्थः । कुर्वतं पुरुषं यः कारयति 'एतत्कार्यं त्वं कुरु' इति प्रवर्त्तयति स प्रयोजक इत्युच्यते । तस्य व्यापारः प्रयोज्यद्वारेण रूपेण क्रियासम्बन्धस्तस्मिन्

ञि: प्रत्ययो भवति । कुर्वंतं प्रेरयति यः स प्रयोजकः । एकः करोति तं कुर्वंतं अन्यः प्रेरयति इत्यस्मिन्नर्थे कृधातोर्ञिः प्रत्ययः । कृञि इति जाते ञकारो वृद्ध्यर्थः उभयपदार्थश्च । ( धातोर्नामिनः ) अनेन वृद्धिः । ( स धातुः ) अनेनास्मिन्प्रकरणे धातुसंज्ञा सर्वत्र भवति । तिवादयः । ( अप् कर्त्तरि । गुणः । ए अय् ) । कारयति ॥ ञित्त्वादयमुभयपदी । कारयते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । ( कासादिप्रत्ययादाम् ) अनेनाम्प्रत्ययो भवति । अन्यत्साधनं सुगमम् । कारयाञ्चकार । कारयाञ्चक्रे ) कारयामास । कारयाम्बभूव । इत्यादीनि । ( ञेः ) कार्यात् । सिसता० ) पत्वम् । कारयिषीष्ट । कारयिता २ । अन्येषां सुगमानि । लुङ्लकारे । कार् ञि दिप् इति जाते । ( ञेरङ् द्विश्च ) अनेनाङ् । धातोर्द्वित्वं च । ( ह्रस्वः । कुहोश्चुः । अङि लघौ । लघोर्दीर्घः । दिवादावट् ) अचीकरत् । अचीकरताम् । अचीकरन् । आत्मनेपदे । अचीकरत । अचीकरेताम् । अचीकरन्त । इत्यादीनि भवंति । ञ्यन्ता धातवः सर्वे उभयपदिनः । ञित्त्वात् ॥ डुपचष् पाके । पचंतं प्रेरयति इति विग्रहे । ( धातोः प्रेरणे ) अनेन ञिः प्रत्ययः । ( अत उपधायाः । स धातुः ) तिवादयः । ( अप् कर्त्तरि । गुणः । ए अय् )पाचयति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । आम्प्रत्ययः । पाचयाञ्चकार । ( ञेः ) पाच्यात् । ( सिसता० ) पाचयिता । पत्वम् । पाचयिष्यति । ( दिवादावट् ) अपाचयिष्यत् । लुङ्लकारे । ( ञेरङ् द्विश्च ) अन्यत्साधनं सुगमम् । अपीपचत् । अपीपचताम् । अपीपचन् । इत्यादीनि ॥ भू सत्तायाम् । भवंतं प्रेरयति इति विग्रहे । ( धातोः प्रेरणे । धातोर्नामिनः ) अन्यत्साधनं सुगमम् । भावयति । भावयते । भावयाञ्चकार । भाव्यात् । ( सिसता० ) भावयिता । लुङ्लकारे । भू भू ञि अङ् दिप् इति जाते ( धातोर्नामिनः ) अनेन वृद्धिः । ( ह्रस्वः । झपानाम्० ) अङ्सयोः परयोः पूर्वस्य उकारस्य इत्वं भवति । अवर्णपरेषु पवर्गयवरलजकारेषु परतः । अनेन उकारस्य इत्वम् ( अङि लघौ । लघोर्दीर्घः ) अबीभवत् । अबीभवताम् । अबीभवन् । इत्यादीनि ॥ मूङ् मोहने । मवंतं प्रेरयति । ( धातोः प्रेरणे ) अन्यत्पूर्ववत् । मावयति । लिट्लकारे । ( कासादि० ) अनेनाम् । मावयांचकार । ( ञेः ) माव्यात् । ( सिसता० ) मावयिता । लुङ्लकारे साधनं पूर्वसदृशम् । अमीमवत् । अमीमवताम् । अमीमवन् । इत्यादीनि ॥ यु मिश्रणे । एकः यौति तमन्यः प्रेरयति इति विग्रहे ( धातोः प्रेरणे ) यावयति । लिट्लकारे । ( कासादि० ) अनेनाम् । यावयाञ्चकार । ( ञेः ) याव्यात् । यावयिता । लुङ्लकारे । अङ्प्रत्ययः । द्वित्वादिकम् । ( अङ्सयोः ) अनेन द्वित्वम् । अयीयवत् । अयीयवताम् । अयीयवन् ॥ रु शब्दे । ( धातोः प्रेरणे ) अन्यत्पूर्ववत् ज्ञेयम् । रावयति । लिट्लकारे । रावयाञ्चकार । ( ञेः ) राव्यात् । रावयिता । लुङ्लकारे । अङ्प्रत्ययः द्वित्वादिकम् । अन्यत्पूर्ववत् कार्यं भवति । अरीरवत् । अरी-

स्रवताम् । अरीरवन् । इत्यादीनि ॥ लूञ् छेदने । ( धातोः प्रेरणे ) एकः लुनाति तमन्यः प्रेरयति । लावयति । लावयेत् । लावयतु । अलावयत् । लावयाञ्चकार । लाव्यात् । ( सिसता० ) लावयिता । लावयिष्यति । अलावयिष्यत् । लुङ्लकारे । अलीलवत् । अलीलवताम् । अलीलवन् ॥ जु गतौ । ( धातोः प्रेरणे ) जावयति । लिट्लकारे । जावयाञ्चकार । जाव्यात् । लिट्लकारे साधनं सुगमम । अजीजवत् । अजीजवताम् । अजीजवन् । इत्यादीनि रूपाणि भवंति । एषां धातूनां लुङ्लकारे । द्वित्वनिमित्ते स्वरे स्वरादेशो न भवति । तस्मात्पूर्वं द्वित्वं भवति । पश्चाद्वृद्धिः ॥ स्रु गतौ । एकः स्रवति तमन्यः प्रेरयति । ( धातोः प्रेरणे ) अन्यत् सुगमम् । स्रावयति । लिट्लकारे । आम् प्रत्ययः । स्रावयांचकार । लुङ्लकारे । ( ञेरङ् द्विश्च । पूर्वस्य० । ञेः ) अनेन ञेर्लोपो भवति । असुस्रव् अङ् दिप् इति जाते । ( अङि लघौ० )

( स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनाम् अङ्सयोः पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे ) असिस्रवत् । असुस्रवत् ॥ अशिश्रवत् । अशुश्रवत् ॥ अदिद्रवत् ॥ अदुद्रवत् ॥

सूत्रम् ( स्रवति० ) स्रवतिशृणोतिद्रवतिप्लवतिच्यवतीनां धातूनां अङ्सयोः परयोः पूर्वस्य इत्वं वा भवति । अवर्णपरे धात्वक्षरे परे । अनेन पूर्वस्य इकारः । असिस्रवत् । असिस्रवताम् । असिस्रवन् । इत्वाभावपक्षे । असुस्रवत् । असुस्रवताम् । असुस्रवन् ॥ श्रु श्रवणे । शृण्वंतं प्रेरयति । ( धातोः प्रेरणे । धातोर्नामिनः ) श्रावयति । श्रावयेत् । श्रावयतु । अश्रावयत् । लिट् । ( कासादि० ) अनेनाम् । श्रावयाञ्चकार ( ञेः ) श्राव्यात् । ( सिसता० ) श्रावयिता । श्रावयिष्यति । अश्रावयिष्यत् । लुङ् । ( ञेरङ् द्विश्च । पूर्वस्य हसादिः । धातोर्नामिनः । ञेः । अङि लघौ । स्रवतिशृणोति० ) अनेन पूर्वस्येत्वम् । अशिश्रवत् । अशिश्रवताम् । अशिश्रवन् । इत्वाभावपक्षे साधनं पूर्वसदृशम् । अशुश्रवत् । अशुश्रवताम् । अशुश्रवन्॥ द्रु गतौ । (धातोः प्रेरणे) द्रावयति । चतुर्णां सुगमानि । लिट् । द्रावयांचकार । लुङ्लकारे । ( स्रवति० ) अनेन पूर्वस्य वा इत्वम् । अदिद्रवत् । अदिद्रवताम् । अदिद्रवन् । इत्वाभावपक्षे । अदुद्रवत् । अदुद्रवताम् । अदुद्रवन् ॥ हन् हिंसागत्योः । घ्नंतं प्रेरयति इति विग्रहे । ( धातोः प्रेरणे ) हन् ञि इति जाते ।

( हनो घत् ) हन्तेर्घदादेशो भवति ञ्णिति णव्वर्जिते परतः । घातयति । अजीघतत् ॥ शद्लृ शातने ।

सूत्रम् ( हनो घत् ) हनः ६-१ । घत् १-१ । द्विपदम् । हतेर्धातोर्घदादेशो भवति णव्वर्जिते ञ्णिति प्रत्यये परतः । अनेन घदादेशः । ( अत उपधायाः । स धातुः )

घातयति। घातयेत्। घातयतु। अघातयत्। लिट्। (कासादि०) घातयांचकार (जेः) घात्यात्। (सिसता०) घातयिता। घातयिष्यति। अघातयिष्यत्। लुङ्लकारे। घात् ञि दिप् इति स्थिते। (ञेरङ् द्विश्च। कुहोश्चुः। झपानाम्०। आङि लघौ। लघोर्दीर्घः। दिवादावट्) अजीघतत्। अजीघतताम्। अजीघतन्। इत्यादीनि॥ शद्लृ शातने। शदंतं प्रेरयति इति विग्रहे। (धातोः प्रेरणे)

(शदेः शत्) शदेः शतादेशो भवति अगतौ ञौ परे। शातयति। गतौ तु। शादयति। अशीशदत्॥ (रातो ञौ पुक्) डुदाञ् दाने। दापयति। अदीदपत्॥ धापयति। अदीधपत्॥

(शदेः शत्) शदेः ६-१ शत् १-१। शदेर्धातोः शतादेशो भवति। अगतौ ञौ परे। (अत उपधायाः) शातयति। लिट्। शातयांचकार। लुङि साधनं तु पूर्ववत्। अशीशतत्। अशीशतताम्। अशीशतन्। गतौ तु। शादयति। अशीशदत्॥ डुदाञ् दाने। ददतं प्रेरयति इति विग्रहे। (धातोः प्रेरणे। रातो ञौ पुक्) अनेन पुगागमः। दापयति। लिट्। दापयांचकार। लुङ्लकारे। (ञेरङ् द्विश्च। ह्रस्वः। आङि लघौ। लघोर्दीर्घः) अदीदपत्॥ डुधाञ् धारणपोषणयोः। दधतं प्रेरयति इति विग्रहे। (धातोः प्रेरणे। रातो ञौ पुक्) धापयति। धापयांचकार। लुङ्। झपानाम्) अनेन दस्य धः। अन्यत्पूर्ववत्। अदीधपत्। अदीधपताम्। अदीधपन्॥ ऋ गतौ। ऋच्छंतं प्रेरयति इति विग्रहे। (धातोः प्रेरणे। रातो ञौ पुक्) ऋप् ञि इतिं जाते।

(पुगन्तस्य गुणो वक्तव्यः) अर्पयति। (स्वरादेः परः) आर्पिपत्॥ ष्ठा गतिनिवृत्तौ। स्थापयति।

सूत्रम् (पुगंतस्य०) पुगंतस्य धातोर्गुणो वक्तव्यः। अनेन गुणः। अर्पयति। लिट्–अर्पयांचकार। (ञेः) अर्प्यात्। (सिसता०) अर्पयिता। लुङ्लकारे। आर्पि दिप् इति स्थिते। (ञेरङ् द्विश्च। स्वरादेः परः) (नद्राः) अनेन रकारस्य द्वित्वं न भवति। (ञेः। दिवादावट्। स्वरादेः। सवर्णे०) आर्पिपत्। आर्पिपताम्। आर्पिपन्॥ ष्ठा गतिनिवृत्तौ। (आदेः ष्णः स्नः। धातोः प्रेरणे) तिष्ठंतं प्रेरयति इति विग्रहे ञिः प्रत्ययः। (रातो ञौ पुक्) स्थापयति। स्थापयांचकार। (ञेः) स्थाप्यात्। (सिसता०) स्थापयिता। स्थापयिष्यति। अस्थापयिष्यत्। लुङ्लकारे। स्थाप् ञि दिप् इति स्थिते। (ञेरङ् द्विश्च। ञेः).

( तिष्ठतेरुपधाया इकारो वक्तव्योऽङि परे ) ततो द्वित्वम् । अतिष्ठिपत् ।

सूत्रम् ( तिष्ठतेः० ) तिष्ठतेर्धातोरुपधाया इकारो वक्तव्यः अङि परे । ततः द्वित्वम् भवति । ( शसात् खपाः ) अतिष्ठिपत् । अतिष्ठिपताम् । अतिष्ठिपन् अतिष्ठिपः । अतिष्ठिपतम् । अतिष्ठिपत । इत्यादीनि ॥ पा पाने । पिबंतं प्रेरयति इति विग्रहे धातोः प्रेरणे अनेन ञिप्रत्ययः । पा ञि इति जाते ।

( पादेर्युक् ) पाशाछासाह्वेञ्वेञां युगागमो भवति ञौ परे । पाययति ।

सूत्रम् ( पादेर्युक् ) पादेः ६-१ युक् १-१ । पाशाछासाह्वेञ्वेञामेतेषां धातूनां युगागमो भवति ञिप्रत्यये परे । पुकोऽपवादः । पाय् ञि इति जाते । ( स धातुः ) अन्यत्साधनं पूर्ववत् । पाययति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । ( कासादि० ) पाययांचकार । ( जेः ) पाय्यात् । ( सिसता० ) पाययिता । पाययिष्यति । अपाययिष्यत् । अपापाय् ञि अङ् दिप् ( जेः ) अनेन ञेर्लोपो भवति ।

( पिबतेरङि पूर्वस्येकारोपधालोपौ वक्तव्यौ ) अपीप्यत् ॥ शो तनूकरणे । ( संध्यक्षराणामा० ) शाययति । अशीशयत् ॥ छो छेदने । अचीच्छयत् ॥ षोऽन्तकर्मणि । साययति । असीसयत् ॥ ह्वेञ् स्पर्धायाम् ।

सूत्रम् ( पिबतेः० ) पिबतेर्धातोरङि पूर्वस्य ईकारोपधालोपौ वक्तव्यौ । सुगममिदं सूत्रम् । अनेन पूर्वस्य ईकारो भवति । उपधालोपश्च । अपीप्यत् । अपीप्यताम् । अपीप्यन् । इत्यादीनि ॥ शो तनूकरणे । ( संध्यक्षराणामा० ) श्यंतं प्रेरयति । ( पादेर्युक् ) अन्यत्साधनं सुगमम् । शाययति । लिट्लकारे । शाययांचकार । ( जेः ) शाय्यात् । ( सिसता० ) शाययिता । शाययिष्यति । अशाययिष्यत् । शाय् ञि दिप् इति जाते । ( ञेरङ् द्विश्च । अङि ल्वौ० । ल्वोर्दीर्घः । दिवादावट् ) अशीशयत् । अशीशयताम् । अशीशयन् ॥ छो छेदने । ( संध्यक्षराणामा० ) एकः छ्यति तमन्यः प्रेरयति । ( धातोः प्रेरणे । पादेर्युक् ) अनेन युगागमो भवति छाययति । छाययांचकार । ( जेः ) छाय्यात् । ( सिसता० ) छाययिता । छाययिष्यति । अच्छाययिष्यत् । लुङ्लकारे । ( झपानाम्० ) अनेन छकारस्य चकारः । अन्यत्साधनं सुगमम् । अचीच्छयत् । अचीच्छयताम् । अचीच्छयन् ॥ षो अन्तकर्मणि । ( आदेः ष्णः स्नः । संध्यक्षराणामा ) एकः स्यति तमन्यः प्रेरयति । ( धातोः प्रेरणे । पादेर्युक् ) साययति । साययांचकार । ( जेः ) साय्यात् । ( सिसता० )

सायिता । साययिष्यति । असाययिष्यत् । लुङ्लकारेऽपि पूर्ववत् साधनम् । असीषयत् । असीषयताम् । असीषयन् । इत्यादीनि ॥ ह्वेञ् स्पर्धायाम् । एको ह्वयति तमन्यः प्रेरयति । ( संध्यक्ष० । धातोः प्रेरणे । पादेर्युक् ) ह्वाययति । ह्वाययांचकार । लुङ्लकारे ।

( ह्वयतेरङि संप्रसारणं युगभावश्च वक्तव्यः ) कृतसंप्रसारणस्य ह्वयतेरङि क्रमाद्गुणवृद्धी वाच्ये । अजूहवत् । अजुहावत् ॥ अजुहावताम् ॥ व्येञ् संवरणे । व्याययति । अवीव्ययत् ॥ वेञ् तन्तुसंताने । वाययति । अवीवयत् ॥ पा रक्षणे ।

सूत्रम् ( ह्वयते० ) । ह्वयतेः ६-१ ह्वयतेर्धातोरङि परे सति संप्रसारणं युगभावश्च वक्तव्यः । कृतसंप्रसारणस्य ह्वयतेर्धातोरङि क्रमात् गुणवृद्धी वाच्ये । गुणे कृते सति । ( कुहोश्चुः ) अनेन हस्य जः। अजूहवत् । अजुहवताम् । अजुहवन् । वृद्धिपक्षे-अजुहावत् । अजुहावताम् । अजुहावन् ॥ व्येञ् संवरणे। (संध्यक्षराणामा०। पादेर्युक्) एको व्ययति तमन्यः प्रेरयति । व्याययति । व्याययांचकार । लुङ्लकारे । व्याय् णि दिप् इति जाते । ( णेरङ् द्विश्च । णेः । पूर्वस्य० । अङि लघौ० ) अवीव्ययत् । अवीव्ययताम् । अवीव्ययन् ॥ वेञ् तंतुसंताने । एको वयति तमन्यः प्रेरयति । ( धातोः प्रेरणे । संध्यक्ष० । पादेर्युक् ) वाययति । लिट्लकारे । ( कासादि० ) अनेनाम्प्रत्ययो भवति । वाययांचकार ( णेः ) वाय्यात् । ( सिसता० ) वाययिता । वाययिष्यति । अवाययिष्यत् । लुङ्लकारे । पूर्वोक्तैरेव सूत्रैरूपाणां सिद्धिः । अवीवयत् । अवीवयताम् । अवीवयन् ॥ पा रक्षणे । ( धातोः प्रेरणे )

( पातेर्णौ लुग्वक्तव्यः ) पुकोऽपवादः । पालयति । अपीपलत् ॥ रभ राभस्ये । रभसो वेगहर्षयोः ।

सूत्रम् ( पातेः० ) पातेर्धातोर्णिप्रत्यये परे लुगागमो वक्तव्यः । पुकोऽपवादः । पालयति । लिट् । पालयांचकार । लुङ् । अपीपलत् । अपीपलताम् । अपीपलन् ॥ रभ राभस्ये ।

( रभलभोः स्वरे णाद्यपौ विना नुम्वाच्यः ) रम्भयति । अररम्भत् ॥ डुलभष् प्राप्तौ । लम्भयति । अललम्भत् ॥

सूत्रम् ( रभलभोः० ) वेगहर्षार्थयोः रभलभोर्णाद्यपौ विना स्वरे परे नुम् वाच्यः । ( नश्चापदान्ते । धातोः प्रेरणे ) रम्भयति । लिट्लकारे रम्भयांचकार ( णेः । रम्भ्यात् । ( सिसता० ) रम्भयिता । लुङ्लकारे ( णेरङ् द्विश्च ) अनेनाङ्प्रत्ययः धातोर्द्वित्वम् । अङ्कार्यं न स्यात् । अररम्भत् । अररम्भताम् । अररम्भन् । इत्या

दीनि ॥ डुलभष् प्राप्तौ । डुकारषकारावितौ । ( धातोः प्रेरणे । रभलभोः० ) अनेन नुम् । अन्यत्साधनं पूर्ववत् । लम्भयति । लिट्लकारे । लम्भयांचकार । (सिसता० ) लम्भयिता । लुङ्लकारे । अललम्भत् । अललम्भताम् । अललम्भन् । तमन्यः प्रेरयति ।

( प्रीञ्धूञोर्नुक् ) अनयोर्नुगागमो भवति ञौ परे ॥ प्रीञ् तर्पणे । प्रीणयति । अपिप्रिणत् ॥ धूञ् कम्पने । धूनयति । अदूधुनत् ॥ स्मिङ् ईषद्धसने ।

सूत्रम् ( प्रीञ्धूञोर्नुक् ) प्रीञ् च धूञ् च प्रीञ्धूञौ तयोः प्रीञ्धूञोः ६–२ नुक् १–१ अनयोः प्रीञ्धूञोर्धात्वोर्नुगागमो भवति ॥ प्रीञ् तर्पणे । ( धातोः प्रेरणे ) एकः प्रीणाति । प्रीणयांचकार । लुङ्लकारे । (ञेरङ् द्विश्च । पूर्वस्य० । ह्रस्वः। अङि लघौ० ) अनेनोपधाया ह्रस्वः । अपिप्रीणत् । अपिप्रीणताम् । अपिप्रीणन् ॥ धूञ् कंपने । ( धातोः प्रेरणे । प्रीञ्धूञोर्नुक् ) धूनयति । धूनयांचकार । धून्यात् । धूनयिता । लुङ्लकारे । ( ञेरङ्० । अङि लघौ० । लघोर्दीर्घः । झपानाम्० ) अदूधुनत् । अदुधूनताम् । अदुधूनन् ॥ स्मिङ् ईषद्धसने । एकः स्मयति तमन्यः प्रेरयति ( धातोः प्रेरणे )

( स्मयतेरात्वात्वं ञौ वाच्यम् ) विस्मापयते । असिष्मपत । आति किम् । विस्माययति । असिष्मयत ।

सूत्रम् ( स्मयतेः० ) स्मयतेर्धातोरात्वं वा भवति ञिप्रत्यये परे । अनेनात्वं वा । स्मापयते । अत्र ( रातो ञौ पुक् ) अनेन पुक् । स्मापयांचक्रे । लुङ्लकारे । पूर्वस्येकारः । पत्वम् । असिष्मपत । असिष्मपाताम् । असिष्मपत । आत्वाभावपक्षे । वृद्धिः । ( ऐ आय् ) विस्माययति । विस्माययांचकार । लुङ्लकारे । असिष्मयत् । असिष्मयताम् । असिष्मयन् ॥ साधनं सुगमम् ।

( रुहेर्ञौ पो वा वाच्यः ) रुह बीजजन्मनि प्रादुर्भावे च । रोहयति । रोपयति । अरूरुहत् । अरूरुपत् ॥ कृपू सामर्थ्ये ( कृपो रो लः ) कल्पयति ।

सूत्रम् ( रुहेः० ) रुहेर्धातोर्ञिप्रत्यये परे पो वा वाच्यः । षष्ठी । अनेनान्त्यस्यैव ॥ रुह बीजजन्मनि प्रादुर्भावे च । ( धातोः प्रेरणे । उपधायाः ) अनेन गुणः । रोपयति । रोपयांचकार । लुङ्लकारे । अङ्कार्यं भवति । अरूरुपत् । अरूरुपताम् । अरूरुपन् । पत्वाभावपक्षे । रोहयति । रोहयांचकार । अङ्कार्यं सर्वं भवति अरूरुहत् । अरूरुहताम् । अरूरुहन् ॥ कृपू सामर्थ्ये ( धातोः प्रेरणे ) गुणो

भवति ( कृपो रोलः ) अनेन रकारस्य लः । कल्पयति । कल्पयांचकार ( जेः ) कल्प्यात् ( सिसता ) कल्पयिता ।

( उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः ) इररारामपवादः । अचीक्लृपत् । अचकल्पत्॥ वृतुङ् वर्तने । वर्तयति । अवीवृतत्-अववर्तत् ॥ मृजू शुद्धौ । मार्जयति । अमीमृजत्-अममार्जत् ॥ इङ् अध्ययने ।

( उपधाया ऋवर्णस्य० ) अचीक्लृपत् । विकल्पेन । अचकल्पत् । अत्राङ्कार्यं न भवति । अचकल्पताम् । अचकल्पन्॥ वृतुङ् वर्तने ( धातोः प्रेरणे । उपधाया लघोः ) वर्त्तयति । वर्त्तयांचकार ( उपधाया ऋवर्णस्य० ) अनेन वा ऋकारस्य ऋकारः । यदा ऋकारस्तदा अङ्कार्यं भवति । अवीवृतत् । अवीवृतताम् । अवीवृतन् । ऋकाराभावपक्षे अङ्कार्यं न भवति । सूत्रप्राप्त्यभावात् । अववर्त्तत् । अववर्त्तताम् । अववर्त्तन् ॥ मृजू शुद्धौ ( धातोः प्रेरणे । मृजेः० ) अनेन वृद्धिः । मार्जयति । लिट्लकारे ( कासादि० ) अनेनाम् । मार्जयांचकार । अन्येषां सुगमानि । लुङ्लकारे ( उपधायाः ) अन्यत्साधनं सुगमम् । अमीमृजत् । अमीमृजताम् । अमीमृजन् ( मृजेः ) अनेन वृद्धिः । अममार्जत् अममार्ज्जताम् । अममार्जन् ॥ इङ् अध्ययने ( धातोः प्रेरणे )

( इङादेर्ञौ पुक् च ) इङ्क्रीजीनामात्वं भवति ञौ परे । ह्रीव्लीरीक्नूयीक्ष्मायीनां पुगागमो भवति ञौ परे । अध्यापयति । अध्यापिपत् ॥

सूत्रम् ( इङादेर्ञौपुक् च ) इङादेः ६-१ ञौ ७-१ पुक् १-१ च १-१ इङ्क्रीजीनां धातूनां ञिप्रत्यये परे आत्वं भवति । पुक् च भवति । ह्रीव्लीरीक्नूयीक्ष्मायीनां धातूनां ञिप्रत्यये पुगागमो भवति । एकोऽधीते,तमन्यः प्रेरयति ( इयं-स्वरे ) अध्यापयति । अध्यापयांचकार । लुङ्लकारे ( अङि लघौ ) अनेन पूर्वस्येकारः अध्यापिपत् । अध्यापिपताम् । अध्यापिपन् ।

( अङ्परे ञौ इङो गाङ् वा वक्तव्यः ) अध्यजीगपत् ॥ डुक्रीञ् द्रव्यविनिमये । क्रापयति । अचिक्रपत् ॥ जि जये । जापयति । अजीजपत् ॥ ह्री लज्जायाम् । ह्रेपयति । अजिह्रिपत्॥ व्ली वरणे । व्लेपयति । अविव्लिपत् ॥ रीङ् क्षरणे । रेपयति । अरीरिपत् ॥ क्नूयी दुर्गन्धे ।

सूत्रम् ( अङ्परे० ) अङ्परे ञिप्रत्यये परे इङो धातोर्गाङ् वा वाच्यः । अनेन गा इत्यादेशः । पुगागमः । ततो द्वित्वम् ( कुहोश्चुः । अङि लघौ । लघोर्दीर्घः ) अध्यजीगपत् । अध्यजीगपताम् । अध्यजीगपन् ॥ डुक्रीञ् द्रव्यविनिमये । एकः क्रीणाति तमन्यः प्रेरयति ( धातोः प्रेरणे । इङादेर्ञौ पुक् ) अनेनात्वपुकौ । क्रापयति । लिट् । आम्प्रत्ययः । क्रापयांचकार ( ञेः ) क्राप्यात् ( सिसता० ) क्रापयिता । क्रापयिष्यति । अक्रापयिष्यत् । लुङ्लकारे ( ञेरङ्द्विश्च । अङि लघौ ) अचिक्रपत् । अचिक्रपताम् । अचिक्रपन् ॥ जि जये । एको जयति तमन्यः प्रेरयति ( धातोः प्रेरणे ) आत्वपुकौ । जापयति । लिट्लकारे । जापयांचकार ( ञेः । जाप्यात् सिसता० ) जापयिता । जापयिष्यति । अजापयिष्यत् । लुङ्लकारे ( ञेरङ् द्विश्च । अङि लघौ । लघोर्दीर्घः ) अजीजपत् । अजीजपताम् । अजीजपन् ॥ ह्री लज्जायाम् । एको जिह्रेति । तमन्यः प्रेरयति । धातोः प्रेरणे पुग् भवति। गुणः । ह्रेपयति । ह्रेपयांचकार । लुङ्लकारे ( ञेरङ्द्विश्च । अङि लघौ । कुहोश्चुः ) अजिह्रिपत् । अजिह्रिपताम् । अजिह्रिपन् ॥ व्ली वरणे ( धातोः प्रेरणे ) पुक् । गुणः । अन्यत्सर्वं पूर्ववत् व्लेपयति । व्लेपयांचकार ( ञेः) व्लेप्यात् ( सिसता० ) व्लेपयिता । व्लेपयिष्यति । अव्लेपयिष्यत् । लुङ्लकारे ( ञेरङ्द्विश्च । अङि लघौ ) अविव्लिपत् । अविव्लिपताम् । अविव्लिपन् ॥ रीङ् क्षरणे ( धातोः प्रेरणे ) पुक् । ( गुणः ) रेपयति । रेपयांचकार ( ञेः ) रेप्यात् । रेपयिता । लुङ्लकारे । पूर्ववत् साधना । अरीरिपत् । अरीरिपताम् । अरीरिपन् ॥ क्नूयी दुर्गंधे । ईकार इत् । ( धातोः प्रेरणे ) ञौ परे पुगागमः ।

( यवयोर्वसे हकारे च लोपो वक्तव्यः ) क्नोपयति । अचुक्नुपत ॥ क्ष्मायी विधूनने । एकः क्ष्मायति तमन्यः प्रेरयति । क्ष्मापयति । अचिक्ष्मपत् ॥ लीङ् श्लेषणे ।

( यवयोः० ) अनेन यकारस्य लोपः । गुणः । क्नोपयति । क्नोपयांचकार । ( ञेः ) क्नोप्यात् । ( सिसता० ) क्नोपयिता । अक्नोपयिष्यत् । क्नोपयिष्यति । लुङ्लकारे । ( ञेरङ्द्विश्च । अङि लघौ । कुहोश्चुः ) अचुक्नुपत् । अचुक्नुपताम् । अचुक्नुपन् ॥ क्ष्मायी विधूनने । ( धातोः प्रेरणे ) पुगागमः । ( यवयोः ) अनेन यकारस्य लोपः । क्ष्मापयति । क्ष्मापयांचकार । क्ष्माप्यात् । ( सिसता० ) क्ष्मापयिता । क्ष्मापयिष्यति । अक्ष्मापयिष्यत् । लुङ्लकारे । ( ञेरङ् द्विश्च । पूर्वस्य० । अङि लघौ । कुहोश्चुः ) अचिक्ष्मपत् । अचिक्ष्मपताम् । अचिक्ष्मपन् ॥ लीङ् श्लेषणे । एको लिनाति तमन्यः प्रेरयति । ( धातोः प्रेरणे ) ।

( लीयतेर्ञावात्वं वा ) विलापयति ।

सूत्रम् (लीयते:०) लीयतेर्धातोर्णौ परे आत्वं वा भवति। (आतो णौ पुक्) विपूर्वोऽयम्। विलापयति। विलापयांचकार। विलाप्यात्। (सिसता०) विलापयिता। लुङ्लकारे। व्यलीलिपत्। व्यलीलिपताम्। व्यलीलिपन्।

( लीलो पुग् वक्तव्यः) विलेपयति। व्यलीलिपत्। व्यलीलपत्।

सूत्रम् (लीलो:०) ली ला एतयोर्धात्वोः पुग् वक्तव्यः। तदा विलेपयति। विलेपयांचकार। लुङ्लकारे। (णेरङ्द्विश्च। अङ्लघौ। लघोर्दीर्घः) व्यलीलिपत्। व्यलीलिपताम्। व्यलीलिपन्।

( लीलोर्न्नौ क्रमान्नुग्लुकौ वा ) विलीनयति। व्यलीलिनत्॥ ला ग्रहणे। लापयति। अलीलपत्। लालयति। अलीललत्। अलीललताम्॥ ढौकृ गतौ। ढौकयति।

सूत्रम् (लीलो:०) ली ला एतयोर्धात्वोः क्रमात् नुग्लुकौ वा भवतः। तदा विलीनयति। विलीनयांचकार। विलीन्यात्। (सिसता०) विलीनयिता। विलीनयिष्यति। लुङ्लकारे। पूर्वसूत्रैरेतद्रूपाणां सिद्धिः। व्यलीलिनत्। व्यलीलिनताम्। व्यलीलिनन्॥ ला ग्रहणे। एको लाति तमन्यः प्रेरयति। (धातोः प्रेरणे) पुक्। लापयति। लापयांचकार। लाप्यात्। लापयिता। लापयिष्यति। अलापयिष्यत्। लुङ्लकारे। अलीलपत्। अलीलपताम्। अलीलपन्। लुगागमे कृते सति। लालयति। लालयांचकार। लाल्यात्। (सिसता०) लालयिष्यति। लुङ्लकारे। (णेरङ् द्विश्च। अङि लघौ। लघोर्दीर्घः) अलीललत्। अलीललताम्। अलीललन्॥ ढौकृ गतौ। ऋकार इत्। एको ढौकति तमन्यः प्रेरयति। (धातोः प्रेरणे।) ढौकयति। चतुर्णां सुगमानि। ढौकयांचकार। (णेः) ढौक्यात्। (सिसता०) ढौकयिता। ढौकयिष्यति। अढौकयिष्यत्। लुङ्लकारे। (णेरङ् द्विश्च)

( न रितः ) ऋकारेतोऽनेकस्वरस्य शासश्चाङि उक्तं कार्यं न भवति। अडुढौकत्॥ टुयाचृ याच्ञायाम्। याचयति। अययाचत्॥ शासु अनुशिष्टौ। शासयति। अशशासत्॥ दरिद्रा दुर्गतौ। दरिद्रयति। अददरिद्रत्। अददरिद्रताम्॥ दुप वैकृत्ये।

सूत्रम् ( न रितः ) न १-१ ऋ इत् यस्यासौ रित् तस्य रितः ६-१ ऋकारानुबंधस्य अनेकस्वरस्य च शासो धातोरङि प्रत्यये परे। (अङि लघौ। लघोर्दीर्घः) इति द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति। (ह्रस्वः। झपानाम्०) अडुढौ-

कत् । अडुढौकताम् । अडुढौकन् । इत्यादीनि ॥ टुयाचृ याच्ञायाम् । ऋकार इत् । ( धातोः प्रेरणे ) याचयति । याचयांचकार । ( ञेः ) याच्यात् । ( सिसता० ) याचयिता । याचयिष्यति । अयाचयिष्यत् । लुङ्लकारे । ( न रितः ) अन्यत्सुगमं साधनम् । पूर्ववत् । अययाचत् । अययाचताम् । अययाचन् ॥ शासु अनुशिष्टौ । एकः शास्ति तमन्यः प्रेरयति । ( धातोः प्रेरणे ) शासयति । शासयांचकार । शासयिता । लुङ । ( न रितः ) अशशासत् । अशशासताम् । अशशासन् ॥ दरिद्रा दुर्गतौ । एको दरिद्राति तमन्यः प्रेरयति । ( धातोः प्रेरणे । णञ्वुण्० ) अनेन आकारस्य लोपः । दरिद्रयति । लिट्लकारे । ( कासादि० ) दरिद्रयांचकार । ( ञेः ) दरिद्र्यात् । ( सिसता० ) दरिद्रयिता । दरिद्रयिष्यति । अदरिद्रयिष्यत् । लुङ्लकारे । ( न रितः ) सस्वरादिः । अददरिद्रत् । अददरिद्रताम् । अददरिद्रन् । दुष वैकृत्ये । ( धातोः प्रेरणे ) ।

( दुषेञौ वा दीर्घो वक्तव्यः ) दूषयति--दोषयति । अदूदुषत् ॥ घट चेष्टायाम् । ( मितां ह्रस्वः ) धातुपाठे मित इत्येवं पठितानां धातूनां ह्रस्वो भवति ञौ परे । घटयति । अजीघटत् ॥ व्यथ दुःखसंचलनयोः । व्यथयति । अविव्यथत् ॥ एवं पञ्चपञ्चाशतो रूपम् ॥

सूत्रम् ( दुषेः० ) दुषेर्धातोर्ञिप्रत्यये परे वा दीर्घो भवति । अनेन पूर्वस्य वा दीर्घः। दूषयति । दूषयांचकार । लुङ्लकारे । ( ञेरङ् द्विश्च । अङि लघौ० । लघोर्दीर्घः) अदूदुषत् । अदूदुषताम् । अदूदुषन् । दीर्घाभावपक्षे । दोषयति । दोषयांचकार ( ञेः ) दोष्यात् । ( सिसता० ) दोषयिता । दोषयिष्यति । अदोषयिष्यत् । लुङ्लकारे । पूर्वसूत्रैरेव सिद्धिः । अदूदुषत् । अदूदुषताम् । अदूदुषन् ॥ घट चेष्टायाम् । ( धातोः प्रेरणे । अत उपधायाः । मितां ह्रस्वः ) अनेन ह्रस्वः । घटयति । लिट्लकारे ( कासादि० ) अनेनाम् । घटयांचकार । ञेः । घट्यात् ( सिसता० ) घटयिता । घटयिष्यति । अघटयिष्यत् । लुङ्लकारे ( ञेरङ् द्विश्च । अङि लघौ । लघोर्दीर्घः झपानाम्० ) अजीघटत् । अजीघटताम् । अजीघटन् । ( व्यथ दुःखसंचलनयोः । एको व्यथति । तमन्यः प्रेरयति । ( धातोः प्रेरणे । अत उपधायाः । मितां ह्रस्वः ) अनेन ह्रस्वो भवति । अन्यत्सुगमम् । व्यथयति । लिट्लकारे । आमप्रत्ययो भवति । व्यथयांचकार( ञेः ) व्यथ्यात् ( सिसता० ) व्यथयिता। व्यथयिष्यति । अव्यथयिष्यत् । लुङ्लकारे । ( ञेरङ् द्विश्च । पूर्वस्य० । अङि लघौ० ) अविव्यथत् । अविव्यथताम् । अविव्यथन् ॥

**( जनीजृष्क्नसुरञ्जोऽमन्ताश्च ) एतेऽपि मितः । जनयति । अजीजनत् ॥ जृष् वयोहानौ । ष् इत् । जरयति । अजीजरत् ॥क्नसु ह्वरणदीप्त्योः । क्नसयति । अचिक्नसत्॥ रञ्ज रागे ।**

जनी प्रादुर्भावे । एको जायते तम्० । ( धातोः प्रेरणे ) वृद्धिः । ( मितां ह्रस्वः ) जनयति । लिट्लकारे । ( कासादि० ) जनयांचकार । ( ञेः ) जन्यात् । ( सिसता० ) जनयिता । जनयिष्यति । अजनयिष्यत् । लुङ्लकारे । ( ञेरङ् द्विश्च । अङि लघौ० । लघोर्दीर्घः ) अजीजनत् । अजीजनताम् । अजीजनन् । इत्यादीनि ॥ जृष् वयोहानौ । ष् इत् । ( धातोः प्रेरणे ) एको जृणाति तम्० । ( धातोर्नामिनः ) अनेन वृद्धिः । ( मितां ह्रस्वः ) अन्यत्सुगमम् । जरयति । जरयांचकार । (ञेः) जर्यात् । ( सिसता० ) जरयिता । जरयिष्यति । अजरयिष्यत् । लुङ्लकारे । त्रिसूत्रैः कार्यसिद्धिः । अजीजरत् । अजीजरताम । अजीजरन् ॥ क्नसु ह्वरणदीप्त्योः । ( धातोः प्रेरणे ) वृद्धिः । ( मितां ह्रस्वः ) क्नसयति । क्नसयांचकार । ( ञेः ) क्नस्यात् । ( सिसता० ) क्नसयिता । क्नसयिष्यति । अक्नसयिष्यत् । लुङ्लकारे । ( ञेरङ् द्विश्च ।अङि लघौ० ) अचिक्नसत् । अचिक्नसताम् । अचिक्नसन् ॥ रंज रागे । एको रज्यति तम्० ( धातोः प्रेरणे ) ।

**( रञ्जेर्ञौ मृगरमणेऽर्थे नलोपो वाच्यः ) रजयति मृगान् अरीरजत् ॥ शम् दम उपशमे । शमयति । अशीशमत् ॥ दमयति । अदीदमत् ॥**

सूत्रम् ( रंजेः० ) रंजेर्धातोर्मृगरमणेऽर्थे नकारस्य लोपो वाच्यः । अनेन सूत्रेण नकारस्य लोपो भवति । (अत उपधायाः। मितां ह्रस्वः) रजयति। रजयांचकार। (ञेः) रज्यात् । (सिसता०) रजयिता । रजयिष्यति । अरजयिष्यत् । लुङ्लकारे । त्रिसूत्रैः कार्यसिद्धिः प्रायः । अरीरजत् । अरीरजताम् । अरीरजन् । मृगरमणाभावेऽर्थे नकारस्य लोपो न भवति । रंजयति। रंजयांचकार । अररंजत् । अररंजताम् । अररंजन्॥ शम् दम् उपशमे । एकः शाम्यति तम्० । ( धातोः प्रेरणे । मितां ह्रस्वः ) शमयति। शमयांचकार । ( ञेः ) शम्यात् । ( सिसता० ) शमयिता । लुङ्लकारे । ( ञेरङ् द्विश्च । अङि लघौ० । लघोर्दीर्घः ) अशीशमत् । अशीशमताम् । अशीशमन् ॥ दमयति । दमयांचकार । अदीदमत् । अदीदमताम् । अदीदमन् । एतेषां रूपाणां पूर्वोक्तैरेव सूत्रैः सिद्धिः तमन्यः प्रेरयति ।

**( जानातेर्ञौ वा ह्रस्वः ) ज्ञाऽवबोधने । एको जानाति । तमन्यः प्रेरयति । ज्ञपयति । अजिज्ञपत् ।**

सूत्रम् ( जानातेः० ) जानातेर्धातोर्ञिप्रत्यये परे वा ह्रस्वो भवति ॥ ज्ञा अवबोधने। ( धातोः प्रेरणे ) एको जानाति ज्ञपयति । अत्र प्रथमं कृत्वा पश्चात् ह्रस्वो भवति। ह्रस्वाभावपक्षे । ज्ञापयति । ज्ञपयांचकार-ज्ञापयांचकार। लुङ्लकारे तु । अजिज्ञपत् । त्रिसूत्रैः । अजिज्ञपताम् । अजिज्ञपन् ॥

( ज्वलग्लास्नाश्च वा मितः ) ज्वल दीप्तौ । ज्वलयति । ज्वालयति । अजिज्वलत् ॥ ग्लै हर्षक्षये । ग्लपयति-ग्लापयति । अजिग्लपत् ॥ ष्णा शौचे । ( आदेः ष्णः स्नः ) स्नापयति-स्नपयति । असिस्नपत् ॥ ओस्फायी वृद्धौ ।

सूत्रम् ( ज्वलग्लास्ना:० ) एते धातवो वा मितो भवंति ॥ ज्वल दीप्तौ । ( धातोः प्रेरणे ) एको ज्वलति तम्० । ( अत उपधाया । मितां ह्रस्वः ) ज्वलयति । मित्वाभावे । ज्वालयति । ज्वलयांचकार-ज्वालयांचकार ( जेः ) ज्वल्यात्-ज्वाल्यात् । ( सिसता० ) ज्वलयिता-ज्वालयिता । लुङ्लकारे । ( जेरङ् द्विश्च । जडि लघौ० ) अजिज्वलत् । अजिज्वलताम् । अजिज्वलन् ॥ ग्लै हर्षक्षये । ( धातोः प्रेरणे । संध्यक्षराणामा० । रातो ञौ पुक् च । ज्वल० ) अनेन वा मित्त्वम् । ग्लापयति-ग्लपयति । ग्लापयांचकार-ग्लपयांचकार । ( जेः ) ग्लाप्यात्-ग्लप्यात् । ( सिसता० ) ग्लापयिता-ग्लपयिता । लुङ्लकारे । ( जेरङ् द्विश्च । अडि लघौ० ) अजिग्लपत् । अजिग्लपताम् । अजिग्लपन् । इत्यादीनि ॥ ष्णा शौचे । एकः स्नाति तमन्यः प्रेरयति । ( धातोः प्रेरणे ) वा मित्त्वम् । ( रातो ञौ पुक् ) स्नपयति-स्नापयति । लिट्लकारे । ( कासादि० ) स्नपयांचकार-स्नापयांचकार । लुङ्लकारे ( पूर्वस्य । अडि लघौ ) असिस्नपत् । असिस्नपताम् । असिस्नपन् ॥ ओस्फायी वृद्धौ । आकारेकारावितौ । ( धातोः प्रेरणे )

( स्फायो वकारः स्यात् ञौ परे ) स्फावयति । अपिस्फवत् ।

सूत्रम् ( स्फायः० ) स्फायो धातोर्वकारः स्यात् ञिप्रत्यये परे पष्ठी । अनेनांत्यस्यैव भवति । स्फावयति । लिट्लकारे । ( कासादि० ) अनेनाम्प्रत्ययो भवति । स्फावयांचकार । ( जेः ) स्फाव्यात् । ( सिसता० ) स्फावयिता । स्फावयिष्यति । अस्फावयिष्यत् । लुङ्लकारे । ( जेरङ् द्विश्च । झसात्० । झपानाम्० । अडि लघौ ) अपिस्फवत् । अपिस्फवताम् । अपिस्फवन् ।

[ भियो ञौ वा पुगात्वे वाच्ये ] भीपयति । भापयति । भाययति । अबीभिपत् । अबीभपत् । अबीभयत् ॥

सूत्रम् ( भियः० ) भियो धातोर्ञिप्रत्यये परे पुगात्वे वाच्ये । क्रमाद् भवतः । ञिभी भये । अकार इत् । एको विभेति तम्० । धातोः प्रेरणे ॥ भीपयति । भीपयांचकार । लुङ्लकारे । ( ञेरङ् द्विश्च । झपानाम्० । अडि लघौ । लघोर्दीर्घः ) अबीभिपत् । अबीभिपताम् । अबीभिपन् ॥ आत्वे कृते । ( रातो ञौ पुक् ) भापयति । भापयांचकार । भाप्यात् । भापयिता । भापयिष्यति । लुङ्लकारे । त्रिसूत्रैः पूर्वोक्तैरेव रूपसिद्धिः । अबीभपत् । अबीभपताम् । अबीभपन् ॥ सूत्रे वाग्रहणं कृत्वा भाययति इति रूपमिच्छंति । भाययांचकार । लुङ्लकारे । पूर्वोक्तैरेव सूत्रैः सिद्धिः । अबीभयत् । अबीभयताम् । अबीभयन् ॥

## ( व्यापारमात्रे ञिर्वक्तव्यः स च डित् ) हलं गृह्णाति हलयति ॥ इति ञ्यन्तप्रक्रिया ॥ ॥

सूत्रम् ( व्यापारमात्रे० ) व्यापारमात्रे ञिप्रत्ययो वक्तव्यः । स च डित् । हलं गृह्णाति इति । अत्रानेन ञिः प्रत्ययो भवति । डित्वाट्टिलोपः । हलयति । लिट्लकारे । हलयाञ्चकार । ( जेः ) हल्यात् । ( सिसता० ) हलयिता । हलयिष्यति । अहलयिष्यत् । लुङ्लकारे । ( ञेरङ् द्विश्च । अल्लोपिनः ) अनेनास्याङ्कार्यं न भवति । ( कुहोश्चुः ) अजहलत् । अजहलताम् । अजहलन् । इत्यादीनि रूपाणि भवंति ॥ इति ञ्यन्तप्रक्रिया समाप्ता ॥ ॥

## अथ सान्तप्रक्रिया निरूप्यते ।

अथ सान्तप्रक्रिया निरूप्यते ।

## ( इच्छायामात्मनः सः ) धातोरिच्छायामर्थे सः प्रत्ययो भवति सा चेत्स्वसम्बन्धिनी । द्विश्च । भवितुमिच्छति बुभूषति । ( स धातुः ) धातुत्वादप् तिवादिः ( अदे ) ।

सूत्रम् ( इच्छायामात्मनः सः ) इच्छायां ७–१ आत्मनः ६–१ सः १–१ धातोर्यसम्बन्धिन्यामिच्छायां वाच्यमानायाम् इच्छारूपेऽर्थे वाच्ये सति सः प्रत्ययो भवति । सा चेच्छा स्वसंबन्धिनी चेत् । धातोर्द्वित्वं च भवति । भवितुमिच्छति इति विग्रहे । अनेन सूत्रेण सः प्रत्ययः । द्वित्वं च भवति । ( ह्रस्वः । झपानाम् ) पत्वम् । नन्वत्र । ( सिसता० ) अनेनेट् कथं न क्रियते । तत्राह ।

## ( वुः से ) उश्च आ च वृ तस्मात् वुः । उवर्णान्तादवर्णान्ताच्च ग्रहगुहोश्च से परे इट् न भवति ॥

सूत्रम् ( वुः से ) उश्च आ च वृ तस्मात् वुः ५–१ से ७–१ अयं समासो बालबोधनार्थं दर्शितः । उवर्णान्तात् ऋवर्णान्तात् 'ग्रह उपादाने' 'गुहू संवरणे' इत्येताभ्यां परस्य सप्रत्ययस्य इडागमो न भवति । इति इडागमनिषेधः । नन्वत्र गुणः कथं न क्रियते तत्राह।

( नानिटि से ) इडर्जिते स प्रत्यये परे गुणो न भवति ॥ तॄ प्लवनतरणयोः ।

सूत्रम् ( नानिटि से ) अस्य सूत्रस्य व्याख्यानं कृतमस्ति । अनेन गुणनिषेधः । बुभूष इति जाते । ( स धातुः ) अनेन धातुत्वम् । धातुत्वात्तिवादयो भवंति । ( अप् कर्तरि । अदे ) बुभूषति । बुभूषेत् । बुभूषतु । अबुभूषत् । लिट्लकारे । (कासादि॰) अनेनाम् । बुभूषाञ्चकार । यादादौ । ( यतः ) अनेन आकारस्य लोपः । बुभूष्यात् । ( सिसता॰ ) बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अन्या साधना पूर्ववत् । अबुभूषीत् । अबुभूषिष्टाम् । अबुभूषिषुः ॥ तॄ प्लवनतरणयोः । तरितुमिच्छतीति विग्रहे । ( इच्छायामात्मनः सः ) अनेन सः प्रत्ययः । धातोर्द्वित्वं च ।

( नाम्यन्तात्परस्य सस्य किस्त्वं वाच्यम् ) ( ऋत इर् ) तरितुमिच्छति तितीर्षति । अतितीर्षीत् ॥ डुकृञ् करणे । कर्तुमिच्छति चिकीर्षति ॥ चिञ् चयने ।

सूत्रम् ( नाम्यन्तात्॰ ) नाम्यंताद्धातोः परस्य सस्य किस्त्वं वाच्यम्। ऋत इर्। अनेन इर्। पश्चाद्द्वित्वम् । ( य्वोर्वि हसे ) षत्वम् । (स धातुः ) तितीर्षति । लिट्लकारे। तितीर्षाञ्चकार । ( सिसता॰ ) तितीर्षिता। लुङ् अतितीर्षीत् । अतितीर्षिष्टाम् । अतितीर्षिषुः। इत्यादीनि ॥ डुकृञ् करणे । स प्रत्ययः । ( नाम्यंतात्॰। ऋत इर् ) ततः द्वित्वम् । (कुहोश्चुः । य्वोर्वि हसे।नैकस्वरात्) अनेन इण्निषेधः । चिकीर्षति । चिकीर्षाञ्चकार । अचिकीर्षीत् । अचिकीर्षिष्टाम् । अचिकीर्षिषुः ॥ ऋत इति तपरकरणात् ऋकारस्यैव इर् क्रियते । स विधिः सार्वत्रिको न । तेन ह्रस्वस्यापि ऋवर्णस्य इर् भवति । चिञ् चयने ( इच्छायाम्॰ ) ।

( चिनोतेः से णादौ किस्त्वं वा वाच्यम् । ( से दीर्घः ) से परे पूर्वस्य दीर्घो भवति । चिकीषति । चिचीषति ॥ जि जये । ( सपरोक्षयोर्जेर्गिः ) जेतुमिच्छति जिगीषति ॥ यु मिश्रणे । युयूषति ॥ डुपचष् पाके । ( यः से ) पक्तुमिच्छति पिपक्षति ॥ पातुमिच्छति पिपासति ।

सूत्रम् ( चिनोतेः० ) चिनोतेर्धातोः सप्रत्यये णादौ कित्वं वा वाच्यम् । अनेन चस्य कः । ततो द्वित्वम् । सूत्रम् ( से दीर्घः ) सप्रत्यये परे पूर्वस्य दीर्घो भवति । ( नैकस्वरात्० ) षत्वम् । सधातुः । चिकीषति । चिकीषांचकार । अचिकीष्यात् । कत्वाभावे । से दीर्घः । अन्यत्साधनं तु पूर्ववत् । चिचीषति । चिचीषांचकार । अचिचीषीत् ॥ जि जये । ( इच्छायाम् । सपरोक्षयोर्जेर्गिः ) अनेन जस्य गः । ततः द्वित्वम् । ( कुहोश्चुः । से दीर्घः) षत्वम । ( नैकस्वरात्० ) अनेन सूत्रेण सर्वेषाम् एकस्वराणां धातूनां स प्रत्यये परे इड् न भवति इति ज्ञातव्यम् । जिगीषति । जिगीषांचकार । ( सिसता० ) जिगीषिता । अजिगीषीत् ॥ यु मिश्रणे ( इच्छायाम्० ) यवितुमिच्छति इति विग्रहे । सप्रत्ययः । धातोर्द्वित्वम् । ( से दीर्घः ) युयूषति । युयूषांचकार । ( यतः ) युयूष्यात् ( सिसता० ) युयूषिता । युयूषिष्यति । अयुयूषिष्यत् । अयुयूषीत् । अयुयूषिष्टाम् । अयुयूषिषुः ॥ डुपचष् पाके । पक्तुमिच्छति इति विग्रहे । ( इच्छायाम्० ) द्वित्वं ( पूर्वस्य । यः से । चोः कुः । किलात्० । कषसंयोगे० । स धातुः ) पिपक्षति । पिपक्षांचकार ।( यतः) पिपक्ष्यात् ( सिसता० ) पिपक्षिता । पिपक्षिष्यति । ( दिवादावट् ) अपिपक्षिष्यत् । द्युङ्लकारे । द्वाविटौ । सेर्लोपः । अपिपक्षीत् । अपिपक्षिष्टाम् । अपिपक्षिषुः । इत्यादीनि भवंति ॥ पा पाने । पातुमिच्छति । इति विग्रहे । ( इच्छायाम० ) अनेन स प्रत्ययः । धातोर्द्वित्वं च भवति । ( ह्रस्वः । यः से ) पिपासति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । ( कासादि० ) अनेनाम्प्रत्ययो भवति । पिपासांचकार । ( यतः ) पिपास्यात् । ( सिसता० ) पिपासिता । पिपासिष्यति । अपिपासिष्यत् । अपिपासीत् । अपिपासिष्टाम । अपिपासिषुः । एतेषां साधनं तु पूर्ववत् । ननु देवदत्तः काष्ठेन पिपक्षति । पक्तुमिच्छति । इत्यत्र काष्ठेनेति साधनस्य किं पाकेन संबंधः किं वा इच्छायाम । इत्याशंकायामाह ।

( गौणः प्रकृत्यर्थोऽन्यत्र सात ) प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थः प्रधानीभूतः । अत्र सप्रत्यये तु वैपरीत्यम । प्रकृत्यर्थः प्रधानीभूतः । तेन काष्ठेन पिपक्षतीत्यत्र तृतीयायाः पाकेन संबन्धो न त्विच्छया ॥ मृङ् प्राणत्यागे । मर्तुमिच्छति मुमूर्षति ॥ ( पोरुद् ) पृ पालनपूरणयोः । पुपूर्षति ।

( गौणः प्रकृत्यर्थोऽन्यत्र सात् ) सप्रत्ययादन्यत्र स्थाने अन्येषु प्रत्ययेषु प्रकृत्यर्थो धात्वर्थो गौणोऽमुख्यः । प्रत्ययार्थो मुख्यः । सप्रत्यये तु धातोरर्थो मुख्यः ।

अतोऽत्र काष्ठेन पिपक्षति इत्यत्र काष्ठेन साधनभूतेन यः पाकलक्षणो धात्वर्थस्तमिच्छति इत्यर्थः । अन्यथा पाकं काष्ठेन इच्छति इति स्यात् । अत्र इषधातोरिच्छार्थस्य गौणत्वम् । अतोऽत्र काष्ठस्य इच्छां प्रति साधनत्वाभावः । किंतु पाकलक्षणं प्रकृत्यर्थं प्रति साधनत्वम्॥ मृङ् प्राणत्यागे । मर्तुमिच्छति । ( इच्छायाम् । पोरुर् ) ततो द्वित्वम् । ( पूर्वस्य । य्वोर्वि हसे ) मुमूर्षति । मुमूर्षांचकार । ( यतः ) मुमूर्ष्यात् । ( सिसता० ) मुमूर्षिता । मुमूर्षिष्यति । अमुमूर्षिष्यत् । लुङ्लकारे । द्वाविटौ सेर्लोपो भवति । अमुमूर्षीत् । अमुमूर्षिष्टाम् । अमुमूर्षिषुः ॥ पृ पालनपूरणयोः । पूरितुमिच्छति इति विग्रहे । ( इच्छायाम्० । पोरुर् । य्वोर्वि हसे ) षत्वम् । विभक्तिकार्यं प्राग्वत् । पुपूर्षति । पुपूर्षांचकार । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे । अपुपूर्षीत् । अपुपूर्षिष्टाम् । अपुपूर्षिषुः । इत्यादीनि ॥

## ( वृङ् इत्यस्य उर्वाच्यः ) वृङ् वरणे । वरितुमिच्छति । वुवूर्षति ।

( वृङ्० ) वृङो धातोः सप्रत्यये परे उर् वाच्यः । षष्ठी । अन्यत्साधनं पूर्ववद्दृशम्॥ वृङ् वरणे । वरितुमिच्छति । ( इच्छायाम्० ) वुवूर्षति । वुवूर्षांचकार । लुङ्लकारे । अवुवूर्षीत् । अवुवूर्षिष्टाम् । अवुवूर्षिषुः॥

## ( रुदविदमुषग्रहिस्वपिप्रच्छः सः किद्वाच्यः ) रुदिर् अश्रुविमोचने । रुरुदिषति ॥ विद् ज्ञाने । विविदिषति ॥ मुष स्तेये । मुमुषिषति ॥ ग्रह उपादाने । ( हो ढः । आदिजबानाम्० । षढोः कः से ) षत्वम् । क्षः । ग्रहीतुमिच्छति जिघृक्षति । सुषुप्सति ॥ प्रच्छ ज्ञीप्सायाम् ।

सूत्रम् ( रुद्० ) रुद विद मुष ग्रहि स्वपि प्रच्छ एभ्यो धातुभ्यः सः कित् वाच्यः। रुदिर् अश्रुविमोचने ( इच्छायाम् ) द्वित्वम् ( सिसता० ) षत्वम् । रुदितुमिच्छति । रुरुदिषति । लिट्लकारे । ( कासादि० ) रुरुदिषांचकार । ( यतः ) रुरुदिष्यात् । ( सिसता० ) रुरुदिषिता । रुरुदिषिष्यति । अरुरुदिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अरुरुदिषीत् । अरुरुदिषिष्टाम् । अरुरुदिषिषुः । इत्यादीनि ॥ विद ज्ञाने । वेदितुमिच्छति । इच्छायां स प्रत्ययः । द्वित्वम् ( सिसता० ) षत्वम् । विविदिषति । विविदिषांचकार । लुङ्लकारे । अविविदिषीत् ॥ मुष स्तेये । मुषितुमिच्छति । ( इच्छायाम्० ) साधनं पूर्ववत्। मुमुषिषति । मुमुषिषांचकार । अमुमुषिषीत् । अन्यानि सुगमानि ॥ ग्रह उपादाने । ग्रहीतुमिच्छति । ( इच्छायाम्० ) अनेन स प्रत्ययः । ततः ( ग्रहां क्ङिति च ) तते

द्वित्वम्। (रः। कुहोश्चुः। झपानाम्०। यः से। हो ढः। जादिजनानाम्०। षढोः कः से) पत्वम्। (कपसंयोगे०) जिघृक्षति। जिघृक्षांचकार। लुङ्लकारे। अजिघृक्षीत्। अजिघृक्षिष्टाम्॥ जिष्वप् शये (इच्छायाम्०) संप्रसारणम्। ततो द्वित्वम्। पत्वम्। स्वप्तुमिच्छति। सुषुप्सति। लिट्लकारे। सुषुप्सांचकार। लुङ्लकारे। असुषुप्सीत्। असुषुप्सिष्टाम्। असुषुप्सिषुः॥ प्रच्छ ज्ञीप्सायाम्। (इच्छायाम्०)।

( कृगॄधृदृप्रच्छस्मिङञ्ज्वशूङर्त्तीनां सस्येड् वक्तव्यः'। ) पिपृच्छिषति॥ करितुमिच्छति चिकरिषति। जिगरिषति। जिगलिषति। दिदरिषते। दिधरिषते। सिस्मयिषति (स्वरादेः परः) अञ्जिजिषति॥ अशिशिषते। अरिरिषति॥ अद भक्षणे। (सिसयोः०) इति घसादेशः ( सस्तोऽनपि ) अत्तुमिच्छति। जिघत्सति।

सूत्रम् ( कृगॄधृदृप्रच्छस्मिङ्अंजूअशूङर्त्तीनां धातूनां स्यप्रत्ययस्य इड् वक्तव्यः ) संप्रसारणम्। (यः से) पत्वम्। पिपृच्छिषति। लिट्लकारे। पिपृच्छिषांचकार। लुङ्लकारे। द्वाविटौ। सेर्लोपः। अपिपृच्छिषीत्। अन्यानि सुगमानि॥ कृ विक्षेपे करितुमिच्छति। (इच्छायाम्०। रः। गुणः) इड्। पत्वम् (कुहोश्चुः। यः से) चिकरिषति। चिकरिषांचकार। अचिकरिषीत्॥ गॄ निगरणे। गरितुमिच्छति (इच्छायाम्०) द्वित्वम् (रः। कुहोश्चुः। यः से) इड्। गुणः। पत्वम्। जिगरिषति। जिगरिषांचकार। (यतः) जिगरिष्यात् (सिसता०) जिगरिषिता। अजिगरिषिष्यत्। लुङ्लकारे। द्वाविटौ। सेर्लोपः। अजिगरिषीत्। अजिगरिषिष्टाम्। अजिगरिषिषुः। (गिरतेः) अनेन रस्य लः। जिगलिषति॥ दृङ् आदरे। दर्तुमिच्छति (इच्छायाम्०। सः प्रत्ययः। धातोर्द्वित्वम्। रः। यः से। गुणः) इड्। पत्वम्। दिदरिषते। दिदरिषाञ्चक्रे। दिदरिषीष्ट। (सिसता०) दिदरिषिता। लुङ्लकारे। साधनं पूर्ववत्। अदिदरिषिष्ट। अन्यानि सुगमानि॥ धृङ् अवस्थाने। धर्तुमिच्छति (इच्छायाम्०) अन्यत्सर्वं पूर्ववत् (झपानाम्०) अनेन धस्य दः। दिधरिषते। दिधरिषाञ्चक्रे। लुङ्लकारे। अदिधरिषिष्ट॥ स्मिङ् ईषद्धसने। स्मयितुमिच्छति। सः। द्वित्वम्। पूर्वस्य। गुणः। सिस्मयिषते। सिस्मयिषाञ्चक्रे। लुङ्लकारे। द्वाविटौ। सेर्लोपः (दिवादावट्) असिस्मयिषिष्ट। असिस्मयिषाताम्। असिस्मयिषत। इत्यादीनि॥ अंजू व्यक्तिम्रक्षणकान्तिगतिषु। अंजितुमिच्छति। (इच्छायाम्०) कृ ग अनेनेट्। पश्चात् (स्वरादेः परः) जस्य द्वित्वम्। पत्वम्। अंजिजिषति। चतुर्णां सुगमानि। (कासादि०) अंजिजिषांचकार (यतः) अंजिजिष्यात्। (सिसता०) अंजिजि-

सूत्रम् ( अनुपसर्गात्० ) अनुपसर्गात् जानातेर्धातोरात्मगामिनि क्रियाफले सति आत्मनेपदं वाच्यम् अनेनात्मनेपदम् । गा जानीत इत्युदाहरणम् ।

( कर्मव्यतिहारेऽन्यत्र हिंसादेरात् ) कर्मव्यतिहारेऽर्थे वाच्ये हिंसार्थान्गत्यर्थान्पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावे सर्वेभ्यो धातुभ्य आत्मनेपदं भवति । परस्परमेकक्रियाकरणं कर्मव्यतिहारः । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धा व्यतिभवते । परस्परं भवतीत्यर्थः । व्यतिस्ते । विवदन्ते वादिनः । अन्यत्रेति किम् । व्यतिघ्नन्ति । व्यतिगच्छन्ति । व्यतिपठन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति । इतरेतरं परस्परम् अन्योन्यं वा व्यतिलुनन्ति ।

सूत्रम् ( कर्मव्यतिहारेऽन्यत्र हिंसादेरात् ) कर्मव्यतिहारे ७-१ कर्मणो व्यतिहारः विनिमयः । पराभवतो वा कर्मव्यतिहारः । तस्मिन् कर्मव्यतिहारे । अन्यत्र हिंसादेः । आत् कर्मव्यतिहारेऽर्थे वाच्यमाने सति हिंसार्थान् गत्यर्थान् धातून् पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावेऽपि सर्वेभ्यो धातुभ्य आत्मनेपदं भवति । परस्परमेकक्रियाकरणं कर्मव्यतिहारः । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धा व्यतिभवते परस्परं भवति इत्यर्थः । अस भुवि । व्यतिस्ते । विवदते वादिनः । इत्युदाहरणानि ज्ञातव्यानि । अन्यत्रेति किम् । व्यतिघ्नति । व्यतिगच्छति । व्यतिपठति । व्यतिजल्पति । व्यतिहसति । एतेषु आत्मनेपदं न भवति । सूत्रे निषेधात् । इतरेतरम् अन्योन्यं परस्परं व्यतिलुनाति । इत्यत्रापि आत्मनेपदं न भवति ।

( भुजो भोजने आत्मनेपदं वाच्यम् ) भुङ्क्ते ओदनम् । भुनक्ति महीं नृपः ॥ इत्यात्मनेपदप्रक्रिया ॥

सूत्रम् ( भुजो भोजने० ) भुज पालनाभ्यवहारयोः । अस्य भोजनेऽर्थे आत्मनेपदं भवति । उदाहरणम् । देवदत्त ओदनं भुङ्क्ते । भोजनाभावे तु भुनक्ति महीं नृपः । अत्रात्मनेपदं न भवति ॥ इत्यात्मनेपदप्रक्रिया समाप्ता ॥

## अथ भावकर्मप्रक्रिया ।

अथ भावकर्मप्रक्रिया कथ्यते ।

( यक् चतुर्षु ) धातोर्भावे कर्मणि च यक् प्रत्ययो भवति चतुर्षु पूर्वोक्तेषु परतः । ककारो गुणप्रतिषेधार्थः ।

सूत्रम् ( यक् चतुर्षु ) यक् १-१ चतुर्षु ७-३ धातोर्भावे कर्मणि च चतुर्षु पूर्वोक्तेषु तिवादिषु परेषु यक्प्रत्ययो भवति। ककारो गुणप्रतिषेधार्थः । अयकि इति सूत्रविशेषणार्थः। अनेन धातोर्यक्। यकि सति पदनियममाह।

( आद् भुवि कर्मणि ) अकर्मकेभ्यो भुवि भावे सकर्मकेभ्यश्च कर्मण्यात्मनेपदं भवति । ये कर्मनिरपेक्षां क्रियामाहुस्ते अकर्मकाः। भूएध्आस्शीङ्प्रभृतयः। तदुक्तम्।

( आद् भुवि कर्मणि ) आत् १-१ भुवि ७-१ कर्मणि ७-१ अकर्मकेभ्यः न विद्यते कर्म येषां ते अकर्मकाः तेभ्यः अकर्मकेभ्यो धातुभ्यो भुवि भावोक्तौ।

लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम्॥
शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः॥ १॥

भावस्यैकत्वादेकवचनमेव भवति प्रथमपुरुषस्य। भूयते। भवता। भूयेत। भूयताम्। अभूयत। बभूवे।

अकर्मका लज्जासत्ताद्यर्थवाचकाः। तथा सकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति। अयं भावः। भावोक्तौ तृतीयांतः कर्ता। अकर्मकधातोः आत्मनेपदं भवति । दशानामपि विभक्तीनां प्रथमपुरुषैकवचनम्। कर्मोक्तौ च तृतीयांतः कर्ता । प्रथमांतं कर्म। क्रियायाश्चात्मनेपदं भवति । विभक्तिचतुष्टयेऽपि यक्प्रत्ययांतमेव । कर्मण एकवचने सति क्रियाया एकवचनम्। कर्मणो द्विवचने सति क्रियाया द्विवचनम्। कर्मणो बहुवचने सति क्रियाया बहुवचनं भवति। इति ज्ञातव्यम्। "कर्त्तरि प्रथमा यत्र द्वितीया तत्र कर्मणि। धातोरुभे पदे स्यातामेतत् कर्त्रुक्तिलक्षणम् ॥ कर्त्तरि तृतीया यत्र प्रथमा तत्र कर्मणि । यक्प्रत्ययांतं विज्ञेयं धातोश्चात्रात्मनेपदम्॥ भावे कर्ता तृतीयांतः कर्म चात्र भवेन्नहि । क्रियायाश्चैकवचनं भवेद्यक्यात्मनेपदम्" ॥ अथाकर्मकान् धातूनाह । ये कर्मेति । ये धातवः कर्मवांछारहितां क्रियां कथयंति ते अकर्मकाः। ते धातवो 'लज्जासत्ता०' अनेन श्लोकेन कथिताः । ततोऽन्येपि ज्ञातव्याः । भावस्तु एक एव। भावलक्षणमाह। 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते'। ततो भावस्यैकत्वात्प्रथमपुरुषस्य एकवचनमेव भवति । भू सत्तायाम्। ते आदयः प्रत्यया भवंति। ( यक् चतुर्षु ) अनेन यक्प्रत्ययो भवति। भूयते। भूयेत। भूयताम् ( दिवादावट् ) अभूयत। भवता। भूयते। इत्युदाहरणम्। लिट्लकारे तु पूर्ववत्साधनं कार्यम्। बभूवे इत्यादीनि रूपाणि भवंति।

( स्वरान्तानां हन्ग्रहदृशां च भावकर्मणोः सिसतासीस्यपामिट् वा इण्वद्भक्तव्यः। ) वाशब्दात्सेटां धातूनां नित्यमिट्

स विकल्पेन णित्। अनिटां धातूनां विकल्पेन इट् स नित्यं णित्। एवं च हन्दृशोरनिटोर्वा इट् स च नित्यं णित्। ग्रहधातुस्तु सेट्। ततः परो नित्यमिट् स च वा णित्। णित्त्वाद् वृद्धिः। भाविषीष्ट। णित्त्वाभावे भविषीष्ट। भाविता-भविता। भाविष्यते–भविष्यते। अभाविष्यत–अभविष्यत।

सूत्रम् ( स्वरांतानां० ) स्वरांतानां धातूनां हन्ग्रहदृशां च धातूनां भावकर्मणोः सिसतासीस्यपामिड् वा इण्वद्वक्तव्यः। वाग्रहणात्सेटां धातूनां नित्यमिट् स विकल्पेन णित्। अनिटां धातूनां विकल्पेन इट् भवति स नित्यं णिट् भवति। अन्यद् व्याख्यानं मूले कृतम्। तत्सुगममेव। लिङ्। अनेन इट्। स णिद् वा भवति। णित्त्वाद् वृद्धिः। ( धातोर्नामिनः ) अनेन सूत्रेण। भाविषीष्ट। णिद्भावपक्षे। ( गुणः। ओ अव् ) भविषीष्ट। इत्यादीनि भवंति। भाविता। णित्त्वाभावपक्षे। ( गुणः ) भविता। भाविष्यते। भविष्यते। इत्यादीनि। ( दिवादावट् ) अभाविष्यत। अभविष्यत। लुङ्लकारे।

( इण् तन्यकर्त्तरि ) धातोस्तनि परे भावे कर्मणि च इण् प्रत्ययो भवति। सेरपवादः। णो वृद्ध्यर्थो लोपः।

सूत्रम् ( इण् तन्यकर्त्तरि ) इण् १–१ तनि ७–१ अकर्त्तरि ७–१ धातोस्तनि परे अकर्त्तरि भावे कर्मणि च इण्प्रत्ययो भवति। ( भूते सिः ) अस्यापवादोऽयम्। णित्त्वाद् वृद्धिः। ( धातोर्नामिनः ) अनेन सूत्रेण। णकारस्तु वृद्ध्यर्थः।

( इण्संयोगे तनो लोपो भवति ) अभावि। अकर्मकोऽपि कदाचित् सकर्मकतामनुभवति। उक्तं च।

सूत्रम् ( इण्संयोगे० ) इणः संयोगे सति तनः प्रत्ययस्य लोपो भवति। अनेन तनो लोपः। ( दिवादावट् ) अभावि। इत्यादीनि रूपाणि भवंति। तानि सुगमान्येव अनेनैव प्रकारेण साध्यानि। विकल्पेन णित्त्वाद् वृद्धिविकल्पः। अकर्मकोऽपि धातुः कदाचिदुपसर्गबलात् सकर्मकतामनुभवति। उक्तं च।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
विहाराहारसंहारप्रतिहारप्रहारवत्॥
धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते।
विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा॥

सुखमनुभूयते स्वामिना। अन्वभावि भवो भवता । अन्वभाविपाताम्–अन्वभविपाताम्। अन्वभाविपत–अन्वभविपत।

( उपसर्गेणेति ) उपसर्गेण धातोरर्थोऽन्यत्र नीयते। अन्यस्मिन्नर्थे प्राप्यत इत्यर्थः उदाहरणानि उत्तरार्द्धे संति । अन्योऽपि श्लोकोऽस्ति । कश्चिदुपसर्गो धातोरर्थं बाधते । कश्चिदुपसर्गो धातोरर्थमनुवर्त्तते । कश्चिदुपसर्गस्तमेवार्थं विशिनष्टि । अनया रीत्योपसर्गाणां त्रिधा गतिरस्ति। 'भू सत्तायाम्' अयं धातुर्यद्यपि अकर्मकः तथापि यदानुपूर्वः तदा सकर्मकः। उदाहरणम्। सुखमनुभूयते स्वामिना । अन्वभाविभवो भवता। इदमप्युदाहरणम्॥ शीङ् स्वप्ने। (यक् चतुर्षु) अनेनास्य यक् प्रत्ययः। शीयते। इति स्थिते।

( शीङोऽयङ् किति ङिति ये वक्तव्यः ) शय्यते । शिश्ये । शायिषीष्ट–शयिषीष्ट । अशायि–अन्वशायि । अन्वशायिपाताम्–अन्वशयिपाताम् । अन्वशायिपत–अन्वशयिपत। ये कर्मसापेक्षां क्रियामाहुस्ते सकर्मकाः। (अयकि) घटः क्रियते देवदत्तेन। त्वं दुःखी क्रियसे रागैः । विरागैः सुख्यहं क्रिये। चक्रे । कारिषीष्ट–कृषीष्ट । कारिता–कर्ता । कारिष्यते–करिष्यते । अकारिष्यत–अकरिष्यत। अकारि। अकारिपाताम्–अकृपाताम् । अकारिपत--अकृपत ॥ चिञ् चयने । चीयते। चिच्ये । चायिषीष्ट–चेषीष्ट। चायिता–चेता । चायिष्यते–चेष्यते । अचायिष्यत–अचेष्यत । अचायि । अचायिपाताम्–अचेपाताम्। (दादेरिः) दीयते। ददे। ददाते। ददिरे।

सूत्रम् (शीङोऽयङ्०) शीङः ६–१ अयङ् १–१ शीङ्धातोः यकि परे सति अयङादेशो भवति । ङकारोंत्यादेशार्थः। तेनेकारस्य भवति। अकार उच्चारणार्थः। शय्यते शूद्रेण। केचिदाचार्याः इदं सूत्रं न पठंति। किंतु शीङः सर्वत्र गुणो भवति। अनेन क्ङित्यपि गुणः। कचित्स्वरवद्यकारः। अनेन यकारस्य स्वरत्वात्।(ए अय्)शय्यते। शय्येत। शय्यताम्। (दिनादावट्) अशय्यत। लिट्लकारे। (द्विश्च। नुधातोः। ह्रस्वः) अनेन पूर्वस्य ह्रस्वो भवति। शिश्ये। (स्वरांता०) अनेनेट्। इटो वा णित्त्वम्। (धातोर्नामिनः) अनेन वृद्धिः। (ऐ आय्) शायिषीष्ट। णित्त्वाभावपक्षे। गुणः।

( ए अय् ) शयिपीष्ट । एवं सर्वत्र वा णित्वं ज्ञेयमस्य धातोः । शायिता-शयिता । शायिष्यते-शयिष्यते । ( दिवादावट् ) अशायिष्यत-अशयिष्यत । लुङ्लकारे ( इणतन्यकर्त्तरि ) अनेन इण् । वृद्धिः । अशायि । यदा अनुपूर्वोऽयं तदा अन्वशायि । इत्यादीनि भवंति । सकर्मकधातुलक्षणमाह । ये कर्मसापेक्षां० । ये धातवः । कर्मसापेक्षां क्रियामाहुस्ते धातवः सकर्मका ज्ञेयाः करोत्यादयः॥ डुकृञ् करणे । अस्य धातोः ( यक् चतुर्षु ) अनेन यक् ( अयकि० ) अनेन ऋकारस्य रिः । क्रियते । क्रियेत । क्रियताम् । अक्रियत । लिट्लकारे । ( द्विश्च । रः । कुहोश्चुः । ऋ रम् ) । चक्रे । चक्राते । चक्रिरे । इत्यादीनि । ( स्वरांता० ) अनेन इट् । अयं धातुरनिट् । तस्माद् विकल्पेन इट् । नित्यं णित् । इटो णित्वात् । ( धातोर्नामिनः ) अनेन वृद्धिः । कारिषीष्ट । इडभावे । उः । अनेन गुणनिषेधः । पत्वम् । कृषीष्ट । कारिता । कारितारौ । कारितारः । इडभावे । ( गुणः ) कर्त्ता । कर्त्तारौ । कर्त्तारः । कारिष्यते-कारिष्येते । कारिष्यन्ते । णित्वाभावपक्षे । ( हनृतः स्यपः ) अनेन इट् । ( गुणः ) करिष्यते । करिष्येते । करिष्यंते । अकारिष्यत । अकारिष्येताम् । अकारिष्यंत । णित्वाभावपक्षे । अकरिष्यत । अकरिष्येताम् । अकरिष्यंत ॥ इत्यादीनि रूपाणि भवंति । लुङ्लकारे । ( इण् तन्यकर्त्तरि । धातोर्नामिनः । लोपः ) अनेन तनो लोपः । अकारि । अकारिषाताम् । अकृषाताम् । अकारिषत । अकृषत । इत्यादीनि ॥ देवदत्तेन त्वं सुखी क्रियसे । रागैस्त्वं दुःखी क्रियसे । विरागैः सुख्यहं क्रिये ॥ चिञ् चयने । (यक् चतुर्षु) अनेन यक्प्रत्ययः (ये)अनेन दीर्घः। चीयते । चीयेते । चीयंते । चीयेत । चीयेयाताम् । चीयेरन् । चीयताम् । चीयेताम् । चीयंताम् । ( दिवादावट् । अचीयत । अचीयेताम् । अचीयंत । लिट् । ( द्विश्च । नुधातोः ) चिच्ये । चिच्याते चिच्यिरे । ( स्वरांताना० ) अनेन इट् । णित्वात् वृद्धिः । ( धातोर्नामिनः ) अनेन ( ऐ आय् ) चायिषीष्ट । इडभावपक्षे । ( गुणः ) चेषीष्ट । चायिता-चेता । चायिष्यते । चायिष्येते । चायिष्यंते । इडभावपक्षे । चेष्यते । चेष्येते । चेष्यते । ( दिवादावट्) अचायिष्यत । अचायिष्येताम् । अचायिष्यंत । इडभावपक्षे । अचेष्यंत । लुङ्लकारे । इण् । वृद्धिः । तनो लोपः । ( दिवादावट् ) अचायि । अचायिषाताम् । इडभावपक्षे । अचेषाताम् । अचायिषत । अचेषत । इत्यादीनि ॥ दा दाने । ( यक् चतुर्षु ) अनेन यक् ( दादेरिः ) अनेन इकारः ( ये ) अनेन दीर्घः । दीयते । दीयेते । दीयते । दीयेत । दीयेयाताम् । दीयेरन् । दीयताम् । दीयेताम् । दीयंताम । ( दिवादावट् ) अदीयत । अदीयेताम् । अदीयंत । लिट् । ( द्विश्च । ह्रस्वः । आतोऽनपि ) ददे । ददाते । ददिरे । दासीष्ट इति स्थिते । ( स्वरांताना० ) अनेन इट् । इटो णित्वम् ।

( आतो युक् ) आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे । दायिषीष्ट-दासीष्ट । दायिता-दाता । दायिष्यते-दास्यते । अदायि । अदायिषाताम् । दाधास्थामित्वम् । अदिषाताम् ॥ धीयते । अधायि । अधायिषाताम्-अधिषाताम् ॥ स्थीयते । अस्थायि ॥ स्तूयते । तुष्टुवे । अस्तावि । अस्ताविषाताम्-अस्तोषाताम् हरिहरौ भक्तेन ॥ हन्यते । ( हनो घ्ने ) जघ्ने । घानिषीष्ट-हंसीष्ट ।

सूत्रम् ( आतो युक् ) आतः ५-१ युक् १-१ अकारांताद्धातोर्युगागमो भवति ञिति णिति च परे । अनेन युक् । उकार उच्चारणार्थः । ककारः कित्कार्यार्थः । दायिषीष्ट । इडभावपक्षे । दासीष्ट । दायिता । दायितारौ । दायितारः । इडभावपक्षे । दाता । दातारौ । दातारः । दायिष्यते । दास्यते ( ङिवादावद् ) अदायिष्यत । अदायिष्येताम् । अदायिष्यंत । इडभावपक्षे । अदास्यत । अदास्येताम् । अदास्यन्त । लुङ् । इण् । युक् । तनो लोपः । अदायि । अदायिषाताम् । ( दाधास्थाम्० ) अनेन इडभावपक्षे इकारः । अदिषाताम् । अदायिषत । अदिषत । इत्यादीनि ॥ डुधाञ् धारणपोषणयोः ( यक् चतुर्षु ) अनेन यक् । ( दादेरिः ) अनेनाकारस्य इकारः । ( ये ) अनेन पूर्वस्य दीर्घः । धीयते । धीयेत । धीयताम् । अधीयत । इत्यादीनि भवंति । लिट्लकारे । ( द्विश्च । ह्रस्वः । झपानाम्० । आतोऽनपि ) अनेनाकारलोपः । दधे । दधाते । दधिरे । ( स्वरांतानाम्० ) इटो णित्त्वम् । ( आतो युक् ) यत्वम् । धायिषीष्ट । इडभावे । धासीष्ट । धायिता-धाता । धायिष्यते-धास्यते ( ङिवादावद् ) अधायिष्यत-अधास्यत । लुङ्लकारे । इण् । युक् । तनो लोपः । अधायि । अधायिषाताम् । इडभावपक्षे । ( दाधास्थाम्० ) अधिषाताम् । अधायिषत । अधिषत । इत्यादीनि ॥ ष्ठा गतिनिवृत्तौ । षत्वम् । यक् । ( दादेरिः । ये ) स्थीयते । स्थीयेत । स्थीयताम । अस्थीयत । लिट्लकारे तु साधनं पूर्ववत् । तस्थौ । तस्थतुः । तस्थुः । ( स्वरांतानाम् । आतो युक् ) स्थायिषीष्ट । इडभावे । स्थासीष्ट । स्थायिता-स्थाता । स्थायिष्यते-स्थास्यते । अस्थायिष्यत-अस्थास्यत । लुङ्लकारे । इण् । युक् । तनो लोपः । अस्थायि । अस्थायिषाताम् । इडभावे । ( दाधास्थाम्० ) अनेनेत्वम । अस्थिषाताम । इत्यादीनि ॥ ष्टुञ् स्तुतौ । सत्वम् । यक् ( ये ) स्तूयते । स्तूयेत । स्तूयताम् । अस्तूयत । इत्यादीनि । लिट्लकारे । द्वित्वादिकम् । अन्यत्साधनं पूर्ववत् । तुष्टुवे । तुष्टुवाते । तुष्टुविरे । ( स्वरांतानां० ) अनेनेट् । इटो णित्त्वम । वृद्धिः । स्ताविषीष्ट । इडभावपक्षे ( पु-

पत्वम् । स्तोपीष्ट । स्ताविष्यते-स्तोष्यते । अस्ताविष्यत-अस्तोष्यत । लुङ्लकारे । इण् । वृद्धिः । तनो लोपः । अस्तावि । अस्ताविषाताम् । इडभावपक्षे । अस्तोषाताम् । इत्यादीनि ॥ हन् हिंसागत्योः । यक् । हन्यते । हन्येत । हन्यताम् । अहन्यत । लिट्लकारे । द्वित्वम् । ( कुहोश्चुः । गमां स्वरे । हनो घ्ने ) जघ्ने । जघ्नाते । जघ्निरे । इत्यादीनि ( स्वरांतानाम्० । हनो घ्ने ) घानिषीष्ट । इडभावपक्षे । ( नश्चा० ) हंसीष्ट ।

( हन्तेः स्याशीर्यादाद्योर्वधादेशो वक्तव्यः आति वा ) वधिषीष्ट । घानिता-हन्ता । घानिष्यते-हनिष्यते । अघानिष्यत-अहनिष्यत । अघानि । अघानिषाताम् ।

सूत्रम् ( हंतेः० ) हंतेर्धातोः स्याशीर्यादाद्योर्वधादेशो वक्तव्यः । आत्मनेपदे वा भवति । ( जनिवध्योः ) अनेन वृद्धिनिषेधः । वधिषीष्ट । घानिता । ( नश्चा० ) हंता । घानिष्यते । ( हनृतः० ) हनिष्यते । अघानिष्यत-अहनिष्यत । लुङ्लकारे । इण् । ( हनो घ्ने । अत उपधायाः ) अघानि । अत्र ( हनो घत् ) अनेन वदादेशो न भवति । तत्र सूत्रे इणि निषेधः । अघानिषाताम् ।

( हन आत्मनेपदे सिः किद्वाच्यः ) ( लोपस्त्वनुदात्ततनाम् ) अहसाताम् । अघानिषत-अहसत । अवधि । अवधिषाताम् । ( ग्रहां क्किति च ) गृह्यते । जगृहे । ग्राहिषीष्ट ( ईटो ग्रहाम् ) ग्रहीषीष्ट । ग्राहिता-ग्रहीता । ग्राहिष्यते-ग्रहीष्यते । अग्राहिष्यत । अग्राहि । अग्राहिषाताम्-अग्रहीषाताम् ॥ दृश्यते । ददृशे । दर्शिषीष्ट-दृक्षीष्ट । दर्शिता-द्रष्टा । दर्शिष्यते-द्रक्ष्यते । अदर्शि । अदर्शिषाताम्-अदृक्षाताम् ॥ डुपचष् पाके । पच्यते । पेचे । पक्षीष्ट । पक्ता । पक्ष्यते । अपक्ष्यत । अपाचि । अपक्षाताम् ।

सूत्रम् ( हनः० ) हनो धातोरात्मनेपदे सिः प्रत्ययः किद्वाच्यः । लोपः । अनेनेकारलोपः । अहसाताम् । अघानिषत । अहसत । इत्यादीनि । हंतेः । अनेन वा वधादेशः ।। वृद्धिनिषेधः । अवधि । अवधिषाताम् । अवधिषत । अवधिष्ठाः । इत्यादीनि रूपाणि भवंति॥ ग्रह उपादाने ( यक् चतुर्षु ) अनेन यक्प्रत्ययः ( ग्रहां क्किति च ) अनेन संप्रसारणम् । गृह्यते । गृह्येत । गृह्यताम् ( दिवादावद् ) अगृह्यत । लिट्लकारे । संप्रसारणत्र

ततो द्वित्वम् ( रः । कुहोश्चुः ) जगृहे । जगृहाते । जगृहिरे । इत्यादीनि (स्वरांतानाम्) अनेन इट् । इटो णित्त्वम् । (अत उपधायाः ) अनेन वृद्धिः । ग्राहिषीष्ट ( इटो ग्रहाम् ) अनेन इट् इकारो भवति । ग्राहिषीष्ट । ग्राहिता । अत्र दीर्घो न भवति । अनिष्टत्वात् । ग्रहीता । ग्राहिष्यते–ग्रहीष्यते । ( दिवादावट् ) अग्राहिष्यत–अग्रहीष्यत इत्यादीनि ॥ लुङ्लकारे । इण् । वृद्धिः । तनोलोपः । अग्राहि । अग्राहिषाताम्–अग्रहीषाताम् । अग्राहिषत–अग्रहीषत । इत्यादीनि भवंति ॥ दृशिर् प्रेक्षणे । ( यक् चतुर्षु ) अनेन यक् । दृश्यते । दृश्येते । दृश्यंते । इत्यादीनि । दृश्येत । दृश्यताम् । अदृश्यत । इत्यादीनि । लिट्लकारे । ( द्विश्च । रः ) ददृशे । ददृशाते । ददृशिरे । ( स्वरांतानाम्० ) अनेन इट् । इटो णित्त्वम् । णित्वाद्वृद्धेरप्राप्तत्वाद् गुणः । दर्शिषीष्ट । इडभावपक्षे । ( छशष० ) अनेन षत्वम् । ( षढोः कः से ) षत्वम् ( कषसंयोगे० । सिस्योः ) अनेन गुणनिषेधः । दृक्षीष्ट । अन्यानि सुगमानि । दर्शिता । इडभावे षत्वम् । ( गुणः । रागे झसे ) द्रष्टा । दर्शिष्यते । द्रक्ष्यते । ( दिवादावट् ) अदर्शिष्यत । अद्रक्ष्यत । इत्यादीनि रूपाणि भवंति । लुङ्लकारे । इण् । गुणः । तनो लोपः । अदर्शि । अदर्शिषाताम् । इडभावपक्षे० । ( सिस्योः ) अनेन गुणनिषेधः । षत्वम् । अदृक्षाताम् । अदर्शिषत । अदृक्षत । इत्यादीनि भवंति ॥ डुपचष् पाके । ( यक् चतुर्षु ) अनेन यक् । पच्यते । पच्येत । पच्यताम् । ( दिवादावट् ) अपच्यत । इत्यादीनि रूपाणि भवंति, तानि सुगमानीति । लिट्लकारे । ( द्विश्च । पूर्वस्य० । लोपः पचाम्० ) अनेनैत्वपूर्वलोपौ भवतः । पेचे । पेचाते । पेचिरे । इत्यादीनि । ( चोः कुः ) षत्वम् ( कषसंयोगे क्षः ) पक्षीष्ट ( चोः कुः ) पक्ता । पक्तारौ । पक्तारः । पक्ष्यते । अपक्ष्यत । लुङ्लकारे । इण् । ( अत उपधायाः ) अनेन वृद्धिः । तनोलोपः । अपाचि । अपक्षाताम् । अपक्षत । इत्यादीनि रूपाणि भवंति ॥ तनु विस्तारे । ( यक् चतुर्षु ) अनेन यक् ।

( तनोतेर्नो वा ) तनोतेर्नकारस्य वा आकारो भवति यकि परे । तायते–तन्यते । तेने । अतानि । अतानिषाताम्–अतनिषाताम् ॥ भञ्जो आमर्दने ( नो लोपः ) भज्यते । अकित्वात् । बभञ्जे । भङ्क्षीष्ट । भङ्क्ता । भंक्ष्यते ।

सूत्रम् ( तनोतेर्नो वा ) तनोतेः ६–१ नः ६–१ वा अव्ययम् । तनोतेर्धातोर्नकारस्य वा आकारो भवति यक्प्रत्यये परे सति । ( सवर्णे० ) तायते । तायेत । तायताम् । अतायत । आत्वाभावपक्षे । तन्यते । तन्येत । तन्यताम् । अतन्यत । इत्यादीनि रूपाणि भवंति ॥ लिट्लकारे । ( द्विश्च । पूर्वस्य० । लोपः पचाम्० ) अनेनैत्वपूर्वलोपौ भवतः । तेने । तेनाते । तेनिरे । इत्यादीनि । ( स्वरांतानाम्० )

अस्य सूत्रस्य व्याख्यानात् । इट् । वा णित् । तानिता । ( अत उपधायाः ) अनेन वृद्धिः। णित्त्वाभावपक्षे । तनिता । तानिष्यते–तनिष्यते ।( दिवादावट् )अतानिष्यत–अतनिष्यत । इत्यादीनि रूपाणि भवति । लुङ्लकारे । इण् । वृद्धिः । ततो लोपः । ( दिवादावट् ) अतानि । अतानिषाताम्–अतनिषाताम् । अतानिषत–अतनिषत । इत्यादीनि रूपाणि भवति ॥ भंजो आमर्दने । ( यक् चतुर्षु ) अनेन यक् । ( नो लोपः ) अनेन नकारस्य लोपः । भज्यते । भज्येत ।भज्यताम् । ( दिवादावट् ) अभज्यत । लिट्लकारे । अकित्त्वान्नकारस्य लोपो न भवति । द्वित्वादिकं कार्यम् । ( झपानाम्० । पूर्वस्य० ) बभंजे । बभंजाते । बभंजिरे । इत्यादीनि । भञ्–सीष्ट इति स्थिते । ( चोः कुः । खसे० ) षत्वम् । ( कषसयोगे क्षः ) भक्षीष्ट । ( चोः कुः । खसे० ) भंक्ता । भंक्ष्यते । ( दिवादावट् ) अभंक्ष्यत । लुङ्लकारे । ( इण्तन्य० ) अनेन इण् ।

**( भञ्जेरिणि वा नलोपो वाच्यः )अभाञ्जि–अभाजि ॥ शम उपशमे । शम्यते मुनिना ( धातोः प्रेरणे । मितां ह्रस्वः । ञेः ) शम्यते मोहो हरिणा । शमयांचक्रे ।**

सूत्रम् ( भञ्जेः० ) भञ्जेर्धातोरिणि वा नकारस्य लोपो वाच्यः । अनेन वा नकारस्य लोपः । ( अत उपधायाः ) ततो लोपः । अभाजि । नकारलोपाभावपक्षे । अभञ्जि । अभक्षाताम् । अभक्षत । इत्यादीनि ॥ शम उपशमे । ( धातोः प्रेरणे )अनेन ञिः ( अत उपधायाः) अनेन वृद्धिः । ( मितां ह्रस्वः। अनेन ह्रस्वः । ( यक् चतुर्षु ) अनेन यक् । ( ञेः ) अनेन ञिलोपः । शम्यते मोहो हरिणा । शम्येत । शम्यताम् । ( दिवादावट् ) अशम्यत । ( कासादि० ) अनेन आम् । अन्यत्साधनं पूर्ववत् । शमयाचक्रे ।

**( ञ्यन्तानां मितामिणि णिदिटि च वा वृद्धिर्वाच्या णिदिटि ञिलोपश्च ) अशमि–अशामि । अशामिषाताम्–अशमिषाताम् । णिद्वदिडभावपक्षे । अशमयिषाताम् ( गुणोर्तिसंयोगाद्योः ) अर्यते । स्मर्यते । यत्कर्म गुणसंयोगात्कर्तृत्वेन विवक्ष्यते स कर्मकर्ता । तदुक्तम् ।**

**क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ।**
**सुकरैः स्वैर्गुणैर्यस्मात्कर्मकर्तेति तद्विदुः ॥**
**तत्राप्येतदेवोदाहरणम् ।**

सूत्रम् (ञ्यंतानां०) ञ्यन्तानां मितां धातूनाम् इणि णिड्डिटि च वा वृद्धिर्वाच्या। णिड्डिटि ञेर्लोपो वाच्यः। अनेन ञेर्लोपः। वावृद्धिः। शामिषीष्ट। वृद्ध्यभावपक्षे। शमिषीष्ट। शामिता-शमिता। शामिष्यते-शमिष्यते। अशामिष्यत-अशमिष्यत। लुङ्लकारे (इणतन्य०) अनेन इण्। ञेर्लोपः। वावृद्धिः। अशामि-अशमि। अशामिषाताम्। अशमिषाताम्। अशामिषत-अशमिषत। इत्यादीनि रूपाणि भवंति। तानि अनेनैव क्रमेण साध्यानि॥ ऋ गतौ। (यक् चतुर्षु) अनेन यक्प्रत्ययः। (गुणोर्त्तिसंयोगाद्योः) अनेन गुणः। अर्यते। अर्येत। अर्यताम्। (दिवादावट्। स्वरादेः) अनेन द्वितीयोऽडागमः। (सवर्णे) आर्यत। इत्यादीनि रूपाणि भवंति। लिट्लकारे। साधनं पूर्ववत्। आर। आरतुः। आरुः। इत्यादीनि। आरिषीष्ट-ऋषीष्ट। आरिता-अर्त्ता। आरिष्यते-आरिष्यत। लुङ्लकारे। आरि। आरिषाताम्। इत्यादीनि। एवं स्मृ स्मरणे। (यक्। गुणोर्त्ति०) अनेन गुणः। स्मर्यते। स्मर्येत। स्मर्यताम्। अस्मर्यत। लिट्लकारे। सस्मरे। स्मारिषीष्ट-स्मृषीष्ट। स्मारिता-स्मर्त्ता। इत्यादीनि। लुङ्लकारे। अस्मारि। अस्मारिषाताम्-अस्मृषाताम्। इत्यादीनि। अथ कर्मोक्ताधिकारे कर्मकर्तृलक्षणम्। तस्योदाहरणं चाह। यत्कर्मेति। यत्कर्मापि गुणयोगात् वस्तुमध्यस्थितसुकरादिमार्दवादिगुणस्य संयोगात् उपचारात् कर्तृत्वेन विवक्ष्यते सः कर्मकर्तेत्युच्यते। (यतः) "क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति। सुकरैः स्वैर्गुणैर्यस्मात् कर्मकर्तेति तद्विदुः"॥ तत्रापि एतदेव यक्प्रत्यांयांतस्यैवोदाहरणमुच्यते।

(कर्मवत्कर्मणा तुल्यक्रियः) कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति। लूयते केदारः स्वयमेव। लुलुवे। अलावि। अलाविषाताम्॥ पच्यते ओदनः स्वयमेव॥ भिदिर् विदारणे। भिद्यते काष्टं स्वयमेव। अभेदि॥

सूत्रम् (कर्मवत्कर्मणा तुल्यक्रियः) कर्मवत् १-१ कर्मणा ३-१ तुल्यक्रियः १-१ कर्मस्था या क्रिया तया क्रियया तुल्यक्रियः कर्ता कर्मवद् भवति। अनेन कर्तुः कर्मत्वं भवति॥ लूञ् छेदने। देवदत्तः केदारं लुनाति। स एवं वदति। नाहं लुनामि किंतु केदारः स्वयमेव लूयते। लूञ्धातोः (यक् चतुर्षु) अनेन यक्प्रत्ययो भवति। लूयते। लूयेत। लूयताम्। (दिवादावट्) अलूयत। लिट्लकारे। (द्विश्च। नुधातोः) लुलुवे। लुलुवाते। लुलुविरे। (स्वरांतानां०) अनेन इट्। इटो वा णित्त्वम्। णित्वाद् वृद्धिः। लाविषीष्ट-लविषीष्ट। णित्त्वाभावपक्षे। इदं रूपम्। लाविता-लविता। लाविष्यते-लविष्यते। (दिवादावट्) अलाविष्यत-अलविष्यत। लुङ्-

लकारे । इण् । वृद्धिः । तनो लोपः । अलावि । अलाविषाताम्-अलविषाताम् । अलाविषत-अलविषत । इत्यादीनि रूपाणि भवंति ॥ डुपचष् पाके । पच् ते यक् प्रत्ययो भवति । कश्चिद् वक्ति । देवदत्त ओदनं पचति । स एवं वदति नाहं पचामि किंतु ओदनः स्वयमेव पच्यते । अत्र ओदनस्य स्वयमेव पाकसिद्धौ सामर्थ्य ततः कर्मकर्तृत्वम् । कर्म एव कर्त्ता जातः । न पुनस्तृतीयांतः कर्त्ता भवति । पच्यते । पच्येत । पच्यताम् । अपच्यत । लिट्लकारे । ( द्विश्च । पूर्वस्य० । लोपः पचां० ) पेचे । पेचाते । पेचिरे । ( चोः कुः ) पक्तम् । ( कपसंयोगे० ) पक्षीष्ट । पक्ता । पक्ष्यते । अपक्ष्यत । लुङ्लकारे । इण् । ( अत उपधायाः ) तनो लोपः । अपाचि । अपक्षाताम् । अपक्षत । इत्यादीनि ॥ भिदिर् विदारणे । कश्चिदेवं वक्ति देवदत्तः काष्ठं भिनत्ति । स एवं वक्ति नाहं भिनद्मि । किंतु काष्ठं स्वयमेव भिद्यते ( यक् चतुर्षु ) भिद्यते । भिद्येत । भिद्यताम् । अभिद्यत । लिट्लकारे । ( द्विश्च । पूर्वस्य० ) बिभिदे । बिभिदाते । बिभिदिरे । भित्सीष्ट । भेत्ता । भेत्स्यते । अभेत्स्यत । लुङ् । इण् । गुणः । तनोलोपः । अभेदि । अभित्सताम् । अभित्सत ।

( दुहस्नुनमां कर्मकर्तरि यगिणौ न ) दुग्धे स्नुते गौः स्वयमेव । नमते दण्डः स्वयमेव । अदुग्ध । अस्नोष्ट-अस्नाविष्ट । अनंस्त ।

## अथ द्विकर्मकाः ।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥
न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥
निन्ये विजनमजागारि रजनीमगमि मदमयाचि संभोगम् ॥
गोपी हास्यमकार्यत भावश्चैनामनन्तेन ॥

कर्तुरीप्सितमं प्रधानं कर्म । अन्यदप्रधानम् । नगरं नीयते नागरिकैर्वनेचरः । भोजनं याच्यते यजमानो याचकेन । पृच्छ्यते पन्थानं पथिकेन पान्थः । शिष्येणाचार्यस्तत्त्वं पृच्छ्यते । कटश्चिकीर्ष्यते देवदत्तेन ( यतः ) बोभूय्यते । ( अनपि च हसात् ) पापच्यते । तेन पापचिता । अपापचि । इत्यादि ॥ इति भावकर्मप्रक्रिया ॥ ॥

सूत्रम् ( दुहस्नुनमां० ) दुह स्नु नम् एतेषां धातूनां कर्मकर्तरि यगिणौ न भवतः। तेषां धातूनां रूपाणि पूर्ववत् ज्ञेयानि ॥ आत्मनेपदे। दुग्धे। दुहाते। दुहते इत्यादीनि रूपाणि ज्ञेयानि ॥ स्नुधातोः। स्नुते। स्नुवाते। स्नुवते। इत्यादीनि ॥ नमधातोः नमते। नमेते। नमंते॥ त्रयाणां लुङ्लकारे। अदुग्ध। अधुक्षाताम्। अधुक्षत। अस्नोष्ट। अस्नाविष्ट। अनंस्त। अनंसाताम्। अनंसत। ( अथ द्विकर्मका धातवः कथ्यंते। द्वे कर्मणी यस्य स द्विकर्मकः। यस्य धातोः कर्मद्वयापेक्षत्वं भवति स द्विकर्मकः। ते धातवः श्लोकेन गणिताः। दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्। दुह । याच्, पच्, दण्ड्, रुधि, प्रच्छि, चि, ब्रू, शास्, जि, मथ्, मुष्, नी, हृ, कृष्, वह् एतेषां धातूनां द्विकर्मकत्वं स्यात् । "न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ॥ प्रत्ययं यांति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥" न्यादयः ण्यन्तनिष्कर्मगत्यर्थाः धातवः मुख्यकर्मणि प्रत्ययं यांति। दुह्यादिर्गौणे कर्मणि प्रत्ययं यान्ति । अन्ये तु यथारुचि प्रत्ययं यांति। गौणे वा मुख्ये वा। उभयत्रापि वा । तत्र द्विकर्मके कर्मद्वयम्। एकं मुख्यं कर्म। अपरं च गौणं कर्म। यदर्थं क्रिया आरभ्यते तत् मुख्यं कर्म। अन्यद् गौणम्। न्यादीनां मुख्ये कर्मणि प्रथमा । याच्यादीनां तु गौणे कर्मणि प्रथमा। प्रच्छादीनां तु मुख्येऽमुख्ये वापि कर्मणि प्रथमा। "निन्ये विजनमजागारि रजनीमगमि मदमयाचि संभोगम्। गोपी हास्यमकार्यत भावश्चैनामनंतेन ॥" अस्य व्याख्या। अनंतेन गोपी विजनं निन्ये। अनंतेन गोपी रजनीमजागारि। गोपी मदमगमि। त्रिषु स्थानेषु गोपी मुख्यं कर्म। गोपी संभोगमयाचि। गोपी हास्यमकार्यत। एनां भावोऽकार्यत। अथ दुह्यादीनामुदाहरणानि आह । मूले तु कर्तुरीप्सिततमं प्रधानं कर्म। अन्यदप्रधानमिति व्याख्यातम्। तदपि समीचीनम् । नगरं नीयते नागरिकैर्वनेचरः। अत्र वनेचरस्य मुख्यत्वम्। नगरस्य गौणत्वम् । तेन वनेचर इति प्रथमा। यदा मुख्ये कर्मणि प्रथमा तदा गौणे द्वितीया। यदा गौणे प्रथमा तदा मुख्ये द्वितीया भवति। इति विवेकः । यदा मुख्यामुख्ये द्वे अपि प्रत्यये न अभिधीयेते तदोभयत्रापि प्रथमा। भोजनं याच्यते यजमानो याचकेन। अत्र मुख्ये द्वितीया। गौणे प्रथमा। पृच्छ्यते पंथानं पथिकेन पांथः। अत्रापि मुख्ये द्वितीया। गौणे प्रथमा। शिष्येणाचार्यस्तत्त्वं पृच्छ्यते। अन्यान्यपि उदाहरणानि यथागमं ज्ञेयानि। सप्रत्ययांतात् कृ–धातोर्यङ्। चिकीर्ष्यते। चिकीर्ष्येते। चिकीर्ष्यंताम्। अचिकीर्ष्यत। लिट्लकारे। चिकीर्षाचक्रे । चिकीर्षिषीष्ट । अचिकीर्षि । ततः चिकीर्ष्यते देवदत्तेन। यङन्तात् भूधातोर्यङ्। (यङ् चतुर्थे) अनेन (यनः) अकारलोपः। बोभूय्यते। बोभूय्येते। बोभूय्यताम्। (दिवादावट्) अबोभूय्यत बोभूयांचक्रे। इत्यादीनि । लुङ्लकारे। अबोभूयिषीष्ट। यङन्तात् ५५५।

पापच्यते । पापच्येत । पापच्यताम् । अपापच्यत । ( अनपि च हसात् ) अनेन अनपि विषये यङो लोपः । पापचांचक्रे । पापचिषीष्ट । पापचिता । पापचिष्यते । अपापचिष्यत । अपापचि । इत्यादीनि रूपाणि भवंति तानि सुगमानि ॥ इति भावकर्मप्रक्रिया समाप्ता ॥ ॥

## अथ लकारार्थप्रक्रिया ।

अथ लकारार्थप्रक्रिया कथ्यते ।

( हठपौनःपुन्ययोर्लोण्मध्यमपुरुषैकवचनान्तता निपात्यते सर्वकाले सर्वपुरुषविषये अतीते काले )

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्निशं दिवः ॥

सूत्रम् ( हठपौनःपुन्ययोः० ) हठात्कारेऽर्थे पौनःपुन्यार्थे च धातोर्लोण्मध्यमपुरुषस्य एकवचनं ततो हिः निपात्यते सर्वकाले सर्वपुरुषविषये अतीते काले । अस्योदाहरणानि । पुरीमवस्कन्द अस्मिन् श्लोके उक्तानि ज्ञेयानि । तत्र परोक्षे काले लोण्मध्यमपुरुषस्यैकवचनान्तानि रूपाणि प्रदर्श्यन्ते । श्लोकार्थः सुगमोऽस्ति ।

( वर्तमानार्थाया अपि विभक्तेः स्मयोगे भूतार्थता वक्तव्या । ) आह स्म हारीतः । यजति स्म युधिष्ठिरः ।

सूत्रम् ( वर्तमानार्थायाः० ) वर्तमानार्थाया अपि त्यादिविभक्तेः स्म इत्यस्य योगे भूतार्थता वक्तव्या । अस्योदाहरणम् । आह स्म हारीतः । अत्र वर्तमानेऽपि स्मयोगेन भूतार्थता । द्वितीयमुदाहरणम् । यजति स्म युधिष्ठिरः । अत्रापि वर्त्तमाने स्मयोगेन भूतार्थता भवति ।

( वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः ) सुप्तोऽहं किल विललाप । नाहं कलिङ्गाञ्जगाम ।

सूत्रम् ( वैचित्त्यापह्नवयोः० ) वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः । अस्योदाहरणम् । वैचित्त्ये । सुप्तोऽहं किल विललाप । अपह्नवे । नाहं कलिङ्गाञ्जगाम । इत्युदाहरणम् ।

( यावत्पुरानिपातयोर्योगे भविष्यदर्थे तिबादयः लट् ) पुरा करोति । यावत्करोति । करिष्यतीत्यर्थः ।

सूत्रम् ( यावत्पुरानिपातयोः० ) यावत् पुरा अनयोर्निपातयोर्योगे भविष्यदर्थे तिबादयः प्रत्यया भवंति। लिट्लकारश्च। अस्योदाहरणम् । पुराकरोति । पुराकरिष्यति इत्यर्थः। यावत्करोति। करिष्यति इत्यर्थः।

( स्मृत्यर्थधातुयोगे भूतेऽर्थे लट् ) स्मरसि मित्र यदुपकरिष्यसि उपकुरुथा इत्यर्थः ॥ ॥ इति लकारार्थप्रक्रिया ॥ ॥

सूत्रम् ( स्मृत्यर्थधातुयोगे० ) स्मृत्यर्थधातुयोगे सति भूतेऽर्थेपि लट्लकारो भवति। स्मरसि मित्र यदुपकरिष्यसि उपकुरुथाः॥ इति लकारार्थप्रक्रिया समाप्ता॥

धातूनामप्यनन्तत्वान्नानार्थत्वाच्च सर्वथा।
अभिधातुमशक्यत्वादाख्यातख्यापनैरलम्॥
इति श्रीमदनुभूतिस्वरूपाचार्यविरचितायां सारस्वतीप्रक्रियायामाख्यातप्रक्रिया समाप्ता॥

अथ आख्यातोपसंहारमाह—धातूनामिति। यतो धातवोऽनंता यद्यपि कविकल्पद्रुमादौ चतुःपंचाशदधिकसप्तदशशतानि ( १७५४ ) धातुसंख्या प्रतिपादिता। तथापि प्रयोगाणां बहुत्वदर्शनात् धातवोऽनंता एव। तथा एकैकस्य धातोः अनेकेऽर्थाः। यथा दिव् क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु। इत्यादि। एवमेकैको धातुरनेकेष्वर्थेषु वर्त्तते। तथा ये गत्यर्थास्ते ज्ञानार्थाः प्राप्त्यर्थाश्च इत्यनेकार्थत्वम्। तथा उपसर्गयोगादप्यनेकार्थत्वम्। तत उक्तम्। धातूनामनंतत्वात्। नास्ति अंतो येषां तेऽनंतास्तेषां भावोऽनंतत्वं तस्मात् अनंतत्वात्। तथा प्रत्येकं धातूनां नानार्थत्वात् नाना बहुप्रकारेण अर्थो येषां ते नानार्थास्तेषां भावो नानार्थत्वं तस्माच्चकारात्सर्वथा सर्वप्रकारेण संपूर्णतयाभिधानं कथनं शब्दशास्त्रम् अभिधातुं वक्तुं कथयितुं वा अशक्यम्। यदि बृहस्पतिः स्वयं वक्ता इंद्रः स्वयं श्रोता तथापि वर्षसहस्रेणापि धातूनामंतं न गच्छति। लोकाच्छेषस्य सिद्धिरिति सर्वैर्वैयाकरणैरुक्तत्वात्, तेषां प्रक्रिया प्रयोगानुसारेण प्रकारांतरेण वा ज्ञातव्या मया वक्तुं न शक्यते इति कारणात् आख्यातस्य व्याकरणनवमाधिकारस्य ख्यापनैः कथनैरलं पर्याप्तं पूर्णतामिति यावत्॥

इति चन्द्रकीर्त्युपेते सारस्वते द्वितीया वृत्तिःसमाप्ता।

अथ

चंद्रकीर्त्युपेते सारस्वते

# कृदन्तप्रक्रिया ।

## ( तृतीया वृत्तिः । )

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

निजजनैर्विधिना निखिलापदो झटिति यो विनिवर्तयति स्मृतः ॥
जलधिजापरिरम्भणलालसो नरहरिः कुरुतां जगतां शिवम् ॥ १ ॥

कृत्प्रत्यया निरूप्यंते ॥

( कृत्कर्तरि च ) वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि च भवन्ति चकाराद्भावकर्मणोरपि ( स्वतन्त्रः कर्ता ) क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । शुद्धो धात्वर्थो भावः ( कर्तुरीप्सिततमं कर्म ) कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ( तथायुक्तं चानीप्सितम् ) ईप्सिततमवदनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । विषं भुङ्क्ते देवदत्तः । अन्नं भुंक्ते देवदत्तः ॥

अथेत्याख्यानकथनानन्तरं कृत्प्रत्यया निरूप्यन्ते । तृतीयवृत्तिस्थप्रत्ययानां 'कृत्' इति संज्ञास्ति ते निरूप्यन्ते प्रकाश्यते । यद्वा कृदन्तप्रक्रिया निरूप्यते । कृत्संज्ञकाः प्रत्यया येषां ते कृदन्ताः शब्दास्तेषां प्रक्रिया निरूप्यते । द्वितीयवृत्तौ धातवः साधितास्ते भवन्त्याद्यन्ताः अत्र तु भ्वादीनां कृत्प्रत्यययोगेन निष्पन्नाः स्याद्यन्ताः शब्दाः साध्यन्ते । सूत्रम् ( कृत् कर्तरि० ) कृत् १–१हसे पः। कर्तरि ७–१ करोतीति कर्ता तस्मिन् डौ इति । र् स्वर० । अत्र ये प्रत्यया वक्ष्यते ते कृत्संज्ञकाः कृन्नामानो ज्ञेयाः । अत्र जातावेकवचनमिति वचनाद्वक्ष्यमाण इति कथितं स च कृत्प्रत्ययः प्रायः कर्तरि कर्त्रुक्तावेव भवति चकारात् विशेषविधाने भावकर्मणोरपि॥

( तृवुणौ ) धातोस्तृवुणौ प्रत्ययौ भवतः ॥ डुपचष् पाके । पच् तृ इति स्थिते ( चोः कुः ) पक् तृ इति स्थिते ( कृत्त

द्धितसमासाश्च ) प्रातिपदिकसंज्ञा इति केचित् । इति नामत्वम् । नामसंज्ञायां स्यादिर्विभक्तिर्भवति ( स्तुरार् । सेरा ) पचतीति पक्ता । पक्तारौ । पक्तारः । पक्तारम् । पुँल्लिंगे । पक्ता । ( ङ्रितः ) स्त्रियाम्--पक्त्री । नपुंसके पक्तृ-पक्तृणी । पक्तृणि इत्यादि ॥ डुकृञ् करणे । करोतीति कर्ता ॥ हृञ् हरणे हरतीति हर्ता ॥ मृङ् प्राणत्यागे । म्रियते इति मर्ता ॥ डुभृञ् धारणपोषणयोः । बिभर्तीति भर्ता ।

सूत्रम ( तृचुणौ ) तृश्च चुण् च तृचुणौ १-२ स्वर० । धातोरग्रे तृचुणौ इत्येतौ द्वौ प्रत्ययौ भवतः । कर्तरि चुण् इत्यत्र णकारो वृद्धयर्थः । उदाहरणम । डुपचष् पाके। पच् तृप्रत्ययः । ( चोः कुः ) स्वर० । पक्तृ इति जातम् । कृत्तद्धितसमासाश्चेति नामसंज्ञायाम १-१ स्तुरार् । यदादेशस्तद्वद्भवति इति न्यायात् । ( सेरा ) सच डित् डित्वाट्टिलोपः 'स्वर०' पक्ता । पक्तारौ ( स्तुरार् ) 'स्वर०' । पक्तारः । एवं कृ-तृप्र० (गुणः। राद्यपोद्विः ) कर्तृ १-१ ( स्तुरार् । सेरा ) 'स्वर' कर्त्ता । कर्त्तारौ । एवं सप्तसु विभक्तिषु रूपाणि ज्ञेयानि । एवं हृ हर्त्ता । पचतीति पक्ता । करोतीति कर्त्ता । हरतीति हर्त्ता एवं भर्त्ता । भर्त्तारौ । भर्त्तारः । भोक्ता, दाता, पाता, स्थाता, माता, गंता, वक्ता, भंक्ता मंक्ता इत्यादि, स्त्रीलिंगे, पक्त्री, हर्त्री, कर्त्री, ( ऋण ईप् ) इतीप् । ( ऋ रम ) नपुंसकलिंगे पक्तृ । पक्तृणी । पक्तॄणि । इत्यादि ।

( कृतः ) सेट्धातोः परस्य कृत्प्रत्ययस्य वसादेरिडागमो भवति । कृत इदं सूत्रं सेट्धातुविषयम् । ( स्वसूतिसूयतिधूञृधादीनामिड्वा वक्तव्यः ) पूञ् प्राणिप्रसवे । सूते वा सूयतेऽसौ सोता-सविता । स्वृ शब्दोपतापयोः । गुणः । वा इट् । स्वरतीति स्वरिता-स्वर्ता । ष्टुञ् स्तुतौ । स्तौतीति स्तोता । एधृ वृद्धौ । एधतेऽसौ एधिता । यु मिश्रणे । यौतीति यविता । रु शब्दे । रौतीति रविता । णु स्तुतौ । नौतीति नविता । भू सत्तायाम् । भवतीति भविता । गुपू रक्षणे ।

सूत्रम ( कृतः ) कृत् ६-१ । स्वर० । स्रो० । एकपदं सूत्रम् । सेट्धातोः परस्य वसादेः कृत्प्रत्ययस्य इडागमः स्यात् । वसूप्रत्याहार आदौ यस्य तस्यैव कृत्प्रत्ययस्येडागमः न त्वन्यस्य । उदाहरणम । भू तृ० प्र० ( कृतः ) इति इडागमः ( गुणः ।

ओ अव् ) स्वर० । भवितृ १-१ कर्तृशब्दवत्साधना । भवतीति भविता । एध् वृद्धौ । एध् तृ । (कृतः ) एधिता ।

( ऊदितो वा ) ऊदितो धातोरिड्वा भवति । गोपायतीति गोपिता-गोपायिता-गोप्ता । पिधू शास्त्रे माङ्गल्ये च । सेधिता-सेद्धा । ( इषुसहलुभरिषरुषामनपि तस्येड्वा भवति ) इषु इच्छायाम् । इच्छतीति एषिता-एष्टा । लुभ् विमोहने । लुभ् गार्द्ध्ये । लुभ्यतीति लोभिता । इडभावपक्षे । ( झबे जबाः । तथोर्धः ) लुभ्यतीति लोब्धा । रिष् बन्धने । रेषतीति वा रिष्यतीति रेषिता-रेष्टा । रुष क्रोधे । रोषतीति रोषिता-रोष्टा । षह मर्षणे । ( आदेः ष्णः स्नः । हो ढः । तथोर्धः । ष्टुभिः ष्टुः । ढि ढो लोपो० ।)( सहिवहोरोदवर्णस्य ) सहिवहोर्धात्वोरकारस्य ओकारो भवति । सहतेऽसौ सोढा । वह् प्रापणे । वहति इति वोढा ॥

सूत्रम् ( ऊदितो वा ) ऊत् ऊकारः इत् यस्य स ऊदित् तस्मात् ५-१ । स्वो० । वा अव्य० । ( इवे ) ऊदितोधातोः गुपू रक्षणे पिधू शास्त्रे मांगल्ये इत्यादेर्वा इडागमः। वस्प्रत्याहारादेः कृत्प्रत्ययस्यैव । उदा० गुपू रक्षणे । गुपू ( तृवुणी ) तृप्र० ( उपधायाः लघोः । ऊदितो वा ) इति इडागमः 'स्वर०' । उभयत्रापि १-१ ( स्तुरार् । सेरा ) डित्वा० । 'स्वर' । गोपिता-गोप्ता । गोपायतीति गोपिता-गोप्ता । पिधू शास्त्रे मांगल्ये च । पिधू ( आदेः ष्णः स्नः ) सिध् तृप्र० ( उपधायाः लघोः ) १-१ ऊदितोवेत्येकत्रेडागमः द्वितीये ( तथोर्द्धः ) तृस्थाने धृ ( झबे जबा० ) 'स्वर०' उभयत्रापि १-१ ( सेरा । स्तुरार् ) टिलोपः 'स्वर०' सेधिता-सेद्धा । वा शब्दादेव इषु इच्छायामित्यस्य-एष्टा-एषिता । षह् मर्षणे ( आदेः ष्णः स्नः ) सहते इति सोढा । तृप्रत्ययः ( हो ढः । तथोर्द्धः । ष्टुभिः ष्टुः । ढि ढो लोपो दीर्घश्च ) सहिवहोरिति सहिवहोः षह् मर्षणे वह् प्रापणे इत्येतयोः धात्वोः संबंधिनोऽवर्णस्य ओकारो भवति ढकारलोपे सति न । दुःसहं सह्यं भारवाद् इत्यादौ ओकारो न भवति अनेन स इत्यस्य सो सोढ १-१ ( स्तुरार् । सेरा ) इत्यादि कर्तृशब्दवत् । एवं वह प्रापणे । वहतीति वोढा ॥

( युवोरनाकौ ) यु वु इत्येतयोरन अक इत्येतावादेशौ भवतः यथासंख्येन । णित्वाद्वृद्धिः । ( अत उपधायाः ) पचति वा

पाचयतीति पाचकः । पाचकौ । पाचकाः ॥ देवशब्दवत् । पठति वा पाठयतीति पाठकः । एवं याचते वा याचयतीति याचकः । भवति वा भावयतीति भावकः ॥ लुनाति वा लावयतीति लावकः । पुनाति वा पावयतीति पावकः ॥ श्रु श्रवणे । शृणोति वा श्रावयतीति श्रावकः ॥ यु मिश्रणे । ( औ आव् ) यौति वा यावयतीति यावकः । वध हिंसायाम् । वधतीति–वधकः । ( हनो घत् ) हन्ति वा घातयतीति घातकः । जायते वा जनयतीति जनकः । ( जनिवध्योर्न वृद्धिः । मितां ह्रस्वः ) घटते वा घटयतीति घटकः । (आतो युक्) आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे । डुदाञ् दाने । ददाति वा दत्तेऽसौ दायकः । दैप् शोधने ( सन्ध्यक्षराणामा० ) दायतीति–दायकः ( वुण्स्युटो हित्वा दरिद्रातेरनप्यालोपो लुङि वा वक्तव्यः ) दरिद्रा दुर्गतौ । दरिद्राति वा दरिद्रायतीति । दरिद्रायकः । दरिदिता ( नृतिखनिरञ्जिभ्यो वुर्वक्तव्यः ) नृती गात्रविक्षेपे । ( उपधाया लघोः । राद्यपो द्विः) नृत्यतीति नर्तकः ( नदादेः ) नर्तकी । खनकः । खनकी ( रञ्जेर्नलोपो वा ) रञ्जकः–रजकः । रजकी ( युवोरनाकौ ) इति तद्धितयुप्रत्ययस्य नेति वक्तव्यम् । तेन ऊर्णायुः ।

सूत्रम् ( युवोरनाकौ ) युश्च वुश्च युवौ तयोः ६–२ ( उवम ) 'स्वर०' । ( स्रो० ) अनाकौ । अनश्च अकश्च १–२ ( ओ औ औ ) पश्चान्नामिनो रः 'स्वर०' द्विपदम् । यु वु इत्येतयोः प्रत्यययोः क्रमेण अन अक इत्यादेशौ भवतः यु इत्यस्य अन वु-इत्यस्य अकः । उदाहरणम् । पच् ( तृवुणौ ) इति वुण् । णकारो वृद्ध्यर्थः । ( अत उपधायाः ) इति । युवोरिति वु इत्यस्य अकादेशः 'स्वर०' पचतीति पाचकः १–१ ( स्रो० ) एवं पठ् पठति पाठयति वा पाठकः । डुकृञ् करणे । तृवुण् । ( धातोर्नामिनः ) कार वु इत्यस्य अक० । 'स्वर०' करोति कारयति वा कारकः १–१ । (स्रो०)-एवं भू वुण् उकारस्य औकारो वृद्धिः । ( औ आव् ) अक० । 'स्वर०' भवतीति ...

वकः । एवं लूञ् छेदने । लुनातीति लावकः । यु मिश्रणे यौतीति यावकः । श्रु श्रवणे । शृणोतीति श्रावकः । एतेषां रूपाणि देवशब्दवत् । तद्धितसन्नन्वियुप्रत्ययस्यानादेशो न । तेन उर्णायुः । शयुः ।

(नाम्युपधात्कः ) नाम्युपधाद्धातोः कः प्रत्ययो भवति । ककारो गुणाभावार्थः । क्षिप् प्रेरणे । क्षिपतीति–क्षिपः । छिदिर् द्वैधीकरणे । छिनत्तीति–छिदः । भिदिर् विदारणे । भिनत्तीति–भिदः । दुह प्रपूरणे । द्रवद्रव्यविभागानुकूलो व्यापारः प्रपूरणम् । कामान् दोग्धि सा कामदुघा ( दुहः के वा घो वाच्यः ) तेन कामदुहा । दुहः–दुघः । तुद् व्यथने । तुदतीति तुदः । विद ज्ञाने । वेत्तीति विदः । द्विष् अप्रीतौ । द्वेष्टीति द्विषः । पुर ऐश्वर्यदीप्त्योः । सुरतीति–सुरः । शुभ् शोभायाम् । शोभते तत् शुभं कल्याणम् ।

सूत्रम् ( नाम्युपधात्कः ) नामी उपधा यस्य स नाम्युपधस्तस्मात् ५–१ ( ङसि–रत् । मवर्णे० ) कः १–१ ( स्रो० ) नामी । अवर्णवर्जाः"'स्वर' इकारादिः स उपधा यस्य तस्माद्धातोः कप्रत्ययो भवति । ककारो गुणप्रतिषेधार्थः । क्षिप् प्रेरणे । क्षिप् अत्र नाम्युपधात् । कप्रत्ययः । 'स्वर०' । ( स्रो० ) क्षिपः । क्षिपते प्रेरयतीति क्षिपः । एवं भिदिर् विदारणे । भिनत्तीति भिदः । छिदिर् द्वैधीकरणे । छिनत्तीति छिदः ।

( जानातेश्च ) जानातेर्धातोरपि कः प्रत्ययो भवति । जानातेश्चेति चकारात्कॄगॄधृप्रीस्रुवामपि कः प्रत्ययो भवति । कॄ विक्षेपे ।

सूत्रम् ( जानातेश्च ) इति ज्ञा अवबोधने इत्येतस्यापि धातोः कप्रत्ययो भवति । ज्ञा । अकित्त्वादातोऽनपीत्याकारलोपः । 'स्वर०' १–१ । स्रो० । ज्ञः । जानातीति ज्ञः । चकारात्प्रियोरपि कप्रत्ययः–

( ऋत इर् ) दीर्घऋकारान्तस्येर् नान्यस्य । किरतीति किरः । धृञ् धारणे । धरतीति ध्रः । प्रीञ् तर्पणे । प्रीणाति वा प्रीणीतेऽसौ प्रियः । ( नु धातोः ) गॄ निगरणे । गिरतीति गिरः ( स्वरे परे गिरस्य लत्वं वा वाच्यम् ) गिले परेऽगि-

लस्य ( गिलशब्दं विहाय पूर्वस्य मुम् वक्तव्यः ) तिमिंगिल- तीति तिमिंगिलः । अगिलस्येति किम् । गिलगिलः । ब्रूञ् व्यक्तायां वाचि ( नुधातोः ) ब्रवीतीति ब्रुवः । अपि- शब्दात्कर्तरि ग्रहेरपि कः प्रत्ययो भवति । गृह्णातीति गृहम् । तात्स्थ्यात् गृह्णन्ति ते गृहा दाराः ।

सूत्रम् ( न्स्त इट् ) प्रियः प्रीञ् कम्र० । नुधातोरिति इय् ।

( पचिनन्दिग्रहादेरयुणिनि ) पचादेर्नन्दादेर्ग्रहादेश्च अयुणि- नि इत्येते प्रत्यया भवन्ति यथासंख्येन । पचतीति–पचः । वक्तीति–वचः । वेत्तीति–वेदः । वपतीति–वपः । ( चरिचलिप- तिहनिवदीनां वा द्वित्वं पूर्वस्यागागमश्च अप्रत्यये परे ) हसादिशेषाभावः । चर गतिभक्षणयोः । चरतीति–चरा- चरः–चरः । चल चलने । चलतीति–चलाचलः–चलः । पतॢ पतने । पततीति–पतापतः–पतः । वदतीति–वदावदः– वदः । ( हन्तेर्घनश्च ) हन्तीति–घनाघनः–हनः । चकाराद्घन शब्दे । घनतीति घनाघनः–घनः इत्यादि । णद अव्यक्ते शब्दे । नदतीति–नदः । प्लुङ् गतौ । प्लवतेऽसौ प्लवः । चरतेऽ- सौ चरः । क्षमूष् सहने । क्षमतेऽसौ–क्षमः । पचादिषु देवट् नदट् इति टकारानुबन्धत्वादीप् । दीव्यतीति–देवी । षिवु तन्तुसन्ताने । सीव्यतीति–सेवः । षेवृ सेवने । सेवतेऽसौ– सेवः । व्रण क्षते । व्रण रुजि । व्रण शब्दे । व्रणतीति–व्रणः । अन प्राणने । प्राणितीति–प्राणः । दृशिर् प्रेक्षणे । पश्यतीति– दर्शः । सृप्लृ गतौ । सर्पतीति–सर्पः । भृञ् भरणे । भरते वा भरतीति–भरः । डुभृञ् धारणपोषणयोः । बिभर्ति वा बिभृ- तेऽसौ भरः । सहतेसौ–सहः । पचादिराकृतिगणः । पचादेर- प्रत्ययो निरुपपदस्यैव ज्ञातव्यः । इति पचादिः ॥

सूत्रम् ( पचिनंदिग्रहादेरयुणिनि ) पचिश्च नंदिश्च ग्रहश्च पचिनंदिग्रहं तदादिर्यस्य स पचिनंदिग्रहादिस्तस्मात् ५–१ टिति ङस्येत्यलोपः । स्रो० । अयुणिनि । अश्च युश्च णिनिश्च अयुणिनि १–१ । नपुंसकात् स्यमोर्लुक् । पश्चात् । ( नामिनो रः ) 'स्वर०' । वृत्तिः कंठ्या । पचादेः अप्रत्ययः नंद्यादेर्युः प्रत्य० । ग्रहादेर्णिनिः प्र० । णकारो वृद्ध्यर्थः । इकार उच्चारणार्थः । उदा० । पच् । अप्र० । 'स्वर०' । ( स्रो० ) पचः । एवं वदतीति वदः । दिवु क्रीडा० । दिव् दीव्यतीति देवः । अप्र० । ( उपधाया लघोः ) 'स्वर०' १–१ ( स्रो० ) एवं षिवु सेवने । ( आदेः ष्णः स्नः ) सिव् सेवः । सेवते इति सेवः । पच् वद् देव् सेव् पच् नंद् भष् प्लुव् चर् जर् मर् क्षर् वेद् सेध् क्रोध् कोप् नर्द् व्रण् सर्प् भर् स्वप इत्यादिपचाद्यः ।

अथ नन्द्यादिर्निरूप्यते । टुनदि समृद्धौ । ( इदितो नुम् ) नन्दति वा नन्दयतीति–नन्दनः । नन्दतीति--नन्दकः । रमु क्रीडायाम् । रमतेऽसौ--रमणः । वाम क्रम संहर्षे । वामतीति–वामनः । क्रामतीति–क्रमणः । वास् शब्दे । वासयतीति–वासनः । ( मितां ह्रस्वः ) मदि हर्षे । माद्यतीति–मदनः । दुष वैकृत्ये । (दुषेर्णौ कृति च दीर्घो वक्तव्यः) दूषयतीति-दूषणः । राध् साध् संसिद्धौ । राध्यतीति वा राधयतीति–राधनः । साधनः । वृधुङ्-वृद्धौ । वर्धयतीति–वर्धनः । रु शब्दे । ( रोर्युण् ) रु शब्द इत्येतस्माद्धातोर्युण प्रत्ययो भवति । रौति वा रावयतीति–रावणः । रुशब्दात् युरपि वक्तव्यः । तेन रवणः । ऋकारान्ताच्च । युणप्रत्ययो भवति । करोतीति–वा कारयतीति–कारणः । कारकः । शुभ् शोभने रोचने च । शोभयतीति–शोभनः । रुच् दीप्तौ । रोचयतीति–रोचनः । विभीषयतीति–विभीषणः । णश् अदर्शने । चित्तं विनाशयतीति–चित्तविनाशनः । युध्यते इति योधनः । एते ञ्यन्ताः । सहतेऽसौ–सहनः । तपतीति–तपनः । ज्वल दीप्तौ । ज्वलतीति–ज्वलनः । शम् दम् उपशमे । शाम्यतीति–शमनः । दाम्यतीति–दमनः । जल्पतीति–जल्पनः । तृप् प्रीणने ।

तृप्यतीति–तर्पणः । रमणः । दृप् संदर्पे । दृप्यतीति–दर्पणः । क्रन्द् आक्रन्दने । क्रदि आह्वाने रोदने च । संपूर्वः । संक्रन्दति वा संक्रन्दयतीति–संक्रन्दनः । कृष् निष्कर्षे । कृष् आमर्षणे । संकर्षतीति–संकर्षणः । अर्द मर्द अर्दने । अर्द गतौ याचने च । जनान् अर्दयतीति–जनार्दनः । मर्दयतीति–मर्दनः । घृष् संघर्षणे। संघर्षतीति–संघर्षणः । पुनातीति–पवनः। पवतेऽसौ–पवनः । पूद क्षरणे । पूद निवर्हणे । सूदी हिंसायाम्। मधुं सूदयतीति–मधुसूदनः । लुनातीति–लवणः । अत्र णत्वं निपात्यते । शत्रून् दाम्यतीति वा दामयतीति–शत्रुदमनः । इति नन्द्यादिः॥

टुनदि समृद्धौ । नद् पचिनंदीति युम० । इदित इति नुमागमः । ( नश्चा० । युवोरनाकौ ) अन । 'स्वर०' । नंदयति वर्द्धयति कुलमिति–नंदनः १–१ । ( स्रो० ) रम् यु । ( युवो० ) स्वर० । ( पुर्नो णो०) रमते इति–रमणः । नंदनः । रमणः । वासनः । वसनः । मदनः । दूषणः । साधनः । शोभनः । रोचनः । तपनः । जल्पनः । दर्पणः । हर्षणः । अर्दनः । यवनः । लवणः । मधुसूदनः । विचक्षणः। इति नंद्यादयः । रोर्युण् । रु शब्दे इत्यस्य धातोर्युण् प्रत्ययो भवति । णकारो वृद्ध्यर्थः । रु युणित्वाद्धातोर्नामिनः । रौ । ( युवो० ) अन । ( औ आव ) 'स्वर०' ( पुर्नो णो० १–१ स्रो० ) रौति रावयतीति वा रावणः । युरपि । तेन रवणः ।

अथ ग्रहादिर्निरूप्यते । ग्रह उपादाने ( इनां शौ सौ । हसे पः सेर्लोपः ) णिनिप्रत्ययान्ताः सर्वे दण्डिवत् । गृह्णातीति–ग्राही । उत्साही । आस उपवेशने । उदास्तेऽसौ उदासी । दासृ दाने । उत्पूर्वः उद्दासी । भासृ दीप्तौ उद्भासतेऽसौ–उद्भासी ( आतो युक् ) छो छेदने । छ्यतीति–छायी तिष्ठतीति–स्थायी । मन्त्रि गुप्तभाषणे । मन्त्रि अवधारणे मन्त्रयतीति–मन्त्री । मृद मर्दने । मर्द आमर्दने । मृदु आर्जवे । संमर्दति वा संमर्दयतीति–संमर्दी । निस्तौतीति–निस्तावी । निशृणोतीति–निश्रावी । रक्ष् पालने। निरक्षतीति–

निरक्षी । वस् निवासे । निवसतीति निवासी । टुवप् बीज-सन्ताने । निवपतीति-निवापी । शो तनूकरणे । निश्यतीति-निशायी ॥ (नञ्पूर्वेभ्यः कृहृणीयाचृवदिभ्यो णिनिश्च ) न करोति वा कुरुतेऽसौ-अकारी । ( इनां शौ सौ ) न हरतीत्यहारी णीञ् प्रापणे । न नयतीत्यनायी । न याचतेऽसौ-अयाची । न वदतीत्यवादी । रध हिंसायाम् । ( णिनिश्चेति चकारादपावपरिविभ्यो णिनिः ) । अपराध्यतीत्यपराधी । रुधिरावरणे । अवरुणद्धीत्यवरोधी । परिभवतीति--परिभावी । विपूर्वः । विचरतीति--विचारी । विशेषेण रौतीति विरावी । इति ग्रहादयः ॥

ग्रह उपादाने । गृह्णातीति-ग्राही । ग्रहादित्वात् णिनि प्र० । इन् ( अत उपधाया ) 'स्वर०' ( इनां शौ सौ ) दीर्घः । ( हसे पः० । नाम्नो०) रु शब्दे । रु विपूर्वः । विशेषेण रौतीति-विरावी । णिन् प्र० । इन् । णित्वाद्धातोर्ना० । ( औ आव् ) मिन 'स्वर०' १-१। दंडिन् शब्दवत् । उद्दासी । उद्भासी । स्थायी । यापी । संमर्दी । वादी । परिभावी । निश्रावी । निवासी इत्यादि ग्रहादयः ॥

अथ दृशादिर्निरूप्यते । ( दृशादेः शः ) दृश् हन् धेट् ध्मा घ्रा पा दा धा विद् एभ्यः शः प्रत्ययो भवति । शकारः शिति चतुर्वत्कार्यार्थः ।

सूत्रम् ( दृशादेः शः ) दृश आदिर्यस्य स दृशादिः तस्मात् ५-१ ङिति-ङस्येत्य-लोपः । सो० । शः १-१ म्रो० । दृश धेट् पा ध्मा हन् इत्यादेर्धातोः शप्रत्ययो भवति। शकारः शित्कार्यार्थः । शित्प्रयोजनमाह ।

( शिति चतुर्वत् ) शिति प्रत्यये परे तिबादिषु परेषु यत्कार्यमुक्तं तद्भवति ( दृशादेः पश्यादिः । अप् । अदे ) पश्यतीति पश्यः । उत्पूर्वः । उत् ऊर्ध्वं पश्यतीति-उत्पश्यः । हन् हिंसागत्योः । अप् ( अदे ) अदादित्वादपो लुक् ( अपित्तादिर्ङित । गमां स्वरे । हनो घ्नः ) गां हन्तीति-गोघ्नः । पापघ्नः । धेट् पाने ( अप् । अदे ) धयतीति-धयः । ध्मा

धमादेशः । धमतीति–धमः । उद्धमतीति उद्धमः । घ्रा जिघ्रादेशः । जिघ्रतीति-जिघ्रः । पा पाने । पिबादेशः । पिबतीति-पिबः ( अप् । अदे । ह्वादेर्द्विश्च । दादेः ) इत्याकारलोपः । ददाति वा दत्तेऽसौ ददः । दधाति वा धत्तेऽसौ दधः ( मुचादेर्मुम् । तुदादेरः ) विद्लृ लाभे । गां विन्दतीति–गोविन्दः ॥

सूत्रम् ( शिति चतुर्वत् ) शकार इत् यस्य स शित् तस्मिन् ७–१ 'स्वर०'। चतुर्भिस्तुल्यं चतुर्वत् १–१ अव्य० । वृत्तिः सुकरा न वरम् । शिति प्रत्यये परे तिबादिः वर्त्तमाना १ विधिसंभावना २ आशीःप्रेरणा ३ अनद्यतनाख्य ४ विभक्तिचतुष्टयस्य यत्कार्यं दृशादेः पश्यादिः अप् कर्त्तरीत्यादि तद्भवतीति । उदा० । दृश् पश्यतीति–पश्यः । शप्र० । चतुर्वत्त्वात् । ( अप् कर्त्तरि ) दृशादेः पश्यादिरिति पश्यादेशः । 'स्वर०' ( अदे० ) स्वर १–१ सि । स्रो० । धेट् पाने । धे–धयतीति–धयः । शप्र० । ( अप् कर्त्तरि । ए अय् ) 'स्वर०' । (अदे) 'स्वर०'। एवं स्तनंधयः। एवं पिबः। ध्मा शब्दाग्निसंयोगयोः । धमादेशः उत्पूर्वः । उत् प्राबल्येन धमतीति उद्धमः । शप्र० ( अप् कर्त्तरि । अदे ) 'स्वर०'। उद्धमः १–१ ( स्रो० ) हन् हिंसागत्योः हन्। गोपूर्वः । गां हन्तीति गोघ्नः । शप्र० । अ । ( अप् कर्त्तरि । अदादेर्लुक् ) पश्चात् । ( हनो घ्ने ) हस्य घः । पूर्व । ( गमां स्वरे ) 'स्वर०' स्रो० । एवं कृतघ्नः ॥

( ज्वलादेर्णः ) ज्वलादेर्गणात् णः प्रत्ययो भवति । ज्वलादेर्णो वेति केचित् । पक्षे पचादित्वादः । ज्वल् दीप्तौ । ज्वालः । ज्वलः । तपतीति–तापः । तपः । पथि गतौ । चुरादिः । इदित् । पान्थयतीति वा पन्थतीति–पान्थः । पथः । अत्र वृद्ध्यनन्तरं नुमागमः । ज्वलादिगणपाठसामर्थ्यात् । पत्लृ गत्यैश्वर्ययोः । पततीति-पातः । पतः । क्वथ् पचने । क्वथतीति-क्वाथः । क्वथः । पथ् गत्याम् । पथतीति–पाथः । पथः । मथ् गाहे । मथतीति–माथः । मथः । सहतेऽसौ साहः । सहः । इति ज्वलादिः॥ अथाऽण् ।

सूत्रम् ( ज्वलादेर्णः ) ज्वल आदिर्यस्य स ज्वलादिस्तस्मात् ५–१ ङसि-ङस्येत्यलोपः । ( स्रो० । नामिनो रः । रायणां ढिः ) जश्तु० । ज्वलादेः ज्वल् तप् पथि

पद् इत्यादेर्धातोः णप्रत्ययो भवति । णकारो वृद्धयर्थः । ज्वल् दीप्तौ । ज्वल् णप्र० । अ 'स्वर०' ( अत उपधायाः ) १-१ स्रो० । एवं तप् संतापे । तापः । पद् गतौ । पदः । पथि गतौ । पथ् णप्र० । वृद्धिः । 'स्वर० । पंथति गच्छतीति-पांथः । लक्ष्यमुद्दिश्य लक्षणस्य प्रवृत्तिरिति प्रथमं वृद्धिस्तत इदित इति नुमागमः । (नश्चापदां० )॥

**( कार्येऽण् ) धातोः कर्मणि प्रयुज्यमाने अण् प्रत्ययो भवति । कुंभकारः । ग्रंथकारः ॥**

सूत्रम् ( कार्येऽण् ) कार्ये ७-१ अ इ ए । अण् १-१ हसे पः । यत् क्रियते तत् कर्म तस्मिन् कर्मणि पूर्वं प्रयुज्यमाने धातोः अणप्रत्ययो भवति । कृ कुंभपूर्वः । कुंभं करोतीति-कुंभकारः । अणप्र० ( धातोः० ) इति वृद्धिः । कार स्वर० १-१ (स्रो०) एवं ग्रंथपूर्वः । ग्रंथं करोतीति ग्रंथकारः । एवं शास्त्रकारः । एवं तंतुवायः ॥

**( आतो डः ) आकारांताद्धातोः कर्मणि प्रयुज्यमाने डप्रत्ययो भवति । गोदः । धनदः । जलदः ॥**

सूत्रम् ( आतो डः ) आतः ५-१ स्वर० । स्रो० । डः १-१ । स्रो० । ( हवे । उ ओ ) सिद्धम् । आकारोऽन्ते येषां तेषां धातूनां डप्रत्ययो भवति । कर्मणि प्रयुज्यमाने डकारष्टिलोपार्थः । डुदाञ् दाने । दा गोपूर्वः । गां ददातीति-गोदः । डप्र० । टिलोपः । 'स्वर०' एवं धनं ददातीति धनदः । एवं जलदः ॥

**( नाम्नि च ) नाममात्रे प्रयोक्तव्ये डप्रत्ययो भवति कर्तरि भावे च । आखूत्थम् । द्वाभ्यां पिबतीति--द्विपः द्वौ वारौ जायतेऽसौ--द्विजः । गृहैर्दारैः सह तिष्ठतीति गृहस्थः । शीङ् स्वप्ने । गिरिशः । पादैः पिबतीति-पादपः । द्रु गतौ । शुचं द्रवतीति--शूद्रः ।**

सूत्रम् ( नाम्नि च ) नाम्नि ७-१ ( अलोपः स्वरे० ) 'स्वर०' । च अव्य० । नाम्नि नाममात्रे कर्मादिनियमरहिते प्रयुज्यमाने डप्रत्ययो भवति कर्त्तरि चकाराद्भावेऽपि । यथा आखूनां मूषकाणाम् उत्थानम् आखूत्थम् ष्ठा । ( आदेः ष्णः [illegible]: ) स्था उद्पूर्वः । उदः स्थादेरिति सलोपः । ( खसे चपा० ) आखुपूर्वः । ( सवर्णे० ) डप्र० । टिलोपः । 'स्वर०' १-१ अतोमित्यादौ । उदा० । पा पाने । पा द्विपूर्वः । द्वाभ्यां मुखशुण्डाभ्यां पिबतीति-द्विपः । डप्र० । अ । टिलोपः । 'स्वर०' १-१ स्रो० । एवं द्विवारं द्वाभ्यां वा जन्मसंस्काराभ्याम् । एकं जन्मतो द्वितीयं दीक्षासंस्काराच्च जायते उत्पद्यते इति-द्विजः । जनी प्रादुर्भावे । जनेर्जा आदेशः । डप्र० । टिलोपः 'स्वर०' । ष्ठा गति० । ष्ठा० ( आदेः ष्णः स्नः ) स्था षस्य सः । निमित्ताभावे इति थस्य ठः ।

गृहपूर्वः । गृहे तिष्ठतीति–गृहस्थः । डप्र० टिलोपः 'स्वर०' द्रु गतौ । शुच्पूर्वः । शुचं शोकं द्रवति गच्छति प्राप्नोति हीनजातित्वादिति शूद्रः । डप्र० । आ । टिलोपः ।

( शुचः शूद्रे ) शुचः शूरादेशो भवति द्रे परे ।

सूत्रम् ( शुचः शूद्रे ) शुच्शब्दस्य द्रे इति डप्रत्ययांते द्रु धातौ परे शू इत्ययमादेशो भवति । अनेन शुचः शू । शूद्रः ।

( उरसः सलोपो मुम्वा ) उरसः सकारस्य लोपो भवति । डप्रत्ययान्ते गमौ मुमागमश्च वा । उरसा गच्छतीत्युरगः । उरंगः–सर्पः ।

सू० ( उरसः ) उरस्शब्दस्य उपपदस्य गमिधातौ परे सकारस्य लोपो भवति वा विकल्पेन मुमागमो भवति । गम् उरस्पूर्वः उरसा हृदयेन गच्छतीति–उरगः–उरंगो वा । नाम्नीति डप्र० । अ टिलोपः । 'स्वर०' । उरस् इति सलोपः । एकत्र मुमागमः ( नश्चा० ) ।

( विहायसो विहश्च ) विहायस्शब्दस्य विहादेशो भवति चकारान्मुम्वा डान्ते गमौ । विहायसि आकाशे गच्छतीति–विहगः–विहङ्गः । ( भुजस्य च मुम्वा डप्रत्ययान्ते गमौ ) भुजो वक्रार्थे । भुजं वक्रं गच्छतीति–भुजगः–भुजङ्गः । विहायसो विहश्चेति चकारात् तरसस्तुरादेशः । मुम्वेति अनुवर्तनीयम् । तरसस्तुरादेशः ( तुरस्य मुम्वा डान्ते गमौ ) तरसा वेगेन गच्छतीति तुरगः–तुरंगः ।

सू० ( विहायसो विहश्च ) विहायस्शब्दस्य विहादेशः मुमागमश्च वा । एवं विहायसा आकाशेन विहायसि आकाशे वा गच्छतीति विहगः–विहंगः । चकारात् । भुजं कुटिलं गच्छतीति । भुज् कौटिल्ये । भुजगः–भुजंगः, । प्लवगः–प्लवंगः । तुरगः–तुरंगः । इत्याद्यपि ।

( अटौ ) नाम्नि कार्ये च उपपदे सति अटौ प्रत्ययौ भवतः । अस्थि हरतीति–अस्थिहरः कः श्वा । कवचं हरतीति–कवचहरः कुमारः । धृञ् धारणे । धनुर्धरतीति–धनुर्धरः क्षत्रियो वा राजा । चर गतौ । कुरुषु देशेषु चरतीति–कुरुचरः । ट ईवर्थः । ( ष्टितः ) स्त्री चेत् कुरुचरी । महीचरी । सेनाचरी ।

भिक्षाचरी । दीक्षाचरी । अप्रत्ययः सर्वधातुसाधारणः टप्रत्ययस्तु चरादेरेव भवति । शोकं करोतीति–शोककरी कन्या । यशः करोतीति–यशस्करी विद्या । सृ गतौ । पुरः सरतीति–पुरःसरः । अग्रे सरतीति–अग्रेसरः । पार्श्वे शेतेऽसौ पार्श्वशयः । तथैव पृष्ठे शेतेऽसौ–पृष्ठशयः । उदरशयः । ( उत्तानादिषु कर्तृषु ) उत्तानः शेतेऽसौ–उत्तानशयः । स्तम्बे रमतेऽसौ स्तम्बेरमः हस्ती । जप जल्प व्यक्तायां वाचि । कर्णेजपः । ग्रह उपादाने । शक्तिं गृह्णातीति–शक्तिग्रहः । लाङ्गलग्रहः । पृष्ठग्रहः । अंकुशग्रहः । तोमरग्रहः । घटीग्रहः । धनुर्ग्रहः । सूत्रग्रहः । पुष्पग्रहः । फलग्रहः । कामग्रहः । मधुरग्रहः । शपूर्वः कृञ् । शं सुखं वा कल्याणं करोतीति–शंकरः । शंवदः । भारंवहः । ( अत्र कर्मणि अनपि वक्तव्यः ) भारवाहः । श्वेतवाहः । इत्यादि ॥

सूत्रम् (अटौ) अश्च टश्च अटौ १–२(ओ औ औ) धौ नाम्नि कार्ये च वाच्यमाने अकारटकारौ प्रत्ययौ यथायोग्यं भवतः । टप्रत्यये-टकार ईवर्थः । पचिनंदीति पचादीना निरुपपदानाम् अप्रत्ययः उक्तः । अटावित्यत्र तु सोपपदानाम् अप्रत्यय इति न पौनरुक्त्यम् । उदाहरणम् । हृञ् हरणे । अस्थिपूर्वे । अप्र० ( गुणः ) 'स्वर०' । अस्थीनि हरतीति अस्थिहरः श्वा कुर्कुरः । एवं कवचं सन्नाहं हरतीति–कवचहरः कुमारः इंद्रो वा । एवं धृ धनुष्पूर्वः । दोषामिति षस्य रः ( राद्यपो द्विः । झवे जवाः ) जल० । धनुर्द्धरतीति–धनुर्द्धरः कुमारः । इत्यादयः अप्रत्ययान्ताः । चर गतिभक्षणयोः चर् कुरुपूर्वः । कुरुषु देशेषु चरतीति–कुरुचरः । स्त्री चेत् कुरुचरी । टप्रत्य० । अ । 'स्वर०' । एकत्र १–१ सो० । द्वितीये टित्वात् ( ङ्वितः ) इतीप् । ( यस्य लोपः ) १–३ ( हसेपः० ) । नदीशब्दवत् ।

( इखखि ) धातोर्नाम्नि कार्ये च सति इ ख खि एते प्रत्यया भवन्ति । खकारः खिति पदस्येति सूत्रस्य विशेषणार्थः ।

सूत्रम् (इखखि) इश्च खश्च खिश्च इ ख खि १–३ साकेतिकम् । यद्वा १–१( नपुंसकात्स्यमोर्लुक् ) धातोर्नाम्नि कार्ये च सति इ ख खि एते त्रयः प्रत्यया भवंति यथायोग्यम् । उदा० । कृ स्तंनपूर्वः । स्तंवं करोतीति–विग्रहे इप्रत्ययः । ( गुणः ) 'स्वर०'

१-१ स्रो० । स्तंबकरिः व्रीहिः शालिः । एवं शकृत्करिर्वत्सः । आप्ऌ व्याप्तौ । आप् देवपूर्वः । देवानाप्नोतीति–देवापिः, इप्र० । 'स्वर०' । एवं वातापिः, । एवं फलेग्रहिः नाथहरिः, दृतिहरिः पशुः ।

( खिति पदस्य ) खिति प्रत्यये परे पूर्वपदस्याव्ययवर्जितस्य मुमागमो भवति । तेन दोषामन्यमहः । आत्मानं दोषा मन्यते तद्दोषामन्यम् अहः ।

शकृत्स्तम्बात्कृञः फले रजोमलाद्ग्रहो हृञः।
दृतिनाथादेववातादापः कर्तरि वाच्य इः ॥

( वत्सव्रीह्योरेव ) डुकृञ् करणे । शकृत्करोतीति–शकृत्करिः कः वत्सः । स्तम्बं करोतीति–स्तम्बकरिः कः व्रीहिः । फले गृह्णातीति–फलेग्रहिः । वा । फलानि गृह्णातीति फलेग्रहिः वृक्षः । फलस्यैदन्तत्वं निपातनात् । रजो गृह्णातीति–रजोग्रहिः । मलग्रहिः । दृतिं हरतीति–दृतिहरिः । नाथहरिः । आप्ऌ व्याप्तौ । देवान् आप्नोतीति–देवापिः । वातम् आप्नोतीति वातापिः ।

करीपकूलसर्वाभ्रात्कपः प्रियवशाद्वदः ।
ऋतिमेघभयात्कृञः क्षेममद्रप्रियात्तु वा ॥

कप निष्कर्षे । करीषं कपतीति–करीषंकपः । 'तत्तु शुष्कं करीषोऽस्त्री ' इत्यमरः । कूलं कपतीति–कूलंकपः । सर्वं कपतीति–सर्वंकपः । अभ्रं कपतीति–अभ्रंकपः । खकारो मुमागमार्थः । वद व्यक्तायां वाचि । प्रियं वदतीति–प्रियंवदः । वशंवदः । ऋतिं करोतीति ऋतिंकरः । मेघंकरः । भयंकरः । विकल्पपक्षे कार्ये अण् । क्षेमं करोतीति–क्षेमंकरः–क्षेमकारः । मद्रं करोतीति मद्रंकरः–मद्रकारः । प्रियं करोतीति–प्रियंकरः । प्रियकारः ॥

आशिताच्च भुवो भावे करणे च तुराद्भुजात् ।
विहायसः सुतोरोभ्यां हृदयाच्च जनात् प्लवात् ॥
गच्छतेः प्रत्ययः खः स्याद्भृञो धातोस्तु खिर्भवेत् ।
आत्मन्कुक्ष्युदरेभ्यः स्युस्तथा वाचंयमादयः ॥

आशितेन भूयते इति आशितंभवम् । भावे नपुंसकता वाच्या । आशितो भवत्यनेनेति आशितंभव ओदनः । तुरं गच्छतीति तुरंगमः । भुजंगमः । विहंगमः । सुतंगमः । उरंगमः । हृदयंगमः । जनंगमः । प्लवेन गच्छतीति प्लवंगमः । डुभृञ् धारणपोषणयोः । आत्मानं बिभर्तीति--आत्मंभरिः । कुक्षिंभरिः । उदरंभरिः । लुप्तविभक्तेश्च पदान्तत्वं विज्ञेयम् । अतःपरं वाचंयमान् कथयति । ( वाचंयमादयो निपात्याः ) वाचं यच्छतीति वाचंयमः । अत्र अकारो निपात्यते । दृ विदारणे । पुरं दारयतीति--पुरंदरः । तप संतापे । द्विषं तापयतीति द्विषंतपः । परंतपः । सर्वं सहतेऽसौ--सर्वंसहः । विश्वं बिभर्तीति विश्वंभरः । भगं दारयतीति--भगंदरः । तॄ प्लवनतरणयोः । रथं तरतीति--रथंतरः । वृञ् वरणे । पतिं वृणोतीति--वा वृणुते सा--पतिंवरा । जि जये । धनं जयतीति--धनंजयः धृञ् धारणे । वसूनि वा वसु धरति वा धरतेऽसौ--वसुंधरा । शत्रुं सहतेऽसौ--शत्रुंसहः । अरिं दाम्यतीति--अरिंदमः । शत्रुंतपः । एते वाचंयमादयः ॥

सूत्रम् (खिति पदस्य) ख इत् यस्य स खित् तस्मिन् ७-१ 'स्वरे' । पदस्य ६-१ ङस्य खिति खकारेत्प्रत्यये पूर्वपदस्य मुमागमो भवति । उकार उच्चारणार्थः । कृ क्षेमपूर्वः । क्षेमकरः । इखखि । इति खप्रत्ययः । अत्र खकारो मुमागमार्थः । खितिपदस्येति ( मोनु:० ) 'स्वर०' एवं प्रिय वदतीति प्रियवदः । वशवदः। कूलंकपः । अभ्रंलिहः । वाचयमः ।पुरदरः । भयंकरः । परतपः । सर्वसहः । विश्वभरः । मितपचः । विधुंतुदः । सूर्यपश्यः । ललाटंतपः इत्यादि । डुभृञ् आत्मन्पूर्वः । आत्मानं बिभर्तीति--आत्मभरिः । खिप्रत्ययः। इ । नाम्नो० । ( खिति पदस्य । मोऽनु०) 'स्वर०' २-१ ( स्रो० ) एवं उदरंभरिः कुक्षिंभरिः । इत्यादयोऽपि ज्ञेयाः ॥

( एजां खश् ) एजृ कंपने इत्यादीनां खश् प्रत्ययो भवति । खकारो मुमागमार्थः । शकारः शिति चतुर्वत्कार्यार्थः । ( धातोः प्रेरणे ) इति ञिः प्रत्ययः । जनान् एजयतीति जनमेजयः।

ञ्यन्तैजेर्मन्यतेर्मुञ्जकूलास्यपुष्पतो धयेः ।
नाडीमुष्टिशुनीपाणिकरस्तनात्सनासिकात् ॥

मन ज्ञाने ( दिवादेर्यः ) आत्मानं पंडितं मन्यते स पंडितंमन्यः। धेट् पाने। मुञ्जं धयतीति–मुञ्जंधयः । कूलंधयः। आस्यंधयः । पुष्पंधयः । ध्माधेटोस्तुल्योपपदत्वं ज्ञेयम्। ध्मा शब्दाग्निसंयोगयोः । नाडीं धयतीति--नाडिंधयः । नाडिंधमः ( खशन्ते पूर्वपदस्य ह्रस्वो वाच्यः ) मुष्टिंधयः। मुष्टिंधमः। शुनिंधयः। शुनिंधमः। पाणिंधयः। पाणिंधमः। करंधयः। करंधमः। स्तनंधयः। स्तनंधमः । नासिकां धयतीति–नासिकंधयः। नासिकंधमः।

ध्माखारीवातघटीतो रुजवहो तु कूलतः॥
अरुर्विधुतिलात्तुद् स्यादसूर्योग्राद्दशिस्तपिः॥
ललाटतो वहाभ्राल्लिह् मितमाननखात्पचिः ॥
वातादजिरिरायामद् जहातिः शर्धतस्तथा ॥

खारीं धमतीति--खारिंधमः । वातंधमः । घटिंधमः। रुजो भङ्गे। वह प्रापणे । उत्पूर्वः । कूलमुद्रुजतीति–कूलमुद्रुजः। कूलमुद्वहतीति–कूलमुद्वहः। अरुः किम्। मर्मस्थानम्। अरुस्तुदतीति–अरुंतुदः । विधुंतुदः। तिलंतुदः । दृशिर् प्रेक्षणे । न सूर्यं पश्यंतीति–असूर्यंपश्याः के राजदाराः । उग्रंपश्यः । ललाटंतपः। लिह् आस्वादने। वहं लेढीति–वहंलिहः। अभ्रंलिहः। मितं पचतीति–मितंपचः । प्रस्थंपचः । मानंपचः।

नखंपचः । अज गतौ क्षेपणे च । वातमजतीति-वातमजः । मदी गर्वप्लवनयोः । इरया माद्यतीति इरंमदः । ओहाक् त्यागे । शर्धं जहतीति-शर्धंजहा माषाः । इति खश्प्रत्ययः ।

सूत्रम् ( एजां खश् ) एजां ६–३ । 'स्वर०' । ( मोनु० । खश् १–१ हसे पः ) एजृ कंपने इत्यादीनां धातूनां खश्प्रत्ययो भवति । खकारो मुमागमार्थः । शकारश्च लुर्वत्कार्यार्थः। उदा० । एज् जनपूर्वः । जनं लोकं एजयति कंपयतीति विग्रहे ( धातोः प्रेरणे ) ञिप्रत्ययः 'स्वर०' । तत एजां खशिति । खश खितिपदस्येति पूर्वस्य मुम् । 'स्वर०' । चतुर्वत्त्वात् ( अप् कर्तरि ) गुणः ( ए अय् ) 'स्वर०' ( अदे ) इत्यकारलोपः । 'स्वर०' जनमेजयः । मन ज्ञाने । मन् पंडितपूर्वः । आत्मानं पंडितं मन्यते इति पंडितंमन्यः । खश्प्रत्ययः । अशित्त्वाद्दिवादेर्यः खित्त्वान्मुमागमः । 'स्वर०' । ( अदे ) एवं सुभगंमन्यः । इत्यादि ।

( ख्युट् करणे ) धातोः करणेऽर्थे ख्युट् प्रत्ययो भवति । ( अभूततद्भावे । आढ्यसुभगस्थूलपलितनग्नांधप्रियेषु कृञः ख्युट् वाच्यः ) अनाढ्यः आढ्यः क्रियतेऽनेनेति आढ्यंकरणं द्यूतम् । सुभगंकरणम् । स्थूलंकरणं किं दधि । पलितंकरणं किं शीतवस्तुसेवनम् । अनग्नः नग्नः क्रियते अनेनेति नग्नंकरणं द्यूतम् । अन्धंकरणं किं सूर्यावलोकनमसकृत् । अप्रियः प्रियः क्रियते अनेनेति प्रियंकरणं मैत्रम् । ( दार्वाहनो अण् वक्तव्यः ) तकारस्य च टः । घदादेशो वक्तव्यः ( उ वम् ) दारु आहन्तीति-दार्वाघाटः ( चारौ वा ) चारुं आहन्तीति-चार्वाघाटः चार्वाघातः ( कर्मणि संपूर्वाच्च ) वर्णान् संहन्तीति-वर्णसंघातः ( जायापत्योष्टक् ) जायापत्योरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति लक्षणवति कर्तरि । जायां हन्तीति-जायघ्नः ना । पतिं हन्तीति-पतिघ्नी स्त्री ( अमनुष्यकर्तृके च ) जायाघ्नः तिलकालकः । कपाले भ्रमरः । पतिघ्नी पादरेखा ( पाणिघताडघौ शिल्पिनि निपात्येते ) राजघ-उपसंख्यानम् ।

सूत्रम् ( ल्युट् करणे ) ल्युट् १–१ (हसे पः०) करण ७–१ अ इ ए। अकृतस्य निष्पादनं करणमुच्यते। तस्मिन्नर्थे धातोः ल्युट् प्रत्ययो भवति। खकारो मुमागमार्थः। टकार ईवर्थः। कृ नग्नपूर्वः। अनग्नो नग्नः क्रियते अनेनेति विग्रहे ल्युट्। युम०। खितिपदस्येति खित्त्वान्मुम् ( समासप्रत्यययोः) इति विभक्तिलोपे मुमागमः ( युवोरनाकौ ) इति अनादेशः ( गुणः ) 'स्वर०' ( पुनों णो० ) १–१ नपुंसकात्वं नग्नंकरणं द्यूतम् एवम् अस्थूलः स्थूलः क्रियते अनेनेति स्थूलंकरणं दधि। कृ स्थूलपूर्वः।

( भजां विण् ) भजसहवहां कर्तरि विण् प्रत्ययो भवति। णकारो वृद्ध्यर्थः। ( वेः ) वेर्लोपो भवति। भज् सेवायाम्। अर्धं भजतीति–अर्धभाक्। (चोः कुः) सुखभाक्। दुःखभाग्। वह् प्रापणे। भारं वहतीति–भारवाट्–भारवाड्। भारवाहौ। भारवाहः। भारवाहम्। भारवाहौ।

सूत्रम् ( भजां विण् ) भजां ६–३ 'स्वर०'। ( मोनु० ) विण् १–१ ( हसे पः ) भजादीनां भज् वह, पह्, शम् इत्यादीनां धातूनां विण्प्रत्ययो भवति कर्तृक्तौ विषये। णकारो वृद्ध्यर्थः। भज् सेवायाम्। भज् अर्द्धपूर्वः अर्द्धं भजतीत्यर्द्धभाक्। विण्प्रत्ययः णित्त्वादत उपधायाः वृद्धिः। अर्द्धभाज् वि इति स्थिते। सूत्रम्। ( वेः ) वेः ६–१ ( ङिति ङस्य। स्रो० ) विप्रत्ययस्य लोपो भवति इत्यनेन वेर्लोपः १–१ ( चोः कुः। हसे पः०। वावसाने ) अर्द्धभाक्। अर्द्धभाजौ। अर्द्धभाजः इत्यादि। स्त्रीलिंगेऽप्येवम्। नपुंसकलिंगे तु अर्द्धभाक्। अर्द्धभाजी। अर्द्धभांजि। इत्यादि। अत्र केचित्। तत्त्वं पृच्छतीति–तत्त्वप्राट् इत्युदाहरणं पठंति। तदत्र न युज्यते। अग्रे क्विप्प्रत्ययाधिकारे साधितत्वात्। इह तु भ्रमात् पठंति। वह् भारपूर्वः। भारं वहतीति–विग्रहे विण्प्रत्ययः। वृद्धिः। विलोपः १–१ ( हो ढः। हसेपः। वावसाने ) ढस्य टः। भारवाट्–भारवाड्। मधुलिह्शब्दवत्। शसादौ स्वरे परे विशेषः।

( वाहो वौ शसादौ स्वरे ) वाहो वाकारस्य औकारादेशो भवति शसादौ स्वरे परे। भारौहः। भारौहा। भारवाड्भ्याम्। भारवाड्भिः। पह मर्षणे। ( हो ढः। वावसाने। सहादेः सादिः ) इति सूत्रेण त्वरायास्तुरादेशः। तुरां शत्रूणां वेगं सहतेऽसौ तुरापाड्।

सूत्रम् ( वाहो वौ शसादौ स्वरे ) शसादौ स्वरे वाह इति विण्प्रत्ययान्तस्य वह्-धातोः शसादौ स्वरे परे वा इत्यक्षरस्य कृत्स्नस्य औकारो भवति । वा इत्यस्य औ । ( ओ औ औं ) भारौहः। भारौहा । भारवाड्भ्याम् । ( होढः । झबे जबाः ।) स्वर० भारवाड्भिरित्यादि । षह मर्षणे सहने । आदेः ष्णः स्नः । सह विण् प्र० । वृद्धिर्वेर्लोपः १-१ । (होढः) ।

( सहेः षः सा ढि ) सहेः सकारस्य षकारो भवति साढि सति । तुरासाहौ । तुरासाहः । अम्बूनि वहतीति-अम्बुवाट् । शसादौ तु अन उः। अनकारादुत्तरस्य वाहो वाकारस्य उः स्यात् शसादौ स्वरे परे अम्बूहः । शालिवाट् । शाल्यूहः ।

( सहेः षः सा ढि ) सहेः ६-१ षः १-१ सा ढि ७-१ सहेर्धातोः सकारस्य षकारो भवति ढकारे परे । कथंभूते ढकारे रसे पदान्ते च परे । अनेन सस्य षः।( हसेपः। वावसाने । ) तुरा शत्रुवेगं सहते इति तुराषाड् इन्द्रः । तुराषाट् । तुरासाहौ । तुरासाहः । भकारादौ सुपि च तुराषाड्भ्याम् । तुराषाड्भिः । इत्यादिरूपाणि ज्ञेयानि ।

( शमेरपि विण् वक्तव्यः । मो नो धातोः ) मान्तस्य धातोर्मकारस्य नकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । शम दम उपशमने । प्रकर्षेण शाम्यतीति प्रशान् । प्रशामौ । प्रशामः ।

शमु उपशमे । शम् प्रपूर्वः । प्रकर्षेण शाम्यतीति प्रशाम । विण् प्र० । वृद्धिः वेर्लोपः १-१ । सूत्रम् ( मो नो धातोः ) धातोर्मकारस्य नकारो भवति रसे पदान्ते च । वमोश्च इति मस्य नः । ( हसेपः०) प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्याम् । प्रशान्भिः ।

( अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ) अभूततद्भावेऽर्थे कृ भू अस् इत्येतेषु नाम्नश्च्विः प्रत्ययो भवति । ( संपद्यकर्तरीति वक्तव्यम् ) तेन अगृहे गृहे भवतीति गृहेभवति । चकारश्च्वौ दीर्घ इति विशेषणार्थः । वा चकारः प्रत्ययभेदज्ञापनार्थः ( वेः )

( अभूतेत्यादि ) न प्राग्भूतम् अभूतं तस्य तेनैव स्वात्मना भवनं तद्भावः तस्मिन्नर्थे अतथाभावे तथाभावस्य सति कृ भू अस् इत्येतेषां त्रयाणां धातूनां मध्ये एकतरयोगे नाम्नश्च्विप्रत्ययो भवति । चकारः च्वौ दीर्घ ईचास्येति सूत्रविशेषणार्थः ।

(च्वौ दीर्घ ई चास्य) च्वौ प्रत्यये परे आकारस्य ईकारादेशो भवति। अन्यस्य स्वरस्य दीर्घो भवत्यव्ययवर्जितस्य। अमिथुनं मिथुनं संपद्यमानं तथा करणम् इति-मिथुनीकरणम्। किं पाणिग्रहणम्। च्व्यन्तत्वादव्ययम् (अव्ययाद्विभक्तेर्लुक्) असहायः सहायः संपद्यमानस्तथा स्यात् इति सहायीस्यात्। अकृष्णः कृष्णः यथा संपद्यमानस्तथाकरोतीति कृष्णीकरोति। हेतूकृतम्। अव्ययस्य न दीर्घत्वम्। अस्वस्ति स्वस्ति यथा संपद्यमानस्तथा स्यादिति स्वस्तिस्यात्। संपद्यकर्त्तरि किम्। अगृहे गृहे भवतीति गृहे भवति (अलुक् क्वचित्) इति विभक्तेरलुक्।

सूत्रम् (च्वौ दीर्घ ई चास्य) च्वौ परे सति अकारव्यतिरिक्तस्वराणां दीर्घः अकारस्य च। यद्वा अस्य अवर्णस्य ईकारो भवति अनव्ययस्य तु न। उदा०। कृ मिथुनपूर्वः। अमिथुनं मिथुनं क्रियते इति विग्रहे (भावे युट्) यु। अभूततद्भावे कृ अनेन मिथुनस्याग्रे च्विः ईचास्येति अकारस्य ईकारः। (युवोरनाकौ) गुणः। स्वर०। वेर्लोप। (ष्रनों णो०) भावत्वान्नपुंसकलिंगत्वम् १-१ कुलशब्दवत्। एवं मिथुनीकरोति मिथुनीभवति। मिथुनीस्यात्। भू शुक्लपूर्वः। शुक्लभवनं शुक्लीभावः। घञ्। भावे घञ्। अ ञित्वाद् वृद्धिः (औ आव्) 'स्वर०'। च्विः अकारस्य ई। वेर्लोपः। एवं भूयोगे च्चिः १-१ (स्रो०) अस् भुवि। (विधिसंभावनयोः) यात्। (अप् क०। अदादेर्लुक) नमसोऽस्येत्यलोपः। सहायपूर्वः। असहायः सहायः स्यादिति विग्रहे च्विप्र०। ई चास्य। वेरिति वेर्लोपः। सहायी स्यात् क्रियापदम्। अत्र अस्योगे च्विः। कृ हेतुपूर्वः। अहेतु हेतुतया कृतं हेतूकृतं (क्तक्तवतू)-क्तप्र०। (च्वौ दीर्घः) इति दीर्घः। उकारस्य ऊकारः। नपुंसकेति।

(च्वौ सलोपश्च) मनस् महस् रजस् इत्यादीनां सकारस्य लोपो भवति च्वौ प्रत्यये परे। द्वौ नञौ प्रकृत्यर्थमनुसरतः। उत्सुकं मनो यस्यासौ उन्मनाः। न उन्मनाः अनुन्मनाः। अनुन्मनाः उन्मनाः संपद्यमानस्तथा भाव इति उन्मनीभावः। विगतं मनो यस्याऽसौ विमनाः। न विमनाः अविमनाः। अविमनाः विमनाः संपद्यमानः तथाभाव इति-विमनीभावः। न

सूत्रम् ( वाहो वौ शसादौ स्वरे ) शसादौ स्वरे वाह इति विण्प्रत्ययांतस्य वह-धातोः शसादौ स्वरे परे वा इत्यक्षरस्य कृत्स्नस्य औकारो भवति । वा इत्यस्य औ । ( ओ औ औ ) भारौहः। भारौहा । भारवाड्भ्याम् । ( होढः । झवे जवाः ।) स्वर० भारवाड्भिरित्यादि । पह मर्षणे सहने । आदेः ष्णः स्नः । सह विण् प्र० । वृद्धिर्वेर्लोपः १–१ । (होढः) ।

( सहेः षः सा ढि ) सहेः सकारस्य षकारो भवति साढि सनि । तुरासाहौ । तुरासाहः । अम्बूनि वहतीति–अम्बुवाट् । शसादौ तु अन उः । अनकारादुत्तरस्य वाहो वाकारस्य उः स्यात् शसादौ स्वरे परे अम्बूहः । शालिवाट् । शाल्यूहः ।

( सहेः षः सा ढि ) सहेः ६–१ षः १–१ सा ढि ७–१ सहेर्धातोः सकारस्य षकारो भवति ढकारे परे । कथंभूते ढकारे रसे पदांते च परे । अनेन सस्य षः।( हसेपः। षावसाने । ) तुरां शत्रुवेगं सहते इति तुराषाड् इन्द्रः । तुराषाट् । तुरासाहौ । तुरा-साहः । भकारादौ सुपि च तुराषाड्भ्याम् । तुराषाड्भिः । इत्यादिरूपाणि ज्ञेयानि ।

( शमेरपि विण् वक्तव्यः । मो नो धातोः ) मान्तस्य धातो-र्मकारस्य नकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । शम दम उपशमने । प्रकर्षेण शाम्यतीति प्रशान् । प्रशामौ । प्रशामः ।

शम् उपशमे । शम् प्रपूर्वः । प्रकर्षेण शाम्यतीति प्रशाम् । विण् प्र० । वृद्धिः वेर्लोपः १–१ । सूत्रम् ( मो नो धातोः ) धातोर्मकारस्य नकारो भवति रसे पदान्ते च । वमोश्च इति मस्य नः । ( हसेपः० ) प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्याम् । प्रशान्भिः ।

( अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ) अभूततद्भावेऽर्थे कृ भू अस् इत्येतेषु नाम्नश्च्विः प्रत्ययो भवति । ( संपद्यकर्तरीति वक्तव्यम् ) तेन अगृहे गृहे भवतीति गृहेभवति । चका-रश्च्वौ दीर्घ इति विशेषणार्थः । वा चकारः प्रत्ययभेदज्ञाप-नार्थः ( वेः )

( अभूतेत्यादि ) न प्राग्भूतम् अभूतं तस्य तेनैव स्वात्मना भवनं तद्भावः तस्मिन्नर्थे अतथाभावे तथाभावस्य सति कृ भू अस् इत्येतेषां त्रयाणां धातूनां मध्ये एकतरयोगे नाम्नश्च्विप्रत्ययो भवति । चकारः च्वौ दीर्घ ईचास्येति सूत्रविशेषणार्थः ।

परे न क्यपि क्विपि वा। क्वनिप्प्रत्ययः । सुष्ठु पिबतीति-सुपीवा। भूरि ददातीति-भूरिदिवा। घृतं पिबतीति-घृतपीवा। धनदिवा। मलसिवा। मार्गस्थिवा। धनधीवा। सुगीवा। दोपहीवा। क्वनिप् क्वचिदन्येभ्योऽपि दृश्यते । सुष्ठु करोतीति-सुकर्मा। सुष्ठु शृणोतीति-सुशर्मा। अन प्राणने। अत्र क्विप् । प्राणितीति-प्राण्। प्राणौ। प्राणः। हे प्राण्। ( अनः ) पदान्ते वर्तमानस्यापि अनो नस्य णत्वं स्यात् । अर्धौ इति विशेषणान्नलोपो न शंकनीयः। इण् गतौ । ह्रस्वस्य पिति कृति तुक् । प्रातरेतीति-प्रातरित्वा । ( वनिपि जमस्याऽऽत्वं वाच्यम् ) जनी प्रादुर्भावे। विजायतेऽसौ विजावा। केवलेभ्योऽपि वनिप्। ओणृ अपनयने। ओणतीति-अवावा। अवावा नौ। ( ङपि वनो नस्य रो वाच्यः ) ( व्रण ईप् ) ओणति सा अवावरी। पारं पश्यतीति-पारदृश्वा। पारं पश्यति सा पारदृश्वरी केवलेभ्योऽपि क्वनिप्। षुञ् अभिषवे। पूङ् प्राणिगर्भविमोचने। सुनोतीति-सुत्वा। तुक्। धेट् पाने। धयतीति-धीवा। गै शब्दे। गायतीति-गीवा। जहातीति हीवा। पीवा।

सूत्रम् ( स्थामी ) स्था ६-३ ( आतो धातोर्लोपः ) स्वर० ( मोनु० ) ई१-१ सांकेतिकम्। अथवा स्थाम् ६-३ इ १-२ ई १-१ त्रिपदम्। (अव्ययाद्विभक्तेर्लुक्। इश्च ईश्च ई स्था। पा पाने। गा मा हादीनां ईकारो भवति क्विप्प्रत्ययव्यतिरिक्ते किति परे। स्थादीनामाकारस्य इकार ईकारश्च भवति क्वचित्प्रयोगानुसारेण ह्रस्व इकारः। यथास्थितम्। सहितम्। मितम् । प्रमितम्। दो अवखंडने । दितम्। पोतकर्मणि। अवमितम् शो तनूकरणे। निशितमित्यादौ क्वचिद्दीर्घः। पा पाने। पा। सुपूर्वः सुष्ठुपिबतीति विग्रहे। ( आतो मनिप् ) इत्यादिना क्वनिप् प्रत्ययः। कित्त्वादाकारस्य ईकारः। पा इत्यस्य पी सुपीवन् १-१ ( नोपधायाः। हसेपः० । नाम्नो नो० ) सुपीवा इति क्वनिबंतः। डुदाञ् दाने। भूरि पूर्वः भूरि प्रचुरम्। स्वर्णं वा ददातीति भूरिदावा। वनिप् प्र० कित्त्वाभावात्। स्थामी इतीकारो न। राजन्शब्दवत् प्रक्रिया।

विद्यते मनो यस्यासौ अमनाः । न अमनाः अनमनाः । अनमनाः अमनाः संपद्यमानस्तथा भाव इति–अमनीभावः। तथा सुमनीभावः। सुचेतीभावः महीकरोति। अरूकरोति। चक्षूकरोति ( डाच् क्वचिद्वक्तव्यः ) अभूततद्भावेऽर्थे क्वचित् डाच् प्रत्ययो भवति। अदुःखं दुःखं संपद्यते तत् करोतीति-दुःखाकरोति। तथा–भद्राकरोति।

सूत्रम् ( च्वौ सलोपश्च ) च्विप्रत्यये परे अरुर्मनश्चक्षुश्चेतोरहोरजसां सकारस्य लोपो भवति। सलोपे च कृते पूर्वस्य च दीर्घः। अकारस्य ईकारः। स्थिरस्य मनसः अमनस्त्वेन भवनम् अमनीभावः। अरूकरोति, चक्षूकरोति, चेतीकरोति, विरहीकरोति, विरजीकरोति। भू मनसपूर्वः। घञ्भावे। अत्र च्विप्रत्यये कृते च्वौ सलोपश्चेति सलोपे कृते अकारस्य च ईकारः। एवं अपरिखा परिखा कृता परिखीकृता कृ–क्तम०। परिखापूर्वः। च्विम०। च्वौ दीर्घः। ईचास्येति अवर्णस्य ईकारः। वेरिति विलोपः १–१ ( स्त्रो० ) क्वचित्प्रयोगांतरे कृभ्वस्तियोगे च्व्यर्थे नाम्नो डाच् प्रत्ययो भवति। डकारष्टिलोपार्थः। चकारः प्रत्ययभेदज्ञापनार्थः। अदुःखिनं दुःखिनं करोतीति दुःखाकरोति। सिद्धमेव दुःखिनपूर्वः। डाच्। टिलोपः। 'स्वर०'। एवं सुखाकरोति। सपत्राकरोति। प्रियाकरोति। मुण्डने। भद्राकरणम्।

( आतो मनिप्क्वनिब्वनिपः ) आदौ नाम्नि च प्रयुज्यमाने आकारान्ताद्धातोर्मनिप् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति। सुष्ठु ददातीति–सुदामा। राजन्शब्दवद्रूपम्। ( खसे चपा झसानाम् ) अश्वे तिष्ठतीति-अश्वत्थामा।

सूत्रम् ( आतो मनिप्क्वनिप्वनिपः ) आतः ६–१ 'स्वर०'। ( स्त्रो० ) मनिप् च क्वनिप् च वनिप् च मनिप्क्वनिप्वनिपः १–३। 'स्वर०'। ( स्त्रो० )। आकारांताद्धातोर्मनिप् क्वनिप् वनिप् एते त्रयः प्रत्यया भवंति कर्तरि। पकारः पित्कार्यार्थः इकार उच्चारणार्थः क्वनिप् इत्यत्र ककारः कित्कार्यार्थः। डुदाञ् दाने। दा सुपूर्वः। सुष्ठु ददातीति सुदामा। मनिप् प्र०। सुदामन् १–१ ( नोपधायाः। हसेपः। नाम्नो नो लो० ) राजन्शब्दवत्। साधनार्थः।

( स्थामी ) इश्च ईश्च ई। दासोमास्थां ह्रस्व इकारो भवति। धागैहाक्पिबतीनां दीर्घ ईकारो भवति तकारादौ किति हसे।

सुष्ठु श्रीर्यस्यासौ–सुश्रीः। श्रयन्ते जना यामिति–श्रीः। (नहिवृतिव्यधिवृषिरुचिसहितनिषु क्विवन्तेषु पूर्वपदस्योपसर्गस्यान्ते दीर्घो वाच्यः) णह् बन्धने (आदेः ष्णः स्नः। नहो धः) उप समीपे नह्यतीति-उपानत्। नितरां वर्ततेऽसौ नीवृत्। व्यध ताडने (ग्रहां क्ङिति च) मर्माणि विध्यतीति मर्मावित्। वृष वृष्टौ। प्रकर्षेण वर्षतीति–प्रावृट्। रुच-दीप्तौ। नितरां रोचतेऽसौ नीरुक् (गमयमनमहनतनादीनां क्विपि अमस्य लोपो वाच्यः क्यपि वा) तुक्। परितः तनोतीति-परितत्। कटं चिकीर्षतीति कटचिकीः। चिकीर्षतेः क्विप् (यतः) इत्यकारलोपः (दोषाम्) इति षस्य रेफः (रिलोपो दीर्घश्च) इति मध्यमरेफस्य लोपः। न तु संयोगान्तस्य लोपः। रसे पदान्ते चेति चकारात् (रात्सस्य। सोर्विसर्गः) कटचिकीर्षौ। कटचिकीर्षः। वह् प्रापणे (यजां यवराणाम्) अनो वहतीति–अनड्वान् (क्विवन्ते वह्यनसोः डान्तादेशो वाच्यः) अनड्वाहौ। अनड्वाहः। राजृ दीप्तौ (क्विवन्ते राजतौ परे समो मस्यानुस्वाराभावो वाच्यः) तेन सम्यक् राजतेऽसौ सम्राट्। ध्यै चिन्तायाम् (ध्यायतेः क्विपि संप्रसारणं दीर्घता च वक्तव्या) सुष्ठु ध्यायतीति सुधीः (द्युतिगमिजुहोतीनां क्विपि क्वचित् द्वित्वं वाच्यम्) हसादिशेषाभावः। (द्योततेः क्वचित्पूर्वस्य क्विपि संप्रसारणं वाच्यम्) द्योततेऽसौ दिद्युत्। गच्छति उत्पत्तिस्थितिलयान् प्राप्नोतीति–जगत् (जुहोतेर्दीर्घश्च) जुहोत्यनया सा जुहूः।

सूत्रम् (वचीति) वच् प्रच्छ स्तु कट प्रुङ् जु श्रीणां दीर्घता भवति चकारात्। संप्रसारणाभावः। इति स्वरस्य दीर्घः। श्रिञ् सेवायां सुपूर्वः सुष्ठु श्रयतीति विग्रहे। क्विप् लोपः। सुश्रीः १–१ स्वो०। प्रच्छ तत्त्वपूर्वः। क्विप् प्र०। प्रच्छादेरिति दीर्घः

( क्विप् ) उपपदे सति असति च सर्वधातुभ्यः क्विप् प्रत्ययो भवति। क्विपः सर्वापहारित्वाल्लोपः । कपावितौ । ( वेः )

सूत्रम् ( क्विप् ) क्विप् १–१ । ( हसेपः० ) एकपदम् । सर्वधातुभ्यः क्विप् प्रत्ययो भवति । ककारो गुणप्रतिषेधार्थः तुग्विधानार्थश्च । अन्ये तु प्रत्यया उदाहरणार्थानुसारेण यथायोग्यं धातुभ्यः प्रयोज्याः । क्विप् प्रत्ययस्तु सर्वधातुभ्यो भवतीत्यर्थः । कृ कर्मन् पूर्वः । कर्म करोतीति विग्रहे क्वि प्र० वि ।

( ह्रस्वस्य पिति कृति तुक् ) ह्रस्वस्य पिति कृति परे तुगागमो भवति । कृति तुक् । कर्म करोतीति–कर्मकृत् । अग्निं चिनोतीति–अग्निचित् । देवान् स्तौतीति–देवस्तुत् । सोमं पिवतीति–सोमपाः । सर्वं पश्यतीति–सर्वदृक् । ( दिशाम् ) इति कुत्वम् । दिश् अतिसर्जने । दिशतीति–दिक् । ( क्विप् )

सूत्रम् ( ह्रस्वस्य पिति कृति तुक् ) ह्रस्व ६–१ ( ङस् स्य ) पिति ७–१ स्वर०। कृति० ७–१ तुक् १–१ ( हसेपः ) पिति कृति परे ह्रस्वस्य स्वरस्य तुगागमो भवति । अनेन धातोः पुरतस्तुगागमः । ( क्विपः सर्वापहारीलोपः ) इति क्विप् लोपः क्विप् १–१ ( हसेपः ) कर्मन् इत्यत्र ( नाम्नो० ) कर्मकृत् । एवं अग्निं चिनोतीति अग्निचित् । चिञ् चयने । देवान् स्तौति देवस्तुत् । ष्टुञ् स्तुतौ । ( आदेः ष्णः स्नः ) निमित्ताभावे इति टस्य तः । देवपूर्वः । क्विप् प्रत्ययः । तुगागमः ( क्विपः सर्वापहारीलोपः ) पा पाने । सोमपूर्वः क्विप्प्र० । सोमं पिवतीति–सोमपा अत्र दीर्घत्वान्न तुगागमः १–१ ( स्रो० ) दृशिर् प्रेक्षणे । दृश् सर्वपूर्वः । सर्वं पश्यतीति सर्वदृक् । क्विप् प्र० । ( क्विपः सर्वापहारीलोपः ) दिशामिति शस्य कः १–१ ( हसेपः ) सर्वदृक् । सर्वदृशौ । इत्यादि ।

( क्विपि वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घः संप्रसारणाभावश्च वक्तव्यः ) वक्त्यनया सा वाक् । वा उच्यते अनया सा वाक् । प्रच्छ ज्ञीप्सायाम् । तत्त्वपूर्वः । तत्त्वं पृच्छतीति–तत्त्वप्राट् । ( छशषराजादेः षः । ( छ्वोः शऊ वाच्यौ क्विति ङिति झसे परेऽनुनासिके क्वौ च ) तेन तत्त्वप्राछौ । तत्त्वप्राछः । ष्टुञ् स्तुतौ ॥ आयतं स्तौतीति–आयतस्तूः । प्रुङ् गतौ । कटं प्रवतेऽसौ कटप्रूः । जु गतौ । जवतेऽसौ–जूः । सुष्ठु श्रयतीति–सुश्रीः । वा

सुष्ठु श्रीर्यस्यासौ–सुश्रीः। श्रयन्ते जना यामिति–श्रीः। (नहि वृतिव्यधिवृषिरुचिसहितनिषु क्विवन्तेषु पूर्वपदस्योपसर्गस्यान्ते दीर्घो वाच्यः) णह् वन्धने (आदेः ष्णः स्नः। नहो धः) उप समीपे नह्यतीति-उपानत्। नितरां वर्ततेऽसौ नीवृत्। व्यथ ताडने (ग्रहां क्ङिति च) मर्माणि विध्यतीति मर्मावित्। वृष वृष्टौ। प्रकर्षेण वर्षतीति–प्रावृट्। रुच-दीप्तौ। नितरां रोचतेऽसौ नीरुक् (गमयमनमहन्लनादीनां क्विपि अमस्य लोपो वाच्यः क्यपि वा) तुक्। परितः तनोतीति-परितत्। कटं चिकीर्षतीति कटचिकीः। चिकीर्षतेः क्विप् (यतः) इत्यकारलोपः (दोषाम्) इति षस्य रेफः (रिलोपो दीर्घश्च) इति मध्यमरेफस्य लोपः। न तु संयोगान्तस्य लोपः। रसे पदान्ते चेति चकारात् (रात्सस्य। स्नोर्विसर्गः) कटचिकीर्षौ। कटचिकीर्षः। वह् प्रापणे (यजां यवराणाम्) अनो वहतीति–अनड्वान् (क्विवन्ते वह्यनसोः डान्तादेशो वाच्यः) अनड्वाहौ। अनड्वाहः। राजृ दीप्तौ (क्विवन्ते राजतौ परे समो मस्यानुस्वाराभावो वाच्यः) तेन सम्यक् राजतेऽसौ सम्राट्। ध्यै चिन्तायाम् (ध्यायतेः क्विपि संप्रसारणं दीर्घता च वक्तव्या) सुष्ठु ध्यायतीति सुधीः (द्युतिगमिजुहोतीनां क्विपि क्वचित् द्वित्वं वाच्यम्) हसादिशेपाभावः। (द्योततेः क्वचित्पूर्वस्य क्विपि संप्रसारणं वाच्यम्) द्योततेऽसौ दिद्युत्। गच्छति उत्पत्तिस्थितिलयान् प्राप्नोतीति–जगत् (जुहोतेर्दीर्घश्च) जुहोत्यनया सा जुहूः।

सूत्रम् (वचीति) वच् प्रच्छ स्नु कट प्रुङ्ङ जु श्रीणां दीर्घता भवति चकारात्। संप्रसारणाभावः। इति स्वरस्य दीर्घः। श्रिञ् सेवायां सुपूर्वः सुष्ठु श्रयतीति विग्रहे। क्विप् लोपः। सुश्रीः १–१ सो०। प्रच्छ तत्त्वपूर्वः। क्विप् प्र०। प्रच्छादेरिति दीर्घः

१–१ ( सयोगातस्य लोपः । छशषराजादेः षः । षोडः । हसेपः० । वावसाने ) तत्त्वं पृच्छतीति तत्त्वप्राट्–तत्त्वप्राड् । तत्त्वप्राच्छौ । तत्त्वप्राच्छः। णह बंधने । नह उपपूर्वः। उपनह्यते पादयोरिति उपानत् । क्विप्प्र० । क्विपि परे नहेर्धातोः पूर्वस्य उपसर्गस्य दीर्घता च वक्तव्या क्विप्परे इति पाठे क्विप् परो यस्मात् स क्विप्परः ईदृशे नहिधातौ परे उपसर्गस्य दीर्घता च वक्तव्या १–१ नहो धः ।हस्य धः (हसेपः। वावसाने) उपानत् उपानद् । उपानहौ । इत्यादि । हसातस्त्रीलिंगे चकारात् प्रावृट् । प्रवर्षतीति प्रावृट् । मर्माविद् । नीरुक् इत्यादावपि दीर्घता नहीत्युपलक्षणात् । नहिवृषिवृति व्यधिसहितनयः गृह्यते । कृ कट पूर्वः । कटं चिकीर्षतीति विग्रहे इच्छायामिति स प्रत्ययः ( ऋत इर् ) किर् । द्वित्वम् ( पूर्वस्य हसादिः शेषः ) रलोपः । ( कुहोश्चुः ) चिकिर् । ( य्वोर्वि हसे ) इति दीर्घः ( किला०)कटं चिकीर्ष अग्रे क्विप् ( यतः) इति सप्रत्यस्य अकारस्य लोपः ( क्विपः सर्वापहारी लोपः ) १–१ (संयोगातस्य लोपः । हसेपः० । स्रो० ) कटचिकीः । कटचिकीर्षौ । कटचिकीर्षः। केचित्तु कटचिकीर्ष क्विप् यतः । इत्यकारलोपः ( दोषा० । रिलोपो दीर्घश्च । स्रो०) एव साधयति । ध्यै चितायाम् । ध्यै सुपूर्वः । सुष्ठु ध्यायतीति–सुधीः । क्विप् प्र० । ध्यायते ध्यै चितायामित्यस्य धातोः क्विपि परे सम्प्रसारणं भवति । दीर्घस्य दीर्घ ईकारः । ध्यै इत्यस्य धी । क्विप्लोपः १–१ स्रो० । सुध्रीः । शब्दवत् ।

( दृशेष्टक्सकौ चोपमाने कार्ये ) दृशेर्धातोः सर्वादिषु टक् सकौ प्रत्ययौ भवतः उपमाने कार्ये सति । चकारात् क्विप् वक्तव्यः ।

सूत्रम् ( दृशेष्टक्सकौ चोपमाने कार्ये ) दृश् ५–१ ङिति । ङस्य । स्रो० । टक् च सक् च १–२ 'स्वर०' । पश्चाद्विसर्जनीयस्य सः ( ष्टुभिः ष्टुः) च-अव्य०। उपमान ७–१ अ इ ए । सिद्धम् । दृशेर्धातोः टक्सकौ प्रत्ययौ भवतः । चकारात् तृतीयरूपे क्विप् प्रत्ययोऽपि भवति कार्ये कर्मोक्तौ उपमाने वाच्ये सति । दृश् अन्य इव दृश्यते इति विग्रहे एकत्र टक् प्र० । टकारोऽनुबंधार्थः । ककारो गुणनिषेधार्थः ।

( आ सर्वादेः ) एतेषु प्रत्ययेषु परेषु सर्वादेः पूर्वस्य टेरात्वं भवति । दृशिर् प्रेक्षणे । अन्य इव दृश्यतेऽसौ अन्यादृशः । ( छशषराजादेः षः । षढोः कः सेः । किलात ) अन्यादृक्षः । अन्यादृक् । स इव दृश्यतेऽसौ तादृशः । तादृक्षः । तादृक् । य इव दृश्यतेऽसौ–यादृशः । यादृक्षः–यादृक् । एष इव दृश्यतेऽसौ-एतादृशः । एतादृक्षः–एतादृक् ।

सूत्रम् ( आ सर्वादेः) आ १–१ सांके० सर्वादि ६–१ ङिति–ङस्य। एतेषु टक् सक् क्विप् प्रत्यये परे सर्वादेः सर्वादिशब्दगणस्य पूर्वपदस्य धातोरादौ वर्तमानस्य सतः टेः आत्वं भवति । 'स्वर' १–१ ( स्रो० ) अन्यादृशः। द्वितीये सक् प्र० । टेरात्वम् । दिशामिति शस्य कः । ( किला० । कषसंयोगे क्षः १–१ स्रो० ) अन्यादृक्षः । तृतीयरूपे क्विप्प्र० । टेरात्वम् । क्विप्लोपः १–१ । ( दिशां । हसेपः० ) अन्यादृक् । टित्वादीप् अन्यादृशी । एवं स इव दृश्यते इति तादृशः–तादृक्षः–तादृक् । तत्पूर्वः ।

( किमिदमः कीशईशौ ) किम्शब्दस्य इदम्शब्दस्य च कीश् ईश् इत्येतावादेशौ भवतः टकारादिषु प्रत्ययेषु परे । शकारः सर्वादेशार्थः । क इव दृश्यतेऽसौ–कीदृशः–कीदृक्षः। कीदृक्–। अयमिव दृश्यतेऽसौ ईदृशः । ईदृक्षः–ईदृक् । ईदृशी वार्ता । सर्वादित्वाट्टेरात्वम् । ( भवदादिषु दृशेष्टकारादयः । पूर्वस्य टेर्दीर्घता च वक्तव्या ) भवानिव दृश्यतेऽसौ भवादृशः–भवादृक्षः–भवादृक् । चकारात् । एतेषु प्रत्ययेषु परेषु समानशब्दस्य सो वाच्यः । समान इव दृश्यतेऽसौ सदृशः–सदृक्षः–सदृक् । ( अदसोऽमू आदेशः ) अदस्–शब्दस्य टगादिषु सत्सु अमू आदेशो भवति किति परे। असाविव दृश्यतेऽसौ अमूदृशः । अमूदृक्षः–अमूदृक्–अमूदृग् । प्रत्ययोत्तरपदयोः परतो युष्मदस्मदोरेकत्वे त्वत् मत् इत्येतावादेशौ भवतः । त्वमिव दृश्यतेऽसौ–त्वादृशः । त्वादृक्षः–त्वादृक्–त्वादृग् । अहमिवदृश्यतेऽसौ मादृशः–मादृक्षः । मादृक्–मादृग् । ( त्यदादेष्टेः स्यादौ ) इत्यकारः । यूयमिव दृश्यतेऽसौ–युष्मादृशः–युष्मादृक्षः–युष्मादृक् । वयमिव दृश्यतेऽसौ–अस्मादृशः । अस्मादृक्षः–अस्मादृक् । टकारानुबन्धत्वादीप् । तादृशी । यादृशी । एतादृशी । त्वादृशी । मादृशी । अन्यादृशी। युष्मादृशी । अस्मादृशी । भवादृशी । इत्यादि ॥

सूत्रम् ( किमिदमः कीशईशौ ) किं च इदं च किमिदम् तस्य ६-१ स्वर० । ( स्रो० ) की च ई च कीः कीपूर्वः शकारः कीश् शकारोऽनुबन्धः उभयत्रापि योज्यते । कीश् १-१ ( हसेपः० ) केचित्तु 'किमिदमः कीशीश्' एवं सूत्रं पठति । एतेषु प्रत्ययेषु परेषु दृशिधातोः पूर्वयोः किम् इदम् शब्दयोः कीश् ईश् इत्येतावादेशौ भवतः यथासंख्येन । किम्शब्दस्य कीश् इदम् शब्दस्य ईश् । शकारः सर्वादेशार्थः आदेशभेदज्ञापनार्थः । दृश् किम्पूर्वः । क्रमेण टक्सक्क्विप्प्रत्ययाः । क इव दृश्यते इति विग्रहे किमः की आदेशः । कीदृशः- कीदृक्षः-कीदृक् । शेषं प्राग्वत् । एवम् इदम् पूर्वः इदमः ई आदेशः । अयमिव दृश्यते ईदृशः-ईदृक्षः-ईदृक् । भवदादिषु प्राक्पदेषु सत्सु इवार्थे उपमानेऽर्थे दृशेर्धातोः टक्सक्क्विप्प्रत्ययाः भवति पूर्वपदस्य देः आत्व भवतीत्यर्थः । भवानिव दृश्यते भवादृशः-भवादृक्षः-भवादृक् । अहमिव दृश्यते इति मादृशः-मादृक्षः-मादृक् । दृश् अस्मद्पूर्वः । ( त्वन्मदेकत्वे ) इति मदादेशे कृते पश्चादेराकारः । एवं त्वमिव दृश्यते इति त्वादृशः । त्वादृक्षः । त्वादृक् । चकारात् समान इत्यस्य स आदेशः । समान इव दृश्यते इति सदृशः । सदृक्षः । सदृक् । वयमिव दृश्यते इति अस्मादृशः । अस्मादृक्षः । यूयमिव दृश्यते इति युष्मादृशः ॥

( णिनिरतीते ) धातोरतीते काले शीलेऽर्थे च णिनिः प्रत्ययो भवति ।

सूत्रम् ( णिनिरतीते ) णिनिः १-१ ( स्रो० ) अतीते ७-१ अ इ ए । पश्चान्नामिनो रः.। 'स्वर०'धातोः अतीते गते काले णिनिप्रत्ययो भवति शीले स्वभावेऽर्थे। णिनिरित्यत्र णकारो वृद्ध्यर्थः । इकारः प्रत्ययभेदज्ञापनार्थः ।

( करणे उपपदे यजेर्णिनिर्वाच्यः । इनांशौ सौ ) अग्निष्टोमेन इयाज इति वा अग्निष्टोमेन अयाक्षीत् इति अग्निष्टोमयाजी । वा अग्निष्टोमं यष्टुं शीलं यस्य सः अग्निष्टोमयाजी । श्राद्धं भुंक्ते इत्येवंशीलः श्राद्धभोजी । अर्धं भुंक्ते इत्येवंशीलः अर्धभोजी । सुखभोजी । उष्णं भुंक्ते इत्येवंशीलः वा भुक्तवान् इति-उष्णभोजी । ( हनो घत् । हन्तेर्निन्दायां णिनिर्वाच्यः ) पितरं जघान वा अवधीत् इत्येवंशीलः पितृघाती । दण्डिन्शब्दवद्रूपं ज्ञेयम् । ( कर्तर्युपमाने णिनिर्वा-

च्यः') अभ्र इव पततीति–अभ्रपाती । मत्त इव करोतीति–मत्तकारी । हंस इव गच्छतीति–हंसगामी। स्त्री चेत् हंसगामिनी । ईप् ।

( कर० ) यज् पूजा० यज् अग्निष्टोमपूर्वः । अग्निष्टोमं इष्टवान् यष्टुं शीलमस्येति वा अग्निष्टोमयाजी । णिनिप्र० ।इन् णित्वाद्वृद्धिः 'स्वर०' ( इनां शौ सौ । हसेपः०। नाम्नो नो०) दंडिन् शब्दवत् ।

( क्विप्वनिप्डाः ) धातोरतीते काले शीलेऽर्थे च क्विप् वनिप् डा इत्येते प्रत्यया भवन्ति । क्विप् । वृत्र ब्रह्म भ्रूण. एतत्पूर्वकादेव हन्तेः क्विप् स्यात्। अतीते एव । वृत्रं हतवानिति वृत्रहा । ब्रह्महा । भ्रूणहा। अन्यत्र शत्रुघातीत्यत्र णिनिः । शत्रुं हन्तीत्येवंशीलः शत्रुघाती । सुष्ठु करोति स्मासौ सुकृत् । कर्मकृत् । पापकृत् । पुण्यकृत् । शास्त्रकृत् । सोमं सुनोति–स्मासौ सोमसुत्। अग्निं चिनोति स्मासौ अग्निचित् । इत्येते-क्विबन्ताः । वनिप् । युधि संप्रहारे । राजानं युध्यते स्मासौ राजयुध्वा । राजानं करोतीत्येवंशीलः राजकृत्वा । सह युध्यते स्माऽसौ । सहयुध्वा । सहकृत्वा । षुञ् प्राणिप्रसवे । वनिप् । तुक् । कित्त्वाद्गुणाभावः ।सुनोति स्मासौ सुतवान् इति सुत्वा । स्तुत्वा । यजति स्मासौ यज्वा । पारमद्राक्षीत् इति–पारदृश्वा । इत्येते क्वनिबन्ताः ॥ जनी प्रादुर्भावे ।

सूत्रम् ( क्विप्वनिप्डाः ) क्विप् च वनिप् च डश्च क्विप्वनिप्डाः १–३ सवर्णे० । स्रो०) वृत्तिः सुगमा । हन् हिंसागत्योः। हन् वृत्रपूर्वः वृत्रं वृत्रासुरं हतवान् इति विग्रहे क्विप्प्र० । ( क्विपः सर्वापहारी लोपः ) १–१ ( इनां शौ सौ । हसेपः । नाम्नो० ।) वृत्रहा । वृत्रहणौ । एवं ब्रह्महा । भ्रूणहा । पूर्वं क्विप्प्रत्ययो वनिप् प्रत्ययश्च वर्त्तमाने काले उक्तः । अत्र तु अतीते काले इति न पौनरुक्त्यम् । यज् वनिप् प्र० । वन् । 'स्वर०' । यज्वन् १–१ ( नोपधायाः । हसेपः। नाम्नो नो० ) इष्टवान् इति यज्वा । यज्वानौ ।

( सप्तम्यां जनेर्डः ) सप्तम्यां जनेर्धातोर्डः प्रत्ययो भवति अतीते काले । सरसि जायते स्म तत् सरसिजं पद्मम् । ( अलुक् क्वचित् ) सरसि जातं सरोजम् । संस्कारजः । प्रजा । अजः । द्विजः । परितः खाता इति परिखा । प्रकर्षेण जायते स्मेति प्रजा । सर्वं गतवान् इति सर्वगः । वा सर्वं गच्छति स्मासौ सर्वगः । गै शब्दे । साम गीतवान् गायति स्मासौ सामगः ।

( जनी प्रादुर्भावे ) जन् सरसिपूर्वः । डप्र० । अडित्त्वाट्टिलोपः । 'स्वर०' । सरसि जातं सरसिजम् । अलुक् क्वचिदिति सप्तम्या अलुक् । नपुंसके कुलशब्दवत् । ज्ञा अवबोधने । ज्ञा सर्वपूर्वः । डप्र० । टिलोपः । 'स्वर०' १–१ ( स्रो० ) । सर्वं ज्ञातवान् इति सर्वज्ञः । गम्लृ गतौ । गम् सामन्पूर्वः । साम वेद गतवान् ज्ञातवान् गीतवानिति विग्रहे ये गत्यर्थास्ते ज्ञानार्था इति डप्र० । टिलोपः । 'स्वर०' ( नाम्नो० ) सामगः । एव सर्वन गतवान् सर्वगः ।

( क्तक्तवतू ) धातोरतीते काले क्तक्तवतू प्रत्ययौ भवतः । भावकार्ययोः क्तः । क्तवतुः कर्तर्येव । कृतो घटः । कृतवान् घटम् । उकारो नुम्विधानार्थः । आगतं स्थितं देवदत्तेन । भावे नपुंसकान्तम् ।

सूत्रम् ( क्तक्तवतू ) क्तश्च क्तवतुश्च क्तक्तवतू १–२ ( औ यू । सवर्णे० ) धातोः अतीते गते काले क्तक्तवतु इत्येतौ प्रत्ययौ भवतः । तत्र क्तप्रत्ययो भावे कर्मणि च भवति क्तवतुश्च कर्तरि । ककारो गुणप्रतिषेधार्थः । अकारि इति-कृतः कृ क्तप्र० । त १–१ सो० । कृतः कटः कारुकेण । अत्र कर्मणि क्तः । क्तवतुः उकारो नुम्विधानार्थः । तवत् १–१ ( नितो नुम् । अत्वसोः सौ ) दीर्घः ( हसेपः० । संयोगान्तस्य लोपः ) चकार इति कृतवान् ( स्त्रियः ) स्त्रीचेत् कृतवती । अत्र कर्तरि क्तवतुः । गम् क्त त लोपस्त्वनुदात्ततनामिति मलोपः । देवदत्तेन आगतम् । अत्र भावे क्तः । नपुंसकलिंगे भावे विहितस्य क्तप्रत्ययस्य नपुंसकलिंगता । ष्ठा । ( आदेः ष्णः स्नः ) स्था । क्त प्र० । स्थामीति ह्रस्व इकारः । देवदत्तेन स्थितम् ।

( गत्यर्थादकर्मकाच्च कर्तरि क्तः ) गत्यर्थादकर्मकाच्च धातोः कर्तरि क्तः प्रत्ययो भवति चाद्भावकर्मणोः । स्थितः । शान्तः । दान्तः ।

सूत्रम् (गत्यर्थादकर्मकात्क्तिर्तरि क्तः) गतिरर्थो यस्य स गत्यर्थस्तस्मात् ५-१ (ङसिरत्। सवर्णं०) न विद्यते कर्मेत्यकर्मकः तस्मात् ५-१ (ङसिरत्) मध्ये चपा० 'स्वर०'। च अव्य०। पश्चात्।(स्तोश्चुभि०)। स्वर०। कर्तृ७-१ ङीइत्यर्। 'स्वर' क्त १-१ (स्रो०) गत्यर्थो धातुरट गतावित्यादिः अकर्मकश्च लज्जासत्तादिः एवं द्विविधादपि धातोः कर्त्तरि क्तप्रत्ययो भवति। उदा०। अट् क्तप्र०। कृत इतीडागमः। अटित १-१ (स्रो०) अत्र गत्यर्थत्वात् क्तप्र०।ष्ठा स्था क्त। स्थामीति इकारः।स्थितः। अत्र अकर्मकत्वात् क्तप्र०। शम दम उपशमे। शम् क्त। जमान्तस्य क्ङितीति। (नश्चा०)। शांतः। एवं दम्-दांतः। ष्टम्-यांतः। अकर्मकत्वात्। कर्त्तरि क्तः। मदेर्न दीर्घता। तेन मत्त इति रूपम्।

## (क्तो वा सेट्) उदुपधात्सेट् क्तः प्रत्ययो वा किद्भवति। द्युत द्योतने। प्रद्योतितः। प्रद्युतितः। रोदितः। रुदितः। मोपितः। मुपितः। गृहीतः॥

सूत्रम् (क्तो वा सेट्) क्तः १-१ स्रो०। वा अव्य० (हवे। उओ) सेट् सह इटा वर्त्तमानः सेट् १-१ (हसेपः) इट्सहितः क्तप्रत्ययो वा किद्भवति। कित्त्वे सत्यपि विकल्पेन कित्त्वं कल्पनीयम्। कित्वाद् गुणप्रतिषेधः। यत्र कित्त्वं न तत्र गुणो भवति। द्युत दीप्तौ। द्युत् २ प्रपूर्वः। कर्त्तरि क्तः। (कृतः) इतीडागमः एकत्र। कित्त्वाभावस्तत्र गुणः। (उपधाया लघोः) कित्त्वपक्षे गुणाभावः। प्रद्योतितः। प्रद्युतितः। रुदिर् अश्रुविमोचने। रोदितः। रुदितः। मुष् स्तेये। मोपितः। मुपितः। एवं नोदितः। नुदितः। वेदितः। विदितः। ग्रह (क्तक्तवतू) इति क्तप्र०। ग्रहां क्ङित चेति संप्रसारणम्। कृत इतीडागमः। ईटो ग्रहामिति इकारस्य ईकारः स्वर० १-१ (स्रो०) गृहीतः।

## (वृतः) उवर्णान्तादृवर्णान्तात्श्वि श्रिञश्च धातोः क्तप्रत्ययस्येड् न भवति। वृतः। मृतः। भूतः। श्रितः।

सूत्रम् (वृतः) वृतः ६-१ स्वर०। स्रो०। एकपदम्। (वुः से) इति सूत्रात् वुरित्यनुवर्त्तते क्वापि वृ। श्रितः कितः इति सूत्रं दृश्यते। उवर्णान्तात् ऋवर्णान्तात् श्विश्रिञश्च धातोरिति वचनात् कृत इति सूत्रेण प्राप्तस्य इटो निषेधः। एवं नुतः मृतः।

## (आदीदितः) आदित ईदितश्च परस्य क्तस्येड् न भवति।

सूत्रम् (आदीदितः) आच्च ईच्च आदीतौ तौ इतौ यस्य स आदीदित् तस्मात् ५-१'स्वर०'। (स्रो०) आकारानुबंधात् ईकारानुबंधाच्च धातोः परस्य कितः प्रत्ययस्य ईडागमो न भवति।

( ञीतां तक् वर्तमानेऽपि ) ञीतां धातूनां मतिबुद्धिपूजार्थानां च वर्तमानेऽपि तक्प्रत्ययो भवति । अपिशब्दाद्भावकर्मणोश्च ।

ञीतां० ) ञिः इत् येषां ते ञीतस्तेषां धातूनां वर्त्तमाने काले अर्थेऽपि शब्दादतीतेऽप्यर्थे तक् प्रत्ययो भवति । ञिमिदा धातुः स्नेहने प्रक्षणे । ञिकार आकारश्च अनुबंधौ । मिद् ञ्यनुबंधत्वात् तक् प्र० । आकारानुबंधत्वात् इट् निषेधः । मिद त इति स्थिते ।

( दस्तस्य नो दश्च ) दकारादुत्तरस्य कितस्तस्य नत्वं भवति । चकाराद्दकारस्य नकारो भवति । ञिमिदा स्नेहने । मिन्नमन्नं तैलेन वर्तते । ञिष्विदा गात्रप्रक्षरणे । आयासेन प्रस्विन्नः । ञिक्ष्विदा संचूर्णने । क्ष्विण्णः ।

सूत्रम् ( दस्त० ) दः ५–१ 'स्वर०' । स्रो० । तस्य ६–१ ( ङस् स्य ) पश्चाद्विसर्जनीयस्य सः । नः १–१ स्रो० । दः ६–१ स्वर० । 'स्रो०' च अव्य० । दकारांताद्धातोः परस्य कितस्तकारस्य नकारो भवति धातुसंबंधिनो दकारस्यापि नकार इति तक्संबंधिनस्तस्य नः दस्य च नः । 'स्वर०' १–१ अतोऽम् । नपुंसकांतम् । अन्नं तैलेन मिन्नं स्निग्धं वर्त्तते इत्युदाहरणम् । एवं ञिष्विदा धातुः गात्रप्रक्षरणे प्रस्वेदने । ष्विद् । ( आदेः ष्णः स्नः ) स्विद् ञ्यनुबंधत्वात्तक् । ( आदीदितः ) इति आकारानुबंधत्वादिड्निषेधः । दस्तस्येति दकारतकारयोर्नकारः । प्रपूर्वः । आयासेन खेदेन प्रस्विन्नः । ञिक्ष्विदा संचूर्णने पेषणे । क्ष्विद्–तक्प्र० । दकारतकारयोर्नकारः ( पर्नां० ) अवकुप्वन्तरेपीति धातोर्नस्य णत्वे । ष्टुभिः ष्टुरित्युत्तरनकारस्य णकारः । 'स्वर०' क्ष्विण्णः । चूर्णित इत्यर्थः । मदी हर्षे । इत्यस्य तु दकारतकारयोर्नकारो न । तेन मत्तः इति रूपम् ।

( अदो जघ्धः ) जग्धम् ।

सूत्रम् ( अदो० ) अद् भक्षणे इत्यस्य धातोर्जग्धुरित्ययमादेशो भवति तकारादौ किति परे । अद् तक्प्र० जघु आदेशः । ( तयोर्धः । झभे जबाः ) घस्य गः । 'स्वर०' १–१ ( अतोऽम् । अम्शसो० । मोनु० ) जग्धमन्नम् ।

( रः ) रेफादुत्तरस्य कितस्तकारस्य नत्वं भवति । कॄ विक्षेपे कॄ हिंसायाम् । ( ऋत इर् । व्योर्वि दसे ) विकीर्णम् । जॄष् झष् वयोहानौ । जीर्णम्, झीर्णं शरीरम् ।

सूत्रम् ( रः ) ५-१ 'स्वर०' । ( स्रो० ) । रेफात् रकारात् परस्य कितः तकारस्य नकारो भवति । उदा० । कॄ विक्षेपे । कृञ् हिंसायां वा । क्तम्० । त । ( ऋत इर् ।) इति सूत्रेण तस्य नः । विपूर्वः । ( य्वोर्वि हसे ) इति दीर्घः । ( रात्पो द्विः ) जलतुंबि० । विकीर्णं १-१ ( अतोऽम् ) जॄष्धातुः झॄष्धातुश्च वयोहानौ वार्द्धक्ये । षकारौ पित्कार्यार्थौ । जॄ क्तम्० । ( ऋत इर् ) रकारात्वात् । ( रः ) इति सूत्रेण तस्य नः ( य्वोर्वि हसे । पुर्नो णो० । रात्पोद्विः ) 'जल०' जीर्णं शरीरम् एवं झॄष् झीर्णम् ।

**( ल्वाद्योदितश्च ) ल्वादेरोदितश्च धातोस्तो नो भवति । लूनः । क्षि क्षये । क्षीणः । ग्लानः । म्लानः । हीनः ।**

सूत्रम् ( ल्वाद्योदितश्च ) लू आदिर्यस्य स ल्वादिः । ओकार इत् यस्य सः ओदित् । ल्वादिश्च ओदितश्च ल्वाद्योदित् तस्मात् ५-१ च अव्ययम् । ल्वादयो धातुपाठोक्ताः ओदितश्च ओहाक् त्यागे ओहाङ् गतौ ओप्यायी वृद्धौ इत्यादयस्तेभ्यः परस्य कितस्तकारस्य नकारो भवति । उदा० । लूञ् छेदने । लू ( क्तक्तवतू ) त । ( ल्वाद्योदित० ) इति तस्य नः १-१ ( स्रो० ) लूनः ॥ क्षि क्षये । क्षि क्तम्० । क्षयो दीर्घः कर्तरीत्यनेन दीर्घः । ल्वाद्यो० इति तस्य नः । पु० । क्षीणः । ग्लै हर्षक्षये । ग्लै-क्तम्० ( सन्ध्यक्षराणामा० ) इत्यनेन ग्ला । ( ल्वाद्यो० ) इति तस्य नः १-१ ग्लानः । एवं म्लै हर्षक्षये । म्लानः । ओहाक् त्यागे । हा क्तम्० । ( स्थामी ल्वाद्यो० ) इति तस्य नः हीनः । ओप्यायी वृद्धौ । प्याय् क्तम्० । ( प्यायः पी ) प्यायी इत्यस्य धातोः पी इत्यादेशो भवतीति प्या स्थाने पी । ( ल्वाद्यो० ) इति तस्य नः । पीनः । एवं दीनः । लीनः । उड्डीनः । मीनः । दूनः । मग्नः ।

**( दो दत्ति ) दा इत्यस्य दद्भवति किति तकि परे । दत्तः-दत्तवान् ।**

सूत्रम् ( दो दत्ति ) दो ६-१ आतो धातोरित्यालोपः । स्वर० । ( स्रो० ) दत् १-१ । हसेपः । तृ ७-१ स्वर० । डुदाञ् दाने इत्यस्य धातोस्तकारादौ किति परे दत् आदेशो भवति । दा क्त दत् आदेशः । 'स्वर०' । ( स्रो० ।) दत्तः । क्तवतुप्रत्ययो दत्तवान् भवच्छब्दवत् ।

**( स्वरात्तो वा ) स्वरादुत्तरस्य दा इत्यस्य तो वा भवति किति परे । प्रत्तः । प्रदत्तः । अवत्तम् । अवदत्तम् । नाम्यन्तोपसर्गस्य दीर्घो भवति । ( ददातेस्तो वाच्यः ) नितरां दीयते स्म तत् नीतम् । नीदत्तम् । पर्यासमन्ताद्भावेन दीयते स्म तत् परीत्तम् । परीदत्तम् ( धाञो हिः किति ते ) धीयते**

स्मासौ हितः । दधाति स्मासौ हितवान् । ( जहातेश्च किति ) जहातेर्धातोः किति प्रत्यये परे हिरादेशः स्यात् । तेन पूर्वं हित्वा । हीयते स्मासौ हितः । अहासीदिति हितवान् । ( यजां यवराणां संप्रसारणम् । छशषराजादेः षः ) इष्टम् । टुवप् बीजतंतुसंताने । उप्तं बीजम् । वह् प्रापणे । संप्रसारणम् । ( हो ढः ) ढत्वम् । ( तथोर्धः ) ष्टुत्वम् । ढि ढो लोपो० ) ऊढोऽनडुहा पंगुः । व्येञ् संवरणे । संवीतः । ह्वेञ् स्पर्धायां शब्दे च । आहूतः । वद व्यक्तायां वाचि । उदितः । उक्तः ।

सूत्रम् ( स्वरा० ) ६–२ ( दसिरत् । सवर्णे० ) त १–१ स्रो० । वा अव्ययम् । सस्वरात् उपसर्गात्परस्य दाधातोः त् इत्यादेशो वा भवति पक्षे वा दत् इत्यादेशो भवति तकारादौ किति परे । दा प्रपूर्वः । एकत्र त् एकत्र दत् क्तप्र० । प्रत्तम् । प्रदत्तम् । एवं अवपूर्वः । अवत्तम् । अवदत्तम् । चेति रूपद्वयम् । प्रादायि इति प्रत्तं प्रदत्तम् । एवम् उपात्तम् । उपादत्तम् । यज् देवपूजासंगति० यज् क्तप्र० । त । यजां यवराणामिति संप्रसारणम् । यकारस्य इकारः । छशषराजादेरिति षत्वम् । ( ष्टुभिः ष्टुः ) इष्टम् । क्तवतुप्रत्यये इष्टवान् । टुवप् धातुः बीजसंताने अन्नादिवपने इत्यर्थः । टुकारः द्वितोथुरिति कार्यार्थः । वप् क्तप्र० । यजामिति वस्य उः । 'स्वर०' १–१ । ( अतोऽम् ) उप्तं बीजं अवापि इत्यर्थः । वह् प्रापणे । वह क्तप्र० । यजामिति वस्य उः । ( हो ढः । तथोर्द्धः । ष्टुभिः ष्टुः । ढि ढो लोपो दीर्घश्च ) ढलोपः । उकारस्य ऊकारः १–१ । ( स्रो० ) ऊढः । अनडुहा वृषभेण पंगुः खञ्जः पुमान् ऊढः । व्येञ् संवरणे । व्ये संपूर्वः । क्तप्र० । कित्त्वात् यजामिति संप्रसारणम् । सस्वरस्य संप्रसारणं दीर्घे च दीर्घ इति व्ये इत्यस्य वी । संवीतः । ह्वेञ् स्पर्धायां शब्दे च आङ्पूर्वः । क्तप्र० । संप्रसार० । ह्वे इत्यस्य हु १–१ । ( स्रो० ) आहूतः । एवं आहूतवान् । आहूयते स्म इत्याहूतः । आजुहाव इत्याहूतवान् । वद् व्यक्तायां वाचि । वद क्तप्र० । ( कृत० ) इतीडागमः । कित्त्वात् संप्रसारणं वस्य उः १–१ । (अतोऽम्) उदितम् । वच क्तप्र० । संप्रसारणम् । चोः कुः । 'स्वर०' । उक्तः ।

( वसिक्षुधोरिट् ) वसिक्षुधोर्द्वयोर्धात्त्रोरिडागमो भवति क्तक्तवतो परे च । उषितः । क्षुधितः । सुप्तः ।

सूत्रम ( वसिक्षुधो० ) ६–२ इट् १–१ यद्यपि धातुपाठे वसिक्षुधौ एतौ द्वौ धातू अनुदात्तौ अनिटौ कथितौ, तथापि तयोरिडागमो भवति । वस् निवासे

क्तम० । संप्रसा० । वसिक्षुधोरितीडागमः । (घसादेः षः) अवात्सीदिति उषितः । एवं क्षुध् बुभुक्षायाम् । क्षुधितः । ञिष्वप् शये (आदेः ष्णः स्नः) स्वप् क्तम० । संप्रसा० । सुप्तः ।

## (त्राणाद्या निपात्यंते) त्राणादीनां नत्वं वा निपात्यते त्राणः । त्रातः । ह्रीणः । ह्रीतः । निर्वाणः । निर्वातः । घ्राणः । घ्रातः । परिवृढः । (जनेर्जा) जातः ।

त्राणाद्याः शब्दाः अतीते काले अर्थविशेषे सिद्धा एव वा निपात्यंते । त्रैङ् रक्षणे इत्यस्य त्राणः–त्रातः इति रूपद्वयम् । त्रै क्तम० । (संध्यक्षराणामा) नत्वपक्षे क्तप्रत्ययेन सहैव त्राण इति निपात्यते । एवं ह्रीलज्जायामित्यस्य ह्रीणः । ह्रीतः । वा धातुः गतिगंधनयोः । निरपूर्वः । निर्वाणः । निर्वातः । एवं घ्राणः । घ्रातः । वित्तः । विन्नः । उत्तः । उन्नः । नुत्तः । नुन्नः ।

## (संपर्युपेभ्यः करोतेर्भूषणे सुट्) संस्कृतः । परिष्कृतः । उपस्कृतः ।

(संपर्युपेभ्य इति) सम्, परि, उप् इत्येतेभ्यः उपसर्गेभ्यः परस्य करोतेर्धातोः भूषणे अलंकरणेऽर्थे सुडागमो भवति । टित्वादादौ । उकार उच्चारणार्थः कृतः । क्रमेण सम्–परि–उप–पूर्वः क्तम० । सर्वत्र सुडागमः 'स्वर०' । संस्कृतः । परिष्कृतः । उपस्कृतः । अलंकृतः । इत्यर्थः (जनेर्जा) जनी प्रादुर्भावे इत्यस्य जा आदेशः । क्तम० । जातः । एवं खन् खनने इत्यस्य खा आदेशः । खातः ।

## (पचो वः) पक्वः ।

पचो वः) पचेर्धातोरतीतेऽर्थे व प्रत्ययो भवति क्तप्रत्ययार्थे । यद्वा क्तप्रत्ययस्यैव व इत्यादेशो भवति । (चोः कुः) पक्वः ।

## (शुषेः कः) शुष्कः ।

(शुषेः कः) शुष् शोके इत्यस्य कप्र० । शुष्कः ।

## (स्फायः स्फी) स्फीतः ।

(स्फायः स्फी) स्फायेर्धातोः क्तप्रत्यये परे स्फी इत्यादेशो भवति । स्फायी वृद्धौ स्फाय क्त प्र० । स्फी आदेशः । स्फीतः । क्षै क्षये । (संध्यक्षराणामा०) क्षायतेर्मप्र० । क्षामः । इति ।

( क्सुकानौ णवेवत् ) धातोः क्सुकानौ प्रत्ययौ भवतः अतीते काले। तौ च णप् ए इतिवद्भवतः । णवादित्वाद्द्विर्वचनं न तु णपो णित्त्वाद्वृद्धिरित्याशयः। विभिद्वान्। चकृवान्। चक्राणः।

( क्सुकानौ णवेवत् ) क्सुश्च कानश्च क्सुकानौ १–२ (ओ औं औ) णप् च ए च णवे णवेभ्यां तुल्यौ वर्तेते इति णवेवत्, १–१ अव्य०। धातोरतीते काले क्सुकानौ प्रत्ययौ भवतः। तौ च णप् एवत् भवतः। यथा आख्यातपरस्मैपदिनां धातूनां परोक्षे णप् तथा अत्रापि तेषां परस्मैपदिनां क्सुः। यथा चात्मनेपदिनाम् ए आते तथात्र कानः। उभयपदिनाम् उभावपि। आख्याते तु णप् ए इत्येतयोः प्रथमपुरुषः। ककारो गुणनिषेधार्थः। क्सोः उकारो नुमविधानार्थः। णवादित्वाद्द्विर्वचनं न तु वृद्धिः। उदा०। विद् ज्ञाने। क्सुकानाविति परस्मैपदित्वात् क्सुप्र०। वस् णवादित्वाद्द्वित्वम्। नाम संज्ञायां स्यादिर्विभक्तिः। विविद्वस् स् इति स्थिते। उकारानुबंधित्वाद्वितो नुमिति नुमागमः। ( न्सम्महत० ) इति दीर्घः ( हसेपः ) संयोगांतस्येति सलोपः। विविद्वान्। विविद्वांसौ। विविद्वांसः। विविद्वांसम्। विविद्वांसौ शसादौ स्वरे तु ( वसोर्वे उः। किलात्पः सः ) 'स्वर०'। विविदुषः। विविदुषा। भकारादौ ( वसां रसं ) विविद्वद्भ्यामित्यादि। विवेद इति विविद्वान्। एव भिदिर् विदारणे। भिद् क्सु द्वित्वम्। ( झपानां जबचपाः ) भस्य बः। शेषं पूर्ववत्। विभेद इति विभिद्वान्। कृ क्सु प्र०। वस् णवादित्वात् द्वित्वम् ( रः ) इति पूर्वऋकारस्य अकारः ( कुहोश्चुः ) चकृवत् १–१ (त्रितो नुम्। न्सम्महतो दीर्घः। हसेपः०। संयोगान्तस्य लोपः) चकृवान्। चकार इत्यर्थः। चकृवांसौ इत्यादि। शसादौ स्वरे तु वस्य उत्वे कृते ( ऋ रम् 'स्वर०' किला० ) चक्रुषः। चक्रुषा। इत्यादि आत्मनेपदे कानप्र०। आन द्वित्वम्। ( रः। कुहोश्चुः ऋ रम् ) 'स्वर०'। ( षुर्नो० १–१ सो० ) चक्राणः। चक्रे इत्यर्थः। देववत्। षद्लृ विशरणे ( आदेः ष्णः स्नः ) आङ्पूर्वः। वसुप्र०। द्वित्वम्। लोपः पच। कित्येचास्येति पूर्वपदस्य लोपः। अकारस्य च एकारः ( कृतः ) इति इडागमः 'स्वर०' १–१ नुमादिकं प्राग्वत्। आसेदिवान्। आसेदिवांसौ इत्यादि। शसादौ ( वसोर्व उः ) 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति वचनात्। ( ढि ढो लोपः ) 'स्वर०' (किला०) आसेदुषः। आसेदुषा। आसेदिवद्भ्याम्। आसेदिवद्भिरित्यादि॥ एवमन्येऽप्यूह्याः। क्सुप्रत्यये घस्। एकस्वर०। द्वित्वे सत्येकस्वरादादन्ताद्घसेश्च वसोरिट् इत्यनेन इडागमः। यक्षिवान्। पेचिवान्। वाशब्दव्यवस्थार्थः। विविश्वान्। जागरिवान्। ईयिवान्। उपेयिवान्। ददिवान् ( गमहन्विदविशदृशां वा इट् )

इडभावे गम्धातोर्मकारस्य नकारः । यथा क्वचित्पदांतेपि पदांततेति । ( मो नो धातोः ) जगन्वान्–जग्मिवान् । विविद्वान्–विविदिवान् । जघन्वान्–जघ्निवान् । ददृश्वान्–ददृशिवान् । वाशब्दव्यवस्थार्थः । विविश्वान्–विविशिवान् ।

**(शतृशानौ तिसेवत् क्रियायाम्) क्रियापदे गम्यमाने सति धातोः शतृशानौ प्रत्ययौ भवतः । तौ च तिसेवत्परस्मैपदात्मनेपदयोर्भवतः । पचन्नास्ते । पठंस्तिष्ठति । गायन्नागच्छति ।**

सूत्रम् ( शतृ० ) शतृश्च शानश्च शतृशानौ १–२ ( औ औ औ ) । तिसेवत् १–१ अव्ययम् । क्रियायाम् ७–१ ( आम्ङे० । ङितां यट् । सवर्णे० ) क्रियापदे गम्यमाने प्रोच्यमाने धातोः शतृशानौ प्रत्ययौ भवतः । तौ च तिप्तेवत् भवतः । परस्मैपदिनां शतृ आत्मनेपदिनां च शान उभयपदिनाम् उभावपि इत्यर्थः । शकारः शित्कार्यार्थः । ऋकारश्च नुमीप्विधानार्थः–पच् शतृप्र० । अत् चतुर्थत्वात् । ( अप् कर्त्तरि ) 'स्वर' । ( अदे ) इति अलोपः । 'स्वर' १–१ । ( ऋितो नुम् । हसेपः । संयोगां० ) पचन् आस्ते । एवं पठ् व्यक्तायां वाचि । पठन् तिष्ठति । ( नः सक् छते । नश्चा० । ) पठंस्तिष्ठति । गै शब्दे । गै शतृप्र० । अत् । ( अप् कर्त्तरि । ऐ आय् ) 'स्वर०' । ( अदे ) 'स्वर०' । ( ऋितो नुम् । हसेपः० । संयोगां० ) गायन् गच्छति । एवं कुर्वन् कुर्वाणः ।

**( मुगानेतः ) अकारस्यानेपरे मुमागमो भवति । पचतेऽसौ पचमानः पिबति । यजतेऽसौ यजमानः स्तौति । मन्वानः पिबति ।**

सूत्रम् ( मुगानेतः ) मुग् १–१ । ( हसेपः ) आन ७–१ ( अ इ ए ) अतः ६–१ 'स्वर०' । ( स्रो० ) । अकारस्य शानसंबन्धिनि आने परे मुगागमो भवति । ककारः स्थाननियमार्थः । उकार उच्चारणार्थः । डुपचष् पाके । पच उभयपदित्वादात्मनेपदित्वात् शानप्र० । आन ( शिति चतुर्वत् ) इति । ( अप् कर्त्तरि ) मुगानेति मुगागमः । किस्वात्पच् अग्रे म् । 'स्वर०' । (स्रो०) पचमानः । पानीयं पिबति । एवं यज देवपूजा० । यजमानः सन् पूजां कुर्वन् सन् स्तौति । मन् ज्ञाने । शानप्र० । ( तनादेरुप् ) उप् प्र० । 'स्वर०' । ( उ वम् ) 'स्वर०' १–१ । स्रो० ) मन्वानः । मनुते इति मन्वानः । आस् उपवेशने । आस् शतृशानौ तिसे० इति शानप्र० । आन । ( अप् कर्त्तरि । अदादेर्लुक् )

**( आसेरान ई ) आसेर्धातोः परस्य आत आकारस्य ईकारादेशो भवति । आसीनः ।**

सूत्रम् ( आसेरान ई ) आसेः ६-१। ( ङिति । ङस्य। स्रो० ) आनः ६-१ 'स्वर०' । ( स्रो० )। ई १-१ सांके० । चतुःपदम्। आस् उपवेशने। इत्यस्य धातोः परस्य आनप्रत्ययसम्बन्धिन आकारस्य ईकारो भवति । 'स्वर०' । आसीनः।

( वादीपोः शतुः ) अवर्णात्परस्य शतुर्वा नुमागमो भवति ईकारे ईपि च परे। तुदत् । तुदती-तुदंती । स्त्री तुदती-तुदन्ती।

सूत्रम् ( वा दी० ) वा अव्य० । अ ५-१ ( ङसिरत्। सवर्णे० ) ईश्च ईप् च ईपौ तयोः ७-२'स्वर०'। पश्चात् चपा अबे जबाः ( शतृ ६-१ ( ऋतो ङ उः ) टिलोपः। 'स्वर०' । चतुःपदम्। अवर्णात्परस्य शतुः शतृप्रत्ययस्य वा नुमागमो भवति। नपुंसके ईमौ इति सूत्रोत्पन्ने ईकारे परे तथा ङ्रित इति सूत्रोत्पन्ने ईपि परे। तुद् व्यथने। तुद् शतृप्र० । अत्। ( तुदादेः ) 'स्वर०' । ( अदे ) 'स्वर०' । तुदत् । ( नपुंसकात् स्यमोर्लुक् ) द्विवचने । तुदत् अ इति स्थिते। ( ईमौ ) औस्थाने ई । वादीपोः शतुरिति एकत्र नुमागमः। 'मिदन्त्यात्स्वरात्परो वक्तव्यः' । ( नश्चा० ) 'स्वर०' तुदन्ती पक्षे तुदती वा कुले । तुदंति । पुनरपि तुदत् । तुदती-तुदन्ती । तुदान्ति । स्त्रीलिंगे तुदत्। ऋकारानुबन्धत्वात्। ( ङ्रितः ) इतीप्। वादीपोः शतुरिति एकत्र नुमागमः। तुदन्ती-तुदती वा स्त्री वर्तते। तुदन्त्यौ । तुदत्यौ । तुदंत्यः । तुदत्यः । एवं पक्ष-द्वयेऽपि नदीशब्दवत्।

( अप्ययोरान्नित्यम् ) अप्प्रत्यययप्रत्ययसंबन्धिनोऽकारात्परस्य शतुर्नित्यं नुमागमो भवति। ईकारे ईपि च परे। पठन्ती। दीव्यन्ती दृश्यते। ( द्विरुक्तानां जक्षादीनां च शतुर्नुम्प्रतिषेधो वक्तव्यः ) ददत्। दधत्। जक्षत्। जाग्रत्। दरिद्रा दुर्गतौ। दरिद्रत्। चकासत्। अनुशासत्।

सूत्रम् ( अप्ययोरान्नित्यम् ) अप् च यश्च अप्यौ तयोः ६-२। ( ओसि। एत्र) 'स्वर०' ( स्रो० । ) अ ५-१ ( ङसिरत्। सवर्णे० ) पश्चान्नामिनो रः। 'स्वर' नित्यं १-१ अव्य० । ( जमे अमा वा ) स्वर० । ( अप् कर्तरि ) इति अप्प्रत्ययः। ( दिवादेर्यः ) इति यप्र० । एतयोः सम्बन्धिन अकारात्परस्य शतृप्रत्ययस्य नित्यं नुमागमो भवति न तु विकल्पेन ईकारे ईपि च परे। मकारः स्थाननियमार्थः। भू शतृप्र० । अत्। ( अप् कर्त्तरि। गुणः। ओ अव् ) 'स्वर०'। ( अदे० )'स्वर०'। ( ङ्रितः ) इति ईप् प्र० । ( अप्ययोरान्नित्यम् ) नुमागमः। ( नश्चापदान्ते ) भवन्ती । एवं पचन्ती।

दिव् । ( दिवादिभ्यः ) शतृ । ( य्वोर्वि हसे ) दीर्घः । ( अदे ) 'स्वर०' । ( अप्य-यम् ) इति नुमागमः दिव्यन्ती दृश्यते । एवं क्षिप् आलिंगने । क्षिप्यन्ती ।
। धातूनां विशेषमाह । द्विरुक्तानां ह्वादीनां जक्षभक्षहसनयोः जक्ष जागृ दरिद्रा
म् इत्यादीनां च सम्बन्धिनः शतृप्रत्ययस्य त्रितो नुमिति प्राप्तो यो नुम् तस्य
त्तव्यः । नुमागमो न भवतीत्यर्थः । उदाहरणम् । दा शतृ । अत् । ( अप्
ह्वादेर्द्विश्चेति अब्लुक् द्वित्वं च । ( ह्रस्वः ) दादेरिति आलोपः । 'स्वर०' ।
नुम्निषेधः १-१ । ( हसेपः ) ददत् । ददतौ । ददतः । इत्यादिः । स्त्रीलिंगे
दत्यौ । ददत्यः । नपुंसके ददत् । ददती । ददंति । द्विरुक्तानां नपुंसके शौ परे
तेन ददन्ती ददती इति रूपद्वयम् । दधत् । दधतौ । दधतः । एवं बिभ्रत् ।
प्र० अत् । ( अप् कर्त्तरि । ह्वादेर्द्विश्च । झपानां जबचपाः । भृञां इकि ।
'स्वर०' जिभी भये । भी अत् । अप् । ( ह्वादेर्द्विश्च । झपानां० । ह्रस्वः । य्वौ वा)
स्येति यकारः बिभ्यत् । एवं जुह्वत् विदधत् इत्यादयोऽन्येपि ह्वादितुल्या
श्च ज्ञातव्याः । जक्ष भक्षहसनयोः । जक्ष शतृप्र० । ( अप् कर्त्तरि । अदा-
स्वर०' १-१ जक्षादित्वान्नुम्निषेधः । (हसेपः) जक्षत् । जक्षतौ । जक्षतः । जागृ
जागृ अत् ( अप् कर्त्तरि । अदादेर्लुक् । ऋ रम्) 'स्वर०' १-१ ( हसेपः )
ाग्रतौ । जाग्रतः । दरिद्रा दुर्गतौ । दरिद्रा अत् । अप् ( अदादेर्लुक् ) दरि-
ोपश्चेत्याकारलोपः 'स्वर०' ( हसेपः ) दरिद्रत् । चकासृ दीप्तौ । चकास्
अप् ( अदादे० ) । 'स्वर०' चकासत् । शास् अनुशिष्टौ । शास अनुपूर्वः ।
शासत् । एषु द्विरुक्तानां जक्षादीनामिति नुम्निषेधः । इत्यादि जक्षादयः ।
जक्षाणः । दरिद्राणः । बिभ्राणः । विदधानः । इत्यादि ।

र्वा वसुः ) विदेर्धातोः शतृविषये वा वसुः प्रत्ययो भवति ।
। विद्वान्-विदन् । अत्रभवत्तत्रभवच्छब्दौ पूजार्थे निपा-
अत्र भवन्तो भट्टमिश्राः । तत्रभवद्भिर्भगवत्पादैर्भणितम् ।

( विदेर्वा वसुः ) विदेः ६-१ ( ङिति-ङस्य । स्रो० ) वा १-१
सु १-१ (स्रो० ।) सिद्धम् । विद् ज्ञाने इत्यस्य धातोः शतृविषये शतृप्र-
कल्पेन वसुप्रत्ययो भवति । उदा० । विद् एकत्र वसुप्रत्ययः । विद्वस्
वत् ( त्रितो० न्संमहतो दीर्घः । संयोगांतस्य लोपः ) विद्वान् । विद्वांसौ ।
द्वितीये तु शतृप्रत्यये कृते भवत्-शब्दवत् प्रक्रिया । विदन् विदंतौ इत्यादि ।
म् । शतृप्रत्ययः । अत् अप् । (अदे) 'स्वर०' १-१ ( त्रितो नुम् । संयो-
पः । हसेपः ) अर्हतीत्यर्हन् अत्रभवत् तत्रभवत् इत्येतौ द्वौ शब्दौ उकारा-
र्थे पूज्यत्ववाचकत्वे निपात्येते । शतृप्रत्ययं विनापीत्यर्थः । "पूज्ये तत्रभवा-

अत्रभवांश्च भगवानपि" इत्यभिधानचिंतामणिवचनात् १-१ उकारानुबंधत्वात् नुम्। अत्वसोः साविति न भवति । अत्रभवत् । स्यादिः । ( त्रितो नुम् अत्वसोः सौ ) अत्रभवान् । अत्रभवंतौ । अत्रभवंतः इत्यादि । अत्रभवंतः पूज्याः । एवं तत्रभवान् । तत्रभवंतौ । तत्रभवंतः भट्टमिश्रा एते । तत्रभवद्भिः पूज्यैर्भगवत्पादैर्युष्माभिर्भणितं कथितम् । शतृप्रत्ययरहितावेतौ निपात्यौ ।

( शीले तृन् ) धातोस्तृन्प्रत्ययो भवति शीले स्वभावेऽर्थे । करणशीलः कर्ता । हर्ता । इति ।

सूत्रम् ( शीले तृन् ) शीले ७-१ (अ इ ए) । तृन् १-१ ( हसेपः ) शीले स्वभावेऽर्थे धातोः तृन्प्रत्ययो भवति । नकारः प्रत्ययभेदज्ञापनार्थः । कृ तृन्प्र० । गुणः । ऋतुं० १-१ (स्तुरार् । सेरा) ङिस्वाद्दिलोपः 'स्वर०' करणशीलः कर्ता । एवं हरणशीलो हर्ता । भरणशीलो भर्ता ।

( इष्णुस्नुक्नुः ) धातोः शीले स्वभावेऽर्थे इष्णु स्नु क्नु इत्येते प्रत्यया भवन्ति । कृञ् अलंपूर्वः । अलंकृञ् निराकृञ् प्रजन उत्पच् उत्पत् उत्पद् ग्रस् उन्मद् रुच् अपत्रप् वृतु वृधु सह चर भू भ्राज् ञ्यन्त एभ्य इष्णुः । अलंकरोतीत्येवंशीलः अलंकरिष्णुः । निराकरिष्णुः । प्रजायते इत्येवंशीलः प्रजनिष्णुः । उत्पचतीत्येवंशीलः उत्पचिष्णुः । पत्ॢ पतने । उत्पततीत्येवं शीलः उत्पतिष्णुः । पद् गतौ । उत्पद्यते इत्येवंशीलः उत्पदिष्णुः । ग्रसु अदने । ग्रसतीत्येवंशीलः ग्रसिष्णुः । उन्माद्यतीत्येवंशीलः उन्मदिष्णुः। रुचि दीप्तौ। रोचतीत्येवं शीलः रोचिष्णुः । त्रपूष् लज्जायाम् । अपत्रपति वा अपत्रपते इत्येवंशीलः अपत्रपिष्णुः । वृतु वर्तने । वर्तते इत्येवंशीलः वर्तिष्णुः । वृधुङ् वृद्धौ । वर्धते इत्येवंशीलः वर्धिष्णुः । सहति-सहते वेत्येवंशीलः सहिष्णुः । चरतीत्येवंशीलः चरिष्णुः । भविष्णुः । भ्राजृ दीप्तौ । भ्राजते इति भ्राजिष्णुः । इष्णुप्रत्यये परे ञ्यन्तानां ञिलोपाभावो वाच्यः । कारयतीत्येवंशीलः कारयिष्णुः । एते इष्णुप्रत्ययान्ताः ॥

( इष्णुस्नुक्नुः ) इष्णुश्च स्नुश्च क्नुश्च इष्णुस्नुक्नुः। (नपुंसकात् स्य०) धातोः शीलेऽर्थे इष्णु स्नु क्नु एते त्रयः प्रत्यया भवंति यथायोग्येन। भ्राज भू सह रुच चर वृध वृत प्रजन अपत्रप अलंकृञ् निराकृञ् उन्मद इत्पद उत्पच एभ्य इष्णुः। उदा०। कृ अलं-पूर्वः अलंकरणशीलः अलंकरिष्णुः। इष्णुप्र०।गुणः 'स्वर०' निराङ्पूर्वः निराकरिष्णुः। निराकर्तुं शीलमस्यति निराकरिष्णुः भानुशब्दवत्। ग्रसु अदने ग्रसिष्णुः। सहिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। इत्यादि ॥

स्था–ग्ला–म्ला–जि–भू–क्षि–पच्–यज्–परिमृज्-एभ्यः-स्नुः। ग्लै हर्षक्षये। ग्लायतीत्येवंशीलः ग्लास्नुः। जयतीत्येवं-शीलः जिष्णुः। भवतीत्येवंशीलः भूष्णुः। जिभ्वोः स्नौ गुणाभावो न इट् क्षेश्च तथा तिष्ठतीत्येवंशीलः स्थास्नुः। क्षि क्षये। क्षयतीत्येवंशीलः क्षिष्णुः। पचतीत्येवंशीलः पक्ष्णुः। यजतीत्येवंशीलः यक्ष्णुः। मृजू शुद्धौ। ( मृजेर्गुण-निमित्ते प्रत्यये परे वृद्धिर्वाच्या ) परिमार्ष्टीत्येवंशीलः। परिमार्ष्णुः।

स्था–ग्ला–म्ला–जि–भू–क्षि–यज्–पच–पारिमृज्–एभ्यः स्नुः। जिभुवोर्गुणेऽभावश्च। जि जये। स्नुप्र०। किला०। नस्य णः। जिष्णुः। एवं भूष्णुः। स्थास्नुः। ग्लास्नुः म्लास्नुः। पक्ष्णुः।

विप्लृ–त्रस्–गृध्–धृष्–क्षिप्–एभ्यः क्नुः। विप्लृ व्याप्तौ। वेवेष्टि इत्येवंशीलः विष्णुः। त्रसी उद्वेगे। त्रसी भये। त्रस्य-तीत्येवंशीलः त्रस्नुः। गृधु अभिकांक्षायाम्। दिवादिः। गृध्यतीत्येवंशीलः गृध्नुः। ञिधृषा प्रागल्भ्ये। स्वादिः। धृष्णोत्येवंशीलः धृष्णुः। क्षिप् प्रेरणे। क्षिपतीत्येवंशीलः क्षिप्नुः। ककारो गुणनिषेधार्थः।

विप्लृ-त्रस्-गृध्-क्षिप्-एभ्यः क्नुः। विप्लृ व्याप्तौ। वेवेष्टि जगदित्येवं शीलोविष्णुः क्नुप्र० ककारो गुणनिषेधार्थः (पूर्वो०) गृध धातुः अभिकांक्षायां वांछायां० गृध् क्नुः। नु 'स्वर०'। गर्द्धनशीलो गृध्नुः क्षिप्नुः त्रस्नुः।

( पाकोकणः ) धातोः शीलेऽर्थे पाक उ उकण् इत्येते प्रत्यया भवन्ति।

सूत्रम् ( पाकोकणः ) पाकश्च उश्च उकण् च पाकोकणः १–३ । 'स्वर०' (स्रो०) शीले स्वभावेऽर्थे पाक उ उकण् एते त्रयः प्रत्यया भवंति ।

जल्प–भिक्ष–कुट्ट–लुंठ्–वृङ् एभ्यः पाकः प्रत्ययो भवति । जल्प व्यक्तायां वाचि । जल्पतीत्येवंशीलः जल्पाकः । भिक्ष याच्ञायाम् । भिक्षतीत्येवंशीलः भिक्षाकः । कुट्ट ताडने वा छेदने । कुट्टतीत्येवंशीलः कुट्टाकः । लुण्ठ चौर्ये । लुण्ठत्येवंशीलः लुण्ठाकः । वृङ् संभक्तौ । वृञ् संवरणे । वर निवारणे । वृणुते वा वरतीत्येवंशीलः वा वृणीते इत्येवंशीलः वराकः । प ईवर्थः । वराकी ।

जल्प-भिक्ष-कुट्ट-लुंठ्-वृङ्-वृञ्-वर एभ्यः पाकः । पाक इति पकार ईवर्थः । वर निवारणे वर आकप्र० । 'स्वर०' १–१ (स्रो०)। स्त्री चेत् वराकी । ( ङ्कितः। यस्य लोपः) 'स्वर०।' वारयति इत्येवंशीलो वराकः । भिक्ष याच्ञायाम् । भिक्ष पाकप्र० । आक 'स्वर०' ( स्रो० ) । एवं जल्प जल्पने । कुट्ट कुट्टने । लुठि स्तेये । जल्पाकः । कुट्टाकः लुंठाकः ।

सान्त आशंस् भिक्ष् एभ्य उः प्रत्ययो भवति । सान्ताशंसयोश्च । सप्रत्ययान्तादाङ्पूर्वात् शंसु स्तुतावित्यस्माद्धातोश्च शीलार्थं विनापि उः प्रत्ययो भवति । वच परिभाषणे । विवक्षतीति–विवक्षुः ( इच्छायामात्मनः सः ) द्वित्वम् । ( पूर्वस्य हसादिः शेषः । ऋत इर् । य्वोर्वि हसे । कुहोश्चुः ) चिकीर्षतीत्येवंशीलः चिकीर्षुः । जिघृक्षतीत्येवंशीलः जिघृक्षुः । आङ्पूर्वः शंसु स्तुतौ । शंस् कथने । आशंसतीत्येवंशीलः आशंसुः । भिक्षतीत्येवंशीलः भिक्षुः । पिपासतीत्येवंशीलः पिपासुः । तितीर्षतीत्येवंशीलः तितीर्षुः ॥

सांत आशंस् भिक्ष उः । एभ्यः उः । भिक्ष उ प्र० ।'स्वर०' । भिक्षुः । सांताशंसयोश्च इच्छार्थस्य सप्रत्ययांतस्य धातोः आङ्पूर्वस्य शंसः शंसुस्तुतावित्यस्य च धातोः शीलार्थं विनापि उप्रत्ययो भवति । वच परिभाषणे । वच वक्तुमिच्छाविवक्षुः । ( इच्छायामात्मनः सः । द्विश्च । यः से ) अकारस्य ईकारः ( चोः कुः । क्विल० ।

कपसंयोगे क्षः ) विवक्ष । इति सिद्धम् । उप्र० । ( यतः ) इत्यलोपः । 'स्वर०' १–१ (स्रो०) विवक्षुः। शंस् स्तुतौ कथने च । शंस् आङ्पूर्वः। उप्र० 'स्वर०' १–१ (स्रो०) आशंसुः । ग्रह उपादाने । ग्रह इच्छार्थे सप्र० ( द्विश्च । पूर्वस्य । कुहोश्चुः । यः से ) ग्रहां क्ङितीति संप्रसारणम् ( हो ढः ) आदिजबानामिति गस्य जः । ( षढोः कः से । किला०। कपसंयोगे क्षः ) उप्र० ( यतः ) इति अलोपः 'स्वर०' १–१ (स्रो०) जिघृक्षुः ग्रहीतुमिच्छुर्जिघृक्षुः । पा पाने । पा सप्र० । द्वित्वम् ।( ह्रस्वः । यः से ) उप्र० पिपासुः । भिक्षुः ।

लप–पत–पद्–भिक्ष–स्था–भू–वृप–हन्–कम्–गम्–शॄ एभ्य उकण् प्रत्ययो भवति । लप कान्तौ । लपतीत्येवंशीलः लापुकः । पततीत्येवंशीलः पातुकः। पद गतौ। णित्त्वाद्वृद्धिः । पद्यतीत्येवंशीलः पादुकः। भिक्ष याच्ञायाम् । भिक्षतीत्येवंशीलः भिक्षुकः। तिष्ठतीत्येवंशीलः स्थायुकः । भवतीत्येवंशीलः वा भवितुं शीलमस्यास्तीति भावुकः । वृष वृष्टौ ।वृषु सेचने । वर्षतीत्येवंशीलः वर्षुकः । हन्तीत्येवंशीलः घातुकः। कमु कान्तौ । कामयते इत्येवंशीलः वा कामितुं शीलमस्यास्तीति कामुकः । गम्लृ गतौ । गच्छतीत्येवंशीलः गामुकः । शॄ हिंसायाम् । शृणातीत्येवंशीलः शारुकः। ( शॄवन्द्योरारुः ) शॄवन्द्योर्धात्वोरारुः प्रत्ययो भवति । शरारुः । वन्दारुः । स्पृहि गृहि पति शीङ् एभ्य आलुर्वाच्यः। स्पृह ईप्सायाम् । ईप्सा इच्छा । गृह ग्रहणे । पत ऐश्वर्ये । त्रयश्चुरादयोऽदन्ताः । आलौ णिलोपाभावो वाच्यः। स्पृहयतीत्येवंशीलः । स्पृहयालुः । गृहयतीत्येवंशीलः गृहयालुः। पतयतीत्येवंशीलः पतयालुः। शीङ् स्वप्ने । शेते इत्येवंशीलः शयालुः ॥

लप–पत–पद्–भिक्ष–स्था–भू–वृप–हन्–कम्–गम्–शॄ एभ्यः उकण् । कम धातुः कान्तौ अभिलाषे । कामयतीति कामुकः । कम् उकण् प्र० । णकारो वृद्ध्यर्थः ( अत उपधायाः ) 'स्वर०' ५–१ (स्रो०।) एवं भिक्षुकः। भू सत्तायाम् । भू उकण् प्र० ( धातोर्नामिनः ) इति वृद्धिः।(औ आव् )'स्वर०' ५–१ (स्रो०।) भावुकः । स्थायुकः

( आतो युक् । हनो घत् ) घातुकः । अभिलापुकः । वार्षुकः । पातुकः । पादुकः । आगामुकः । इत्यादि ।

(नमादे रः ) नम्–कपि–स्मिङ्–नञ्पूर्वो जस्–कम्-हिंस्-दीप् एभ्यो रः प्रत्ययो भवति शीलेऽर्थे । णम् प्रह्वत्वे शब्दे च । नमतीत्येवंशीलः नम्रः । कपि चलने । कम्पतीत्येवंशीलः कम्प्रः । स्मिङ् ईषद्धसने । स्मयते इत्येवंशीलः स्मेरः । जसु मोक्षणे । जसु गतिनिवृत्तौ । दिवादिः । न जस्यतीत्येवंशीलम् अजस्रम् । कामयते इत्येवंशीलः कम्रः । हिसि हिंसायाम् । हिनस्तीत्येवंशीलः हिंस्रः । दीपी दीप्तौ । दीप्यते इत्येवंशीलः दीप्रः ॥

(नमादेः ) नमादेः ६–१ ( ङिति ङस्य० । स्रो० ) । र० १–१ स्रो० । मध्ये ( नामिनो रः । रि लोपो दीर्घश्च ) नम् । कम् । स्मिङ् । अजस् । कंप् । दीप । हिंस् । एभ्यो रः प्रत्ययः स्यात् । णम् प्रह्वत्वे शब्दे च । ( आदेः ष्णः स्नः ) नम् रप्र० । 'स्वर०' १–१ स्रो० । नमनशीलो नम्रः । एवं कमु कांतौ कम्रः। स्मेरः । अजस्रम् कंम्प्रः । दीप्रः । हिंस्रः ॥

( घसादेः क्मरः ) घस्–सृ–अद् एभ्यः क्मरः प्रत्ययो भवति शीलेऽर्थे । घस्लृ अदने । घसतीत्येवंशीलः घस्मरः । सृ गतौ । सृ सरणे । सृ हिंसायाम् । सरतीत्येवंशीलः सृमरः । अद् भक्षणे । अत्तीत्येवंशीलः अद्मरः । ( भिदि छिदि विदि एभ्यः कुरङ्प्रत्ययः शीलेऽर्थे ) भिनत्तीत्येवंशीलः भिदुरः । छिदिर् द्वैधीकरणे । छिनत्तीत्येवंशीलः छिदुरः । विद् ज्ञाने । वेत्ति इत्येवंशीलः विदुरः । ( भासादेर्घुरः ) भास् भञ्ज् भिद् एभ्यो घुरः प्रत्ययो भवति शीलेऽर्थे । घकारो घित्कार्यार्थः । भासृ दीप्तौ । भासतीत्येवंशीलः भासुरः । भञ्जो आमर्दने ।

सूत्रम् ( घसादेः क्मरः ) घस् आदिर्यस्यासौ घसादिस्तस्य ६–१ क्मरः १–१ (स्रो० ।)घसादेर्धातोः अदेश्च क्मरप्रत्ययो भवति शीलार्थे । ककारो गुणनिषेधार्थः । घस्लृ अदने । घस् क्मरप्र० । स्वर० १–१ स्रो० । सृ गतौ स्मरप्र० स्रो० । अद् भक्षणे ।

अद् मर प्र० स्वर० । अद्मरः । (भासादेर्घुरः) भास दीप्तौ । ञिमिदा स्नेहने । एभ्यो धातुभ्यो घुर-प्रत्ययो भवति शीलेऽर्थे । घकारो चित्कार्यार्थः । भास् उरः 'स्वर०' १-१ (स्नो० ) भासनशीलो भासुरः । भंज् आमर्दने । भंज् भासादेरिति उरप्र० ।

**( चजोः कगौ घिति ) धातोश्चकारजकारयोः ककारगकारौ भवतः घिति प्रत्यये परे । भनक्तीत्येवंशीलः भंगुरः । ञिमिदा गात्रविक्षेपे । मेद्यते इत्येवंशीलः मेदुरः ॥**

( चजोः कगौ घिति ) जस्य गः । स्वर० १ १ ( स्नो० ) भंगुरः स्वयमेव भज्यते इत्येवंशीलो भंगुरः । मेद्यतीत्येवं शीलो मेदुरः । छिदिभिदिविदां कुरः । ककारो गुण-निषेधार्थः । छिदुरः । भिदुरः । विदुरः । एते सर्वे प्रत्ययाः शीलार्थाः ॥

**( यङ ऊकः ) यज् जप् दंश वद् एभ्यो यङ्प्रत्ययान्तेभ्य ऊकः प्रत्ययो भवति शीलेऽर्थे । यङो लुक् तत्सान्नियोगेन धातोर्द्विर्वचनम् । यज् देवपूजासंगतिकरणदानेषु । अतिशयेन यजतीति वा इज्यते इत्येवंशीलः यायजूकः । जप व्यक्तायां वाचि । ( जभजपां नुक् )जञ्जप्यते इत्येवंशीलःजञ्जपूकः । दश् दंशने। दंदशूकः । वावद्यते इत्येवंशील वावदूकः ॥**

( यङ ऊकः ) यङः ५-१ 'स्वर०'(स्नो०) ऊकः १-१( स्नो०। )अतिशयार्थे यङ् प्रत्ययांताद्धातोः शीलेऽर्थे ऊक् प्रत्ययो भवति । यज्, जप्, जागृ, वद्, दंशिभ्यः । इति वक्तव्यम् । वक्तव्यस्य प्रयोगानुसारित्वात् यङंतस्यापि जागर्तेः ऊकप्रत्ययो भवति लुक् १-१ हसेपः । तस्य ऊकस्य सन्नियोगेन यङ्प्रत्ययस्य लुक् भवति । उदा० यज् अतिशयेन यजनशीलो यायजूकः । ( अतिशये हसादेर्यङ् ) द्वित्वम् । पूर्व० ( आतः ) इत्यकारस्य आकारः । यायज्य इति स्थिते ऊकप्र० । लुक् इति इति यङो लुक् । स्वर० । स्नो० । दंश दशने । अतिशयेन दशतीत्येवंशील इति विग्रहे यङ्प्र० ( नो लोपः ) द्वित्वम् ( जभजपां नुक् । नश्चा०) ऊक० लुगिति यङो लुक् । दंदशूकः सर्पः । एवं जप् व्य० जंजपूकः । यायजूकः । वद् व्यक्ता० वावदूकः ।

**( जागर्तेरूको वाच्यः ) जागर्तीत्येवंशीलः जागरूकः । इण्-नशजिसृगमिभ्यः करप् वाच्यः । इण् गतौ । ( ह्रस्वस्य पिति )एतीत्येवंशीलः इत्वरः । णश अदर्शने । नश्यतीत्येवं-शीलः नश्वरः । जयतीत्येवंशीलः जित्वरः । सरतीत्येवंशीलः**

सृत्वरः। गत्वरो निपात्यते शीलेऽर्थे । गच्छतीत्येवंशीलः गत्वरः। ( भियः क्रुक्लुकौ वक्तव्यौ ) बिभेतीत्येवंशीलः भीरुः। भीरुकः। ( इषेरुश्छश्च ) इषेरुः प्रत्ययो भवति छान्तादेशश्च इच्छतीति-इच्छुः ( स्थादेर्वरः ) स्था ईश् भास् पिस् कसादिभ्यो वरः प्रत्ययो भवति शीलेऽर्थे। तिष्ठतीत्येवंशीलः स्थावरः। ईश् ऐश्वर्ये। ईष्टे इत्येवंशीलः ईश्वरः। भासृ दीप्तौ। भासतीत्येवंशीलः भास्वरः । पिसृ गतौ । पिसतीत्येवंशीलः पिस्वरः। कसृ गतौ । कसतीत्येवंशीलः कस्वरः ॥

अयडंतस्यापि जागर्तेः ऊकप्र० । जागरूकः । यातेर्यडंताद्वरप्रत्ययः । तत्सन्नियोगे यडो लुक्। अतिशयेन कुटिलं वा यातीत्येवंशीलो यायावरः इत्यादि ॥

( आदृतः किर्द्विश्च भूते ) आकारान्तादृकारान्ताद्धातोर्जेनिनमिगमिभ्यश्च शीलेऽर्थे भूतकाले किः प्रत्ययो भवति णवादिवद्धातोश्च द्विर्वचनं भवति ( आतोऽनपि )

रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् ॥
याजकान् वव्रिराजह्रिः पौण्डरीके महाद्विजान् ॥ १ ॥
तदा जज्ञिर्महाश्चर्यं नेमिर्नृपगणोऽपि तम् ॥
ब्राह्मणानां श्रुतिविदां गणो जग्मिर्धनं मुदा ॥ २ ॥

सूत्रम् ( आदृतः किर्द्विश्च भूते ) आच्च ऋच्च आदृत् ५-१ 'स्वर०'(लो०) किः १-१ (लो० ।) द्विः द्वित्रिभ्यां सुः १-१अव्य०। च १-१भूते ७-१अव्य०(अ इ ए)आकारातादयः ऋकारान्ताः। डुकृञ् करणे। हृञ् हरणे। वृञ् वरणे। इत्यादयस्तेभ्यो धातुभ्यः शीले स्वभावेऽर्थे अतीते काले किप्रत्ययो भवति । ककारो गुणनिषेधार्थः। तत्सन्नियोगे धातोर्द्विर्वचनम्। पा पाने पा किप्र० । इ । द्वित्वं ( पूर्वस्य० । ह्रस्वः ) आतोऽनपीत्याकारलोपः। 'स्वर०' १-१ लो०। पपिः। एवं डुदाञ् दाने। ददिः । डुकृञ् करणे। कृ किप्र० इ ( द्विश्च । रः ) इति पूर्वऋकारस्य अकारः। ( कुहोश्चुः। ऋ रम् ) 'स्वर०' १-१ (लो०) चक्रिः। एवं वृञ् वरणे। वव्रिः। हृञ् हरणे। हृ० आङ् पूर्वः किप्र० इ द्वित्वं ( रः। कुहोश्चुः ) ( हस्य झपानां जबचपाः ) झस्य जः। ( ऋ र ) 'स्वर०' १-१ ( लो० ) आजह्रिः। श्लोकश्चात्र। ' रामः सोमं पपिर्यज्ञे ।

व्याख्या। रामः पौंडरीके नाम्नि यज्ञे सोमम् अमृतं पपिः पीतवान् पपौ इत्येवंशीलो पपिः। पुनः धेनूः ददिः दत्तवान्। पुनः अद्भुतम् आश्चर्य चक्रिः कृतवान्। पुनः याजकान् यज्ञकर्तॄन् वव्रिः ववार इत्येवंशीलो वव्रिः। पुनः महाद्विजान् ब्राह्मणान् आजह्रिः आह्वनवान् आजहार इत्येवंशील इत्यर्थः। इति श्लोकव्याख्या। चकारादुपधालोपिनामपि किः प्रत्ययः। गम् जग्मिः। हन् जघ्निः। ज्ञा जज्ञिः। ( सहिवहिचलिपतिभ्यो यङन्तेभ्यः किः ) सासहिः, वावहिः, चाचलिः, पापतिः, इत्यादि।

## अथोणादयो निरूप्यन्ते।

( सदोणादयः ) सर्वस्मिन्काले उणादयः प्रत्यया भवन्ति। ( कृ वा पा जिमि स्वदि साधि अशूङ् एभ्य उण् प्रत्ययो भवति ) णकारो वृद्ध्यर्थः। करोतीति–कारुः कारुकः। वा गति०। ( आतो युक् ) वातीति–वायुः। पा पाने। पिबतीति–पायुः। जयति अनेनेति–जायुः। डुमिञ् प्र० मि कौटिल्ये। मिनोतीति–मायुः। स्वाद आस्वादने। स्वद्यते इति–स्वादुः। साध्यतीति–साधुः। अश्नोतीति–आशुः ( सि तनि–गमि–मसि–सचि–अवि–हि–धा–क्रुशि–एभ्यस्तुन् प्रत्ययो भवति ) षिञ् बन्धने। सिनोतीति–सेतुः। तनोतीति–तन्तुः। गच्छतीति–गन्तुः। मसि परिणामे रक्षणे च। मस्यतीति–मस्तुः। षच संबन्धे। सचतीति–सक्तुः। अव रक्षणे। अवतेर्वकारस्य उकारः। अवतीति ओतुः। हि गतौ वृद्धौ च। हिनोतीति–हेतुः। दधातीति–धातुः। क्रुश आह्वाने रोदने च ( छशषराजादेः षः। ष्टुभिः ष्टुः ) क्रोशतीति–क्रोष्टा।

( सदोणादयः ) सदा १–१ अन्य०। उण् आदिर्येषां ते उणादयः १–३ ( प्र० ओ जसि। प्र० नय्। ) 'स्वर०'। 'लो०'। पश्चात् ( उ ओ ) सर्वस्मिन् भूतभविष्यद्वर्तमाने काले उणादयः प्रत्यया भवंति। उदा०। करोतीति–कारुः। कृ उण् प्रत्ययः। णित्वाद् वृद्धिः ऋस्थाने कार्। 'स्वर०' १–१ लो०। कारुः। वा गतिगन्धनयोः। वा अयं धातुर्गतौ गन्धने च। गन्धनमपकारप्रयोगो हिंसा च। वा उण्। (आतो युक्) 'स्वर०'

१-१ । ( स्रो० ) वातीति-वायुः । पा पिबतीति-पायुः । मिनोति हिनस्तीति मायुः। गोपूर्वकत्वे गोमायुः । क्रुश आह्वाने रोदने च । क्रुश् । इत्यादिशब्दात् तु प्र० उपधाया लघोर्गुणः। ( छशषराजादेः षः । ष्टुभिः ष्टुः ) 'स्वर०' । क्रोशति आह्वयति फूत्करोतीति वा क्रोष्टा सृगालः । साधना स्वरांतपुंल्लिंगे कथितास्ति । जायते जन्यते वा जन्तुः । जन तु प्र० । कामयति अभिलषतीति कन्तुः ।

अव रक्षणे पालने च । किस्वात्संप्रसारणमुकारः ( अवतेर्मुक् ) अवतेर्धातोर्मुक्प्रत्ययो भवति । अवतीति-ओम् । ओमौ । ओमः ।

अव रक्ष पालने । अव धातुः रक्षधातुश्च द्वावपि पालनार्थे । अव मुक् प्र० । किस्वात्संप्रसारणम् किस्वकरणसामर्थ्यादेव व्यञ्जनस्यापि वकारस्य संप्रसारणं भवति वस्य उः । (उ ओ । मोनुस्वारः ।) ओं अवतीति ओं जनपूर्वः जनान् अवतीति जनौ, विश्वमवतीति विश्वौ, जनौ जनौमौ जनौमः इत्यादि । यथा अवतीति अव्ययमेतत् ।

( अतिवृहिभ्यां मनिण् ) अत सातत्यगमने । सततम् अततीति आत्मा वा अतति अखिलजनान्तर्निवासित्वेन सुकृतदुष्कृतकर्माणि पश्यतीति-आत्मा । वृह वृहि वृद्धौ ।

अतधातुः सातत्यगमने निरन्तरगमने इत्यर्थः । अतति सातत्येन गच्छति तांस्तान् भावानिति आत्मा । अत् मनिण् प्र० । इकार उच्चारणार्थः णकारो वृद्ध्यर्थः। मन् । ( अत उपधायाः ) 'स्वर०' । आत्मन् १-१ नोपधाया इति दीर्घः । ( हसेपः । नाम्नो० )

( मन्युपधाया ऋरः ) मनिण्-प्रत्यये परे उपधाया ऋकारस्य रेफो भवति । वृंहतीति-ब्रह्मा ।

वृह वृहि वृद्धौ । वृह । वृहति वृंहति वेति ब्रह्म । मन्प्र० । ( मन्युपधाया ऋरः ) मन्युपधायाः ६-१ ऋरः मनि परे उपधाया उपधासम्बन्धिन ऋकारस्य रो भवति. वृहत्यस्य व्र ब्रह्मन् इति सिद्धम् १-१ नपुंसकात् स्यमो० । नाम्नो नो० । पुंल्लिंगे तु ब्रह्मा स्वयं वृहत्त्वात् अन्येषां वृंहणत्वाद्वा महत्त्वाद्व्यापकत्वाद्वा ब्रह्म । आगमजमनित्यमिति न्यायात् इदित इति न नुम् ।

( घृधृपदो मः ) घृ क्षरणे दीप्तौ च । घरतीति वा घ्रियते इति-घर्मः । धृ धारणे । धरतीति वा- ध्रियतेऽसौ-धर्मः । पद गतौ । पद्यते तत्-पद्मम्॥( ऋ-स्तु-सु-हृ-हु-मृ-क्षि-श्रु-

भा-मा-या-वा-जक्ष-रै-नी-श्यैङ् पद एभ्यो मः प्रत्ययो भवति ) ऋ गतौ। ऋच्छतीति-अर्मः नेत्ररोगः । स्तौतीति-स्तोमः। पूङ् प्रसवे। सूतेऽसौ-सोमः ।हर्मः । जुहोतीति-होमः। म्रियते इति-मर्म। क्षि निवासगत्योः । क्षयतीति-क्षेमः । टुक्षु शब्दे । क्षौतीति-क्षोमः । भातीति-भामः। मातीति-मामः । यातीति-यामः। वातीति-वामः । जक्ष भक्षहसनयोः। जक्ष्मः। रायतीति-रामः। नेमः। श्यैङ् दीप्तौ। श्यायति इति-श्यामः। पद्मः। ( भीध्वोर्वा मक् ) बिभेत्यस्मादिति-भीमः। धूयतेऽसौ धूमः।

धृ धारणे। धृ मम०। गुणः। रायपोद्विः। जलतुं० १-१ (स्रो०) धारणाद्धर्मः।

( ध्वादेरुलिक् ) ध्वादेर्धातोरुलिक् प्रत्ययो भवति । धूनोति वा धूयतेऽसौ धूलिः। अगि लगि रघि गत्यर्थाः । इदितः। अङ्गते सा अंगुलिः।

( ध्वादेरुलिक् ) ध्वादेर्धातोः उलिक्प्रत्ययो भवति किच्च। धूञ् कंपने। उलि०। सवर्णे०। धूलिः। धूयते वातादिना इति धूलिः। अगि, रगि, लगि, गत्यर्थाः। अग् उलि०। इदित इति नुमागमः। नश्चा०। स्वर०। सो०। अंगुलिः।

( भविष्यदर्थे णिनिः ) आगमिष्यतीति-आगामी। भविष्यतीति-भावी। ( शसादेः करणे त्रक् ) शसादेर्धातोः करणेऽर्थे त्रक् प्रत्ययो भवति। ( सर्वधातुभ्यष्ट्रमनौ ) शसु हिंसायाम्। शंसति वा शस्यते अनेनेति-शस्त्रम्। शासु अनुशिष्टौ। शिष्यते अनेनेति-शास्त्रम्। असु क्षेपणे। अस्यते अनेनेति अस्त्रम्। पा पाने। पीयते अनेनेति-पात्रम्। नीयते अनेनेति-नेत्रम्। दा ग्रहने। दीयते अनेनेति-दात्रम् ( युवह्यागिभ्यो निः ) एभ्यो धातुभ्यो निः प्रत्ययो भवति। यु मिश्रणे। यौति इति-योनिः। वहतीति-वह्निः। अङ्गतेऽसौ अग्निः ( इदिचदिकिरुदिभ्यो रः ) एभ्यो रप्रत्ययो भवति।

इदि चदि आह्लादने दीप्तौ च । इन्दतेऽसौ–इन्द्रः । चन्दतेऽसौ चन्द्रः । शक्नोतीति–शक्रः । रोदितीति–रुद्रः ।

( पुष्पादेरः ) पुष्पादेर्धातो रः प्रत्ययो भवति । पुष्प विकसने । पुष्प्यति तत्–पुष्पम् । फल निष्पत्तौ । फलति तत्–फलम् । मूल व्याप्तौ । मूलति तत्–मूलम् । रघ सामर्थ्ये । ( उप्रत्ययः ) रघते शास्त्राणां शत्रूणां च अन्तं गच्छति प्राप्नोतीति–रघुः ।

गम्लृ गतौ । गम् आङ्पूर्वः। भविष्यदर्थे णिनि प्रत्ययः। णित्वाद् वृद्धिः। 'स्वर०', १–१ ( इनां शौ सौ । हसेपः०। नाम्नो नो० ) आगमिष्यतीति आगामी । भू णिन् वृद्धिः (औ आव्) भविष्यतीति भावी । ईश् ऐश्वर्ये । ईष्टे ऐश्वर्यं करोति इति ईश्वरः। ईश् वरम० । 'स्वर' १–१ ( स्रो० ) एवं तिष्ठतीति स्थावरः । ष्ठा गतिनिवृत्तौ । ( आदेः ष्णः स्नः ) स्था वरम० १–१ ( स्रो० ) भास्वरः । ( इण्णशूजिसरतिभ्यः करप् ) । पित्वात्तुक् । गत्वरः इति निपातः । जयति इत्येवंशीलो जित्वरः । एति इत्येवं शीलो इत्वरः । नश्यतीत्येवंशीलो नश्वरः ।

( राजादेः कन् ) राजादेर्धातोः कन् प्रत्ययो भवति । राज् धन्व यु द्यु प्रतिदिव् वृप् तक्ष् दंश् पचि पप् अशुङ् नु मह एते राजादयः । राजृ दीप्तौ । राजतेऽसौ राजा । धन्व गतौ । धन्वतीति–धन्वा । यु मिश्रणे यौतीति–युवा । द्यु गतौ । द्यौतीति–द्युवा । प्रतिदीव्यतीति–प्रतिदिवा । वृपु वृद्धौ । वर्पतीति–वृपा । तक्षू तनूकरणे । तक्ष्णोतीति–तक्षा । दंशतीति–दश । पचि विस्तारे । पचि संख्याने । इदित् ( जस्शसोर्लुक् ) पञ्चतीति–पञ्च । पप् संबन्धे । पप् गणने । अशूङ् व्याप्तौ । ( पपेरशेः किति तुक् वक्तव्यः ) सपन्ति ते सप्त । अस्नुवते इति–अष्ट । णु स्तुतौ । अस्य गुणः । नुवन्ति ते–नव । मह पूजायाम् । ( अस्य घान्तादेशो वुगागमश्च निपात्यते कन्प्रत्यये परे ) मह्यते इति–मघवा । ( इस्मन्-

न्नासुकः सर्वधातुभ्यः ) सर्वधातुभ्यः इस् मन्त्र असुक् इत्येते प्रत्यया भवन्ति ।

राजादेरिति । राजृ दीप्तौ इत्यादेर्धातोः कन्प्रत्ययो भवति । राजते शोभते–इति राजा । राजृ अन्प्र० । स्वर० । ( नोपधायाः । हसेपः० । नाम्नो० ) यु मिश्रणे । यु अन् । नुधातोरित्युव० । 'स्वर०' यौतीति–युवा ।

( वचादेरस् ) वचादेर्धातोरस् प्रत्ययो भवति वा सर्वधातुभ्यो असप्रत्ययः । उच्यते इति--वचः । मह्यते इति–महः । पीङ् पाने । पीयते तत् पयः ( पिबतेरपि ) पिबतेर्धातोरसुनप्रत्ययो भवति इकारान्तादेशश्च । पीयते इति--पयः । तिज् निशाने क्षमायां च । तितिक्षतीति--तेजः । तप्यते इति तपः । रञ्ज् रागे ( असि नलोपो वाच्यः ) रजते तत् रजः । रक्ष हिंसायाम् रक्षतीति–रक्षः ( अर्चिरुचिशुचिहुसृपिच्छादिच्छृदिभ्य इस् प्रत्ययो भवति । अर्चिरुची दीप्तौ । अर्चतीति–अर्चिः । गुणः । रोचिः । शोचिः । हूयते इति–हविः । सर्पिः ( छादेरिस्मन्त्रन्क्विप्सु ह्रस्वो वाच्यः ) छद संवरणे । चुरादिः । छादयतीति–छदिः । उच्छृदिर् दीप्तिदेवनयोः । छृणत्तीति–छर्दिः ( सर्वधातुभ्यष्ट्रमनौ ) तनु विस्तारे । तनोति तत्–तन्त्रम् । मन ज्ञाने । मन्यते इति–मन्त्रः । यम उपरमे । यच्छतीति–यन्त्रम् । छदि संवरणे । ण्यन्तः । छादयतीति–छत्रम् । क्रियते तत्कर्म । वृञ् आच्छादने । वृणोतीति वर्म । मर्म दाम घर्म । छादयतीति–छद्म । ( धनार्तिचक्षिङ्पृवपितपिजनियजिभ्य उस् प्रत्ययो भवति ) धन शब्दे । धनतीति–धनुः । ऋ गतौ ( गुणः ) अरुः । चक्षिङ् व्यक्तयां वाचि । चष्टे इति–चक्षुः । पिपर्तीति–परुः । वपतीति–वपुः । तपतीति–तपुः । जायते इति–जनुः । यजतीति–यजुः । ( अवतृस्तृञ्तन्त्रिकण्डिभ्य ईः ) अवतीति–अवीः । तरतीति–

तरीः । स्तृञ् आच्छादने । स्तृणोतीति–स्तरीः । तन्त्रि- धारणे । कण्ठ अवधारणे । तन्त्रयति वा तन्त्रयते सा–तन्त्रीः। कण्ठयतीति–कण्ठीः ।

( वचादेरस् ) वचादेर्धातोः असप्रत्ययो भवति । वच् अस् प्र० १–१ । नपुंसकात्स्यमो० । (स्रो० ) वचः । वचसी । वचांसि । एवं मह दीप्तौ । महः । उच्यते इति वचः । मह्यते इति महः ।

( सौकर्ये केलिमः ) सुखेन भिद्यते तत्–भिदेलिमं, वा भेत्तुं सुकरं भिदेलिमं किं काष्ठम् । सुखेन पच्यन्ते इति पचेलिमाः । आढक्यः, वा पक्तुं सुकराः पचेलिमाः किं तन्दुलाः ।

( सौकर्ये केलिमः ) सुखेन क्रियते इति सुकरं तस्य भावः सौकर्यं तस्मिन्नर्थे केलिमप्रत्ययो भवति । ककारो गुणनिषेधार्थः । एलिम इति । भिदिर् विदारणे । भिद् सुखेन भिद्यते इति विग्रहे एलिमप्र० । 'स्वर०' । ( अतोऽम् ) भिदेलिमं काष्ठम् । पच् एलिमप्र० । 'स्वर०' । ( आवतः स्त्रियाम् ) १–३ अस् ( सवर्णे० । स्रो०) सुखेन पच्यते इति पचेलिम आढक्यः । आढकी धान्यविशेषः ।

( गमेर्डोः ) गमेर्धातोर्डोः प्रत्ययो भवति । गच्छतीति गौः ।

( गमेर्डोः ) गम् डोप्र० । टिलोपः । स्वर० १–१ गौः । स्वर० । ( स्रो० ) गच्छतीति गौः ।

( ग्लानुदिभ्यां डौः ) ग्लायतीति ग्लौः । नुदतीति नौः नुद प्रेरणे ।

( ग्लानुदिभ्यां डौः ) नुदति नुद्यते वा नौः । ग्लायतीति ग्लौः चन्द्रः ।

( क्वादीनामिः ) स्पष्टम् । कविः । रविः । पविः । इत्यादि । ( मनेरत उच्च ) मनधातोरकारस्योकारो भवति । मुनिः । ( पुः कुपन् ) पृधातोः कुपन्नादेशो भवति ( पोरुर् ) पुरुषः ( मा प्रभृतिभ्यः सः ) मासः । दासः ( मादिभ्यो यः ) माया । जाया ( दधातेर्नुट् ) धान्यम् । ( पतिचडिभ्यामालञ् ) पातालम् । चाण्डालः ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ १ ॥
उणादयोऽपरिमिता येषु संख्या न गम्यते ॥
प्रयोगमनुसृत्याद्धा प्रयोक्तव्यास्ततस्ततः ॥ २ ॥

इति कृदन्ते उणादयः ॥ ८ ॥

( छादीनामिः ) कु शब्दे । इप्र० । गुणः । कौतीति–कविः । रौतीति–रविः । पुनातीति–पविः । हरतीति हरिः (मनेरुच्च) मन ज्ञाने इत्यस्य इः प्रत्ययः । अकारस्य चोकारः। मनुते तत्त्वामिति मुनिः। मुहेः खः। मुरादेशश्च । मुह्यतीति मूर्खः। पुः कुपन् । पृ पालनपूरणयोः इत्यस्य कुपन्प्रत्ययः ( पोरुर् ) पिपर्ति पूर्यते वा पुरुषः ( माप्रभृतिभ्यः सः ) मीयते इति मासः । ददात्यात्मानं दासः ( मादिभ्यो यः ) मातीति माया । जन्यतेऽपत्यमस्यामिति जाया । जनेर्जा आदेशः ( दधातेर्यो नुट् ) दधाति सत्त्वानिति धान्यम् ( पतिचडिभ्यामालन् ) वृद्धिः । पतंत्यस्मिन्निति पातालम् । चडि कोपे । चंडनशीलश्चांडालः । खर्जादिभ्य ऊः।खर्ज्जूः (वहेर्धश्च) वहेर्धातोर्हकारस्य धकारादेशो भवति। वहति गृहभारं वधूः। ( अवितॄस्तॄतंत्रिभ्य ईः। अवीतरीतन्त्रीऊतियूतिसातिहेतिकीर्तयश्च निपात्याः) अवनम् ऊतिः। यु मिश्रणे । यूतिः। कीर्त्तनं कीर्त्तिः। कृत संशब्दे । हन्यते अनयेति हेतिः । पोंतकर्मणि । पिञ् बंधने वा । सातिः। (शृवंन्धोरारुः ) हिंसायाम् । हिसनशीलः शरारुः । वन्दनशीलो वंदारुः । वद् ।आरु प्र० । इदित इति नुम् 'स्वर०' ( भृजादिभ्यो यण् ) डुभृञ् । यण्प्र०। वृद्धिः। ( राद्यपो द्विः ) जलतुं० । भ्रियते इति भार्या । एवं ऋ गतौ आर्या । स्त्रीत्वादाप् । ( वु वह अगिभ्यो निः ) वह्निः । अग्निः । (इदि चदि शकि रुदिभ्यो रः) इन्द्रः । चन्द्रः। शक्रः । रुद्रः । इत्यादि । उपसंहारमाह । उणादयः प्रत्यया अपरिमिताः संख्यारहिता इत्यर्थः । यो यत्र प्रयोगः संभवति तत्र तं प्रयोगमाश्रित्याश्रित्य प्रयोगानुसारेण प्रयोक्तव्या इत्यर्थः ॥ इतिं उणादयः ॥ ॥

( तुम् तदर्थायां भविष्यति ) धातोर्भविष्यति काले तुम् प्रत्ययो भवति तदर्थायां क्रियायां प्रयुज्यमानायाम् । भुज पालनाभ्यवहारयोः । भोक्ष्यतीति–भोक्तुं व्रजति । पठिष्यतीति–पठितुम् ईष्टे । स्तोष्यतीति–स्तोतुम् ईहते । स्थातुम् इहते ॥ ( तुमर्थे वुण् वक्तव्यः ) द्रक्ष्यतीति–द्रष्टुम् । कृष्णं द्रष्टुं व्रजति । कृष्णदर्शको व्रजति ।

( तुम् तदर्थायां भविष्यति ) तुम् १-१ ( हसेपः ) स एवार्थों यस्यां सा तदर्था तस्यां ७-१ ।( आम्ङे । ङितां यट् ) 'स्वर०'। भविष्यति ७-१ 'स्वर०'। धातोर्भविष्यति काले तुम्प्रत्ययो भवति यस्याग्रे तुम्प्रत्ययो भवति स एव धात्वर्थ एवार्थः प्रयोजनं यस्याः सा तस्यां तत्सम्बन्धार्थवाचिकायां तत्प्रयोजनायां क्रियायां वाच्यमानायां सत्याम् । भुज् पालनाभ्यवहारयोः । भुज् तुम् प्र० । ( चोः कुः ) उपधाया लघोर्गुणः। (खसेचपा०) 'स्वर०' तुम्प्रत्ययान्तम् अव्ययं १-१ अव्य० । भोक्तुं व्रजति । अत्र भुज्धात्वर्थप्रयोजने व्रजतीति क्रिया प्रयुज्यते । पठ-तुम् प्रत्ययः (कृतः) इतीडागमः। 'स्वर०'। पठितुम् इष्टे समर्थो भवति। ष्णा शौचे ।( आदेः ष्णः स्नः) स्ना तुम्प्र० । स्नातुम् ईहते वांछति ।

( कालसमयवेलासु तुम् ) भोक्तुं कालः । अध्येष्यतीति-अध्येतुं समयः । स्तोष्यतीति-स्तोतुं वेला ।

कालवेलासमयेषु च तुम् वक्तव्यः। भोक्तुं कालः । भोक्तुं वेला । भोक्तुं समयः ।

( घञ् भावे ) धातोर्भावे घञ् प्रत्ययो भवति ( चजोः कगौ घिति ) पच्यते तत् पचनं-पाकः । त्यज् वयोहानौ । त्यज्यते तत् त्यजनं त्यागः । भज्यते तत् भजनं-भागः । इज्यते तत् यजनं-यागः । विभज्यते तत् विभजनं-विभागः । युजिर् योगे । अनुप्रयुज्यतेऽसौ अनुप्रयोगः । अनूच्यते तत् अनुवचनं अनुवाकः । इण् गतौ । नन्दादित्वाद्युः । ततोनादेशः ( गुणः ) वृद्धिः । अयनम् आयः । भूयते तत् भवनं भावः ( आतो युक् ) दीयते तत् दानं दायः । पानं पायः । ( भावे करणेऽर्थे घञि रञ्जेर्नलोपो वाच्यः ) रज्यते अनेनेति-रञ्जनं वा रागः । भावे किम् । रज्यतेऽस्मिन्निति रङ्गः । रभ राभस्ये ( रभलभोः स्वरेणाद्यपो विना नुम् वाच्यः ) आरम्भः । अञ्चु गतिपूजनयोः । परितोऽञ्चतीति-प्राङ्कः ।

सूत्रम् ( घञ् भावे ) घञ् १-१ । ( हसेपः० ) भावे ७-१ (ञ इ ए) धातोर्भावे कर्मरहिते अर्थे केवलधात्वर्थे एव घञ्प्रत्ययो भवति । ञकारो वृद्धयर्थः । घकारं

घित्कार्यार्थः। डुपचष् पाके। पच् घञ्प्र०। (अत उपधायाः) पाच् अ इति स्थिते। चश्च जश्च चजौ तयोः ६–२ 'स्वर०' (स्नो०) कश्च गश्च कगौ १–२(ओ औ औ) घ इत् यस्य स घित् तस्मिन् घिति ७–१ 'स्वर०'। घिति परे चकारस्य ककारः।जकारस्य गकारः। अनेन चस्य कः। 'स्वर०'। पचनं पाकः। त्यज् हानौ। त्यज् घञ्प्र०। आ वृद्धिः। चजोरिति जस्य गः। 'स्वर०'। त्यजनं–त्यागः।भज सेवायाम्। विपूर्वः। चजोः कगौ वृद्धिः। 'स्वर०'। विभजनं विभागः। इण् गतौ इञ् अ वृद्धिः। इ इत्यस्य ऐ। ऐ आय्। 'स्वर०'। १–१(स्नो०) अयनं आयः।अय गतौ। अयनं आयः। ये गत्यर्थास्ते प्राप्त्यर्थाः। एवं भवनं भावः। डुदाञ् दा घञ्। (आतो युक्)'स्वर०'१–१ (स्नो०) दानं दायः। पानं पायः। एवं विस्तरणं विस्तारः।

(संज्ञायामकर्तरि च) धातोः कर्तृवर्जिते कारके भावे कर्मणि च घञ् प्रत्ययो भवति संज्ञायां विषये। कार्यं कार्यं प्रति आह्रियते इति–प्रत्याहारः। दीयते अस्मिन् इति दायः। दीयतेऽसौ दायः। पीयते अस्मिन् इति पायः। विक्रियते अनेनेति विकारः। मृजू शुद्धौ। अपामृज्यते अनेनेति अपामार्गः। लिख् आलेखने। लिख्यतेऽस्मिन्निति लेखः। आचर्यतेऽस्मिन्निति–आचारः। उपाधीयतेऽस्मादिति–उपाध्यायः।

सूत्रम् (संज्ञायामकर्तरि) संज्ञा ७–१ (आम्ङेः। ङितां यट्। सवर्णे०) न कर्ता अकर्ता। तस्मिन् ७–१ङौ इति। अर् 'स्वर०'। च १–१ अव्य०। संज्ञायां विषये कस्यापि। नाम्नि वाच्ये सति अकर्तरि कर्तृवर्जिते कारके भावेऽर्थे कर्मार्थे च घञ् प्रत्ययो भवति। अनुबंधादिः प्राग्वत्। उदा०। हृ प्रत्याङ्पूर्वः। प्रतिकार्यं आह्रियते आनीयते इति प्रत्याहारः। घञ्। प्र० वृद्धिः। 'स्वर०' १–१ (स्नो०) एवं विक्रियते इति विकारः। दीयते इति दायः। वस्यते अस्मिन्निति वासः।

(स्वरादः) इउऋवर्णान्तेभ्यो धातुभ्यो अः प्रयत्यो भवति भावादौ। घञोऽपवादः। संचीयतेऽसौ संचयः। चयनं चयः। जीयते इति–जयः। नीयते तत्–नयनं नयः। उन्नीयते इति–उन्नयः। नूयते तत् नवनं–नवः। लवणं लवः। स्तूयते तत्–स्तवनं–स्तवः। कृ विक्षेपे। कीर्यते इति करः। गरः। नॄ

विक्षेपे । व्रियते विक्षिप्यते कामादिभिरिति–नरः । पिञ् बन्धने । विशेषेण सीयते बद्धयते अनेनेति–विषयः ।

(स्वरा०) स्वरात् ५–१ ( ङसिरत् । सवर्णे० ) अः १–१ ( स्रो० ) । ( चपा अ-वे जबाः ) 'स्वर०' । वृत्तिः सुगमा । चिञ् चयने । चि अप्रत्ययः । ( गुणः । ए अय् ) 'स्वर०' १–१ ( स्रो० ) चयनं चयः । अत्र भावे संपूर्वः । संचीयत इति संचयः । अत्र कर्मणि । ष्टुञ् स्तुतौ ( आदेः ष्णः स्नः ) स्तु । ( स्वरादेः ) इति अप्र० ( गुणः । ओ अव् ) स्वर० १–१ ( स्रो० ) स्तवनं स्तवः । एवं भवनं भवः । अनुभवन-मनुभवः । णु स्तुतौ । नवनं नवः । णीञ् प्रापणे ( आदेः ष्णः स्नः ) नी उत्पूर्वः । उत्प्राबल्येन ऊर्ध्वं वा नयनं प्रापणम् उन्नयः । अप्र० गुणः । 'स्वर०' १–१(स्रो०) नॄ विक्षेपे । व्रियते विक्षिप्यते प्रेर्यते कर्मादिभिरथ वा कामादिभिरिति नरः । ( स्वरादेः ) अप्र० ( गुणः ) 'स्वर०' ( स्रो० )

( मदामः ) मदादीनाम् अः प्रत्ययो भवति भावादौ कर्तृ-वर्जिते । मदी हर्षे । मद्यते तत मदनं मदः । प्रमद्यते अनेनेति प्रमदः । प्रमद्यते पुरुषोऽनया सा प्रमदा । पण्यते तत् पणनं पणः । शमु दमु उपशमे । शम्यतेऽसौ–शमः । दमनं–दमः । श्रम खेदे । श्रम्यते इति–श्रमः । भ्रमः । यमु उपरमे । यम्यते इति यमः । दीव्यति विश्वमनेनेति–देवः । जंगम्यतेऽसौ–जंगमः । हिसि हिंसायाम् ।

सूत्रम् ( मदामः ) मदां ६–३ 'स्वर०' । ( मोनु० ) अः १–१ मदादीनां धातूनाम् अप्रत्ययो भवति भावे कर्त्तरि च । मदी हर्षे । मद अप्र० । 'स्वर०' १–१ ( स्रो० ) मदनं मदः । अत्र भावे । एवं प्रमद्यते प्रकर्षेण हृष्टः क्रियते पुरुषोऽनयेति प्रमदा स्त्री-त्वादाप् । अत्र कर्माणि पण् धातुः व्यवहारे स्तुतौ च । पण् अप्र० । 'स्वर०' । पणः । शमु दमु उपशमे । शमः दमः । यमु उपरमे । यमः विस्तरः । दीव्यते विश्वमनेनेति देवः । पिञ् बंधने । ( आदेः ष्णः स्नः ) सि विपूर्वः विशेषेण सिनोति वध्नाति पुरुष ईश्वरो वा अनेनेति–विषयः । अप्र० ( गुणः ) । 'स्वर०' ( प्रादेश्च तथा तो-मुनमाम् ) १–१ ( स्रो० ) ।

( मूर्तौ घनः ) मूर्तौ काठिन्ये परिच्छेदेऽर्थे चाभिधेये हन्तेरः प्रत्ययो भवति भावादौ हन्तेर्घनादेशश्च । दधिकाठिन्यं

हन्यते इति--दधिघनः। परिच्छिन्नं सैन्धवं हन्यते इति सैन्धव-घनः। (हनो वधादेशश्चाप्रत्ययः) हन्यते इति वधः।

सूत्रम् (मूर्तौ घनः) मूर्ति ७-१ (ङेरौ ङित्) टिलोपः 'स्वर०' घनः १-१(स्रो०) मूर्तौ कोऽर्थः काठिन्येऽर्थे पुनः परिच्छेदे परिमाणेऽर्थे वा ज्ञानविशेषे वा अभिधेये वाच्ये सति हंतेर्धातोः अप्रत्ययो भवति हंतेश्च घनादेशः। हन् एकत्र दधिपूर्वः द्वितीये सैंधवपूर्वः। अप्र०। घनादेशः। दि०। 'स्वर०' १-१ स्रो०। कठिनं दधि दधिघनः परिच्छिन्नम् एतावत् स्तोकं वा सैंधवं सैंधवघनः।

(सिंहे वर्णविपर्ययश्च) चकारादः प्रत्ययः। हिनस्तीति सिंहः।

हिंसतेर्धातोः अप्रत्ययो वर्णविपर्ययश्च भवति सिंहे वर्णविपर्ययः इत्युक्तत्वात्। हिंसि हिंसायाम्। हिंस्-हिनस्तीति-हिंसः अत्र वर्णविपर्ययः। हस्य स्थाने सः। सस्य स्थाने हः इति। 'स्वर०' १-१ (स्रो०।) सिंहः।

(ट्वितोऽथुः) ट्वितो धातोरथुः प्रत्ययो भवति भावादौ। टुवेपृ कम्पने। वेप्यते अनेनेति वेपथुः। टुनदि समृद्धौ। नन्द्यते अनेनेति—नन्दथुः। टुवप् बीजतन्तुसन्ताने। उप्यते इति--वपथुः। टुवेपृ क्षेपणे। क्षेप्यते अनेनेति--क्षेपथुः। टुओश्वीर् गतिवृद्ध्योः। श्वयथुः। टुक्षु शब्दे। क्षूयते इति क्षवथुः। टुवम् उद्गिरणे। वमथुः।

(ट्वितोऽथुः) टुइत् यस्य स ट्वित् तस्मात् ५-१ 'स्वर०' (स्रो०) अथु० १-१ (स्रो०) (अतोत्युः। उ ओ। एदोतोऽवः) टु इत् यस्य तस्य धातोः अथुप्रत्ययो भवति भावे। टुवेपृ कंपने। वेप् अथुप्र०। 'स्वर०' १-१ (स्रो०) वेपथुः। टुवेपृ क्षेपणे प्रेरणे। क्षेपथुः। टुनदि समृद्धौ। नंदथुः। टुदु उपतापे। दवथुः। टुक्षु शब्दे। क्षवथुः। टुओश्वीर् गतिवृद्ध्योः। श्वयथुः। टुवम् उद्गिरणे। वमथुः।

(ड्वितस्त्रिमक् तत्कृते) ड्वितो धातोस्त्रिमक् प्रत्ययो भवति। तेन धात्वर्थेन कृतेऽर्थे वाच्ये सति। क्रियया निर्वृत्तः कृत्रिमः घटः। संभारेण संभृतं वा निर्वृत्तं संभृत्रिमं युद्धम्। पाकेन निर्वृत्तं पक्त्रिमं फलम्। याचनेन निर्वृत्तं याचित्रिमं किं विप्रधनम्।

सूत्रम् (ड्वितः त्रिमक् तत्कृते) ड्वित् ५-१ 'स्वर०' (स्रो०) त्रिमक् १-१ (हसेपः०) तत्कृते ७-१ (अ इ ए) डु इत् अनुबंधो यस्य स ड्वित् तस्माद्धातोः

त्रिमक् प्रत्ययो भवति । तेन धात्वर्थेन साधनभूतेन कृते निष्पादिते पदार्थे वस्तुनि अर्थे वाच्ये सति । कृ क्रियया करणेन निर्वृत्तो निष्पन्नः कृत्रिमोऽस्वाभाविको घटः । अत्र कृ धातोरर्थः करणं तेन कृतो निष्पन्नो यो घटरूपो अर्थः पदार्थो तस्मिन् वाच्ये त्रिमक्प्र० । ककारो गुणनिषेधार्थः १–१ ( स्तो० ) एवं डुभृञ् संपूर्वः । त्रिमक् प्र० १–१ ( अतोऽम् ) संभारेण मनुष्यसमूहेन निर्वृत्तं संभृत्रिमं युद्धम् । डुपचष् पाके । पच् त्रिमक् प्र० ( चोः कुः) 'स्वर०' १–१ ( अतोऽम् ) पाकेन निर्वृत्तं निष्पन्नं यत्कृत्रिमं फलम् । एवं पक्त्रिमः ओदनः ।

( नङ्की ) धातोर्नङ्की इत्येतौ प्रत्ययौ भवतः भावादौ । यज्--याच-यत्--विच्छ-प्रच्छ--स्वप् एभ्यो नङ् प्रत्ययो भवति। ( स्तोः श्चुभिः श्चुः ) असंप्रसारणम् । इज्यते अनेनेति--यज्ञः । याच्यते सा याच्ञा । यती प्रयत्ने । यत्यते तत् यतनं यत्नः ।

सूत्रम् (नङ्की) नङ् च किश्च नङ्की १–२ (औ यू । सवर्णे०) धातोर्नङ् कि इत्येतौ प्रत्ययो भवतः भावादौ । स्वपरक्षयतप्रच्छिविच्छियाचयज एभ्यो नङ् । यती धातुः प्रयत्ने यत् नङ् प्र० । 'स्वर०' १–१ ( स्तो० ) यतनं यत्नः । प्रच्छ ज्ञीप्सायां प्रच्छ् नङ् प्र० ।

( प्रच्छः श्ने ) छकारस्य शकारादेशो भवति नप्रत्यये परे भावादौ । शकारादेशः संप्रसारणवाधनार्थः । विच्छ गतौ । विच्छ्यते इति विश्नः । प्रच्छ ज्ञीप्सायाम् । प्रच्छ्यतेऽसौ प्रश्नः । रक्ष्यतेऽसौ--रक्ष्णः । सुप्यते इति--स्वप्नः । ( उपसर्ग-कर्माधारेषु दाधोः किः ) उपसर्गे कर्मण्युपपदे आधारे च दाधोः किः प्रत्ययो भवति । अन्तर्धीयते इति--अन्तर्धिः । आधिः आदिः विधिः । आधीयते तत् आधानम्--आधिः । आदीयते तत् आदानम्--आदिः ( आतोऽनपि ) इत्याकार-लोपः । विधीयते तत् विधानं--विधिः । संधीयते तत् संधानं-संधिः । उदकं धीयतेऽस्मिन्निति--उदधिः । ( उदकस्य उदक-शब्दस्य उदादेशो भवति अधिकरणे ) पयोधिः । अम्भो निधी-यते यत्र स-अम्भोनिधिः ।

(प्रच्छः श्ने) प्रच्छ्धातोः ने परे छकारस्य शकारो भवति संप्रसारणाभावश्च 'स्वर०' १-१ (स्तो०) पृच्छनं प्रश्नः। विच्छश्च। विच्छ गतौ विश्नः। याचनं याञ्चा। यज् देव०। यजनं यज्ञः नङ् प्र०। (स्तोः श्चुभिः श्चुः। जज्ञोर्ज्ञः) १-१ (स्तो०) स्वपनं स्वप्नः। तेन द्रवति द्रोणी। राज्ञा धीयते राजधानी। डुधाञ् धारणे विपूर्वः। किप्र०। ककारः कित्कार्यार्थः। इ। आतोनपीत्याकारलोपः। 'स्वर०' १-१ (स्तो०) विधिः विधानं विधिः। एवं निधिः। आधिः। संधिः। अंभो निधीयते यत्र स अंभोनिधिः। आदीयते इति आदिः। ग्रथि ग्रंथने। ग्रथ् कि प्र०। इ इदितः। (नश्चा०) (स्वर०) १-१ (स्तो०) ग्रंथिः। विधिः। निधिः। संधिः। आधिः। समाधिः। अंभोनिधिः। एते सर्वेऽपि किप्रत्ययांताः, पुंल्लिंगे हरिशब्दवत् साध्याः।

(भावे युट्) धातोर्भावे युट् प्रत्ययो भवति (युवोरनाकौ) ज्ञायते तत् ज्ञानम्। क्रियते तत्-करणम्। दीव्यते तत् देवनम्। दीयते तत् दानम्। भूष अलंकारे। भूष्यते तत्-भूषणम्। ह्रियते तत्-हरणम्। हूयते तत्-हवनम्। उह्यते तत्-वहनम्। भाष व्यक्तायां वाचि। भाष्यते तत्-भाषणम्। दुष वैकृत्ये। दूष्यते तत्-दूषणम्। गीयते तत्-गानम्। पीयते तत्-पानम्। मीयते-तत् मानम्। (उदः स्थास्तम्भोः सलोपश्च) उत्-उपसर्गात्परयोः स्थास्तम्भयोः सकारस्य लोपो भवति। उत्थीयते तत्-उत्थानम्। स्तम्भ रोधने। उत्तम्भ्यते तत्-उत्तम्भनम्।

सूत्रम् (भावे युट्) युट् १-१ (हसेपः) वृत्तिः कंठ्या। युट् प्रत्ययांता नपुंसकलिंगे भवंति। कृ युट् प्र०। यु०। (युवोरनाकौ। गुणः) 'स्वर०'। (पुर्नो०) क्रियते इति-करणम्। हु दानादनयोः। हूयते इति-हवनम्। दुष वैकृत्ये। दूष्यते इति दूषणम्। दुषश्च। ण्यन्तस्य कृति च। क्वचिदिति दीर्घः। डुदाञ् दाने। एवं भाषणम्। उद० इति उत्-उपसर्गात् पूर्वात् स्थादेर्धातोर्युट् प्रत्ययो भवति सलोपश्च भवति। ष्ठा गतिनिवृत्तौ। (आदेः ष्णः स्नः) स्था उत्पूर्वः। युम०। युवो०। (उदःस्था०) इति सकारलोपः। उत्थानम्। एवं स्तंभ् निरोधे। स्थंभ अवष्टंभे। उत्तंभनम्। उत्थितिः।

( साधनाधारयोर्युट् ) साधने आधारे चार्थे युट् प्रत्ययो भवति। पच्यते अनेनेति-पचनः अग्निः। पच्यतेऽस्यां स्थाल्यां सा पचनी स्थाली।

सूत्रम् ( साधनाधारयोर्युद् ) साधनं च आधारश्च साधनाधारौ तयोः ७-२। ( ओसि ) ( ए अय् ) 'स्वर०'। ( स्रो० ) साध्यं येन कृत्वा तत्साधनं करणं यत्र आधाय साध्यते स आधारः तयोः अर्थे युद् प्र०। पच् यु। ( युवोरनाकौ )'स्वर०' १-१ (स्रो०) पच्यते अन्नमनेनेति पचनोऽग्निः। अत्र साधने युद् स्थाली। स्थाल्युखापि वरं कुंडम् इत्यभिधानचिंतामणौ। टित्वादीप्। अत्राधारे युद्। एवमन्येप्यूह्याः।

( ईपद्दुःसुपु खल्यू ) ईपदादिषु प्रयुज्यमानेषु खल् यू इत्येतौ प्रत्ययौ भवतः भावादौ। लकारः प्रत्ययभेदज्ञापनार्थः। खकारो गुणविधानार्थः। मुमागमार्थश्च। ईपत्सू अकृच्छ्रार्थौ दुः कृच्छ्रार्थः। ईपदनायासेन भूयते इति ईपद्भवः। दुर्भवः। सुभवः। ईपदनायासेन क्रियते इति-ईपत्करः प्रपञ्चो हरिणा। दुःखेन क्रियते इति-दुष्करः। सुखेन क्रियतेऽसौ-सुकरः। ईपदाढ्यः क्रियते अनेनेति-इपदाढ्यंकरः। दुराढ्यंकरः। आढ्यंकरश्चैत्रो भवता। ईपत् पीयते असौ ईपत्पानः सोमो भवता। दुःपानः। सुपानः। युध संप्रहारे। दुःखेन योधयितुं शक्यः दुर्योधनः। सुखेन योधतितुं शक्यः सुयोधनः। ईपत् शासनः। दुःखेन शासयितुं शक्यः दुःशासनः।

सूत्रम् ( ईपद्दुः ) ईपच्च दुश्च सुश्च ईपद्दुःसवस्तेषु ७-३ किला०। खल् च युश्च खल्यू १-२ औयू सवर्णे०। ईपदादिषु ईपद्दुः सुएतेषु त्रिषु पूर्वपदेषु सत्सु धातोः खल् यू एतौ प्रत्ययौ भवतः। खकार ईपदाढ्यं भवः इत्यादौ खिति पदस्येति मुमागमार्थः। लकारो इखखीति खप्रत्ययाद् भेदज्ञापनार्थः। भू ईपद्दुः सुपूर्वाः खल्प्र०। अ।(गुणः।ओ अव्)। 'स्वर०'१-१(स्रो०) ईपद्भवतीति ईपद्भवः। एवं दुःखेन भवतीति दुर्भवः। सुखेन भवतीति सुभवः एवं करोति ईपत्क्रियते इति ईपत्करः। दुःकरः। सुकरः। एवं दुर्जयः। सुजयः। दुर्लभः। सुलभः। युध् धातुः संप्रहारे संग्रामे। युध् दुः पूर्वः। युप्र०। युवो०। इति अनादेश. उपधाया लघोर्गुणः। 'स्वर०' १-१(स्रो०) दुर्योधनः। दुःखेन युध्यते इति दुर्योधनः। एवं सुयोधनः।

तव्यादीनां कृत्यसंज्ञा पाणिनीयानाम् । कृत्यादिर्भावकर्मणोरेव। ( तव्यानीयौ ) धातोस्तव्यानीयौ प्रत्ययौ भवतः भावादौ। एध वृद्धौ। एध्यते वा एधितुमर्हमेधितव्यम् एधनीयं धनं त्वया। भावस्यैकत्वादेकवचनं नपुंसकत्वं च । भूयते वा भवितुमर्हं भवितव्यम् । भवनीयम्। क्रियते वा कर्तुमर्हं कर्तव्यं करणीयम्। आस्यते वा आसितुमर्हमासितव्यम् । आसनीयम्। कर्तव्यः करणीयो वा धर्मस्त्वया। या प्रापणे। प्रयातुमर्हं प्रयातव्यं प्रयाणीयम्। ( ईटो ग्रहाम् ) गृह्यते तत्-ग्रहीतव्यं ग्रहणीयम् । वृङ् संभक्तौ। व्रियते वा वरितुं योग्यं वरितव्यम् वरीतव्यं वरणीयम् । वृञ् वरणे । व्रियते तत् वरितव्यम् वरीतव्यम् वरणीयम् ।

तव्यश्च अनीयश्च तव्यानीयौ १-२ ( ओ औ औं ) धातोस्तव्यानीयौ प्रत्ययौ भवतः अकर्त्तरि कर्मादिकारके भावे च भू तव्य प्र० । ( कृत० ) इतीडागमः। गुणः। 'स्वर०' १-१ ( अतोऽम् ) भवनं भवितव्यम्। अत्र भावे तव्यप्र० । आस् उपवेशने। अनीयप्र० 'स्वर०' १-१ ( अतोऽम् ) कृ एकत्र तव्यः । एकत्र आनीयः। एकस्वरांतत्वान्नेट् ( गुणः ) 'स्वर०'। कर्त्तव्यं करणीयम्। अत्र कर्मणि क्रियते इति कर्त्तव्यं करणीयम्। ग्रह तव्य० ( कृतः ) इतीडागमः। ग्रहितव्यमिति स्थिते। (ईटो ग्रहाम्)। अनेन इकारस्य ईकारः ग्रहीतव्यम। वृञ् धातुः संभक्तौ रासे वायां तव्य प्र०। ( कृतः ) इतीडागमः। ( गुणः ) 'स्वर०' १-१ ( अतोऽम्। ईटो ग्रहाम् ) वरीतव्यम।

( स्वराद्यः ) स्वरान्ताद्धातोर्यः प्रत्ययो भवति भावादौ। चीयते वा चेतुमर्हं चेयम्। नेयम्। जेयम्। भीयते तत्-भेयम्। ( असरूपोऽपवादः प्रत्ययोऽस्त्रियां वा बाधकः सरूपस्तु नित्यम् ) चीयते वा चेतुमर्हं चेतव्यं-चयनीयम्। चिकीर्ष्यते वा चिकीर्षितुमर्हं चिकीर्ष्यम् । दातुमिच्छतीति दित्सति वा दित्स्यते इति-दित्स्यम्।

( स्वरात् ) ५-१ ( ङसिरत् । सवर्णे० ) यः १-१( स्त्रो० । चपा० । ) 'स्वर०' । सिद्धम । उदा० । चिञ् चि ( स्वराद्यः ) य प्र० । गुणः १-१ ( अतोऽम् । मोनु० ) चेयम । एवं णीञ् प्रापणे । ( आदेः ष्णः स्नः ) नीय प्र० ( गुणः । नेयम् । क्षय्य जय्यौ एतौ द्वौ शक्यार्थे निपात्येते । क्षेतुं शक्यं क्षय्यम् । एवं जेतुं शक्यं जय्यम् । एतौ निपात्यौ । केचित्तु क्रय्यजय्यौ निपात्यौ तन्मते क्रेतुं शक्यं क्रय्यम् । पक्षे क्षेतुं योग्यं क्षेयम् । जेतुं योग्यं जेयम् । क्रेतुं योग्यं क्रेयं सर्वत्र य प्र० ।

( पुशकात् ) अकारोपधात् पवर्गान्तात् शकादेश्च यः प्रत्ययो भवति भावादौ । शप् उपालम्भे आक्रोशे च । शप्यते इति-शप्यम् । जपुं योग्यं जप्यम् । सरूपत्वात् पक्षे न घ्यण् । शक्यम् । शक्-सह्-गद्-मद्-चर्-यम्-तक्-शस्-चत्-यत्-पत्-जन्-हन्-शल्-रुच् एते शकादयः । षह मर्षणे । सोढुं शक्यं सह्यम् । सह्यते वा सोढुमर्हं सह्यम । गद्यते वा गदितुमर्हं गद्यम् । मद्यते वा मदितुमर्हं मद्यम् । चरितुमर्हं चर्यम् । यम्यम् । तक् हसने । तक्यते वा तकितुमर्हं तक्यम् शसु हिंसायाम् । शसितुमर्हं शस्यम् । चते माने । चते कान्तौ । चत्यते इति चत्यम् । यत्यम् । पत्यम् । जन्यम् । ( हनो वधादेशो ये) हन्यते वा हन्तुमर्हं वध्यम् । शल् शोभायाम् । शल्यम् । रोचितुं-शक्यं रुच्यम् । डुलभष् प्राप्तौ । लब्धुं योग्यं-लभ्यम् । यभ् मैथुने । यब्धुं शक्यं-यभ्यम् । शक सामर्थ्ये । शक्लृ शक्तौ । शक्यते तत्-शक्यम् ।

सूत्रम् ( पुशका० ) पुशकात् ५-१ ङसिरत् । सवर्णे० । पवर्गांता पफबभम एते तदंतात् शक्यादेश्च धातोर्यप्रत्ययो भवति भावादौ । यभ् मैथुने । यभ यम्यत इति यभ्यं कलत्रम् । पवर्गांतत्वात् यः १-१ ( अतोऽम् । मोनु० ) एवं लभ्यं, जप्यं, नम्यम्, इत्यादयः । एवं पवर्गांताः । शक्लृ शक्तौ । शक् यप्रत्ययः । शक्यम् । मह पूजायाम् । मह य० । 'स्वर०' १-१ ( अतो० ) मह्यम् । एवं षह मर्षणे । सह्यम् ।

( ईच्चातः ) आकारान्ताद्धातोर्यः प्रत्ययो भवति आकारस्य च ईकारादेशः । दीयते वा दातुमर्हं देयम् । ज्ञातुं योग्यं

ज्ञेयम्। गीयते तत् गेयम्। ग्लेयम्। पातुमर्हं पेयम्। धीयते तत् धेयम्।

सूत्रम् (ई०) इत् १-१ सांके०। च १-१ अव्य०। आतः ५-१ स्वर०। (सो०) सिद्धम्। वृत्तिः सुगमा। आकारस्य चेकारः। डुदाञ् दा। (ईचातः) इति यप्र०। आकारस्य ईकारः (गुणः) 'स्वर०' १-१ (अतोऽम्) देयं दीयते इति देयम्। एवं गेयं पेयम्। गै (संध्यक्षराणामा०। खनेश्च) खनेर्धातोः यः प्रत्य०। टेश्च ईकारः। खन् खनने। यप्र०। खन् इत्यस्य खि। (गुणः) खेयम् १-१(अतो०)

ऋहसात् घ्यण। ऋवर्णान्ताद्धसान्ताच्च धातोर्घ्यण् प्रत्ययो भवति भावादौ। घकारो घित्कार्यार्थः। णकारो वृद्धयर्थः। क्रियते वा कर्तुमर्हं कार्यम्। वृञ् वरणे। व्रियते तत् वार्यम्। धार्यम् चार्यम्। हस् हसने। हास्यम्। ह्रियते तत्-हार्यम्। (हनो घत्) हन्यते तत् घात्यम् (चजोः कगौ घिति) पक्तुं योग्यं पाक्यम्। याच्यते तत्--याच्यम्। रुच्यते तत् रोच्यम्। वच परिभाषणे (वचेः शब्दसंज्ञायां कुत्वं वाच्यम्) तेन वाक्यम्। अन्यत्र वाच्यम् (यज्-याच्-वच्-रुच्-प्रवच्-अर्च्-त्यज्-पूज्-गर्ज्-भुजां घ्यणि कुत्वाभावः) याज्यम्। याच्यम्। वाच्यम्। रोच्यम् प्रवाच्यम्। अर्च्यम्। त्याज्यम्। पूज्यम्। गर्ज शब्दे। गर्ज्यते तत्--गर्ज्यम्। भुज्यते तत्-भोज्यम्। वाध हिंसायाम्। वाधितुं योग्यं-वाध्यम्। भजितुं--योग्यं भाज्यम्।

सूत्रम् (ऋहसा०) ऋश्च हसश्च ऋहसम्। ऋहसम् अंते यस्य सः ऋहसांतः तस्मात् ५-१ (ङसिरत्। सवर्णे०)। घ्यण् १-१ (हसेपः) ऋवर्णांतात् हसांताच्च धातोः घ्यण् प्रत्ययः स्यात् भावादौ। घकारो घित्कार्यार्थः। कृ घ्यण् प्र०। णित्त्वाद्धातोर्नामिनः इति वृद्धिः (रायपो द्विः) जलतुं० १-१ अतोऽम्) करणाय अर्हं क्रियते वा यत्तत्कार्यम्। एवं वृञ् वरणे वार्यम्। वच् परिभाषणे। वचनाय योग्यम् उच्यते वा यत्तत् वाच्यम्। वध् बंधने। वध् घ्यण्। य०। वृद्धिस्वर०। बंधनाय योग्यं वाध्यम्। हस् हसने। घ्यण् प्र०। वृद्धिः। 'स्वर०' १-१ अतोऽम्। हास्यम्। डुपचष् पाके। पच् घ्यण् प्र०। चजोः कगाविति चस्य कः। वृद्धिः। पाक्यम्। एवं वच् वाक्यम्।

वित्वात् ककारोपि भवतीत्यपि शब्दात् कुत्रचित् चजोः कगौ घितीति भवति कुत्रचिन्न भवति कुत्रचिद्विकल्पः। तेन वाच्यं वाक्यं भोज्यम् भोग्यम् इत्यादौ विकल्पः। त्याज्यं, पूज्यं, रुच्यं, अर्च्यम्, इत्यादौ न। एवं प्रयोगानुसारेण कुत्वाभावो ज्ञेयः। अमापूर्वस्य वसतेर्घ्यणि वा वृद्धिः वक्तव्या। कर्त्तरि घ्यण् च। अमा सह वसतश्चंद्रार्कौ अस्यामिति अमावस्या अमावास्या इति विकल्पेन वृद्धिः। पुनर्विशेषमाह।

**एते भावकार्ययोर्विहितास्तव्यादयस्तेऽर्हविधौ च वक्तव्याः। ( रारो झसे दृशाम् ) दर्शनार्हो–द्रष्टव्यः। द्रष्टुमर्हः दर्शनीयः। दृश्यः। इङ् अध्ययने। स्वाध्यायोऽध्येतव्यः। स्वाध्यायो नाम वेदः। श्रु श्रवणे। श्रवणार्हः श्रोतव्यः। श्रोतुं योग्यं श्रवणीयम्। मान पूजायाम्। मानितुं योग्यो मानितव्यः। माननीयः। ध्यै चिन्तायाम्। ध्यानार्हो ध्यातव्यः। ध्यातुं योग्यो ध्यानीयः। मन ज्ञाने। मननार्हो मन्तव्यः। मन्तुं योग्यो माननीयः। सप्रत्ययान्तादपि एते प्रत्यया भवन्ति। नितरां ध्यातुमेष्टव्यो निदिध्यासितव्यः। भवितुमेष्टव्यो बुभूषितव्यः। बुभूषणीयः।**

एते इति। ये एते पूर्वोक्तास्तव्यादयः तव्य, अनीय, य, घ्यण्, एते प्रत्यया भावकार्ययोर्भावोक्तौ कर्मोक्तौ विहिताः कृतास्ते अर्हे योग्यत्वार्थे विधौ च कर्त्तव्यार्थोपदेशे च वक्तव्याः कर्त्तव्या इत्यर्थः। दृशिर् प्रेक्षणे। दृश् दर्शनार्हो द्रष्टव्यः। इति तव्यप्र०। (गुणः। रारो झसे०)। दृशामिति द्र। ( छशषराजादेः षः। ष्टुभिः ष्टुः ) दर्श अनीयप्र०। गुणः। 'जलतुं०'। 'स्वर०'। दर्शनीयः। पुनः दृश। ऋहसांतादिति घ्यण् प्र० य। स्वर०। दृश्यः। इङ् अध्ययने। इ अधिपूर्वः। अध्येति विधयो अर्हो वाध्येतव्यः। तव्यः– प्र०। गुणः ( इ यं स्वरे ) 'स्वर०'। स्वाध्यायोऽध्येतव्यः। एवं श्रु श्रवणे। श्रोतुं योग्यः श्रूयते वा इति श्रोतव्यः। मन् ज्ञाने। मंतव्यः। ध्यै चिंतायाम्। ध्यै। ( संध्यक्षराणामा ) ध्यातव्यः। सप्रत्ययांता इच्छार्थे। सप्रत्ययांताद्वा तरपि तव्यादयः प्रत्यया भवंति। ध्यै चिंतायाम्। ( संध्यक्षराणामा ) नितरां ध्यातुमेष्टव्य इति विग्रहे इच्छार्थे सप्रत्ययः। ( द्विश्च। पूर्वस्य हसादिः शेषः। यः से ) इति पूर्वाकारस्य इकारः। ( झपानां जबचपाः ) धस्य दः। ततः सप्रत्ययान्तात्तव्यप्र० ( कृतः ) इतीडागमः। ( यतः ) इत्यकारलोपः निपूर्वः निदिध्यासितव्यः। ज्ञा अवबोधने। ज्ञा सप्रत्ययद्वित्वादि प्राग्वत्। विजिज्ञासितव्यः। विशेषेण ज्ञातुमेष्टव्यः।

( ओरावश्यके घ्यण् ) उवर्णान्ताद्धातोरावश्यकेऽर्थे घ्यण् प्रत्ययो भवति ( ओदौतोर्यः प्रत्ययः स्वरवत् ) धातोरोकारौकारयोर्निमित्तं वा संबन्धी यः प्रत्ययः स स्वरवत् स्यात् । समासे अवश्यमादीनामन्तलोपमिच्छन्ति शाब्दिकाः ।

ओः ५-१( ङिति–ङस्य । स्रो० । ) आवश्यके ७-१ (अ इ ए) उवर्णान्ताद्धातोः आवश्यकेऽर्थे निश्चयार्थे घ्यण् प्रत्ययो भवति भावादौ । भू घ्यण् प्रत्ययः। य । णकारो वृद्धयर्थः। भो अवश्यं पूर्वः ।ओदौतो० । ओश्च औश्च ओदौत् तस्मात् ओकारौकाराभ्यां परो यः प्रत्ययस्य यकारः स्वरवज्ज्ञेयः स्वरवत्त्वात् ( औ आव् )'स्वर०' अवश्यंभाव्यम् । एवं, लूञ् छेदने । अवश्यंलाव्यम् । मकारलोपार्थमाह समासे तति । अवश्यमादीनाम् अवश्यम्, तुम् सम्, मांसानां मलोपमिच्छन्ति । म् च अश्च इति समासस्तेन अवश्यमादीनां मकारस्य लोपः । मांसस्याकारस्य लोपः । यद्वा अन्तलोपमिच्छतीति पठन्ति । श्लोकश्चात्र ।

लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ॥
समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥ १ ॥

लूञ् छेदने । लूयते वा लवितुं योग्यः लाव्यः । अवश्यं लाव्यो अवश्यलाव्यः । भोक्तुं कामो यस्य स भोक्तुकामः । श्रोतुं मनो यस्य स श्रोतुमनाः । सम्यक् प्रकारेण हितं सहितम्–संहितम् । सततं–संततम् । मांसस्य पचनं मांसपचनम् । ( युड्घञोः पचि परे मांसस्याकारो वा लुम्पेत् ) मांसस्य पचनं मांस्पचनम् । मांसस्य पाकः मास्पाकः । मांसपाकः ।

लुम्पेदिति । कृत्प्रत्यये परे अवश्यंशब्दस्य षष्ठीनिर्दिष्टस्येति अन्त्यो मकारो लुंपेत् । तव्य १ अनीय २ य ३ घ्यण् ४ क्यप् ५ एतेषां पंचप्रत्ययानां कृत्यसंज्ञा तथा काममनसोः शब्दयोः परयोः तुम्शब्दस्य प्रत्ययस्य अन्तं मकारं लुंपेत् । तुम् षष्ठ्यन्तमव्ययं हि एतत् । हिततयोः परयोः सतोः सम इत्यस्य मकारं वा लुंपेत् । युट्प्रत्ययसहिते घञ्प्रत्ययसहिते च पचिधातौ परे मांसशब्दस्य अन्तम् अकारं वा लुंपेत् । विकल्पेन कृत्यसंज्ञायां संमतमाह । तव्या० । पाणिनीयानां मते तव्यादीनां कृत्य इति संज्ञा । अवश्यलाव्यमित्यत्र तव्यप्रत्ययपरत्वात् । अवश्यंशब्दस्य मकारस्य लोपः ।

-२०

अवश्यलाव्यमिति सिद्धम् । अवश्यं निश्चयेन लावितुं योग्यो अवश्यलाव्यम् । तथा भुज-तुम् प्र० । ( खसे चपा झसानाम् ) गुणः । चोः कुः ) 'स्वर०' भोक्तुं कामो अभिलाषो यस्य स भोक्तुकामः । तथा श्रु श्रवणे तुम् प्र० । गुणः । श्रोतुं मनो यस्य स श्रोतुमनाः । अत्रोभयत्रापि काममनसोः परयोः सतोः तुमो मकारलोपः । डुधाञ् धारण०। दधातेर्हिः क्तादौ परे संपूर्वः क्तक्तवतू इति क्तप्रत्ययः। संहित २ समो वा इति विकल्पेन समो मकारलोपः संहितं सहितम् । तनु विस्तारे तप्र०।(लोपस्त्वनुदात्ततनाम्) सम्पूर्वः । संततं सततम् अत्रापि ततशब्दे परे विकल्पेन समो मकारलोपः । संततं-सततम् । पच् युट् प्र० । ( युवो० ) 'स्वर०' मांसपूर्वः २ युट्प्रत्ययसहिते पचिधातौ परे विकल्पेन मांसशब्दस्य अकारलोपः। मांसपचनं मांस्पचनं पुनः पच् । घञ् भावे । इति घञ् प्र० । अवृद्धिः । (चजोः कगौ घिति) 'स्वर०' पाक २ मांसपूर्वः । अत्र घञ् प्रत्ययसहिते पचिधातौ परे विकल्पेन मांसशब्दस्याकारलोपः मांसपाकः मांस्पाकः इति रूपद्वयम् । केचित्तु मांसशब्दस्य मकारलोपः । मासपाकः तथा मास्याकारस्य चोभयोरपि लोपमिच्छंति यथा मास्पाकः इति ।

( ऋदुपधात् क्यप् ) ऋकारोपधाद्धातोः क्यप् प्रत्ययो भवति भावकार्ययोः । कृती छेदने । कर्तितुमर्हं कृत्यम् । नितरां कर्तितुं योग्यं निकृत्यम् । वृद्ध्यम् । वृत्यते तत् वृत्यम् । ( कृपिचृत्योर्न क्यप् ) कृपू सामर्थ्ये ( कृपो रो लः ) कल्प्यम् । चृत दीप्तौ । चर्त्यम् । ( मृजो वा क्यप् ) मृज्यम्-मार्ग्यम् । ( ह्रस्वाच्च क्यप् ) ह्रस्वान्ताद्धातोर्भावे क्यप् प्रत्ययो भवति । तस्य ग्रहणे तदन्तस्य ग्रहणम् । क्रियते तत्कृत्यम् । ( कृञः क्यपि वा रिङ् वक्तव्यः तुगभावश्च ) कृत्या क्रिया । ( ङिदनेकाक्षरोऽप्यादेशस्तदन्तस्यैव वक्तव्यः ) ( गुपूगुहोः क्यप् ) गोप्तुं योग्यं गुप्यम् । गूहितुं योग्यम् गुह्यम् ( वदेः क्यप् भावादौ ) वदेर्धातोः क्यप् प्रत्ययो भवति भावादौ । मृषा उद्यते इति-मृषोद्यम् । ब्रह्मणा उद्यते या कथा सा ब्रह्मोद्या ( ग्रहेः क्यप् ) अर्जुनगृह्या सेना । ( इण्-स्तु-वृ-दृ-भृ-शास्-जुष्-खन् एभ्यः क्यप् वाच्यः ) तुक् । ईयते इति इत्यः । स्तुत्यः वृत्यः । दृङ् आदरे । दृत्यः । भृत्यः । ( शासेरिः । ) शिष्यः ।

जुष् प्रीतिसेवनयोः । जुष्यः । ( खन एत्वं क्यपि वाच्यम् ) खन्यते इति खेयम् । ( भिद्योद्ध्यौ नदे निपात्येते । भिनत्ति कूलमिति भिद्यः । उज्झ उत्सर्गे । उज्झति जलमिति उद्ध्यः नदः । नदे किम् । भेत्ता । उज्झिता । ( कृवृष्योर्वा क्यप् ) क्रियते तत् कृत्यम् । कर्तुं योग्यं कार्यम् । वृष वृष्टौ वृष्यं-वर्ष्यम् ।

कृत्याः पञ्च समाख्याता घ्यण्क्यपौ भावकर्मणोः ॥
तव्यानीयौ स्वराद्यश्च शब्दशास्त्रविचक्षणैः ॥

सूत्रम् ( ऋदुपधात् क्यप् ) ऋदुपधात् ऋत् ऋकारः उपधा यस्य स ऋदुपधः तस्मात् ५-१ । ( ङमिग्व । सवर्णे० ) क्यप् १-१ ( हसेपः० ) ऋकारोपधात् । वृतु वर्त्तने इत्यादेर्धातोः क्यप्प्रत्ययो भवति । भावादौ ककारो गुणनिषेधार्थः। कृती छेदने। कृत् क्यप् प्र० य० स्वर० १-१ । ( अतोऽम् ) निपूर्वः निकृत्यम् । वृतु वर्त्तने । वृत्यं नृत्यं ( ह्रस्वाच्च क्यप् ) ह्रस्वादपि धातोः क्यप्प्रत्ययो भवति । पित्वात् ह्रस्वस्य पिति कृति तुगागमः । डु कृञ् कृ क्यप् प्र० तुगागमः 'स्वर०' १-१ । ( अतोऽम् ) कृत्यम् । एवं वृञ् वरणे । वृत्यम् । ष्टुञ् स्तुतौ । ( आदेः ष्णः स्नः ) स्तु-क्यप् प्र० य । ( ह्रस्वस्य पिति तुक ) स्तुत्यम् ।

( स्त्रियां यजां भावे क्यप् ) यजादेर्धातोः स्त्रियां भावे क्यप् प्रत्ययो भवति । यज्-व्रज्-समज्-निपद्-निपत्-मन्-नम्-विद्-षुञ्-शीङ्-इण्-कृ-इषु-परिसृपपरिचर-अटाट्य-आस्-चर-जागृ हन् एते यजादयः । कित्त्वात्संप्रसारणम् । इज्यते सा-इज्या । स्त्रीत्वादाप् । व्रज्यते सा-व्रज्या । अज गतौ क्षेपणे च । समज्यते सा-समज्या का, शिविका । प्रकर्षेण व्रज्यते अस्यामिति-प्रव्रज्या ।। पद्लृ-विशरणगत्यवसादनेषु । निपद्यते सा निपद्या । निपत्या । मन ज्ञाने । मन्यते सा मन्या । नम्या । विद्यते सा विद्या । सुत्या ( शीङोऽयङ् क्ङिति ये वक्तव्यः ) शय्या । भृत्या । ईयते सा इत्या । कृत्या ( कृञो यक् वा

वाच्यः ( अयकि ) क्रियते सा क्रिया ( इपेश्छान्तादेशो यलोपश्च ) इष्यते सा इच्छा । ( सरतेर्गुणः ) परिसर्या । परिचर्या । अटाट्या । आस्या चर्या । (जागर्तेर्गुणः) जागर्या । (हनस्तकारान्तादेशो हिंसायामर्थे ) हन्यते सा हत्या (हन्तेस्तः) हन्तेर्नकारस्य तकारादेशो भवति क्यपि स्त्रियाम् । ब्रह्म हन्यते इति ब्रह्महत्या ।

( स्त्रियां यजां ) स्त्रियां ७-१यजां ६-३ भावे ७-१ यजादेः यज्-अज्-हन्-शीङ्-व्रज-विद्-आस्-मन्-चर-भृ-अटाट्य-निपद्-नियत । इत्यादेर्धातोः स्त्रीलिंगे भावे नाम्नि च क्यप् प्रत्ययो भवति ककारः संप्रसारणार्थः।यजनम् इति क्यप् प्रत्ययः। य । ( यजां यवराणाम् ) 'स्वर०' स्त्रीत्वादावतः स्त्रियाम् । ( सवर्णे दीर्घः ) १-१ । (आपः) एवम् अज् गतौ क्षेपणे च अज् सम् पूर्वः 'स्वर०' क्यप् । 'स्वर०' । स्त्रीत्वादावतः० । समज्या परिषत् । हन् ब्रह्मन्पूर्वः क्यप् प्र० । लोपस्त्वनुदात्ततनामिति तु शब्दात् झसाभावेऽपि नकारस्य लोपः। ( ह्रस्वस्य पिति कृति तुक् ) 'स्वरही०' । ब्रह्महत्या ब्राह्मणो ब्राह्मणस्य हननं ब्रह्महत्या । शीङ्-शय्या । व्रज्-व्रज्या । विद्-विद्या। पद्-निपद्या । आस्या । मन्या । नम्या चर्य्या । भृत्या । अटाट्या । कृञो वा रिङ् । कृत्या । क्रिया ।

( स्त्रियां भावे क्तिः ) धातोः स्त्रियां भावे क्तिः प्रत्ययो भवति । क्रियते सा कृतिः । बुद्ध्यते सा बुद्धिः । स्मृङ् चिन्तायाम् । स्मर्यते सा-स्मृतिः । पच्यते सा-पक्तिः । पचि विस्तारे । पच्यते तत् पङ्क्तिः । संप्रसारणम् । उह्यते सा ऊढिः । संविद्यते सा-संवित्तिः ।

( स्त्रियां भावे क्तिः ) क्तिः १-१(स्रो०) धातोः क्तिः प्रत्ययो भवति स्त्रीलिंगे भावे । ककारो गुणनिषेधार्थः संप्रसारणार्थश्च । पचि विस्तारे । पच् क्ति प्र० । ति । ( चोः कुः) 'स्वर०' (इदितः०) इति नुम् । (नश्चा०) १-१ । ( स्रो० ) पंचनं पंक्तिः। डुपचष् पाके । पक्तिः । वह प्रापणे । क्ति० ति । ( हो ढः । तयोर्द्धः । ष्टुभिः ष्टुः ) यजामिति संप्रसारणम् । वस्य उः ढि ढो लोपो दीर्घश्चेति ढलोपः। उकारस्य ऊकारः १-१(स्रो०) ऊढिः । विद् संपूर्वः क्तिप्र० ति । ( खसे चपा० ) दस्य तः । 'स्वर०' संवित्तिः । द्राम् क्तिप्र० ति ।

(शमां दीर्घः) शमादीनां दीर्घो भवति क्तिप्रत्यये परे। शम्यते सा–शान्तिः। दम्यते सा-दान्तिः। भ्रमु चलने। भ्रम्यते सा–भ्रान्तिः।गम्यते सा–गतिः। हन्यते सा-हतिः।अनुभूयते तत् अनुभवनम्-अनुभूतिः। विशिष्टा भूतिः–विभूतिः। प्रभूतिः। भवनं–भूतिः। शुध शौचे। शोधनं-शुद्धिः।

सूत्रम् (शमां दीर्घः) (नश्चा०)१–१(स्रो०।)शांतिः। भ्रांतिः। ग्लै संध्यक्षराणामा ग्ला क्ति प्र० ति त्वाद्योदितः तस्य नः ग्लानिः। म्लै म्लानिः। भू क्ति प्र० अनुपूर्वः अनुभवनमनुभूतिः १–१(स्रो०)गमनं गतिः लोपस्त्वनुदात्ततनामिति मलोपः।

(ईश्शीङोर्वरक्तिप्रत्ययौ नेट् गुणश्च) ईश्शीङोर्वरक्तिप्रत्ययौ स्तो वरप्रत्ययस्य क्तिप्रत्ययस्य च इट् न। शीङो गुणोऽपि न भवति ईश्वरः ईष्टेऽसौ ईश्वरः संशय्यते तत् संशयनम्। संशीतिः।ह्री गतौ। ह्रीयते इति–ह्रीतिः जागरणं जागृतिः। निगृह्यते सा निगृहीतिः। कुच संकोचने। कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु तुदादिः। निकुचितिः। निपठितिः। स्त्रिह्॰ आस्कंदने। उपस्निहितिः। निपतितिः। विशेषेण ध्रियते सा–विधृतिः॥ ग्लाम्लाज्याहाक्त्वरिभ्यः क्तेरर्थे निः प्रत्ययो भवति।ग्लायते सा–ग्लानिः।ज्यानिः।हानिः। ञित्वरा संभ्रमे। (त्वरतेर्वस्य उत्वं वाच्यम्) त्वर्यते सा तूर्णिः। (ऋल्वादिभ्यश्च क्तेरर्थे निः प्रत्ययो भवति।) (ॠत ईर्) कीर्यते सा कीर्णिः। लूनिः। धूनिः। पूर्णिः।(संपदादेः क्विप् वा वाच्यः।) संपत्–संपत्तिः।

शीङो गुणाभावो वक्तव्यः। ईश्शीङोर्वरक्तिप्रत्यययोः नेट् गुणश्च न भवति। अवगमे बुध् तिप्र०। (तथोर्द्धः। झबे जबाः) 'स्वर॰' बुद्धिः। अनुभूतिः। ादौ ('कृतः)इतीडागमः माप्त इट्निषेधार्थः। (ह्वक्तयोर्नेट्) इति सूत्रं पठंति। चित् हकारवकारादेः प्रत्ययस्य क्तिप्रत्ययस्य च इडागमो न भवतिं इति गृहादेरपु प्रत्यये इटो न निषेधः। गृहीतिः॥ भणितिः इत्यादि।

( कर्त्तरि क्तिश्च संज्ञायाम् ) कर्त्रर्थे धातोः क्तिः प्रत्ययो भवति संज्ञायां विषये । डुकृञ् करणे । प्रकुरुते सा-प्रकृतिः । धृञ् धारणे । विपूर्वः विशेषेण धरतीति-विधृतिः ।

( कर्त्तरि क्तिश्च ) कर्त्तर्यपि क्तिः प्रत्ययो भवति तन् कि तान्ति संपूर्वः । (लोप-स्त्वतु० ) संतनोति कुलमिति संततिः । एवं कृतिः मपूर्वः । मकुरुते इति मकृतिः प्रधानपुरुषः । धृ धारणे विपूर्वः तिम० । विधृतिः । पत्तिः १-१ स्रो० ।

( इक्श्तिपौ धातुनिर्देशे ) धातुनिर्देशे वाच्ये सति इक्श्तिपौ प्रत्ययौ भवतः । शकारः शिति चतुर्वत्कार्यार्थः । पच् इत्ययं धातुः पचिः । श्रयतिः । पचतिः । भवतिः ।

सूत्रम् ( इक्श्तिपौ धातुनिर्देशे ) इक् च श्तिप् च इक्श्तिपौ १-२ धातुनिर्देशे ७-१ धातोर्निर्देशे धातोर्नामग्रहणे नामोच्चारणे अर्थे इक् श्तिप् इत्येतौ प्रत्ययौ भवतः । श्तिपः शकारश्चतुर्वत् कार्यार्थः पच् २ एकत्र इम० 'स्वर०' १-१(स्रो० ।) पचिः पचधातुरित्यर्थः । द्वितीयश्तिप् म० । शित्वात् ( अप् कर्त्तरि ) 'स्वर० ।' पचतिः । एवं पठिः । पठतिः । गमिः । गच्छतिः । करोतिः ।

( पिद्भिदामङ् ) पितो धातोर्भिदादेश्च स्त्रियामङ् प्रत्ययो भवति भावादौ । पच्यते सा । पचा । मृज्यते सा-मृजा । जॄष् वयोहानौ । ( जरादौ ङानुबन्धरहितो अः प्रत्ययो भवति । जीर्यत्यनया सा जरा । इषु इच्छायामिति निर्देशाज्ज्ञापका-दिच्छा इत्यादि निपात्यते । इच्छा । ( इषादेरङर्थे युट् ) एषणमिति एषणा । भिद्यते अनया सा-भिदा । छिद्यतेऽ-नया सा-छिदा । क्षिपा । गुहू संवरणे । गुहा । मेधृ हिंसा-याम् । मेधृ वधमेधासंगमेषु । मेध्यते इति-मेधा । कृपा । पीड बाधायाम् । पीडा । बाध पीडायाम् । बाधा । क्षपा रात्रिः ।

सूत्रम् ( पिद्भिदामङ् ) ष् इत् यस्य स पित् पिद् । भिदादयश्च पिद्भिदादय-स्तेषाम् ६-३ 'स्वर०' । अङ् १-१ ( हसे पः० ) पितः षकारेतो धातोर्भिदादेश्च धातोः स्त्रीलिंगे अङ् मत्ययो भवति भावादौ । ङकारो गुणनिषेधार्थः । डुपचष् पित्वात् अङ् म० । 'स्वर०' स्त्रीत्वादाप् । पचनं पचा । मृज शुद्धौ । मृज अङ् 'स्वर०'

आप् । मार्जनं मृजा।एवं भेदनं भिदा । छेदनं छिदा । जर इत्यत्र डकारानुबंधरहितो अप्रत्ययो वक्तव्यः । तेन गुणप्राप्तिर्भवति । केचित्तु नोक्तमनित्यमिति न्यायेन गुणं कुर्वंति । जूष् वयोहानौ । जू अ० ( गुणः ) 'स्वर' स्त्रीत्वादाप् जरा । साधना स्वरां-तस्त्रीलिंगे प्रतिपादितास्ति । एवं लेखा । रेखा ।

( गुरोर्हसात् ) गुरुमतो हसान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ न क्तिः । ईह चेष्टायाम् । ईह्यते सा–ईहा । ऊह्यते सा–ऊहा । ईक्ष दर्शनाङ्कनयोः । ईक्ष्यते तत् ईक्षणं–ईक्षा । एध्यते सा एधा । गुरोः किम् । भक्तिः । हसात्किम् नीतिः । लिख् रिख् लेखने । लिख्यते तल्लेखनं लेखा । रिख्यते तद्रेखणं रेखा । गुध परिवेष्टने । गुध्यते इति–गोधा । धेट् पाने । सुष्ठु धीयते इति–सुधा । डुधाञ् धारणपोषणयोः । श्रद्धीयते सा श्रद्धा । क्तिरापादिभ्यः । आप्तिः । दीप्यते सा दीप्तिः । राध्यते सा राद्धिः । प्रशास्तिः ।

सूत्रम् (गुरोर्हसात्) गुरो ५–१ ङिति ङस्येत्यकारलोपः (स्रो०।) हसादिति५–१ (ङसिरत् । सवर्णे०) पञ्चात्रामिनो रः। गुरुमतो गुरूपधात् हसांतात् धातोः अकर्तरि भावेर्थे अप्रत्ययो भवति । उदा०। एध् वृद्धौ । एध् गुरूपधत्वात् । हसांतत्वाच्च अप्रत्ययः। 'स्वर०' स्त्रीत्यादाप् १–१ (आपः) एधा । एवं ईहा । ईह वांछायाम् । ऊह वितर्के । ऊहा । ईक्ष दर्शनाङ्कनयोः । ईक्षा ।

( प्रत्ययान्तात् ) प्रत्ययान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ । चिकीर्ष्यते सा–चिकीर्षा । आत्मनः कर्तुमिच्छा–चिकीर्षा । आत्मनः पुत्रेच्छा वा । पुत्रीयते सा–पुत्रीया । अशितुमिच्छा अशनाया । लोलूयते सा–लोलूया । अटाट्या॥ कण्डूञ् गात्रविघर्षणे । कण्डूयतेसा–कण्डूया । मुमूर्षणं मुमूर्षा । ( ण्यन्तासश्रन्थअर्थग्रन्थघट्टविद्वदिशपिभ्यः स्त्रियां युर्वाच्यः। डुकृञ् करणे। ( युवोरनाकौ ) कारणा । आसना । अर्थ याञ्चाप्रकाशनयोः । अर्थना। ग्रन्थ संदर्भे । ग्रथ्यते । तद्ग्रन्थनमिति–ग्रन्थना । उपासनमिति–उपासना । श्रथि शैथिल्ये ।

श्रन्थना । घटनमिति घटना । विद्यते वेदनमिति-वेदना । वन्द्यते सा-वन्दना । एषणमिति एषणा । ( इञ् अजादिभ्यः ) अज गतौ । आजिः । अत सातत्यगमने । आतिः । ( इक् कृष्यादिभ्य-भावादौ ) कृष्यते सा-कृषिः । गिरिः । किरिः ( सर्वधातुभ्य इः ) कविः । रविः ।

सूत्रम् ( प्रत्ययांतात् ) ५-१ । ( ङसिरत् ) सवर्णे० सादयः प्रत्यया अन्ते यस्य स प्रत्ययांतस्तस्मादपि धातोः अप्रत्ययो भवति । उदा० । कृ । ( इच्छायामात्मनः सः ) ( ऋत इर् ) किर् । ( द्विश्च । कुहोश्चुः । खोर्वि हसे ) इति दीर्घः । ( किला० । जलतुं० ) चिकीर्ष इति जातं ततः प्रत्ययान्तादिति अप्रत्ययः । ( यतः ) इत्यलोपः । 'स्वर०' । ( आवतः स्त्रियाम् ) १-१ आप् । चिकीर्षा । एवं जिहीर्षा । बुभूषा । पुत्र-नाम्नो ये ईचास्येति यप्र० । तत्सन्नियोगे अकारस्य ईकारः पुत्रीय इति जातम् । ( सः धातुः ) ततः प्रत्ययान्तादिति सूत्रेण अप्रत्ययः । ( यतः ) इत्यलोपः । 'स्वर०' । ( आवतः स्त्रियाम् ) १-१ आप् । आत्मनः पुत्रेच्छा पुत्रीया । एवम् । पुत्रकाम्या । कंडूया । इत्यादि ॥ इति स्त्र्यधिकारप्रक्रिया ॥

अथ क्त्वादयः प्रत्ययाः । ( पूर्वकाले क्त्वा ) धातोः क्त्वा प्रत्ययो भवति पूर्वकाले समानकर्तृके धातौ प्रयुज्यमाने । देवदत्तः स्नात्वा भुङ्क्ते । भुक्त्वा-व्रजति ।

(पूर्वकाले क्त्वा) पूर्वकाले ७-१ (अ इ ए ।) क्त्वा १-१ अव्ययम् । धातोः समानकर्तृके एककर्तृके धातौ क्रियापदे अग्रे प्रयुज्यमाने सति पूर्वकाले प्रथमकाले क्त्वा-प्रत्ययो भवति । उदा० । ष्णा शौचे । ( आदेः ष्णः स्नः ) क्त्वा प्र० । त्वा इति १-१ स् अव्य० क्त्वायंतं चेत्यव्ययसंज्ञा । स्नात्वा भुंक्ते । अत्र स्नानभोजनलक्षणक्रियाद्वयमध्ये स्नानक्रियायाः पूर्वकालीनत्वात् त्वाप्रत्ययः । भुज् पालनाभ्यवहारे । भुज् क्त्वा प्र० । ( चोः कुः ) 'स्वरहीनं०' १-१ भुक्त्वा व्रजति । अत्र भोजनार्थं व्रजनक्रियामध्ये च भोजनस्य प्रथमकालीनत्वात् क्त्वाप्रत्ययः । एवं कृत्वा दत्त्वा ( दोद्त्तिः ) इति सूत्रेण दा इत्यस्य दत् आदेशः लात्वा, शयित्वा, सुप्त्वा, उक्त्वा, गृहीत्वा, भंक्त्वा । णश् अदर्शने । नष्ट्वा नंष्ट्वा-हित्वा । जग्ध्वा इत्यादि ।

( न क्त्वा सेट् ) सेट् क्त्वा किन्न भवति । वर्तित्वा । शपित्वा भवित्वा सेट् किम् । कृत्वा । ( रलो व्युपधाद्धलादेः संश्च ) उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलन्तात्परो क्त्वा-

सनौ सेटौ वा कितौ स्तः। विद ज्ञाने । विदित्वा। वेदित्वा लिखित्वा। द्युतित्वा। व्युपधात्किम्। वर्तित्वा। रलः किम्। सेवित्वा। हलादेः किम्। एपित्वा। सेट् किम् । भुक्त्वा। ( मृडमृदगुधकुषक्लिशवदवसः क्त्वा ) (मृडमृदगुधगुहकुषक्लिशवदवसमुषग्रहिभ्यः। सेट् किद् भवति ) मृड सुखने। मृडित्वा । मृद क्षोदे । मृदित्वा । गुध् रोचने। गुध् रोपे। गुधित्वा। गुह रोगे । गुहू संवरणे । गुहित्वा। कुष् निष्कर्षे । कुषित्वा । क्लिश् विबाधे । क्लिशित्वा। वद व्यक्तायां वाचि। उदित्वा । वस् निवासे । उषित्वा। मुषित्वा। गृहीत्वा ( नोपधात् थफान्ताद्वा कित् ) नकारोपधात् थफान्ताद्धातोः सेट् क्त्वा वा किद्भवति । ग्रन्थ संदर्भे ( नो लोपः ) ग्रथित्वा। ग्रन्थित्वा । गुम्फ ग्रन्थने। गुफित्वा । गुम्फित्वा इत्यादि । ( अलंखल्वोः प्रतिषेधे क्त्वा ) प्रतिषेधार्थयोरलंखलुशब्दयोः पूर्वपदयोः सतोः पूर्वकालं विनापि क्त्वा प्रत्ययो भवति । अत्रालंखलुशब्दौ निषेधार्थौ तयोरुपपदत्वात्। अलं भुक्त्वा । न भोक्तव्यम् । भोजनं मा कुरु इत्यर्थः । खलु भुक्त्वा । न भोक्तव्यम् ।

सूत्रम् ( नक्त्वा० ) न १–१ क्त्वा अव्य० सेद् १–१। ( हसेपः० ) इड्सहितः क्त्वा प्रत्ययो विकल्पेन कित्संज्ञको भवति कित्त्वपक्षे गुणनिषेधः। कित्त्वाभावे गुणः। विद्ज्ञाने। विद् क्त्वाप्रत्यय० (कृतः) इतीडागमः। एकत्र कित्त्वान्न गुणः। द्वितीये कित्त्वाभावाल्लुपधाया लघोरिति गुणः 'स्वर९' १–१ अव्य०। विदित्वा–वेदित्वा, वृतित्वा–वर्तित्वा, ( अलंखल्वोः० ) अलं, खलु, एतयोः पूर्वपदयोः सतोः पूर्वकालं विनापि निषेधार्थे धातोः क्त्वाप्रत्ययो भवति । भुज क्त्वाप्र० ( चोः कुः । खसे चपा० ) अलंपूर्वः। 'स्वर०' १–१ अव्य०। अलं भुक्त्वा भोजनेनालं भोजनं माकुर्वित्यर्थः। वच् परिभाषणे। वच् क्त्वा० यजां यवराणामिति संप्रसारणम् ( चोः कुः ) 'स्वर०'। खलुपूर्वः ( सवर्णे० ) खलूक्त्वा वचनेन। अलं मावदेत्यर्थः।

( उदितः क्त्वा वेट् ) उदितो धातोः परस्य क्त्वा प्रत्ययस्य वा इडागमो भवति। एपित्वा-इष्ट्वा। भ्रमु चलने । भ्रमित्वा–भ्रान्त्वा ( अदो जग्धः ) जग्ध्वा ।

सूत्रम् ( उदितः० ) उदितः ५—१ ( स्नो०)स्वर० क्त्वा अव्यय० । यद्वा ( आतो धातोर्लोपः ) 'स्वर०' वा १—१ अव्य० इद् १—१ ( हसेपः०) उत्उकारः इत् यस्य स उदित् तस्मात् उदितो धातोः परस्य क्त्वाप्रत्ययस्य वा इडागमो भवति । इष् इच्छायाम् इष क्त्वा प्र० । क्तो वेडिति एकत्र इडागमः 'स्वर०' उपधाया लघोरिति गुणः । इडभावे कित्वान्न गुणः ( ष्टुभिः ष्टुः ) १—१ अव्य० । एषित्वा—इष्ट्वा ।

( समासे क्यप् ) समासे सति पूर्वकाले क्यप् प्रत्ययो भवति तत्कर्तृके धातौ प्रयुज्यमाने ( ह्रस्वस्य पिति कृति तुक् ) डुभृञ् धारणपोषणयोः । संभृत्वा करोतीति संभृत्य करोति । णम प्रह्वत्वे शब्दे च । प्रकर्षेण कायवाङ्मनोभिर्नत्वा इति । प्रणम्य गच्छति । अनञ् पूर्वइत्येके अकृत्वा जल्पति अकृत्वा गच्छति ।

अजित्वा शात्रवान्सर्वानकृत्वा विमलं यशः ।
अदत्त्वा वित्तमर्थिभ्यः कथं जीवन्ति भूभृतः ॥

( क्यपि ञेर्गुणश्च ) क्यपि लघुपूर्वस्य ञेरयादेशोऽपि वाच्यः । परिणमयित्वा इति परिणमय्य भुङ्क्ते । विगमय्य । विगणय्य । अलघुपूर्वस्य न ( तेन ञेर्लोपो वाच्यः ) प्रतार्य । संप्रधारयित्वा इति संप्रधार्य विचार्य करोति । आप्लृ व्याप्तौ ( आप्नोतेर्वा ) प्रापय्य । प्राप्य ( दादीनां क्यपि इत्वाभावो वाच्यः । क्यपि । ( स्थामी ) इति ईकारो न भवति । दो अवखण्डने । प्रदाय । प्रसाय । प्रमाय । प्रस्थाय । उप समीपे स्थित्वा इति उपस्थाय ( पिबतेर्वा ) प्रपाय । प्रपीय ( लोपस्त्वनुदात्ततनाम । ञमस्य क्यपि वा लोपः ) प्रकर्षेण नत्वा इति प्रणम्य । प्रणत्य । आसमन्तात् ग्रामे आगम्य । आगत्य ( विपूर्वस्य दधातेः करोतेरर्थे क्यप् । विधाय । प्रहाय ( तत्कालेऽपि क्यप् दृश्यते ) नेत्रे निमील्य हसति । मील संमीलने । मील संगमे । उभयपदी ।

अक्षिणी संमीलित्वा इति अक्षिणी संमील्य हसति । चक्षुषी संमील्य हसति । मुखं व्यादत्वा इति मुखं व्यादाय स्वपिति ।

सूत्रम् (-समाने० ) समासे ७-१ (न इ ए) क्यप् १-१ ( हलेपः० ) समासे सति उपसर्गपूर्वकत्वे सति धातोः पूर्वकाले क्यप्प्रत्ययो भवति स एव कर्ता यस्य स तत्कर्तृकः तस्मिन् तत्कर्तृके एककर्तृके धातौ प्रयुज्यमाने सति । उदा० । डुभृञ् । भृ क्यप्प्र० य०(ह्रस्वस्य पिति कृति तुक्) संपूर्वः 'स्वर०' १-१ अव्य०। संभृत्य मिलित्वा तं सम्यक् प्रकारेण भृत्वा वा करोति । अत्र सनुपसर्गेण समासः । अत्र संभारकरणक्रिययोः एकः कर्ता ततः संभारक्रियायाः पूर्वकालीनत्वात्क्यप् प्रत्ययः।णम् प्रह्वत्वे शब्दे। ( आदेः ष्णः स्नः ) नम् प्रपूर्वः क्यप्प्र० । (प्रादेश्च तथा तौ) इति नस्य णः । 'स्वर०' १-१ अव्य० । अत्र प्रकर्षेण नत्वा प्रणम्येति समासे क्यप्प्र० । देवदत्तः प्रणम्य गच्छति । अत्र प्रणामगमनरूपयोर्द्वयोः क्रिययोः एक एव कर्ता यत्र स एव प्रणंता स एव गंता इत्येककर्तृत्वं ततः प्रणामस्य पूर्वकालीनत्वात् क्यप्प्र० अनञ् पूर्वे इति नञ्पूर्वकत्वे क्यप्प्रत्ययो न भवति इत्येके वदन्ति । यथा कृ नञ्पूर्वः क्त्वा प्र० । ( ना ) इति सूत्रेण तस्य अकारादेशः । अकृत्वा गच्छति अत्र नञ्पूर्वकत्वात्क्यप्प्रत्ययो नायातः किंतु क्त्वाप्रत्यय एवायातः ( क्यपि ञेर्गुणः ) क्यप्प्रत्यये ञिप्रत्ययस्य गुणो भवति । णम् परिपूर्वः ञिप्र० । समासे क्यप् इति क्यप्प्र० । 'स्वर०' परिणमि य इति स्थिते । ( क्यपि ञेर्गुणः ) क्वचित्स्वरवद्यकारः ( ए अय् ) 'स्वर०' १-१ अव्य० परिणमय्य भुंक्ते परितः सामस्त्येन नमयित्वा परिणमय्य पूर्वभुक्तं परिपाकं प्राप्य भुङ्क्ते इत्यर्थः। एवम् उन्नमय्य, आकलय्य, तत्कालत्वेऽपि द्वयोः क्रिययोः समकालत्वेपि क्यप्प्रत्ययो दृश्यते । मील मीलने । संपूर्वात्क्यप्प्र० 'स्वर०' १-१ अव्य० । नेत्रे संमील्य हसति । समकालमेव नेत्रे संमीलति हसति च । अत्र संमीलनहसनयोः समकालीनत्वात् पूर्वकालं विनापि तत्कालेऽपि क्यप्प्र० । डुदाञ् दा विआङ्पूर्वः । क्यप् प्रत्ययः ( इ यं स्वरे ) 'स्वर०' विआङ्पूर्वको दाधातुर्मुखप्रसारणार्थस्तेन मुखं व्यादाय प्रसार्य स्वपिति । अत्रापि मुखप्रसारणस्वपनयोः समकालीनत्वात् समानकाले क्य० । क्वचिद्भिन्नकर्तृकेपि क्यप्प्रत्ययो दृश्यते "मत्प्रसूतिमनाराध्य प्रसूतिं त्वां शशाप सा" इति अवधार्य कार्यगुरुतामभवन्न भयाय सांद्रसंतमसमित्यादि ।

( पौनःपुन्ये णमुपदं द्विश्च ) समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौनःपुन्यार्थे धातोर्णम् प्रत्ययो भवति णमन्तस्य पदस्य द्विर्वचनं भवति । ( आतो युक् ) पीत्वा पीत्वा इति पायंपायं गच्छति । आदरे वीप्सायां द्विर्भावः ।

भुक्त्वा भुक्त्वा इति भोजंभोजं व्रजति । स्मृत्वा स्मृत्वा इति स्मारंस्मारं नमति शिवम् ( कथमादिषु स्वार्थे कृञो णम् ) कथम्। इत्थम्। अन्यथा एवम् एतेषु प्रयुज्यमानेषु स्वार्थे कृञो णम् प्रत्ययो भवति। कथंकारम्। इत्थंकारम्। अन्यथाकारम् एवंकारं पठति । एवं पठतीत्यर्थः । (समूलाकृतजीवेषु हन्-कृञ्ग्रहां णम् वाच्यः स्वार्थे तेषामनुप्रयोगश्च ) समूलघातं हन्ति अकृतकारं करोति ।जीवं गृहीत्वा इति जीवग्राहं गृह्णाति इत्यादि ।

सूत्रम् ( पौनःपुन्ये० ) पुनःपुनर्भवतीति पौनःपुन्यम् । तस्मिन् ७-१ ( अ इ ए ) णम् १-१ । ( हसेपः० ) पदं १-१ । ( अतोऽम ) द्विः १-१ च अव्य० 'स्व०' १-१ पौनःपुन्ये । वारंवारार्थे धातोः पूर्वकाले णम् प्रत्ययो भवति तस्य च णम् सहितस्य पदस्य द्वित्वं भवति समानकर्तृकेषु धातुषु प्रयुज्यमानेषु सत्सु । पा पाने । पा णम् प्र० । अम् । ( आतो युक् ) 'स्वर०' । द्वित्वं १-१ अव्य०। पायंपायं गच्छति पीत्वा पीत्वा यातीत्यर्थः। भुज् णम् अम् लघूपधत्वाद् गुणः। 'स्वर०'। द्वित्वं १-१ अव्य०।भोजं भोजं व्रजति । पुनःपुनर्भुक्त्वा यातीत्यर्थः । एवं कारंकारं स्मारंस्मारं द्विश्चेति चकारात् समूलघातं हन्ति । जीवग्राहं गृह्णाति । केशग्राहं युध्यति । इत्यादिष्वपि णम् । कथमादिषु पूर्वपदेषु सत्सु स्वार्थे कथमादीनामेवार्थे कृञ् धातोः णम् प्रत्ययो भवति । णित्वाद् वृद्धिः कृ कथं पूर्वः । णम् प्र० अम् ( धातोर्नामिनः ) इति वृद्धिः । 'स्वर०' १-१ अव्य० । कथंकारम् कथमित्यर्थः । एवम् इत्थंकारम् इत्थमित्यर्थः ।

( भुवो भावे क्यप् ) नाम्नि उपपदे भुवो भावे क्यप् प्रत्ययो भवति । ब्रह्मणो भावः ब्रह्मभूयम् । स्त्यै ष्टयै शब्दसंघातयोः ( स्त्यायतेर्ड्रट् ) डित्त्वाट्टिलोपः।( संयोगान्तस्य लोपः) टित्त्वादीप् । स्त्यायति समूहं करोति सा स्त्री । लक्ष दर्शनाङ्कनयोः ।

सूत्रम् ( भुवो भावे क्यप् )भुवो भूधातोर्भावे शब्दप्रवृत्तिनिमित्ते क्यप्प्रत्ययो भवति। कित्त्वाद् गुणो न । भू क्यप् प्र० । य । ब्रह्मपूर्वः १-१ । ( अतोऽम् ) ब्रह्मभूय ब्रह्मणो भावः ब्रह्मत्वं गतः प्राप्त इत्यर्थः। एवं देवभूयं देवत्वम् । स्त्यायतेः इति । स्त्यायतेर्धातोः स्त्रीत्वे वाच्ये ड्रट् प्रत्ययो भवति । डकारः टिलोपार्थः। ष्ट्यै स्त्यै धातु शब्दसंघातयोः।

शब्दार्थे समूहार्थे च । स्त्यै ड्रट् प्र० । र डित्वाट्टिलोपः । संयोगांतस्येति यलोपः । 'स्वर०' । (एश्रित०) इतीप् १-१ । (हसेपः०) स्त्री ।

**(लक्षतेरीमुट् च) लक्षतेर्धातोरीः प्रत्ययो भवति तस्य ईप्र-त्ययस्य मुडागमश्च । लक्ष्यते पुमान् अनया सा लक्ष्मीः ।**

(लक्षतेरीमुट् च) लक्षेर्धातोः ई प्रत्ययो भवति तस्य च मुडागमः । लक्ष दर्शनां-कनयोः । लक्ष ईप् । प्र० । मुट् । टित्वादादौ । 'स्वर०' १-१ । (स्रो०) लक्षते इति लक्ष्मीः । अत्र ईबन्तत्वाभावात् सेर्लोपो नास्ति ।

**(वर्णात्कारः) वर्णमात्रात्कारः प्रत्ययो भवति । क इति वर्णः ककारः । व इति वर्णो वकारः । अ इति वर्णः अकारः । वर्णसमुदायादपि कारो दृश्यते । अहंकारः । ओंकारः । टकारः । पकारः । तकारः, इत्यादि ।**

सूत्रम् (वर्णात्कारः) वर्णनिर्देशे वाच्ये सति वर्णात् अकारादिऋकारांतात् अक्ष-रात् अग्रे कारप्रत्ययो भवति । क अग्रे कार प्र० । ककारःखकारः । गकारःअकारः। इकारः । अत्र बहुलमित्यनुवर्तते । तेन अ । इ । उ । ऋ । ऌ । ह । य । र । ल । व । इत्यादौ कारप्रत्ययः । वर्णनिर्देशे इति किम् । यथा अः कृष्णः । इः कामः । को ब्रह्मा । खमाकाशम् इत्यादौ न इत्यादि ।

**(रादिफो वा) रः इति वर्णः रेफः । रकारः ।**
**रकारादीनि नामानि श्रुत्वा तत्रास रावणः ।**
**रत्नानि च रमण्यश्च संत्रासं जनयन्ति मे ।**
**रकारादीनि नामानि शृण्वतो मम पार्वति ।**
**मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥**

(रादिफो वा) रात् रकाराक्षरात् वा विकल्पेन इफप्रत्ययो भवति । र अग्रे इफप्र० (अ इ ए) रेफः १-१ (स्रो०) पक्षे कार प्र० । रकार इति प्रयोगे संमतिमाह।रका-रादीनि इति श्लोकः। हे पार्वति रकारादीनि रकारः आदिर्येषां तानि नामानि शृण्वतः सतो मम मनः प्रसन्नतां नैर्मल्यं सानंदत्वम् एति प्राप्नोति । कया रामनामाभिशं-कया । रकारादीनि नामान्युच्चरन् कदाचिद्रामनामाप्युच्चरेदित्याशंकया इत्याकांक्षया । अथोपसहारसूत्रमाह ।

(लोकाच्छेपस्य सिद्धिः) यथा मातरादेः। अस्य सारस्वतव्याकरणस्य ये शेपप्रयोगास्तेपां लोकात् अन्यव्याकरणात्सिद्धिर्भवति यथा मातरादेः । इत्यादि प्रयोगानुसारेण बोद्धव्यम् ।

लोकाच्छेपस्य सिद्धिः । लोकात् ५-१ ( ङसिरत् । सवर्णे० ) शेपस्य ६-१ ( ङस् स्य ) सिद्धिः १-१ ( सो० ) उक्तादन्यः शेपस्तस्य शेपस्य अत्र व्याकरणेऽनुक्तस्य सिद्धिः साधनं लोकादन्यव्याकरणात् ज्ञातव्या । यथा मातरपितरौ इत्यादीनां शब्दानां सिद्धिर्लोकात् ज्ञेया । शास्त्रांते च मंगलाचरणं युज्यते अतोऽत्र मातृपित्रोर्नामग्रहणेन मंगलमप्यस्ति । अथ कविः स्वनामगर्भमलंकारश्लोकमाह ।

स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः ।
स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम् ॥

स्वरूपांत इति । स मस्करी मस्करो वंशदंडो अस्त्यस्येति मस्करी संन्यासिकः प्रक्रियां शुभाम् ऋज्वीं चक्रे कृतवान् । कथंभूतां प्रक्रियां चतुरोचितां चतुराणां सुवृद्धीनां पुरुपाणाम् उचिता योग्या ताम् । स कः यत्र यस्मिन् मस्करिणि अनुभूत्यादिः अनुभूतिः इति आदौ यस्य स अनुभूत्यादिः । तथा स्वरूपांतः स्वरूप इति शब्दो अंते यस्य स अर्थात् अनुभूतिस्वरूप इति वाचकः शब्दः सार्थकः । अनुभूतिर्ज्ञानमेव स्वरूपं यस्येत्यर्थसहितो अभूत् इत्यनेन अनुभूतिस्वरूपनामा संन्यासिकः इमां प्रक्रियां शुभाम् ऋज्वीं सरलां चक्रे । शुभाम् इत्यनेन स्वकपोलकल्पनानिरासः कृतः । अथ श्रावकश्रोतॄणामभीष्टसिद्ध्यै इष्टदेवताशिषमाह ।

अवताद्वो हयग्रीवः कमला वर ईश्वरः ।
सुरासुरनराकारमधुपापीतपत्कजः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानुभूतिस्वरूपाचार्यविरचितायां सारस्वतप्रक्रियायां कृदन्तप्रक्रिया समाप्ता ॥

॥ समाप्ता चेयं तृतीयावृत्तिः ॥

अवतादिति । हयग्रीवः ईश्वरो वो युष्मान् शिष्यान् अवतात् रक्षतु । हयस्य ग्रीवा इव ग्रीवा यस्य सः । अर्थात् पुरुपशरीरः अश्वमुखश्चतुर्विंशत्यवतारमध्यस्थ एको भगवतो अवतारः । उक्तं च भागवते पंचमस्कंधे अष्टादशाध्याये षष्ठे काव्ये । "वेदान् युगांते तमसा तिरस्कृतान् रसातलाद्यो नृतुरंगविग्रहः ॥ प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्ते वितथेहिताय ॥ १ ॥ सांप्रतं तु तां हयग्रीवमूर्त्तिं भद्राख्यखंडे धर्मपुत्रो राजा भद्रश्रवाः पूजयन्नस्ति इति पुराणोक्तिः । कथंभूतो हयग्रीवः कमला-

करः—कमलां लक्ष्मीं करोतीति । यद्वा कमलाया लक्ष्म्या आकरः । पुनः कथंभूतः ईश्वरः। ईष्टे ऐश्वर्यं करोतीति ईश्वरः । पुनः कथंभूतः सुरासुर—के पानीये जाते कजे । पादावेव कजे कमले पत्कजे । सुराश्च असुराश्च नराश्च सुरासुरनरास्ते एवाकारो येषाम् ईदृशा ये मधुपा भ्रमरास्तैः आपीते अत्यादरेणावलोकिते पत्कजे चरणकमले यस्य सः । इति कृत्प्रक्रियाव्याख्या ॥ सुबोधिकायां क्लृप्तायां सूरिश्रीचन्द्रकीर्त्तिभिः ॥ कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥ १ ॥ इति श्रीमन्नागपुरीयतपागच्छाधिराजभट्टारक-श्रीचंद्रकीर्त्तिसूरिविरचिता श्रीसारस्वतव्याकरणस्य दीपिका संपूर्णा ॥ इति सारस्वतीप्रक्रियादीपिका ॥ तीर्थे वीरजिनेश्वरस्य विदिते श्रीकोटिकाख्ये गणे श्रीमच्चंद्रकुले वटोरुहवृहद्गच्छे परिम्लाचिते ॥ श्रीमन्नागपुरीयकाह्वयतया—प्राप्तावदातेऽधुना स्फूर्जद्भूरिगुणान्विता गणधरश्रेणी सदा राजते ॥ २ ॥ वर्षे वेदमुनीद्रशंकरमिते ११७४ श्रीदेवसूरिप्रभुर्जज्ञेभूत्तदनुप्रसिद्धमहिमा पद्मप्रभः सूरिराट् ॥ तत्पट्टे प्रथितः प्रसन्नशशभृत्सूरिः सतामादिमः सूरींद्रास्तदनंतरं गुणसमुद्राह्वा बभूवुर्बुधाः ॥३॥ तत्पट्टे जयशेखराख्यसुगुरुः श्रीवज्रसेनस्ततस्तत्पट्टे गुरुर्हेमपूर्वतिलकः शुद्धक्रियाद्योतकः ॥ तत्पट्टे प्रभुरत्नशेखरगुरुः सूरीश्वराणां वरस्तत्पट्टांबुधिपूर्णचंद्रमनसः श्रीपूर्णचंद्रः प्रभुः ॥ ४ ॥ तत्पट्टेजनि हेमहंससुगुरुः सर्वत्र जाग्रद्यशाः आचार्या अपि रत्नसागरवरास्तत्पट्टपद्मार्य्यमा ॥ श्रीमान् हेमसमुद्रसूरिरभवच्छ्रीहेमरत्नस्ततस्तत्पट्टे प्रभुसोमरत्नगुरवः सूरीश्वराः सद्गुणाः ॥ ५ ॥ तत्पट्टोदयशैलहेलिरमलश्रीजेसवालान्वयाऽलंकारः कलिकालदर्पदमनः श्रीराजरत्नप्रभुः ॥ तत्पट्टे जिनविश्ववादिनिवहागच्छाधिपाः संप्रति सूरिश्रीप्रभुचंद्रकीर्तिगुरवो गांभीर्यधैर्याश्रयाः ॥ ६ ॥ तैरियं पद्मचंद्राख्योपाध्यायाभ्यर्थनात्कृता ॥ शुभा सुबोधिकानाम्नी श्रीसारस्वतदीपिका ॥ ७ ॥ श्रीचंद्रकीर्त्तिसूरींद्रपादांभोजमधुव्रतः ॥ हर्षकीर्त्तिरिमां टीकां प्रथमादर्शकेऽलिखत् ॥ ८ ॥ अज्ञानध्वांतविध्वंसविधाने दीपिकानिभा ॥ दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरम् ॥ ९ ॥ स्वल्पस्य सिद्धस्य सुबोधिकस्य सारस्वतव्याकरणस्य टीकाम् ॥ सुबोधिकाख्यां रचयांचकार सूरीश्वरः श्रीप्रभुचंद्रकीर्त्तिः ॥ १० ॥

समाप्ता चेयं चंद्रकीर्तिनाम्नी श्रीसारस्वतव्याकरणस्य टीका ॥

## इति सवृत्तित्रयं चन्द्रकीर्तिटीकासमेतं सारस्वतं सम्पूर्णम् ।



(लोकाच्छेपस्य सिद्धिः) यथा मातरादेः। अस्य सारस्वतव्याकरणस्य ये शेपप्रयोगास्तेपां लोकात् अन्यव्याकरणात्सिद्धिर्भवति यथा मातरादेः। इत्यादि प्रयोगानुसारेण बोद्धव्यम्।

लोकाच्छेपस्य सिद्धिः। लोकात् -५-१ ( ङसिरत्। सवर्णे० ) शेपस्य ६-१ ( ङस् स्य ) सिद्धिः १-१ ( स्रो० ) उक्तादन्यः शेपस्तस्य शेपस्य अत्र व्याकरणेऽनुक्तस्य सिद्धिः साधनं लोकादन्यव्याकरणात् ज्ञातव्या। यथा मातरपितरौ इत्यादीनां शब्दानां सिद्धिर्लोकात् ज्ञेया। शास्त्रांते च मंगलाचरणं युज्यते अतोऽत्र मातृपित्रोर्नामग्रहणेन मंगलमप्यस्ति। अथ कविः स्वनामगर्भमलंकारश्लोकमाह।

स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः।
स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम्॥

स्वरूपांत इति। स मस्करी मस्करो वंशदंडो अस्त्यस्येति मस्करी संन्यासिकः प्रक्रियां शुभाम् ऋज्वीं चक्रे कृतवान्। कथंभूतां प्रक्रियां चतुरोचितां चतुराणां सुबुद्धीनां पुरुषाणाम् उचिता योग्या ताम्। स कः यत्र यस्मिन् मस्करिणि अनुभूत्यादिः अनुभूति इति आदौ यस्य स अनुभूत्यादिः। तथा स्वरूपांतः स्वरूप इति शब्दो अंते यस्य स अर्थात् अनुभूतिस्वरूप इति वाचकः शब्दः सार्थकः। अनुभूतिः ज्ञानमेव स्वरूपं यस्येत्यर्थसहितो अभूत् इत्यनेन अनुभूतिस्वरूपनामा संन्यासिकः इमा प्रक्रिया शुभाम् ऋज्वी सरलां चक्रे। शुभाम् इत्यनेन स्वकपोलकल्पनानिरासः कृतः। अथ श्रावकश्रोतॄणामभीष्टसिद्ध्यैष्टदेवताशिषमाह।

अवताद्वो हयग्रीवः कमला वर ईश्वरः।
सुरासुरनराकारमधुपापीतपत्कजः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानुभूतिस्वरूपाचार्यविरचितायां सारस्वतप्रक्रियायां कृदन्तप्रक्रिया समाप्ता॥
॥ समाप्ता चेयं तृतीयावृत्तिः॥

अवतादिति। हयग्रीवः ईश्वरो वो युष्मान् शिष्यान् अवतात् रक्षतु। हयस्य ग्रीवा इव ग्रीवा यस्य सः। अर्थात् पुरुषशरीरः अश्वमुखश्चतुर्विंशत्यवतारमध्यस्थ एको भगवतो अवतारः। उक्तं च भागवते पंचमस्कंधे अष्टादशाध्याये षष्ठे काव्ये। "वेदान् युगांते तमसा तिरस्कृतान् रसातलाद्यो नृतुरंगविग्रहः॥ प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्ते वितथेहिताय॥ १॥ सांप्रतं तु तां हयग्रीवमूर्त्तिं भद्राख्यखंडे धर्मपुत्रो राजा भद्रश्रवाः पूजयन्नस्ति इति पुराणोक्तिः। कथंभूतो हयग्रीवः कमला-

करः—कमलां लक्ष्मीं करोतीति । यद्वा कमलाया लक्ष्म्या आकरः । पुनः कथंभूतः ईश्वरः। ईष्टे ऐश्वर्यं करोतीति ईश्वरः । पुनः कथंभूतः सुरासुर—के पानीये जाते कजे । पादावेव कजे कमले पत्कजे । सुराश्च असुराश्च नराश्च सुरासुरनरास्ते एवाकारो येषाम् ईदृशा ये मधुपा भ्रमरास्तैः आपीते अत्यादरेणावलोकिते पत्कजे चरणकमले यस्य सः । इति कृत्प्रक्रियाव्याख्या ॥ सुबोधिकायां क्लृप्तायां सूरिश्रीचन्द्रकीर्त्तिभिः ॥ कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥ १ ॥ इति श्रीमन्नागपुरीयतपागच्छाधिराजभट्टारक-श्रीचंद्रकीर्त्तिसूरिविरचिता श्रीसारस्वतव्याकरणस्य दीपिका संपूर्णा ॥ इति सार-स्वतीप्रक्रियादीपिका ॥ तीर्थे वीरजिनेश्वरस्य विदिते श्रीकोटिकाख्ये गणे श्रीमच्चंद्र-कुले वटोरुहबृहद्गच्छे परिम्लाचिते ॥ श्रीमन्नागपुरीयकाह्वयतया—भासावदातेऽधुना स्फूर्जद्भूरिगुणान्विता गणधरश्रेणी सदा राजते ॥ २ ॥ वर्षे वेदमुनींद्रशंकरमिते ११७४ श्रीदेवसूरिप्रभुर्जज्ञेभूत्तदनुप्रसिद्धमहिमा पद्मप्रभः सूरिराट् ॥ तत्पट्टे प्रथितः प्रसन्नशशभृत्सूरिः सतामादिमः सूरींद्रास्तदनंतरं गुणसमुद्राह्वा बभूवुर्बुधाः ॥३॥ तत्प-ट्टे जयशेखराख्यसुगुरुः श्रीवज्रसेनस्ततस्तत्पट्टे गुरुहेमपूर्वतिलकः शुद्धक्रियाद्योतकः ॥ तत्पट्टे प्रभुरत्नशेखरगुरुः सूरीश्वराणां वरस्तत्पट्टांबुधिपूर्णचंद्रमनसः श्रीपूर्णचंद्रः प्रभुः ॥ ४ ॥ तत्पट्टेजनि हेमहंससुगुरुः सर्वत्र जाग्रद्यशाः आचार्या अपि रत्नसागरवरास्त-त्पट्टपद्मार्य्यमा ॥ श्रीमान् हेमसमुद्रसूरिरभवच्छ्रीहेमरत्नस्ततस्तत्पट्टे प्रभुसोमर-त्नगुरवः सूरीश्वराः सद्गुणाः ॥ ५ ॥ तत्पट्टोदयशैलहेलिरमलश्रीजेसवालान्वयाऽलं-कारः कलिकालदर्पदमनः श्रीराजरत्नप्रभुः ॥ तत्पट्टे जिनविश्ववादिनिवहागच्छाधिपाः संप्रति सूरिश्रीप्रभुचंद्रकीर्तिगुरवो गांभीर्यधैर्याश्रयाः ॥ ६ ॥ तैरियं पद्मचंद्राख्यो-पाध्यायाभ्यर्थनात्कृता ॥ शुभा सुबोधिकानाम्नी श्रीसारस्वतदीपिका ॥ ७ ॥ श्रीचंद्रकीर्त्तिसूरींद्रपादांभोजमधुव्रतः ॥ हर्षकीर्त्तिरिमां टीकां प्रथमादर्शकेऽलिखत् ॥ ८ ॥ अज्ञानध्वांतविध्वंसविधाने दीपिकानिभा ॥ दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरम् ॥ ९ ॥ स्वल्पस्य सिद्धस्य सुबोधिकस्य सारस्वतव्याकरणस्य टीकाम् ॥ सुबोधिकाख्यां रचयांचकार सूरीश्वरः श्रीप्रभुचंद्रकीर्त्तिः ॥ १० ॥

समाप्ता चेयं चंद्रकीर्तिनाम्नी श्रीसारस्वतव्याकरणस्य टीका ॥

## इति सवृत्तित्रयं चन्द्रकीर्तिटीकासमेतं सारस्वतं सम्पूर्णम् ।

